षष्ठेऽनुवाके उखासंस्कार उक्तः। अथ सप्तमेऽनुवाके पञ्चपञ्चाशद्भूता आग्निक्यः सामिधेन्य उच्यन्ते। कल्पः, 'एकविंशतिं चतुर्विंशतिं वा पराचीः सामिधेनीरन्वाहैकादश प्राकृतीः समास्त्वाग्न इति दशाग्निकीः' इति। तत्र प्रथमामाह,—"समास्त्वाग्न ऋतवो वर्द्धयन्तु संवत्सरा ऋषयो यानि सत्या। सं दिव्येन दीदिहि रोचनेन विश्वा आभाहि प्रदिशः पृथिव्याः(१)" इति। 'समा'-शब्दः संवत्सरवाची, संवत्सरशब्देन तु तदवयवा मासा अर्द्धमासाश्चोपलक्ष्यन्ते। हे 'अग्ने', 'संवत्सरः' 'ऋतवः' मासा अर्द्धमासाश्चेत्येते कालविशेषाः, तथा 'ऋषयः' (मन्त्रद्रष्टारः), तथा 'यानि' सत्यानि (सत्यवचनानि) सन्ति, ते सर्वेऽपि त्वां 'वर्द्धयन्तु' तैर्वर्द्धितस्त्वं 'दिव्येन' (द्युलोकार्हेण) 'रोचनेन' (तेजसा) 'सं'-'दिदीहि*' (सम्यक् दीप्यस्व)। किञ्च त्वदीयया दीप्त्या 'पृथिव्याः' सम्बन्धिनीः 'प्रदिशः' (सर्वा दिशो विदिशश्च) 'आभाहि' (सर्वतो भासय)।

अथ द्वितीयामाह,—"सं चेध्यस्वाग्ने प्र च बोधयैनमुच्च तिष्ठ महते सौभगाय। मा च रिषदुपसत्ता ते अग्ने ब्रह्माणस्ते यशसः सन्तु माऽन्ये(२)" इति। हे 'अग्ने' त्वं 'सम्'-'इध्यस्व' 'च' (स्वयमपि दीप्तो भव)। 'एनं' 'प्र'-'बोधय' 'च' (यजमानं कर्मानुष्ठानाय प्रबुद्धं कुरु)। 'महते सौभगाय' 'उत्'-'तिष्ठ' 'च' (यजमानस्यात्यन्तसौभगार्थमुद्युक्तोऽपि भव)। हे 'अग्ने' 'ते' (तव) 'उपसत्ता' (परिचारकः) 'मा' 'रिषत्' 'च' (मा हिंस्यातां)। किञ्च 'ते'

* दीदिहि इति संहितानुसारी पाठो भवतु युक्तः।

# BIBLIOTHECA INDICA;

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

---

THE

SANHITA' OF THE BLACK YAJUR VEDA

WITH THE

COMMENTARY OF MA'DHAVA A'CHA'RYA

EDITED BY

MAHES'ACHANDRA NYA'YARATNA, C. I. E.

VOL. IV.

KANDA IV.

CALCUTTA:

PRINTED BY J. W. THOMAS, BAPTIST MISSION PRESS.

1881.

(त्वदीया) 'ब्रह्माणः' (ब्राह्मणाः) ऋत्विग्यजमानाः 'यशसः सन्तु' (यशस्विनो भवन्तु)। 'अन्ये' (त्वत्परिचर्याविमुखाः) यशस्विनो मा भूवन्।

अथ तृतीयामाह,—"त्वामग्ने वृणते ब्राह्मणा इमे शिवो अग्ने संवरणे भवा नः। सपत्नहा नो अभिमातिजिच्च स्वे गये जागृह्यप्रयुच्छन्(३)" इति। हे 'अग्ने', 'इमे' 'ब्राह्मणा' ऋत्विग्यजमानाः त्वां 'वृणते' (सम्भजन्ते, आराधयन्ति)। हे 'अग्ने' 'नः' (अस्माकं) 'संवरणे' (अपराधानामाच्छादने) निमित्तभूते सति 'शिवः' (शान्तः) 'भव', अपराधं मा प्रकटयेत्यर्थः। किञ्च 'नः' (अस्माकं) 'सपत्नहा' (वैरिघाती) 'अभिमातिजित्' (पापजयकारी च) भूत्वा 'स्वे गये' (स्वकीये गृहे) 'अप्रयुच्छन्' (प्रमादमकुर्वन्) 'जागृहि' (सावधानो भव) अस्मद्धितं विचारयेत्यर्थः।

अथ चतुर्थीमाह,—"इहैवाग्ने अधि धारया रयिं मा त्वा निक्रन् पूर्वचितो निकारिणः। क्षत्रमग्ने सुयममस्तु तुभ्यमुपसत्ता वर्धतां ते अनिष्टृतः(४)" इति। हे 'अग्ने' 'इहैव' (गृह एव) 'रयिं' (धनम्) 'अधि'-'धारय' (आधिक्येन सम्पादय)। 'पूर्वचितः' (ये अस्मत्तोऽपि पूर्वमग्नेश्चेतारः, ते) अस्मान् प्रति 'निकारिणः' (निराकर्त्तारो भूत्वा) त्वाम् अस्माभिश्चीयमानमग्निं 'मा' 'निक्रन्' (मैव निराकुर्वन्तु)। हे 'अग्ने' 'तुभ्यं' (तव) 'क्षत्रं' (बलं) 'सुयममस्तु' (सुस्थिरं भवतु)। 'ते' (तव) 'उपसत्ता' (परिचारकः) 'अनिष्टृतः' (केनापि नितरामहिंसितः सन्) 'वर्धताम्'।

अथ पञ्चमीमाह,—"क्षत्रेणाग्ने स्वायुः संरभस्व मित्रेणाग्ने मित्रधेये यतस्व। सजातानां मध्यमस्था एधि राज्ञामग्ने विहव्यो

अत एव स्मर्यते, 'अप एव ससर्जादौ तासु वीर्यमवासृजत्* । तदण्डमभवद्धैमम्' इति । कीदृश्य आपः ?—'दक्षं' (अग्निचयने कुशलं यजमानं) 'दधानाः' (धारयन्त्यः, उत्पादयन्त्यः), तथा चेतव्यं 'अग्निं' 'जनयन्तीः' (उत्पादयन्त्यः) । 'ततः' (तस्मात् प्रजापतेः) 'देवानां' (सर्वेषां) 'असुः' (जीवनहेतुः प्राणः) 'एकः' 'निरवर्त्तत' (निष्पन्नः), तादृशाय 'कस्मै' इत्यादि । सेयमृक् षष्ठी, हविषो याज्या ।

तत्रैवान्यां विकल्पितां याज्यामाह,—"यश्चिदापो महिना पर्य्यपश्यद्दक्षं दधाना जनयन्तीरग्निं । यो देवेष्वधिदेव एक आसीत् कस्मै देवाय हविषा विधेम(१०)" इति । 'आपः' इति द्वितीयाबहुवचनं । 'यश्चित्' (य एव प्रजापतिः) पूर्वोक्तरीत्या विश्वाकारेण परिणता महतीरपः 'स्वमहिना' (महिम्ना) 'पर्य्यपश्यत्' (अपां तथाविधसामर्थ्याय कटाक्षेण वीक्षितवान्) । कीदृशीरपः?—'दक्षं दधाना' 'अग्निं' 'जनयन्तीः'; पूर्ववद्व्याख्येयम् । 'यः' (प्रजापतिः) 'देवेषु' (सर्वेष्वधिकः) 'देवः' 'आसीत्' । तादृशाय 'कस्मै' इत्यादि ।

एतस्मिन् "ऊर्द्ध्वा अस्य" इत्यादावष्टमानुवाके प्रयाजयाज्या आप्री-नामिकाः, आघारमन्त्रौ, याज्यानुवाक्याश्चोक्ताः । पूर्वस्मिंस्तु सप्तमानुवाके सामिधेन्योऽभिहिताः। तासामेतासामुभयविधानामृचां पशुप्रयोगान्तःपातित्वेन पशुविधिमन्तरेण व्याख्यातुमशक्यत्वात् पशुविधिरादौ च वक्तव्यः । तेभ्योऽपि पशुभ्यः पुरुषशीर्षस्य पूर्वं

* मुद्रितमनुस्मृतौ बीजमवासृजत् इति पाठः ।

सम्पादनीयत्वादादौ तत्सम्पादनं विधत्ते,—"एकविꣳशत्या माषैः पुरुषशीर्षमच्छैत्यमेध्या वै माषा अमेध्यं पुरुषशीर्षममेध्यैरेवास्या- मेध्यं निरवदाय मेध्यं कृत्वा हरति" (५।१।८अ०) इति। एकविंशतिसङ्ख्याकानि माषबीजानि स्वीकृत्य तैर्युक्तं 'पुरुषशीर्षं' 'अच्छ' (प्राप्तुम्) 'एति' (गच्छेत्)। तथा च सूत्रकारेणोक्तम्, 'सप्तैकविꣳशतिं वा माषानादाय पुरुषशिरोऽच्छैति वैश्यस्य राजन्यस्य च इषुहतस्याशनिहतस्य वा माषानुपन्युप्य अयं योऽसि यस्य न इदं शिर इति पुरुषशिरः प्रच्छिद्यैतेन त्वमत्र शीर्षण्वा- मेधीति सप्तधा वितृण्णां वल्मीकवपां शिरसः स्थाने प्रति- निदधाति' इति। माषास्तावदपूतत्वात् यज्ञानर्हाः, पुरुषशीर्षञ्च अस्पृश्यत्वात् यज्ञानर्हम्। ततो यथा रजका मलरूपेण ऊषेण वस्त्रमलमपनीय शोधयन्ति, एवमत्रापि 'अमेध्यैः' 'माषैः' शिरो- निष्ठम् अमेध्यभागं निःसार्य तच्छिरो यज्ञयोग्यं कृत्वा समा- नयति।

माषसङ्ख्यां प्रशंसति,—"एकविꣳशतिर्भवन्त्येकविꣳशो वै पुरुषः पुरुषस्याप्त्यै" (५।१।८अ०) इति। एकविंशतिसङ्ख्यापूरकत्वं पुरुषस्यान्यत्राम्नातं, 'दश हस्त्या अङ्गुलयो दश पद्या* आत्मैक- विꣳशः' इति। अत्रापि माषसङ्ख्या पुरुषप्राप्तौ सम्पद्यते।

शिरोच्छेदादूर्द्ध† शिरोरहिते कबन्धे वल्मीकवपास्थापनं विधत्ते,—"वृद्धं वा एतत् प्राणैरमेध्यं यत् पुरुषशीर्षꣳ सप्तधा

---

* पाद्या इति J. पु॰ पाठः।

† शिरश्छेदादूर्द्धम् इति पाठो भवितुं युक्तः।

विहर्णां वल्मीकवपां प्रतिनिदधाति सप्त वै शीर्षण्याः प्राणाः प्राणैरेवैनत् समर्द्धयति मेध्यत्वाय" (५।१।८अ०) इति। यत् छिन्नं शिरस्तदेतत् प्राणैर्वियुक्तत्वादमेध्यम्, अतस्तदपनीय अन्तःस्थितसप्तच्छिद्रोपेतां वल्मीकस्य काञ्चिद्वपाकारां मृत्संहतिं शिरसः स्थाने प्रतिनिदधाति, जीवतः पुरुषस्य शिरोगतच्छिद्रेषु सप्तसु सञ्चरन्तः प्राणा अपि सप्तैव। अतः सप्तच्छिद्रोपेताया वपायास्तत्र स्थापनेन एतच्छिरोऽपि प्राणैः समृद्धं भवत्येव। तच्च प्राणोपेतत्वं 'मेध्यत्वाय' सम्पद्यते।

यदुक्तं सूत्रकारेण, 'योऽस्य कौष्ठ्य (?) जगत इति तिस्र ऋचः पठित्वा अन्ते यदुक्तं तिसृभिर्यमगाथाभिः 'परिगायति' इति, तदेतद्विधत्ते,—"यावन्तो वै मृत्युबन्धवस्तेषां यम आधिपत्यं परीयाय यमगाथाभिः परिगायति यमादेवैनद् वृङ्क्ते" (५।१।८अ०) इति। 'हिरण्यकक्ष्यान् सुधुरान्' इत्यादिमन्त्रेणाम्नाताः, अन्यत्रापि कालान्तकादिशब्दैराम्नाता 'मृत्युबन्धवः' 'यावन्तः' सन्ति, 'तेषां' सर्वेषाम् 'आधिपत्यं' 'यमः' प्राप्तवान्। यमो गीयते यासु ऋक्षु ता 'यमगाथाः', तासां पाठेन यमसकाशात् 'एनत्' (पुरुषशिरः) 'वृङ्क्ते' (वर्जितं करोमि*)। तास्र यमगाथाः 'योऽस्य कौष्ठ्य'-इत्याद्याः' आरण्य-काण्डे पितृमेधप्रपाठके समाम्नाताः।

अत्रापेक्षितानां गाथानां सङ्ख्यां विधत्ते,—"तिसृभिः परिगायति त्रय इमे लोका एभ्य एवैनत् लोकेभ्यो वृङ्क्ते" (५।१।८अ०)

* करोति इति पाठो भवितुं युक्तः।

IV. A. 21.

# INDEX

TO THE

FOURTH VOLUME OF THE TAITTIRÍYA SANHITÁ.

FOURTH KÁṆḌA—AGNIKÁṆḌA.

PRAPÁṬHAKAS—I—VII.

---

## PRAPÁṬHAKA I.



## PRAPÁṬHAKA II.

इति। 'एनत्' (शिरः) 'लोकेभ्यः' पृथक्कृत्य स्वाधीनं करोतीत्यर्थः।

प्रसङ्गात् पुरुषार्थे कञ्चिन्निषेधं दर्शयति,—"तस्माद्गायते न देयं गाथा हि तद् वृङ्क्ते" (५।१।८अ०) इति। यस्तु ब्राह्मणो याजनाध्यापनप्रतिग्रहादीन् परित्यज्य गानेनैव जीविकां सम्पादयति, तादृशाय ब्राह्मणाय शास्त्रीयं 'देयं' किमपि न दद्यात्। 'हि' (यस्मात्) 'गाथा' (गानविद्यैव) 'तत्' द्रव्यम् अमेध्यं कृत्वा 'वृङ्क्ते' (देवपितृकार्येभ्यो वर्जयति)। 'तस्मात्' तादृशाय 'न देयम्'।

यदुक्तं सूत्रकारेण, 'अग्निभ्यः कामाय पशूनालभते मुष्करान् प्राजापत्यमजं तूपरमुपाकृत्याश्वर्षभवृष्णिबस्तान्' इति, तदेतद् विधत्ते,—"अग्निभ्यः पशूनालभते कामा वा अग्नयः कामानेवावरुन्धे" (५।१।८अ०) इति। काम्यन्ते इति 'कामाः' पुत्रपश्वादयः, तद्धेतवः 'अग्नयः', तस्मात् 'कामान्' प्राप्नोत्येव।

एतेषु पशुषु कञ्चिद्विशेषं विधत्ते,—"यत्पशून्नालभेतानवरुद्धा अस्य पशवः स्युर्यत् पर्यग्निकृतानुत्सृजेद् यज्ञवेशसं कुर्याद् यत्सꣳस्थापयेद् यातयामानि शीर्षाणि स्युर्यत् पशूनालभते तेनैव पशूनवरुन्धे यत्पर्यग्निकृतानुत्सृजति शीर्ष्णामयातयामत्वाय प्राजापत्येन सꣳस्थापयति यज्ञो वै प्रजापतिर्यज्ञ एव यज्ञं प्रतिष्ठापयति" (५।१।८अ०) इति। अत्रेदं चिन्तनीयम्,—किमाग्नेयाः पशव एव न आलभ्याः, किंवा तान् पशूनुपाकृत्य पर्यग्निकरणादूर्ध्वमुत्सृजेत्, आहोस्वित् समाप्तिपर्यन्तमनुतिष्ठेत्? इति। नाद्यः, पशुप्राप्त्यभावप्रसङ्गात्। न द्वितीयः, मध्ये परित्यागेन यज्ञभ्रंशप्रसङ्गात्। न तृतीयः, अत्रैव अश्वर्षभ-वृष्णिबस्तानां गतसारत्वेन

PRAPÁṬHAKA III.

Chiti I.



Chiti II.



Chiti III.



Chiti IV.



Chiti V.



PRAPÁṬHAKAḤ IV.

Fifth chiti continued up to XI Anuváka.

भाविन्यां चित्यामनुपधेयत्वप्रसङ्गात्। एतद्दोषत्रयपरिहारायेत्थं कर्त्तव्यम्,—आलम्भेन, उत्सर्गेण च प्रथमतृतीयदोषौ न भविष्यतः। प्राजापत्येन तूपरेण पशुना समापनाद्यज्ञभ्रंशरूपो मध्यमदोषोऽपि न भविष्यति; यज्ञोत्पादकत्वात् 'प्रजापतिः' 'यज्ञः' एव, ततो यज्ञरूपे प्रजापतावेव क्रियमाणं 'यज्ञं' 'प्रतिष्ठापयति' (समापयति)। इत्थमुपोद्घातत्वेन पशवो विहिताः। अथानुवाकद्वयोक्ता मन्त्रा व्याख्यातव्याः।

यद्यपि सामिधेन्यः पूर्वानुवाकोक्ताः, पूर्वानुष्ठेयाश्च; तथापि "अभ्यर्हितं पूर्वम्" (२।२।३४ सू०वा०) इति वैयाकरणोक्तन्यायेन प्रयाजयाज्यानां प्रीतिहेतूनामभ्यर्हितत्वात् सूचीकटाहन्यायेनाल्पवक्तव्यत्वाद्वा ता एव आप्रीः प्रथमं विधत्ते,—"प्रजापतिः प्रजा असृजत स रिरिचानोऽमन्यत स एता आप्रीरपश्यत् ताभिर्वै स मुखत आत्मानमाप्रीणीत यदेता आप्रियो भवन्ति यज्ञो वै प्रजापतिर्यज्ञमेवैताभिर्मुखत आ-प्रीणाति" (५।१।८अ०) इति। प्रजासृष्टौ सामर्थ्यस्योपक्षीणत्वात् रिक्तोऽहमिति 'स' 'प्रजापतिः' 'अमन्यत', ततः सामर्थ्यपूरका 'एता' 'आप्रीः' (मनसा विचार्य निश्चितवान्)। ततः 'ताभिः' एव (आप्रीभिः) 'स' (प्रजापतिः) यज्ञप्रारम्भ एव स्वात्मानं प्रीतमकरोत्। तथा प्रयाजानुष्ठानार्थम् 'एता' आप्री-नामका ऋचो भवेयुः। आत्मानम् आप्रीणात्येताभिरिति "ऊर्द्ध्वा अस्य" इत्याद्या ऋचः 'आप्रियः'। प्रजापतिजन्यत्वात् 'यज्ञः' 'प्रजापतिः' एव; अतः प्रजापतिवत् एतमेव 'यज्ञम्' 'एताभिः' ऋग्भिः 'मुखतः' एव प्रीतं करोति।

तासामाप्रीणां बहुप्रकारच्छन्दस्त्वं पाठप्राप्तं प्रशंसति,—"अपरिमितच्छन्दसो भवन्त्यपरिमित. प्रजापतिः प्रजापतेराप्त्यै" (५।१।८अ०) इति। बहुप्रकारच्छन्दस्त्वं चैवं द्रष्टव्यं, सर्वा ह्येतास्त्रिपदाः, आसामाद्या अन्त्याश्च पादा एकादशाक्षराः; मध्यमः पञ्चाक्षरः, षडक्षरः सप्ताक्षरोऽष्टाक्षरश्च पादः। ता एताः पिपीलिकामध्यास्त्रिपदा उष्णिहः। "दैव्या होतारावूर्ध्वं" "तिस्रो देवीः" इति च गायत्र्याविति।

एषां छन्दसां मध्यमपदेषु यदेतत्तारतम्यं, तदिदं प्रशंसति,—"ऊनातिरिक्ता मिथुनाः प्रजात्यै" (५।१।८अ०) इति। पञ्चाक्षरत्वमारभ्य अष्टाक्षरत्वपर्यन्तेषु उत्तरोत्तरापेक्षया पूर्वपूर्वस्य ऊनत्वम्, पूर्वपूर्वापेक्षया उत्तरोत्तरस्य अतिरिक्तत्वम्। एवं कोटिद्वयात्मकत्वान्मिथुनत्वम्। तच्च प्रजननाय सम्पद्यते।

आद्यन्तपादापेक्षया मध्यमपादस्य यदल्पत्वं तदिदं प्रशंसति,—"लोमशं वै नामैतच्छन्दः प्रजापतेः पशवो लोमशाः पशूनेवावरुन्धे" (५।१।८अ०) इति। लोमसदृशं सूक्ष्मं मध्यं यस्य छन्दसः तदिदं 'लोमशं', यथा हस्तपादतदङ्गुल्याद्यपेक्षया लोम्नः सूक्ष्मत्वम्, एवमाद्यन्तपादापेक्षया मध्यमपादस्य सूक्ष्मत्वमित्यर्थः। 'प्रजापतेः' सृष्टा ये 'पशवः' ते सर्वे 'लोमशाः', अतोऽस्य छन्दसो लोमशत्वसाम्येन पशुप्राप्तिर्भवति।

एतासु आप्रीषु छन्दसां नानाविधत्वं प्रशंसति,—"सर्वाणि वा एता रूपाणि सर्वाणि रूपाण्यग्नौ चित्ये क्रियन्ते तस्मादेता अग्नेश्चित्यस्य भवन्ति" (५।१।८अ०) इति। "ऊर्ध्वा अस्य" इत्याद्या

या आप्रियः, ताः 'सर्वाणि' 'रूपाणि' (न्यूनातिरिक्तभावेन बहुविधरूपयुक्ता) भासन्ते। यस्य वक्ष्यमाणप्रकारेण चेतव्योऽग्निः तस्मिन्नपि 'अग्नौ' 'सर्वाणि' 'क्रियन्ते'। पक्षित्वनिष्पत्तये पक्ष-पुच्छादीनि बहूनि रूपाणि, कामनाभेदेन श्येनकङ्कादिरूपाणि च। यस्मादाप्रीणां चित्याग्नेश्चास्ति सादृश्यं, 'तस्मादेता' 'अग्नेश्चित्यस्य' आप्रियो भवितुं योग्याः।

तदेवमष्टमानुवाकोक्ता आप्रीर्व्याख्याय, बहुवक्तव्यतया पूर्व-मुपेक्षिताः सप्तमानुवाकोक्ताः सामिधेन्यः प्राप्ता दशाग्निक्यो व्याख्यायन्ते। तत्रैतासां सामिधेनीनां प्राकृतीभिः सामिधेनीभिः सह समुच्चयमभ्युपेत्य सङ्ख्याविशिष्टाः सामिधेनीर्विधत्ते,— "एकविꣳशतिꣳ सामिधेनीरन्वाह रुग्वा एकविꣳशो रुचमेव गच्छत्यथो प्रतिष्ठामेव प्रतिष्ठा ह्येकविꣳशः" (५।१।८अ०) इति। सूत्रकारेण, 'एकादश प्राकृतीः समास्नाय' इति 'दश आग्निकीः' इति सूक्तं। सप्तमकाण्डे, "य एवं विद्वाꣳस एकविꣳशतिरात्रमासते रोचन्त एव"(२।१०) इत्येकविंशतिसङ्ख्याया दीप्तिहेतुत्वश्रवणादत्रत्यया सङ्ख्यया युक्तस्य एकविंशस्तोमो दीप्तिरूपः, तथा प्रकृतौ काम्यसामिधेनीप्रस्तावे एकविꣳशस्तोमानां प्रतिष्ठत्युक्तत्वात् प्रतिष्ठा-रूपश्च; अतस्तया सङ्ख्यया रुचं प्रतिष्ठाञ्च प्राप्नोति।

तत्रैव विकल्पितं पक्षान्तरं विधत्ते,—"चतुर्विꣳशतिमन्वाह चतुर्विꣳशतिरर्द्धमासाः संवत्सरः संवत्सरोऽग्निर्वैश्वानरः साक्षादेव वैश्वानरमवरुन्धे" (५।१।८अ०) इति। तत्र शाखान्तरोक्ता 'उपेम सृजि वा अयुः(!)' इत्याद्यास्तिस्रो धाय्याः प्रक्षिप्य चतुर्विंशतिसङ्ख्या

श्रीगणेशाय नमः ।



# अथ तैत्तिरीयसंहिताभाष्ये

## चतुर्थकाण्डे प्रथमप्रपाठके

### प्रथमोऽनुवाकः ।

॥ हरिः ॐ ॥

युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः । अग्निं ज्योतिर्निचाय्य पृथिव्या अध्याभरत्[१] । युक्त्वाय मनसा देवान्त्सुवर्यतो धिया दिवं । बृहज्ज्योतिः करिष्यतः सविता प्र सुवाति तान्[२] । युक्तेन मनसा वयं देवस्य सवितुः सवे । सुवर्गेयाय शक्त्यै[३] । युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । वि होत्रा दधे वयुनाविदेक इत् ॥ १ ॥

मही देवस्य सवितुः परिष्टुतिः[४] । युजे वां ...कः पूर्व्यं नमोभिः ... युञ्जानः (चमार-

यस्य प्रयाणमन्वन्य इद्ययुर्देवा देवस्य महिमानम... यः पार्थिवानि विममे स एतशो रजांसि ...

पूरणोया। विश्वेषां नराणां हितः 'वैश्वानरः', दाहपाकादिकारित्वात् हितत्वम्। तादृशोऽग्निः संवत्सररूपः। 'संवत्सरमुख्यं भूत्वा' इत्यग्नेः संवत्सरसम्बन्धस्य वक्ष्यमाणत्वात्। ततश्चतुर्विंशतिसङ्ख्याया अर्द्धमाससंवत्सरद्वारेण मुख्यमेव वैश्वानरं प्राप्नोति।

प्रकृतौ यदुक्तं 'त्रिःप्रथमामन्वाह त्रिरुत्तमाम्' इति, तदेतदपवदितुं विधत्ते,—"पराचीरन्वाह पराङिव हि सुवर्गो लोकः" (५।१।८अ०) इति। 'पराचीः' अनावृताः। स्वर्गलोकोऽपि पराङेव न कदाचिदावर्त्तते। तदेतत् सर्वं सूत्रकारेण सङ्गृहीतम्,—'एकविंशतिं चतुर्विंशतिं वा पराचीः सामिधेनीरन्वाह' इति।

तत्राग्निकोषु प्रथमाया ऋचः प्रथमपादे संवत्सरवाचिनः समाशब्दस्य ऋतुशब्दस्य तात्पर्यं दर्शयति,—"समास्त्वाग्न ऋतवो वर्द्धयन्त्वित्याह समाभिरेवाग्निं वर्द्धयत्यृतुभिः संवत्सरम्" (५।१।८अ०) इति। ऋतवः प्रवर्त्तमानाः संवत्सरं पूरयन्ति; संवत्सरं च उखाग्निधारणेनाग्निं वर्द्धयन्ति (?)।

एवमृतूनां संवत्सरस्य चाभिवृद्धिसाधनत्वं प्रतिपाद्य चतुर्थपादे 'आभाहि' इत्यस्य तात्पर्यं दर्शयति,—"विश्वा आभाहि प्रदिशः पृथिव्या इत्याह तस्मादग्निः सर्वा दिशोऽनुविभाति" (५।१।८अ०) इति।

नवम्या ऋचस्तृतीयपादे 'प्रत्यौहताम्' इति पदस्य तात्पर्यं दर्शयति,—"प्रत्यौहतामश्विना मृत्युमस्मादित्याह मृत्युमेवास्मादपनुदति" (५।१।८अ०) इति।

महित्वना[१]। देव सवितः प्रसुव यज्ञं प्रसुव॥

ज्ञपतिं भगाय दिव्यो गन्धर्वः। केतपूः केतं नः तु वाचस्पतिर्वाचमद्य स्वदाति नः[७]। इमं नो सवितर्यज्ञं प्रसुव देवायुवꣳ सखिविदꣳ सत्राजितं धनजितꣳ सुवर्जितं[८]। ऋचा स्तोमꣳ समर्धय गायत्रेण रथन्तरं। बृहद्गायत्रवर्त्तनि[९]। देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां गायत्रेण छन्दसाऽऽददेऽङ्गिरस्वत्[१०] अभ्रिरसि नारिः॥३॥

असि पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभर त्रैष्टुभेन त्वा छन्दसाऽऽददेऽङ्गिरस्वत्[११] बभ्रिरसि नारिरसि त्वया वयꣳ सधस्थ आग्निꣳ शकेम खनितुं पुरीष्यं। जागतेन त्वा छन्दसाऽऽददेऽङ्गिरस्वत्[१२] हस्त आधाय सविता बिभ्रदभ्रिꣳ हिरण्ययीं। तया ज्योतिरजस्रमिदग्निं खात्वा न आभरानुष्टुभेन त्वा छन्दसाऽऽददेऽङ्गिरस्वत्[१३]॥४॥

... आनुष्टुभेन त्वा छन्द-

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे प्रथमप्रपाठके अनुवाकः॥ * ॥

दशमऋचः प्रथमपादे तमःशब्दार्थं दर्शयति,—"उद्वयं तमसस्परीत्याह पाप्मा वै तमः पाप्मानमेवास्मादपहन्ति" (५।१।८अ०) इति।

चतुर्थपादे ज्योतिःशब्दार्थं दर्शयति,—"अगन्म ज्योतिरुत्तममित्याहासौ वा आदित्यो ज्योतिरुत्तममादित्यस्यैव सायुज्यं गच्छति" (५।१।८अ०) इति। सायुज्यं सहभावम्।

"उद्वयं तमसस्परि" इत्यस्या ऋचः पाठप्राप्तं चरमभावित्वं प्रशंसति,—"न संवत्सरस्तिष्ठति नास्य श्रीस्तिष्ठति यस्यैताः क्रियन्ते ज्योतिष्मतीमुत्तमामन्वाह ज्योतिरेवास्मा उपरिष्टाद्दधाति सुवर्गस्य लोकस्यानुख्यात्यै" (५।१।८अ०) इति। 'यस्य' (यजमानस्य). 'एताः' "समास्त्वाग्ने" इत्याद्याः सामिधेन्यः 'क्रियन्ते', तस्य स्वर्गाधिगत्यर्थमुख्याग्निधारणहेतुः 'संवत्सरो' वा, एतदग्निसाधनसमूहरूपा 'श्रीः' वा 'न तिष्ठति' (न पर्याप्नोति), ज्योतिर्विरहात् ताभ्यां स्वर्गो नाधिगम्यत इत्यर्थः। अथ स्वर्गाधिगतिचरमां 'ज्योतिष्मतीम्' ऋचम् 'उत्तमां' ब्रूयात्। 'पश्यन्तो ज्योतिः' इत्येवं ज्योतिःशब्दस्य विद्यमानत्वात् "उद्वयं तमसस्परि" इत्येषा ज्योतिष्मती, 'अस्मै' (यजमानार्थं), ज्योतिष उपरि-धारणादूर्द्ध्वदेशवर्त्ती स्वर्गलोकोऽनुख्यातो भवति॥

अत्र विनियोगसङ्ग्रहः,—

ऊर्ध्वाः प्रयाजयाज्याः स्युर्द्दादशाऽऽप्रीतिनामकाः।
हिर, स्रुवाऽऽघारहोमो, 'यः प्राणेति इयं-इयम्॥

## श्रीगणेशाय नमः।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥
तृतीयकाण्डे सोमस्य शेषः प्रायेण वर्णितः।
चतुर्थे त्वग्निचित्यङ्गमन्त्राणां पाठ ईर्यते॥
अवान्तरविशेषस्तु विनियोगेषु दर्शितः।
चतुर्थकाण्डमग्न्याख्यं सप्तभिः पाठकैर्युतम्॥
उखासम्भरणे मन्त्राः प्रथमे पाठके श्रुताः।
एकादशानुवाकाः स्युस्तदर्थास्तु क्रमादमी॥
अभ्र्यादानं मृदाकाङ्क्षा खननं हरणं तथा।
उखानिर्माणसंस्कारौ सामिधेन्यस्तथाग्नयः॥
अग्न्युत्पादो धारणञ्च याज्या इत्यनुवाकगाः" इति।

तत्राभ्र्यादानप्रतिपादके प्रथमेऽनुवाके प्रथमं तावद्धोममन्त्रा उच्यन्ते।

कल्पः,—'जुह्वामष्टगृहीतं गृहीत्वा युञ्जानः प्रथमं मन इति यजुरष्टमाभिर्ऋग्भिरेकामाहुतिं जुहोति' इति। तत्र प्रथमामृचमाह,—"युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः। अग्निं ज्योतिर्निचाय्य पृथिव्या अध्याभरत्(१)" इति। 'सविता' (प्रेरकः परमेश्वरः) 'प्रथमम्' अग्निचयनविषये 'मनो' 'युञ्जानः' (समादधानः) 'धियः' (इष्टकादिविषयाणि ज्ञानानि), 'तत्त्वाय' (तनित्वा विस्तीर्य) 'अग्निं ज्योतिर्निचाय्य' (चीयमानमग्निं सफलानां कर्मणां

याज्यानुवाक्ये हि वपा-पुरोडाशहविष्षुता:* ।
यस्मिन्, विकल्पितो मन्त्र इति विंशतिरीरिता: ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये चतुर्थकाण्डे प्रथमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

आकूतिमग्निं प्रयुजꣳ स्वाहा मनो मेधामग्निं प्रयुजꣳ स्वाहा चित्तं विज्ञातमग्निं प्रयुजꣳ स्वाहा वाचो विधृतिमग्निं प्रयुजꣳ स्वाहा प्रजापतये मनवे स्वाहाऽग्नये वैश्वानराय स्वाहा विश्वे देवस्य नेतुर्मर्त्तो वृणीत सख्यं विश्वे राय इषुध्यसि द्युम्नं वृणीत पुष्यसे स्वाहा(१-७) मा सु भित्था मा सु रिषो दृꣳहस्व वीडयस्व सु । अम्ब धृष्णु वीरयस्व ॥ १ ॥

अग्निश्चेदं करिष्यथः(८) । दृꣳहस्व देवि पृथिवि स्वस्तये। आसुरी माया स्वधया कृतासि । जुष्टं देवानामिदमस्तु हव्यमरिष्टा त्वमुदिहि यज्ञे अस्मिन्(९)। मित्रैतामुखां तपैषा मा भेदि । एतां ते परिददाम्यभित्त्यै(१०)। द्रुन्नः सर्पिरासुतिः प्रत्नो होता वरेण्यः ।

---

* याज्यानुवाक्ये हि, वपा पुरोडाशहविःषु ताः ॥—
इति पाठो भवितुं युक्तः।

प्रकाशनसाधनभूतं निश्चित्य), 'पृथिव्याः' 'अधि'—'आभरत्' (आ-हृतवान् भूमेरुपरि आनीतवान्)। तदनन्तरमग्निम् उखालक्षणं* पृथिव्यां स्थापयितुम् उखानिर्माणादौ इमं होमं करोतीति भावः।

अथ द्वितीयामाह,—"युक्ताय मनसा देवान्त्सुवर्यतो धिया दिवं। बृहज्ज्योतिः करिष्यतः सविता प्र सुवाति तान्(२)" इति। 'सविता' 'तान्' (इन्द्रियविशेषान्) प्रकर्षेण 'सुवाति' (प्रेरयति), किं कृत्वा?—'देवान्' (क्रीडापरत्वेन चपलान्) इन्द्रियविशेषान् 'मनसा' 'युक्ताय' (विषयेभ्यो नियम्य)। कीदृशानिन्द्रियविशेषान्?—'सुवर्यतः' (स्वर्गं गच्छतः), स्वर्गप्राप्त्यर्थमुद्यतानित्यर्थः; 'बृहज्ज्योतिः' (प्रौढं दीप्यमानमग्निं) 'धिया दिवं' 'करिष्यतः' (तत्त-दिष्टकादिविषयया प्रज्ञया द्योतमानं कर्त्तुमुद्यतान्)।

अथ तृतीयामाह,—"युक्तेन मनसा वयं देवस्य सवितुः सवे। सुवर्गेयाय शक्त्यै(३)" इति। यस्मात् पूर्वोक्तरीत्या सविता इन्द्रियाणि प्रेरयति, तस्मात् 'वयं' "सवितुः' 'देवस्य' प्रेरणे सति 'युक्तेन' (वि-षयेभ्यो नियमितेन) 'मनसा' 'सुवर्गेयाय' (स्वर्गलोके गीयमान-स्याग्नेः सम्पादनाय) 'शक्त्यै' (शक्ता) भूयास्मेति शेषः।

अथ चतुर्थीमाह,—"युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः। वि होत्रा दधे वयुनाविदेक इत् मही देवस्य सवितुः परिष्टुतिः(४)" इति। 'विप्रस्य' (ब्राह्मणस्य) यज-मानस्य सम्बन्धिनो 'विप्राः' ऋत्विजः 'मनो' 'युञ्जते' (प्रथमं स्वकीयं मनो विषयेभ्यो निवर्त्त्य समाहितं कुर्वन्ति)। 'उत' (अपि च)

---

* तदनन्तरमुखालक्षणमिति, J. पु० पाठः।

सहस्रस्तुचो अद्भुतः(११)। परस्या अधि संवतोऽवराँ अभ्या ॥ २ ॥

तर। यत्राहमस्मि ताँ अव(१२)। परमस्याः परावतो रोहिदश्व इहागहि। पुरीष्यः पुरुप्रियोऽग्ने त्वं तरा मृधः(१३)। सीद त्वं मातुरस्या उपस्थे विश्वान्यग्ने वयुनानि विद्वान्। मैनामर्चिषा मा तपसाभि शूशुचोऽन्तरस्याँ शुक्रज्योतिर्विभाहि(१४)। अन्तरग्ने रुचा त्वमुखायै सदने स्वे। तस्यास्त्वँ हरसा तपं, जातवेदः शिवो भव(१५)। शिवो भूत्वा मह्यमग्नेऽथो सीद शिवस्त्वं। शिवाः कृत्वा दिशः सर्वाः स्वां योनिमिहासदः(१६) ॥ ३ ॥

वीरयस्व। अभ्या। तपन्। विँशतिश्च ॥ ९ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे प्रथमप्रपाठके नवमोऽनुवाकः ॥ ० ॥

अष्टमेऽनुवाके आप्रीयों याज्यानुवाक्यास्तोक्ताः। अथ नवमेऽनुवाके अग्न्युत्पादनमभिधत्ते। कल्पः, 'यत्प्राग्दीक्षाकृतोभ्यस्तक्तस्वाऽऽकूत्यै प्रयुजेऽग्नये स्वाहेति पञ्चाध्वरिकोऽङ्कत्वा आकूतिमग्निमिति षड़ाग्निकोर्विश्वे देवस्य नेतुरिति पूर्णाहुतिँ सप्तमीम्' इति। पाठस्तु,—"आकूतिमग्निं प्रयुजँ स्वाहा मनो मेधामग्निं प्रयुजँ

'धियः' (इष्टकादिविषयाणि ज्ञानानि) 'युञ्जते' (सम्पादयन्ति)। कीदृशस्य विप्रस्य?—'बृहतः' (प्रभूताग्निचयनोद्योगेनाभिवृद्धस्य); 'विपश्चितः' (विदुषः प्रयोगाभिज्ञस्य)। कीदृशा विप्राः?—'होत्राः' (होमशीलाः), कर्मण्यालस्यरहिता* इत्यर्थः। 'एक इत्' (एक एव) सविता 'वि'-'दधे' (सर्वमिदं निर्मितवान्)। कीदृशः सविता?—'वयुनावित्' (ऋत्विग्यजमानाभिप्रायाभिज्ञः)। कथम् एक एव सर्वमिदं कृतवानिति न विस्मेतव्यं, यतः 'सवितुः' 'देवस्य' 'परिष्टुतिः' 'मही' (परितः सर्वेषु देवेषु श्रूयमाणा स्तुतिर्महती)।

अथ पञ्चमीमाह,—"युजे वां ब्रह्म पूर्व्यं नमोभिर्वि श्लोका यन्ति पथ्येव सूराः। शृण्वन्ति विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः(५)" इति। यजमानः पत्नी चेत्येतौ हे दम्पती, 'वां' (युवयोरर्थे) 'पूर्व्यं' (पुरातनैर्महर्षिभिरनुष्ठितं) ब्रह्म (परिवृढं) अग्निचयनाख्यं कर्म 'नमोभिः' (नमस्कारपूर्वकैरिष्टकोपधानादिभिः) 'युजे' (सम्पादयामि)। तस्मिन् सम्पादिते सति 'श्लोकाः' (यजमानस्य कीर्त्तयः) 'वि'-'यन्ति' (भूमौ विविधं प्रसरन्ति)। तत्र दृष्टान्तः,—'पथ्या' 'सूरा' 'इव' (गीर्वाणमार्गे अन्तरिक्षे सूर्यरश्मयो यथा प्रसरन्ति तद्वत्)। किञ्च 'अमृतस्य' (प्रजापतेः) 'पुत्रा' 'ये' 'देवाः' 'दिव्यानि' 'धामानि' 'आ'-'तस्थुः' (प्राप्तवन्तः), तेऽपि 'विश्वे' (सर्वे) 'शृण्वन्ति' यजमानस्य कीर्त्तिमिति शेषः।

अथ षष्ठीमाह,—"यस्य प्रयाणमन्वन्य इत् ययुर्देवा देवस्य

* चयनकर्म्मण्यालस्यरहिता इति J. पु० पाठः।

स्वाहा चित्तं विज्ञातमग्निं प्रयुजꣳ स्वाहा वाचो विधृतिमग्निं प्रयुजꣳ स्वाहा प्रजापतये मनवे स्वाहा अग्नये वैश्वानराय स्वाहा विश्वे देवस्य नेतुर्मर्त्तो वृणीत सख्यं विश्वे राय इषुध्यसि द्युम्नं वृणीत पुष्यसे स्वाहा(१-७)" इति। 'आकूतिः' सङ्कल्पोऽस्मदनुष्ठानविषयः, तां 'प्रयुजं' (प्रेरकम्) 'अग्निम्' उद्दिश्य स्वाहुतमिदम् अस्तु। अनुष्ठेयस्मरणसाधनं यत् मनः, स्वतस्य धारणसामर्थ्यरूपा या मेधा, तदुभयं प्रति प्रयोजकम् 'अग्निम्' उद्दिश्य स्वाहुतमिदमस्तु। अविज्ञातस्यानुष्ठानस्य ज्ञानसाधनं यत् चित्तं, यदपि तेन चित्तेन ज्ञातुम्* अनुष्ठानं, तदुभयं प्रति प्रेरकम् 'अग्निम्' उद्दिश्य स्वाहुतमिदमस्तु। 'वाचः' मन्त्रपाठरूपायाः विधृतिः (विधारणं), तां प्रति प्रेरकम् 'अग्निम्' उद्दिश्य स्वाहुतमिदमस्तु। 'मनवे' (मनुष्याणां जनकाय) 'प्रजापतये' स्वाहुतमिदमस्तु। विश्वेषां नराणाम् अनुग्रहीतृत्वेन 'वैश्वानराय' अग्नये स्वाहुतमिदमस्तु। 'विश्वे' (विश्वात्मकस्य) 'नेतुः' (जगन्निर्वाहकस्य) 'देवस्य' 'सख्यम्' (अनुग्रहं) 'मर्त्तः' (मरणवान्) यजमानः सङ्घशा 'वृणीत'। तच्च सख्यम् ईदृशेन स्तोत्रेण लभ्यते। 'विश्वे' (हे विश्वात्मक), 'रायः' (धनस्य) 'इषुध्यसि' (ईशिषे, त्वं नियन्तासि) इति स्तुत्वा 'पोषसे'† (यज्ञपोषणाय) 'द्युम्नं' (धनं) 'वृणीत' (याचेत)-इदं हविस्वाहुतमस्तु।

---

* ज्ञातमिति पाठो भवितु युक्तः।
† पुष्यसे इति पाठो भवितुमुचितः।

महिमानमर्चतः। यः पार्थिवानि विममे स एतशो रजाꣳसि देवः सविता महित्वना(६)" इति। 'यस्य' सवितुः 'प्रयाणं' (प्रवृत्तिं) 'अन्ये' 'देवाः' 'अनु'-'ययुः' 'इत्' (अवश्यमनुगच्छन्त्येव)। किं कुर्वन्तः ?—अस्य 'देवस्य महिमानम्' 'अर्चतः' (अर्चयन्तः)। किञ्च 'यः' सविता 'पार्थिवानि' 'रजांसि' 'विममे' (पृथिवीगतान् परमाणून् विशेषेण गणयित्वा निर्मितवान्), 'स' 'सविता' 'देवः' 'महित्वना' (महत्त्वेन) 'एतशः' (व्याप्तवान्)। (एति सर्वत्र गच्छतीत्येतशः)।

अथ सप्तमीमाह,—"देव सवितः प्रसुव यज्ञं प्रसुव। यज्ञपतिं भगाय दिव्यो गन्धर्वः। केतपूः केतन्नः पुनातु वाचस्पतिर्वाचमद्य स्वदाति नः(७)" इति। हे 'सवितः' 'देव', 'यज्ञं' 'प्रसुव' (प्रकर्षेण प्रेरय), 'यज्ञपतिं' (यजमानञ्च) 'प्रसुव'। किमर्थं?—'भगाय' (सौभाग्याय)। 'दिव्यः' (दिवि स्वर्गे भवः) कश्चिद् 'गन्धर्वः', 'केतपूः' (केतं परकीयचित्ते वर्त्तमानं ज्ञानं पुनाति शोधयतीति केतपूः, स) च, 'नः' (अस्माकं) 'केतं' (चित्तवर्त्तिज्ञानं) 'पुनातु' (भ्रान्तिपरिहारेण शोधयतु)। 'वाचस्पतिः' 'अद्य' (अस्मिन् कर्मणि) 'नः' (अस्मदीयां) 'वाचं' 'स्वदाति'* (स्वदयतु)।

इत्यमृचः सप्तोक्त्वा अष्टमं यजुराह,—"इमं नो देव सवितर्यज्ञं प्रसुव देवायुवꣳ सखिविदꣳ सत्राजितं धनजितꣳ स्वर्जितम्(८)" इति। हे 'सवितः' 'देव', 'नः' (अस्मदीयम्) 'इमं' 'यज्ञं' 'प्रसुव'। कीदृशं?—(देवैर्यौति मिश्रीभवतीति देवायुः, तं)। 'देवा-

* स्वदातु इति B. एवं J. पु० पाठः।

'आकूतिम्' इत्यादिभिः 'वैश्वानराय स्वाहा' इत्यन्तैर्मन्त्रैः साध्यं होमं विधत्ते—"षड्भिर्दीक्षयति षड्वा ऋतव ऋतुभिरेवैनं दीक्षयति" (५।१।९अ०) इति। होमेन दीक्षाख्यं संस्कारं कुर्यादित्यर्थः।

कल्पः, 'विश्वे देवस्य नेतुरिति पूर्णाहुतिꣳ सप्तमीम्' इति। विधिमभिप्रेत्य विधेयगतां सप्तसङ्ख्यां प्रशंसति,—"सप्तभिर्दीक्षयति सप्त छन्दाꣳसि छन्दोभिरेवैनं दीक्षयति" (५।१।९अ०) इति। गायत्रीत्रिष्टुप्जगतीत्यादिमन्त्रोक्तेषु छन्दःसु अत्यष्टसु (?) अन्त्ययोरुष्णिक्ककुभोरेकीकारेण छन्दसां सप्तत्वम्।

'विश्वे देवस्य' इति मन्त्रे यदनुष्टुप्छन्दः, यच्चास्य मन्त्रस्य उत्तमत्वं चरमत्वम्, तदुभयं प्रशंसति,—"विश्वे देवस्य नेतुरित्यनुष्टुभा उत्तमया जुहोति वाग्वा अनुष्टुप् तस्मात् प्राणानां वागुत्तमा" (५।१।९अ०) इति। यस्मादिह 'अनुष्टुप्' वाग्रूपा सर्वमन्त्रेषु व्याप्ता च, 'तस्मात्' लोकेऽपि 'प्राणानां' (चक्षुरादीन्द्रियाणां मध्ये) 'वाग्' (उत्कृष्टा), वाचा हि विद्वत्सभायां राजसभायां च पूज्यो भवति।

अशेषजगद्व्यवहारसमर्थत्वेन मन्त्रं प्रस्तौति,—"एकस्मादक्षरादनाप्तं प्रथमं पदं तस्माद्यद्वाचोऽनाप्तं तन्मनुष्या उपजीवन्ति पूर्णया जुहोति पूर्ण इव हि प्रजापतिः प्रजापतेराप्त्यै न्यूनया जुहोति न्यूनाद्धि प्रजापतिः प्रजा असृजत प्रजानाꣳ सृष्ट्यै" (५।१।९अ०) इति। यस्मादस्यामृचि 'प्रथमं पदं' (प्रथमः पादः) एकेनाक्षरेण न्यूनं, 'तस्मात्' 'मनुष्याः' 'वाचः' स्वरूपम् 'अनाप्तम्' (असम्पूर्णम्) 'उपजीवन्ति' (मूलाधारादुत्पन्नो वायुर्मूर्द्धपर्यन्तं

युवं', (सखायं स्वनिष्पादकं यजमानं वेत्तीति सखिवित्, तं), (सत्राणि द्वादशाहादीनि जयति वशीकरोतीति सत्राजित्, तं), तानि हि चीयमानमग्निमपेक्षन्ते; (धनं जयति फलरूपेण सम्पादयतीति धनजित्, तं), (सुवः स्वर्गं फलरूपेण सम्पादयतीति सुवर्जित्, तम्) ।

अग्निचयनार्थानां चतुर्थकाण्डगतानां मन्त्राणां पञ्चमकाण्डे (१प्र०।१अ०) क्रमेणैव ब्राह्मणमाम्नातं । तत्रादौ 'युञ्जानः' इत्यादिभिर्मन्त्रैर्होमं विधत्ते,—"सावित्राणि जुहोति प्रसूत्यै" इति । सविता येषु मन्त्रेषु प्रतीयते, तानि सावित्राणि, तैर्होमे सति यजमानं सविता कर्मणि प्रसौति ।

द्रव्यं विधत्ते,—"चतुर्गृहीतेन जुहोति चतुष्पादः पशवः पशूनेवावरुन्धे" इति ।

चतुःसङ्ख्यां पुनः प्रशंसति,—"चतस्रो दिशो दिक्ष्वेव प्रतितिष्ठति" इति ।

पुनरपि प्रकारान्तरेण प्रशंसति,—"छन्दाꣳसि देवेभ्योऽपाक्रामन् न वो भागानि हव्यं वक्ष्याम इति तेभ्य एतच्चतुर्गृहीतमधारयन् पुरोऽनुवाक्यायै याज्यायै देवतायै वषट्काराय यच्चतुर्गृहीतं जुहोति छन्दाꣳस्येव तत्प्रीणाति तान्यस्य प्रीतानि देवेभ्यो हव्यं वहन्ति" इति । नानाविधच्छन्दोयुक्तपुरोऽनुवाक्याद्यभिमानिनो देवा हविर्भाग्भ्यो देवेभ्योऽपक्रान्ताः सन्तोऽन्यत्रागच्छन् । किं ब्रुवन्तो गताः ?—इति तदुच्यते,—हे देवा भागरहितानि वयं छन्दांसि 'वः' (युष्मदीयानि) हवींषि 'न' 'वक्ष्यामः'

प्रसृतः सन् वक्त्रे तत्तत्स्थानेषु वर्णान् उत्पादयति) ; तदिदं वर्णाभिव्यक्तिलक्षणं वाचस्तुर्थं पदं। पूर्वाणि तु त्रीणि पदानि कण्ठादध एव गूढत्वान्न अभिव्यञ्जयितुं शक्यन्ते। तथा चाम्नायते; 'गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति' इति। 'तुरीयं' (वैखरीत्याख्यवाचो रूपं)। एतेनासम्पूर्त्तेः वाग्व्यवहारसाम्यं दर्शितं। किञ्चेयमृक् उत्तरेषु पादेषु अक्षरसम्पूर्णा, सृष्ट्वा तेन पूर्णप्रजापतिसाम्यात् तत्प्राप्तये भवति। प्रथमपादे यदक्षरन्यूनत्वं, तेन सृष्टिपूर्वन्यजगद्बीजसाम्यात् प्रजोत्पत्तये भवति। 'हि' (यस्मात्) नितराम् 'ऊनात्' (प्रकृतेरविकारात्) उपादानात्, 'प्रजा असृजत'।

कल्पः, 'यत्राक्षुष्टिकर्मणस्तिष्ठत्वा शणकुलायेन मुञ्जकुलायेन चोखां* प्रच्छाद्य मासु भित्था इति द्वाभ्यामाहवनीये प्रहृणक्ति' इति। पाठस्तु,—"मा सु भित्था मा सु रिषो दृꣳहस्व वीड़यस्व सु। अम्ब धृष्णु वीरयस्वाग्निश्चेदं करिष्यथः(८)" इति। हे उखे, त्वं 'मा' 'भित्थाः' (भिन्ना मा भव)। तदिदमभिन्नत्वं सुष्ठु कर्त्तव्यम्। तथा 'मा रिषः' (स्फुटनेनापि हिंसिता मा भव)। तदेतदस्फुटनं सुष्ठु कर्त्तव्यम्। सर्वात्मना द्वैधीभावो भेदः, लेशस्य पृथग्भावः स्फुटनं; तदुभयं तव मा भूदित्यर्थः। 'दृꣳहस्व' (भेदाभावाय दृढा भव)। 'सु'-'वीड़यस्व' (स्फुटनाभावाय स्वाङ्गानि सुष्ठु दृढीकुरु)। हे 'धृष्णु' (धर्षणयुक्ते), हे 'अम्ब' (मातृसदृशे), 'वीरयस्व'

---

* वोखामिति आदर्शपुस्तकपाठः।

(हविर्वहनं न करिष्याम इति ब्रुवन्तः)। तदानीं देवा विचार्य होमकाले यच्चतुर्ग्रहणं तच्छन्दसां प्रीतिकरं भवत्विति तेषां भागमकल्पयन्;—तत्र प्रथमग्रहणं पुरोऽनुवाक्याख्याया गायत्रीदेवतायास्तुष्टिकरं; द्वितीयग्रहणं याज्याख्यायास्त्रिष्टुब्देवतायास्तुष्टिकरं; तृतीयग्रहणं देवताख्याया जगतीदेवतायास्तुष्टिकरं; चतुर्थग्रहणं वषट्काराख्याया अनुष्टुब्देवतायास्तुष्टिकरं। अतश्चतुर्गृहीतेन होमे सति छन्दोदेवता याः, ताः प्रीणयति, ताश्च प्रीताः सत्यो हव्यं वहन्ति।

सूत्रकारेण शाखान्तरमाश्रित्य अष्टगृहीतमित्युक्तं, तत्रेदं चिन्तनीयं,—किमेकैकं मन्त्रमुच्चार्य जुहुयात्, आहोस्वित् सर्वाणि मन्त्राण्युच्चार्य्य?—इति। तत्र हेयोपादेयावुभौ पक्षौ क्रमेण दर्शयति,—"यं कामयेत पापीयान्त्स्यादित्येकैकं तस्य जुहुयादाहुतीभिरेवैनमपगृह्णाति पापीयान् भवति यं कामयेत वसीयान्त्स्यादिति सर्वाणि तस्यानुद्रुत्य जुहुयादाहुत्यैवैनमभिक्रमयति वसीयान् भवत्यथो यज्ञस्यैवैषाभिक्रान्तिः" इति। 'पापीयान्' अतिशयेन पापो दरिद्र इत्यर्थः। एकैकं मन्त्रमुच्चार्य होमे सति संश्लेषाभावात् परस्परमपरक्ताभिराहुतिभिरेतं यजमानम् 'अपगृह्णाति' (धनादपेतं करोति) ततो दरिद्रो भवति। 'वसीयान्' वसुमत्तरः। सर्वाण्युच्चार्य होमे तु मन्त्राणां परस्परसंश्लेषादेकयैवाहुत्या यजमानम् 'अभिक्रमयति' (अभिव्याप्तं करोति), ततो धनिको भवति। अपि च, येयमभिक्रमणहेतुरेका आहुतिः; एषा यज्ञस्यैव अग्निचयनरूपस्यैव अभिक्रान्तिः। स्वाधीनो यज्ञो भवति।

(वीरवदाचर)। 'अग्निश्च' त्वञ्च मिलित्वा दृढमस्मदीयं कर्म 'करिष्यथः'।

अथ द्वितीयामाह,—"दृꣳहस्व देवि पृथिवि स्वस्तय आसुरी माया स्वधया कृतासि। जुष्टं देवानामिदमस्तु हव्यमरिष्टा त्वमुदिहि यज्ञे अस्मिन्(९)" इति। हे 'पृथिवि' 'देवि', (मृत्कार्यत्वात् पृथिवीरूपत्वं, मन्त्रैर्निष्पाद्यत्वाद्देवतात्वं ; तथाविधे) हे उखे, 'स्वस्तये' (यजमानार्थं) 'दृꣳहस्व' (दृढा भव)। 'आसुरी माया' (शम्बराद्यसुरनिर्मितमायेव) 'स्वधया कृतासि' (कव्यप्रदानवाचिना स्वधाशब्देनान्नमात्रमुपलक्ष्यते, अन्नेन निमित्तभूतेन तद्धेतुर्याग-* सिद्ध्यर्थं त्वं निष्पादितासि), आसुरी माया यद्वदचिन्त्यरचनारूपं चित्रं वस्तु, सहसा भूत्वा प्रतिभाति, तद्वत् त्वमसि ; द्विस्तनत्वादिरचनायुक्ता निष्पन्नासीत्यर्थः। त्वन्मुखान्निष्पत्स्यमानम् 'इदं' 'हव्यं' 'देवानां' 'जुष्टं' (प्रियम्) 'अस्तु'। त्वमपि 'अरिष्टा' (केनाप्यहिंसिता सती) 'अस्मिन्' 'यज्ञे' 'उदिहि' (उद्गता भव)।

अस्यामुखायां परितोऽङ्गारानारोप्य तापनं विधत्ते,—"यदर्चिषि प्रवृञ्ज्याद्भूतमवरुन्धीत यदङ्गारेषु भविष्यदङ्गारेषु प्रवृणक्ति भविष्यदेवावरुन्धे भविष्यद्धि भूयो भूतात्"(५।१।९अ०) इति। यदि ज्वालायाम् उखां प्रतपेत्, तदानीं 'यत्' अस्य गृहे 'भूतं' (पूर्वं विद्यमानं) धनमस्ति, तदेव स्वाधीनं भवति, न तु भविष्यत्। यदि 'अङ्गारेषु' प्रतपेत्, तदानीं गृहे 'भविष्यत्'

* तद्धेतुयागसिद्ध्यर्थमिति पाठो भवितुं युक्तः।

मन्त्रगतामष्टसङ्ख्यां प्रशंसति,—"एति वा एष यज्ञमुखादृद्ध्या योऽग्नेर्देवताया एत्यष्टावेतानि सावित्राणि भवन्त्यष्टाक्षरा गायत्री गायत्रोऽग्निस्तेनैव यज्ञमुखादृद्ध्या अग्नेर्देवतायै नैति" (५।१।१ ब्रा०) इति । यो यजमानोऽग्निरूपाया देवताया 'एति (अपगच्छति), 'एष' यजमानो यज्ञोपक्रमादारभ्य यज्ञफलरूपाया 'ऋद्ध्या' 'एति' (अपगच्छति)। 'अग्निर्वै यज्ञमुखम्' इति श्रुत्यन्तरात् अग्नेरपगम एव यज्ञमुखादपगमः । कस्त्वग्नेः सकाशादपगमस्य परिहारः? इति,—तदुच्यते, प्रारम्भे सावित्राणां मन्त्राणामष्टत्वे सति 'अष्टाक्षरा गायत्री' सम्पद्यते, 'अग्निः' च 'गायत्रः', उभयोर्मुखजन्यत्वात् ; ततो गायत्रीसम्पत्तिरेवाग्निसम्पत्तिरिति यज्ञमुखादग्निरूपादनपेतः सन् समृद्धेरपि नापैति ।

अष्टमन्त्रोपेतामेकामाहुतिं प्रशंसति,—"अष्टौ सावित्राणि भवन्त्याहुतिर्नवमी त्रिवृतमेव यज्ञमुखे वियातयति" (५।१।१ ब्रा०) इति । त्रिवृत्स्तोमे ऋचो नवसङ्ख्याकाः, अतोऽत्राष्टमन्त्रविशिष्टाहुतिगतया नवसङ्ख्यया त्रिवृत्स्तोममेव 'यज्ञमुखे' 'वियातयति' (विशेषेण प्रसारितवान् भवति) ।

अत्रेदमपरं चिन्तनीयं,—किं ऋग्रूपान् सप्तमन्त्रान् उच्चार्य, 'इमं नो देव सवितः' इति यजुः सप्तमं कृत्वा, पश्चात् 'देव सवितः' इत्यृचम् अन्तिमां कुर्यात्, किं वा एतामृचं सप्तमीं कृत्वा, तत् यजुरन्तिमं कुर्यात्? इति । तत्र हेयापादेयपक्षौ क्रमेण दर्शयति,—"यदि कामयेत छन्दाꣳसि यज्ञयशसेनार्पयेयमित्यृचमन्तमां कुर्याच्छन्दाꣳस्येव यज्ञयशसेनार्पयति यदि कामयेत

(अविद्यमानं) धनं प्राप्नोति। 'हि' (यस्मात्) जना 'भविष्यत्' धनं 'भूतात्' 'भूयः' (अधिकं) मन्यन्ते। न खलु कश्चिदपि भूतार्थं प्रतीयते, भविष्यदर्थन्तु सर्वोऽपि प्रयतते। अङ्गारेषु काष्ठैः समिन्धनेन ज्वाला भाविनी, अतोऽङ्गाराणां भाविधनहेतुत्वं युक्तम्।

तस्मिन् प्रतापने 'मा सु भित्था' इत्यादिमन्त्रद्वयं विनियुङ्क्ते,—"द्वाभ्यां प्रवृणक्ति द्विपाद्यजमानः प्रतिष्ठित्यै" (५।१।८ अ०) इति।

कल्पः, 'मित्रैतामुखां तपेति प्रदक्षिणमङ्गारैः परीन्धे' इति। पाठस्तु,—"मित्रैतामुखां तपैषा मा भेदि। एतां ते परिददाम्यभित्त्यै(१०)" इति। हे 'मित्र', 'एताम्' 'उखां' 'तप' (तप्तां कुरु)। 'एषा' (उखा) 'मा भेदि' (मा भिद्यताम्)। 'अभित्त्यै' (भङ्गाभावार्थम्) 'एताम्' 'उखां' 'ते' (तव) हस्ते 'परिददामि'।

देवतान्तरपरित्यागेन मित्रायैव उखायाः परिदाने कारणं दर्शयति,—"ब्रह्मणा वा एषा यजुषा सम्भृता यदुखा सा यद् भिद्येतार्त्तिमार्च्छेद्यजमानो हन्येतास्य यज्ञो मित्रैतामुखां तपेत्याह ब्रह्म वै मित्रो ब्रह्मन्नेवैनां प्रतिष्ठापयति नार्त्तिमार्च्छति यजमानो नास्य यज्ञो हन्यते" (५।१।८ अ०) इति। येयम् 'उखा', 'सा' 'एषा' परब्रह्मस्वरूपेण "वसवस्त्वा कृण्वन्तु" इत्यादिना यजुषा सम्पादिता, परब्रह्मण उत्पन्नत्वाद्यजुषो ब्रह्मत्वं। तथाविधेन 'यजुषा' उत्पन्नाया उखायाः कदाचिदपि भेदो न युक्तः, कुलालेन निर्मितादयजुष्कात् घटादिलक्षणत्वात्। एवं सति यदि कदाचित् प्रमादात् 'भिद्येत', तदानीं यजमानो म्रियेत, यज्ञोऽपि विनश्येत्। मित्राय उखायाः परिदाने तु मित्रस्य

मानं यज्ञयशसे मार्पयेयमिति यजुरन्तमं कुर्यात् यजमान-
यज्ञयशसे नार्पयति" (५।१।१अ०) इति। 'यज्ञयशसं' (यज्ञ-
) 'अर्पयेयं' (संयोजयेयम्), छन्दोबद्धाया ऋचस्तु अन्तिमत्वे
फलं छन्दः सुगच्छेत्। यजुषस्तु छन्दोरहितत्वेन यज्ञफलं
ढोगामि न भवति, किन्तु यजमानगाम्येव भवति; तस्माद्
रेवान्तिमं कुर्यादित्यर्थः।

कल्पः, 'ऋचा स्तोमꣳ समर्धयेत्यपरं चतुर्गृहीतं गृहीत्वा'
। पाठस्तु,—"ऋचा स्तोमꣳ समर्धय गायत्रेण रथन्तरं।
द्गायत्रवर्त्तनि(९)" इति। हे अग्ने, स्तोत्रहेतुमामाधारभूतया
चा' 'स्तोमं' (स्तोत्रं, आगावृत्तिरूपं संघातं वा) 'समर्धय'
द्धं कुरु)। 'गायत्रेण' साम्ना सह 'रथन्तरं' साम 'समर्धय'।
यत्रसामैव वर्त्तनि मार्गो यस्य बृहत्साम्नः, तत् 'गायत्रवर्त्तनि',
यत्रसामसहितं 'बृहत्' साम 'समर्धय'।

अस्मिन् मन्त्रे 'समर्धय' इतिपदस्य तात्पर्यं दर्शयति,—"ऋचा
मꣳ समर्धयेत्याह समृद्ध्यै" (५।१।१अ०) इति।

कल्पः, 'देवस्य त्वा सवितुः प्रसव इति चतुर्भिरभ्रिमादत्ते
वीं कल्माषीं सुषिरामसुषिरां चोभयतः-क्ष्णूमन्यतरतः-क्ष्णूं वा
देशमात्रीमरत्निमात्रीं व्याममात्रीमपरिमितां वा' इति।
ठस्तु,—"देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां
यत्रेण छन्दसाऽऽददेऽङ्गिरस्वत्(१०) अभ्रिरसि नारिरसि पृथिव्याः
स्थादग्निं पुरीष्यमङ्गिरस्वदाभर त्रैष्टुभेन त्वा छन्दसाऽऽददे-
ङ्गिरस्वत्(११) बभ्रिरसि नारिरसि त्वया वयꣳ सधस्थ आऽग्निꣳ

परब्रह्मरूपत्वात् ब्रह्मण्येवोखा प्रतिष्ठिता भवति। ततो यजमानस्य यज्ञस्य च नास्ति हानिः।

अथ भेदे सति प्रायश्चित्तिं विधत्ते,—"यदि भिद्येत तैरेव कपालैः सꣳसृजेत् सैव ततः प्रायश्चित्तिः" (५।१।९ अ०) इति। पक्वाया उखाया भेदे तदीयैः 'एव' 'कपालैः' मृदन्तरं मिश्रयित्वा पुनरप्युखां निष्पादयेत्, 'सैव' पुनर्निष्पादिता उखा 'ततः' (अभेदरूपादपराधात्) 'प्रायश्चित्तिः' विमोचनहेतुः।

पूर्वं सामान्याकारेणोखायाः प्रतपनम् आहवनीये विहितम्, अथ गतश्रियो विशेषं विधत्ते,—"यो गतश्रीः स्यान्मथित्वा तस्यावदध्याद्भूतो वा एष स स्वां देवतामुपैति" (५।१।९ अ०) इति। 'यः' अग्निचयने प्रवृत्ते 'गतश्रीः' शुश्रुवान्*, ग्रामणीः, राजन्यो वा भवेत्, तस्य मथितमग्निम् उखाया 'अवदध्यात्', न त्वाहवनीये उखायाः प्रवृञ्जनं कर्त्तव्यम्। 'एषः' त्रयाणां गतश्रियां मध्ये अन्यतमो 'भूतः' (भूतिमान् ऐश्वर्योपेतः), अतः प्रभुत्वात् 'सः' स्वकीयामेव मथिताग्निरूपां देवताम् उपेत्य† पूर्ववत्प्रवृञ्जनम् (?)।

अन्यमग्निं विधत्ते,—"यो भूतिकामः स्याद् य उखायै सम्भवेत् स एव तस्य स्यादतो ह्येष सम्भवत्येष वै स्वयम्भूर्नाम भवत्येव" (५।१।९ अ०) इति। आहवनीये प्रतप्तायाम् उखायां 'यः' अग्निः 'सम्भवेत्', 'स' 'एव' 'तस्य' भूतिकामस्य गतश्रियः कार्यो

---

* शुश्रुवान् इति J. पु० पाठः। सुश्रुवान् इति B. पु० पाठः।
† उपैतुम् इति आदर्शपुस्तकपाठः।

श्केम खनितुं पुरीष्यं जागतेन त्वा छन्दसाऽऽददेऽङ्गिरस्वत्[११] हस्त आधाय सविता बिभ्रदभ्रिꣳ हिरण्मयीं । तया ज्योतिरजस्रमिदग्निं खात्वा न आभरानुष्टुभेन त्वा छन्दसाऽऽददेऽङ्गिरस्वत्[११]" इति । अत्रोखां निर्मातुं मृत् खननीया, खननहेतुः काष्ठविशेषोऽभ्रिः । हे अभ्रे, 'सवितुः' 'देवस्य' प्रेरणे सति 'अश्विनोः' सम्बन्धिभ्यां मणिबन्धपर्यन्ताभ्यां 'बाहुभ्यां', 'पूष्णः' सम्बन्धिभ्यां साङ्गुलिभ्यां 'हस्ताभ्यां' साधनभूताभ्यां, सहायभूतेन 'गायत्रेण छन्दसा' युक्तः सन् त्वा 'आददे' (स्वीकरोमि) । तत्र दृष्टान्तः;— 'अङ्गिरस्वत्', अङ्गिरसः ऋषयः पूर्वं यथा स्वीकृतवन्तः तद्वत् । त्वं च 'अभ्रिरसि' (खननहेतुः काष्ठविशेषोऽसि) ; तथा 'नारिरसि' (न विद्यते अरिर्यस्यास्तव सेयं नारिः) खननकाले पाषाणादिना तव नास्ति कुण्ठीभाव इत्यर्थः ।

अङ्गिरस्वच्छब्देन प्रथमयजुषः समाप्तत्वात् 'अभ्रिरसि' इत्यादिकं द्वितीयं यजुः । मन्त्ररहिते हे अभ्रे, 'पृथिव्याः सधस्थात्' 'पुरीष्यम्' 'अग्निम्' 'आभर' (आहर) । पुरीषशब्देन पांसुरूपा शुष्का मृदुच्यते, तदर्हतीति पुरीष्योऽग्निः, मृदमादाय उखां कृत्वा तस्यामग्निरवस्थाप्यते, अतो मृदग्न्योरभेदोपचारेण मृदाहरणमेवाग्न्याहरणमिति विवक्षित्वा, 'पुरीष्यमग्निमाभर' इत्युच्यते । अयं चोपचारोऽग्निचयनप्रकरणे सर्वत्रानुवर्त्तिष्यते । अत एव पञ्चमकाण्डान्ते चोद्यपरिहारौ भविष्यतः,—"ब्रह्मवादिनो वदन्ति यन्मृदा चाद्भिश्चाग्निश्चीयतेऽथ कस्मादग्निरुच्यते इति छन्दोभिश्चिनोति अग्नयो वै छन्दाꣳसि तस्मादग्निरुच्यते" (५।७।८।अ०)

न तु मथितः, 'हि' (यस्मात्) 'अतः' (उखायाम्) 'एष' 'सम्भवति', तस्मान्मथनापेक्षामन्तरेण स्वयमेवोत्पन्नत्वात् 'एष' 'स्वयम्भूः' इत्युच्यते। एवं सति यजमानः 'भवत्येव' (भूतिं प्राप्नोत्येव)।

यजमानद्वेषिणोऽध्वर्योः प्रकारान्तरं विधत्ते,—"यं कामयेत भ्रातृव्यमस्मै जनयेयमित्यन्यतस्तस्याहृत्यावदध्यात् साक्षादेवास्मै भ्रातृव्यं जनयति" (५।१।९ अ०) इति। 'यं' उद्दिश्य शत्रुम्, 'अस्मै' 'जनयेयम्' इति 'कामयेत' अध्वर्युः, 'तस्य' 'अन्यतः' (गृहान्तरादिप्रदेशात्) अग्निमानीय उखायां प्रक्षिपेत्; तथा सति विलम्बमन्तरेणैव 'भ्रातृव्यं जनयति'।

अथ कामनाविशेषेणान्यमग्निं विधत्ते,—"अम्बरीषादन्नकामस्यावदध्यादम्बरीषे वा अन्नं भ्रियते सयोन्येवान्नं अवरुन्धे" (५।१।९ अ०) इति। घृतादिना शाकादिभर्जनार्थं यल्लौकिकं लोहादिपात्रं, तदम्बरीषं भ्राष्ट्रं, तस्मिन् प्रतप्ते घृतप्रक्षेपात् प्रौढ़ा ज्वाला उत्पद्यते, ततोऽग्निमाहृत्योखायाम् 'अवदध्यात्'। लोके हि तस्मिन् 'अम्बरीषे' शाकादिकमन्नं धार्यते। अतः काम्यमानेनान्नेन तस्याग्नेः समानयोनित्वाद्यजमानोऽन्नं प्राप्नोत्येव।

तदेवं प्रवृञ्जनप्रसङ्गागतान् विधीन् परिसमाप्य प्रकृतप्रवृञ्जनोपयुक्तं द्रव्यं विधत्ते,—"मुञ्जान् अवदधात्यूर्ग्वै मुञ्जा ऊर्जमेवास्मा अपि दधाति" (५।१।९ अ०) इति। शुष्कान् मुञ्जाख्यान् तृणविशेषान् उखायां प्रक्षिपेत, महिषादिभक्ष्यत्वान्मुञ्जा ऊर्ग्रूपाः। अन्नमेव यजमानाय सम्पादयति इति।

इति। अतः पांसुरूपमग्निमाहर्त्तुं 'त्रैष्टुभेन छन्दसा' सहकारिणा युक्तः त्वाम् 'आददे'। 'अङ्गिरस्वत्' इति दृष्टान्तः पूर्ववत्। मृदाहरणे अभ्र्यादाने च दृष्टान्तत्वाय द्विः 'अङ्गिरस्वत्' इत्युक्तम्।

अथ तृतीयं यजुरुच्यते, हे अभ्रे, त्वं 'बभ्रिः' (भरणकुशला मृत्सम्पादनकुशला) 'असि'। 'नारिरसि' इति पूर्ववत्। 'त्वया' युक्ता 'वयं' 'सधस्थे' (पृथिव्या उत्सङ्गे) 'आ'(समन्तात्) 'अग्निं' 'पुरीष्यं' 'खनितुं' 'शकेम' (शक्ता भवेम), अतो 'जागतेन' 'छन्दसा' सहकारिणा युक्तस्त्वाम् 'आददे'। 'अङ्गिरस्वत्' इति दृष्टान्तः पूर्ववत्।

अथ चतुर्थं यजुरुच्यते, 'सविता' (प्रेरकः परमेश्वरः) पुरा 'हिरण्ययीं' (सुवर्णनिर्मिताम्) 'अभ्रिं' 'हस्ते' स्थापयित्वा 'बिभ्रत्' (पोषितवान्), अतः 'तया' (हिरण्मय्या) अभ्र्या युक्तः त्वम् 'अजस्रमित्' (सर्वदैव) 'ज्योतिः' (प्रकाशमानं) 'अग्निं' 'खात्वा' (अग्नित्वेनोपचरितां मृदं खनित्वा) 'नः' (अस्मदर्थम्), 'आभर' (आनय)। 'आनुष्टुभेन' 'छन्दसा' सहकारिणा युक्तोऽहं त्वाम् 'आददे'। 'अङ्गिरस्वत्' इति दृष्टान्तः पूर्ववत्।

एतैर्मन्त्रैरभ्र्यादानं विधत्ते,—"चतुर्भिरभ्रिमादत्ते चत्वारि छन्दांꣳसि छन्दोभिरेव" (५।१।१अ०) इति। गायत्री-त्रिष्टुब्-जगत्यनुष्टुबिति च्छन्दसां चतुष्टयं। मन्त्रेषु तेषां सहकारित्वेनाभिधानात् छन्दोभिरेवाभ्रेरादानं कृतवान् भवति।

मन्त्रे प्रसवशब्दस्याभिप्रायं दर्शयति,—"देवस्य त्वा सवितः प्रसव इत्याह प्रसूत्यै" (५।१।१अ०) इति।

वंशनिर्मिताया अभ्रेरन्तः सुषिरत्वं विधत्ते,—"अग्निर्देवेभ्योऽनि-

कल्पः, 'द्रुन्नः सर्पिरासुतिरिति तस्यां क्रुमुकमुल्लिखितं घृतेनाक्ता अवदधाति मुञ्जांश्च' इति। पाठस्तु,—"द्रुन्नः सर्पिरासुतिः प्रत्नो होता वरेण्यः। सहसस्पुत्रो अद्भुतः(११)" इति। अनेनोच्यमानोऽग्निरेतैर्विशेषणैः प्रशस्यते। द्रुशब्देन वृक्ष उच्यते। 'द्रुषदमित्याह। वनस्पतयो वै द्रु। वनस्पतीनामेवैतेन स्तूयते' इति श्रुत्यन्तरात्। द्रुशब्दाभिधेया वृक्षा अन्नं यस्य असौ 'द्रुन्नः'। सर्पिरेव आहारत्वेन सूयते प्रेर्य्यतेऽस्मिन्निति 'सर्पिरासुतिः', 'प्रत्नः' (पुरातनः), 'होता' (देवानामाह्वाता), 'वरेण्यः' (वरणीयः), 'सहसः' (बलस्य) 'पुत्रः' (धनहेतुना बलेनोत्पद्यमानत्वात्), 'अद्भुतः' (आश्चर्यरूपः)।

अनेन मन्त्रेण साध्यं क्रुमुकावधानं विधत्ते,—"अग्निर्देवेभ्योऽनिलायत स क्रुमुकं प्राविशत् क्रुमुकमवदधाति यदेवास्य तत्र न्यक्तं तदेवावरुन्धे" (५।१।९अ०) इति। 'क्रुमुकं' अल्पं काष्ठशकलं। 'न्यक्तं' निलीनमग्निरूपं। 'तत्र' (तस्मिन्नेव काष्ठशकले) 'अस्य' (अग्नेः) 'यदेव' रूपं 'न्यक्तं' (निलीनं), तत् प्राप्नोति। चूर्णरूपं* क्रुमुकमिति तत्सूत्रकारेणोक्तम्।

अस्य क्रुमुकस्य घृताक्तत्वं विधत्ते,—"आज्येन संयौत्येतद्वा अग्नेः प्रियं धाम यदाज्यं प्रियेणैवैनं धाम्ना समर्द्धयत्यथो तेजसा" (५।१।९अ०) इति। 'संयौति' (तत् क्रुमुकं सम्मिश्रयेत्), आज्यस्याग्निस्थानत्वम् 'आप्यायतां घृतयोनिरग्निः' इत्यादिमन्त्र-

* चूर्णरूपमिति ... पु० पाठः।

लायत स वेणुं प्राविशत् एतामूतिमनुसमचरन् स यद्वेणोः सुषिरꣳ सुषिराऽग्निर्भवति सयोनित्वाय" (५।१।१।अ०) इति। पुरा कदाचित् केनापि निमित्तेन अपक्रम्योऽग्निर्देवेभ्यो निरगच्छत्, निर्गत्य देवानां दर्शनं वारयितुं 'वेणुं प्राविशत्'। वेणोर्मध्ये 'सुषिरं' (स्थानं) यदस्ति, एषैव मूषिकस्य अग्रविलवत् ऊती, ताम् 'एतामूतिं' वेणुमध्यगतच्छिद्ररूपाम् अनुक्रमेण सम्यगनुचरत् । अतोऽग्नेः सुषिरवेणुप्रियत्वात् 'अभ्रिः सुषिरा' कार्या। तत्र सुषिरत्वं 'सयोनित्वाय' सम्पद्यते । योनिरग्नेः स्थानं, तत्सहितत्वं सयोनित्वम्।

अथाभ्रेः कृष्णविन्दुलाञ्छितत्वं विधत्ते,—"स यत्र-यत्रावसत् तत्कृष्णमभवत् कल्माषी भवति रूपसमृध्यै" (५।१।१।अ०) इति। वेणुमध्ये सञ्चरन् अग्निर्यस्मिन्-यस्मिन् स्थाने वासमकरोत्, तत्-स्थानदाहेन* 'कृष्णमभवत्'। अतोऽग्निनिवासद्योतनाय अभ्रिः 'कल्माषी' (कृष्णविन्दुलाञ्छिता) कर्त्तव्या। तथा सति अभ्रिरूपस्य चित्रत्वात् समृद्धिर्दृश्यते, यजमानस्य च रूपसमृद्धिर्भवति ।

अभ्रेरुभयोरन्तयोस्तीक्ष्णत्वं विधत्ते,—"उभयतः-क्ष्णुर्भवतीतश्चामुतश्चार्कस्यावरुध्यै" (५।१।१।अ०) इति। 'क्ष्णु तेजने' इत्यस्माद्धातोरुत्पन्नः क्ष्णुशब्दस्तीक्ष्णत्वमाचष्टे, उभयोः अग्रमूलयोस्तीक्ष्णा अभ्रिः 'उभयतः-क्ष्णुः', तादृशी कार्या । तदेतदुभयतस्तीक्ष्णत्वम् 'इतश्चामुतश्च' (लोकद्वयेऽपि) 'अर्कस्य' 'अवरुध्यै' (पूजायाः सम्पत्त्यै) भवति ।

अभ्रेर्दैर्घ्यपरिमाणं विधत्ते,—"व्याममात्री भवत्येतावद्वै पुरुषे

* तत्स्थानं दाहेन, इति पाठो भवितुं युक्तः ।

वर्णात्, घृतेन ज्वालोत्पत्तेश्चावगन्तव्यं। ज्वालोत्पत्तिरेवात्र 'प्रयो तेजसा' 'समर्द्धयति' इत्युच्यते।

कल्पः, 'परस्या अधि संवत इति वैकङ्कतीं समिधमाद-धाति' इति। पाठस्तु,—"परस्या अधि संवतोऽवराँ अभ्या। तर। यत्राहमस्मि ताँ अव[११]" इति। सम्यक् वनुते देवान् भजते यस्यां क्रियायां सा क्रिया संवत्; 'परस्याः' 'संवतः' 'अधि' (उत्कृष्टाया इष्टेरधिष्ठानम्) त्वम् 'अवरान्' (निकृष्टानप्यस्मान्) 'अभ्या'-'तर' (आभिमुख्येनागत्य दुःखात्तारय)। 'यत्र' (येषु बन्धुषु) 'अहमस्मि' (तानपि बन्धून्) 'अव' (रक्ष)।

अनेन मन्त्रेण साध्यं समिदाधानं विधत्ते,—"वैकङ्कतीमादधाति भा एवावरुन्धे" (५।१।६ अ०) इति। आग्नेयी दीप्तिर्विकङ्कत-वृक्षेऽस्ति, अत एवाधानब्राह्मणे श्रूयते, 'अग्नेः सृष्टस्य यतः। विकङ्कतं भा आर्च्छत्' इति। अतो वैकङ्कतसमिधा दीप्तिः प्राप्यते।

कल्पः, 'परमस्याः परावत इति शमीमयीम्' इति। पाठस्तु,—"परमस्याः परावतो रोहिदश्व इहागहि। पुरीष्यः पुरुप्रियोऽग्ने त्वं तरा मृधः[१२]" इति। परावच्छब्दो दूरदेशवाची। हे 'अग्ने', 'परमस्याः परावतः' (अत्यन्तं दूरदेशात्) 'इह' (अस्मिन् कर्मणि) 'त्वम्' 'आगहि' (आगच्छ)। कीदृशस्त्वं?— 'रोहिदश्वः', लोहितवर्णोऽश्वो यस्यासौ 'रोहिदश्वः'। अत एवा-न्यत्राम्नायते, 'रोहितेन त्वाग्निर्देवतां गमयतु' इति। पुरीषम् उत्पत्तिहेतुभूतं पांसुमर्हतीति 'पुरीष्यः'। पुरूणां यजमानानां प्रियः 'पुरुप्रियः', तादृशः, 'त्वं' 'मृधः' (शत्रून्) 'तर' (अतिक्रम्य)।

वीर्यं वीर्यसम्मिता" (५।१।१अ०) इति। चतुर्भिररत्निभिस्तुल्यो व्यामः; एतावती कार्या। उत्थिते 'पुरुषे' 'वीर्यम्' 'एतावत्' एव। अत इयं 'वीर्यसम्मिता' भवति।

पक्षान्तरं विधत्ते,—"अपरिमिता भवत्यपरिमितस्यावरुद्ध्यै" (५।१।१अ०) इति। नियतपरिमाणरहितत्वमपरिमितत्वं, तच्चापरिमितस्य बहुत्वान्नादेः सम्पत्त्यै भवति।

तादृश्या अभ्रेर्वैणवकार्यत्वं विधत्ते,—"यो वनस्पतीनां फलग्रहिः स एषां वीर्यावान् फलग्रहिर्वेणुर्वैणवी भवति वीर्यस्यावरुद्ध्यै" (५।१।१अ०) इति। फलानि बहूनि गृह्णातीति 'फलग्रहिः'। 'वनस्पतीनां' मध्ये यः 'फलग्रहिः' अस्ति, 'एषां' फलग्रहिणामपि मध्ये 'स' वेणुरतिशयेन 'फलग्रहिः'। वीह्याद्यग्रवद्वेणूनां समाप्तिसंवत्सरे गोधूमसदृशैर्बहुभिर्वीजैरुपेतत्वात, त्वचि सारोपेतत्वेन वीर्यवांश्च। तस्मादियमभ्रिः 'वैणवी' कार्या। तच्च वैणवत्वं वीर्यसम्पत्त्यै भवति॥

अत्र विनियोगसङ्ग्रहः,—

युञ्जाऽष्टकैरेकहोम, ऋचा स्तोमं, पुनर्हुतिः।
देवेत्यभ्रिं चतुष्केणादत्ते, मन्त्रास्त्रयोदश॥

अथ मीमांसा,—द्वादशाध्यायस्य तृतीये पादे (अ०१४) चिन्तितम्।

"चतुर्भिरभ्रिमित्यत्र विकल्पो वा समुच्चयः।
विकल्पः पूर्ववन्नैवं समूहे करणत्वतः॥

अभ्रौ श्रूयते, 'चतुर्भिरभ्रिमादत्ते' इति; अत्र पूर्वोक्तवि-

अनेन मन्त्रेण साध्यं समिदाधानं विधत्ते,—"शमीमयीमादधाति शान्त्यै" (५।१।९अ०) इति। शमीवृक्षस्य अग्निदाहशमनहेतुत्वात् तदीयसमिधा शान्तिर्भवति। अतएवाधानब्राह्मणे पठ्यते, 'प्रजापतिरग्निमसृजत। सो बिभेत् प्र मा धक्ष्यतीति। तꣳ शम्याऽशमयत्। तच्छम्यै शमित्वम्' इति।

कल्पः, 'सीद त्वं मातुरस्या उपस्थ इति तिसृभिर्जातमुख्यमुपतिष्ठते' इति। तत्र प्रथमामाह,—"सीद त्वं मातुरस्या उपस्थे विश्वान्यग्ने वयुनानि विद्वान्। मैनामर्चिषा मा तपसाभि शूशुचोऽन्तरस्याꣳ शुक्रज्योतिर्विभाहि(१४)" इति। हे 'अग्ने', 'मातुः' इव 'अस्याः' (उखायाः) 'उपस्थे' (उत्सङ्गे) 'त्वं' 'सीद' (उपविश)। कीदृशस्त्वं?—'विश्वानि' 'वयुनानि' (सर्वान् ज्ञानोपायान्) 'विद्वान्'। 'एनाम्' (उखाम्) 'अर्चिषा' (त्वदीयदीप्त्या) 'मा' 'शूशुचः' (अत्यन्तं मा दीपय)। 'तपसा' (सन्तापेन) 'अभि' 'मा शूशुचः',—अर्चिः कारणं, तपः कार्यं; कारणेनैष तापो भवति, कार्येण तु भूयान्, तदुभयं मा कुर्वित्यर्थः। 'अस्याम्' (उखायाम्) 'अन्तः' 'शुक्रज्योतिः' (निर्मलप्रकाशः सन्) 'विभाहि' (विशेषेण दीप्यस्व)।

अथ द्वितीयामाह,—"अन्तरग्ने रुचा त्वमुखायै सदने स्वे। तस्यास्त्वꣳ हरसा तपं जातवेदः शिवो भव(१५)" इति। हे 'अग्ने', 'उखायै' (तस्या उखायाः) 'अन्तः' (मध्ये) 'स्वे' 'सदने' (स्वकीये स्थाने) 'रुचा' (दीप्त्या) दीप्यस्वेति शेषः। हे 'जातवेदः', 'त्वं' 'तस्याः' (उखायाः) 'शिवो भव' (सुखप्रदो भव)। किं कुर्वन्?—'हरसा' (तेजसा) 'तपन्' (ज्वलन्)।

भागमन्त्रवत् प्रतिमन्त्रं पृथक्करणत्वं नास्ति, चतुःसङ्ख्याया समूहे करणत्वप्रतीतेः, तस्मान्मन्त्रान्ते कर्मसन्निपातस्य बाधेनैव समुच्चयः स्यात्। न च, पूर्वस्येकैकस्य मन्त्रस्यान्ते सन्निपातेन स्यादिति शङ्कनीयं; वाचनिकसङ्ख्यया न्यायसिद्धस्य तस्य बाधितत्वात्॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्ण-यजुःसंहिताभाष्ये चतुर्थकाण्डे प्रथमप्रपाठके प्रथमोऽनुवाकः॥

---

इमामगृभ्णन् रशनामृतस्य पूर्व आयुषि विदथेषु कव्या। तया देवाः सुतमा बभूवुर्ऋतस्य सामन्त्स-रमारपन्ती[१]। प्रतूर्तं वाजिन्नाद्रव वरिष्ठामनु संव-तं। दिवि ते जन्म परममन्तरिक्षे नाभिः पृथिव्या-मधि योनिः[२]। युञ्जाथाꣳ रासभं युवमस्मिन् यामे वृषण्वसू। अग्निं भरन्तमस्मयु[३]। योगे-योगे तवस्तरं वाजेवाजे हवामहे। सखाय इन्द्रमूतये[४]। प्रतूर्वन्॥ ॥१॥

एह्यवक्रामन्नशस्तीरुद्रस्य गाणपत्यान्मयोभूरेहि। उर्वन्तरिक्षमन्विहि स्वस्तिगव्यूतिरभयानि कृण्वन्[५]। पूष्णा सयुजा सह। पृथिव्याः सधस्थादग्निं पुरीष्य-मङ्गिरस्वदच्छेहि[६] अग्निं पुरीष्यमङ्गिरस्वदच्छेमो[७]-ऽग्निं पुरीष्यमङ्गिरस्वद्भरिष्यामो[८]ऽग्निं पुरीष्यमङ्गिर-

अथ तृतीयामाह,—"शिवो भूत्वा मह्यमग्नेऽथो सीद शिवस्त्वं। शिवाः कृत्वा दिशः सर्वाः स्वां योनिमिहासदः(११)" इति। हे 'अग्ने', 'मह्यं' (मदर्थं) 'शिवः' (शान्तः) 'भूत्वा' 'अथो' (अनन्तरं) 'त्वं' 'शिवः' सन् 'सीद' (सर्वान् प्रति शान्तः सन्नुपविश)। 'सर्वाः' 'दिशः' 'शिवाः' (शान्ताः) 'कृत्वा' 'इह' (अस्याम् उखायां) 'स्वां योनिं' (स्वकीयं स्थानम्) 'आसदः' (आगत्योपविश)।

एतान् मन्त्रान् विनियुङ्क्ते,—"सीद त्वं मातुरस्या उपस्थ इति तिसृभिर्जातमुपतिष्ठते, त्रय इमे लोका एष्वेव लोकेष्वाविदं गच्छत्यथो प्राणानेवात्मन्धत्ते" (५।२।८ अ०) इति। 'आविदं' (ख्यातिं)। किञ्च प्राणापानव्यानानां त्रित्वात् तानपि त्रित्वसङ्ख्यया स्वात्मनि स्थापयति।

अत्र विनियोगसङ्ग्रहः,—

आकृतिं, सप्तभिर्दीक्षाऽऽहुतिर्मास्विति च दयात्।
पूर्वाग्नौ प्रवृणक्तोखां, मित्राऽङ्गारैः समिध्यते॥
द्रुन्नः, क्रमुकमाधत्ते, परः, वैकङ्कतीं, परम्,।
शमीमयीं, सीद, जातं, तिसृभिश्चोपतिष्ठते॥
नवमे त्वनुवाकेऽस्मिन् मन्त्राः षोडश वर्णिताः॥

अथ मीमांसा,—दशमाध्यायस्य तृतीयपादे (४अ०) चिन्तितम्,—

षड्भिर्दीक्षयतीत्यग्निगतं प्राकृतबाधकं।
समुच्चितं वा? बाधः स्यात् कार्यैक्यात् पाठवाक्यतः॥
अग्नौ होमाकृताकूतेरतिदिष्टेन तुल्यता।
विनाऽऽहुत्ति द्वादशत्वसिद्धये स्यात् समुच्चयः॥

स्वङ्गरामः(९)। अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः। अनु सूर्यस्य ॥ २ ॥

पुरुत्रा च रश्मीनन् द्यावापृथिवी आ ततान(१०)। आगत्य वाज्यध्वनः सर्वा मृधो वि धूनुते। अग्निꣳ सधस्थे महति चक्षुषा नि चिकीर्षते(११)। आक्रम्य वाजिन् पृथिवीमग्निमिच्छ रुचा त्वं। भूम्या वृत्वाय नो ब्रूहि यतः खनाम तं वयं(१२)। द्यौस्ते पृष्ठं पृथिवी सधस्थ-मात्मान्तरिक्षꣳ समुद्रस्ते योनिः। विख्याय चक्षुषा त्वमभितिष्ठ ॥ ३ ॥

पृतन्यतः(१३)। उत्क्राम महते सौभगायास्मादास्था-नाद्द्रविणोदा वाजिन् वयꣳ स्याम सुमतौ पृथिव्या अग्निं खनिष्यन्त उपस्थे अस्याः(१४)। उदक्रमीद्द्रवि-णोदा वाज्यर्वाकः स लोकꣳ सुकृतं पृथिव्याः। ततः खनेम सुप्रतीकमग्निꣳ सुवो रुहाणा अधि नाक उत्तमे(१५)। अपो देवीरुपसृज मधुमतीरयक्ष्माय प्रजाभ्यः। तासाꣳ स्थानादुज्जिहतामोषधयः सुपि-प्पलाः(१६)। जिघर्मि ॥ ॥ ४ ॥

अग्निं मनसा घृतेन प्रतिक्ष्यन्तं भुवनानि विश्वा। पृथुं तिरश्चा वयसा बृहन्तं व्यचिष्ठमन्नꣳ रभसं वि-दानं(१७)। आ त्वा जिघर्मि वचसा घृतेनारक्षसा

अग्निचयने दीक्षाहुतयः श्रूयन्ते, ‘षड्भिर्दीक्षयति’ इति; प्रकृतावपि ‘स्रुवेण चतस्रो जुहोति दीक्षितत्वाय’ इत्यादिना दीक्षाहुतयः षड् विहिताः। ते तु भिन्ना भिन्ना मन्त्राः,—‘आकूत्यै प्रयुजेऽग्नये स्वाहा’ इत्यादयः प्राकृता मन्त्राः; ‘आकूतिमग्निं प्रयुजꣳ स्वाहा’ इत्यादयो वैकृताः। तत्र वैकृतमाहुतिमन्त्रषट्कं प्राकृतस्य बाधकं, किं वा प्राकृतेन समुच्चितम्? इति संशये, बाधकमिति तावत् प्राप्तम्। कुतः?। कार्यैक्यात्, दीक्षणीयाङ्ग-भूताहुत्युपकारलक्षणं यत् कार्यं प्राकृतानां मन्त्राणां, तदेव वैकृतानामपि, न च, विकृतौ तन्न प्रतीयते इति शङ्कनीयं; स्वाहान्तपाठरूपेण लिङ्गेन मन्त्राणामाहुत्युपकारकत्वप्रतीतेः, आहुतीनाञ्च ‘षड्भिर्दीक्षयति’ इति वाक्ये तद्दीक्षणीयाङ्गत्व-प्रतीतेः। तस्मादुपदिश्यमानैर्मन्त्रैरतिदिष्टानां बाध इति पूर्वः पक्षः। अग्नौ मन्त्राणां स्वरूपं यद्यपि श्रुतिसिद्धं, तथापि होमाङ्गत्वं लिङ्गेन कल्पनीयं। तथा चातिदेशकल्पैर्मन्त्रैस्तुल्य-बलत्वान्न बाध्यबाधकता। एवमपि न समुच्चये प्रमाणमस्तीति चेत्। अस्त्येव, ‘द्वादश जुहोति’ इति सङ्ख्याविधानेन तत्सिद्धेः। न च, वैकृतानामेव षडामावृत्त्या सङ्ख्या सिध्यतीति वाच्यम्; आवृत्तेरश्रुतत्वात्। न च, सा कल्पयितुं शक्यते, अन्यथापि सङ्ख्योपपत्तेः। तस्मात् समुच्चय इति राद्धान्तः॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्ण-यजुःसंहिताभाष्ये चतुर्थकाण्डे प्रथमप्रपाठके नवमोऽनुवाकः॥ ९॥

---

मनसा तज्जुषस्व। मयि श्रीः स्पृहयद्वर्णो अग्निर्नाभिमृशे तनुवा जर्हृषाणः[१८]। परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत्। दधद्रत्नानि दाशुषे[१९]। परि त्वाऽग्ने पुरं वयं विप्रꣳ सहस्य धीमहि धृषद्वर्णं दिवेदिवे भेत्तारं भङ्गुरावतः[२०]। त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि। त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः[२१] ॥ ५ ॥

प्रतूर्वन्। सूर्यस्य। तिष्ठ। जिघर्मि। भेत्तारं। विꣳशतिश्च ॥ २ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे प्रथमप्रपाठके द्वितीयोऽनुवाकः ॥०॥

प्रथमेऽनुवाके अभ्यादानमुक्तम्। अथ द्वितीये मृदाक्रान्तिरुच्यते। कल्पः, 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीꣳ रशनामादाय' इति। पाठस्तु,—"इमामगृभ्णन् रशनामृतस्य पूर्व आयुषि विदथेषु कव्या। तया देवाः सुतमा बभूवुर्ऋतस्य सामन्त्सरमारपन्ती[१]" इति। (कवयः विद्वांसः ऋत्विजः, तानर्हन्तीति कव्याः) यज्ञाः कव्याः, 'विदथेषु' कव्येषु यज्ञेषु ज्योतिष्टोमादिषु 'ऋतस्य' 'आयुषि' (आयुरागमने) (सत्यस्य आगमने) निमित्तभूते सति, (ऋतशब्दो यागवाची सन्, तत्र साधनमश्वमपलक्षयति)। 'पूर्वे' महर्षय 'इमां' 'रशनाम्'

यदग्ने यानि-कानि चा ते दारूणि दध्मसि। तदस्तु तुभ्यमिद्घृतं तज्जुषस्व यविष्ठ[१]। यदत्त्युपजिह्विका यद्वम्रो अतिसर्पति। सर्वं तदस्तु ते घृतं तज्जुषस्व यविष्ठ[२]। रात्रिꣳ-रात्रिमप्रयावं भरन्तोऽश्वायेव तिष्ठते घासमस्मै। रायस्पोषेण समिषा मदन्तोऽग्ने मा ते प्रतिवेशा रिषाम[३]। नाभा॥ १॥

पृथिव्याः समिधानमग्निꣳ रायस्पोषाय बृहते हवामहे। इरंमदं बृहदुक्थं यजत्रं जेतारमग्निं पृतनासु सासहिं[४]। याः सेना अभीत्वरीरा-व्याधिनीरुगणा उत। ये स्तेना ये च तस्करास्ताꣳस्ते अग्नेऽपिदधाम्यास्ये[५]। दꣳष्ट्राभ्यां मलिम्लून् जम्भ्यै-स्तस्कराꣳ उत। हनूभ्याꣳस्तेनान् भगवस्ताꣳस्त्वं खाद सुखादितान्[६]। ये जनेषु मलिम्लवस्तेनासस्तस्करा वने ये॥ २॥

कक्षेष्वघायवस्ताꣳस्ते दधामि जम्भयोः[७]। यो अस्मभ्यमरातीयाद्यश्च नो द्वेषते जनः। निन्दाद्यो अस्मान् दिप्साच्च सर्वं तं मस्मसा कुरु[८]। सꣳशितं मे ब्रह्म सꣳशितं वीर्यं बलं। सꣳशितं क्षत्रं जिष्णु यस्या-हमस्मि पुरोहितः[९]। उदेषां बाहू अतिरमुद्वर्च उदू बलं। क्षिणोमि ब्रह्मणाऽमित्रानुं-नयामि॥ ३॥

'अगृभ्णन्' (स्वीकृतवन्तः)। अयमर्थः,—रशनया बद्धमश्वमानीय, मृत्खननस्थाने तमश्वमाक्रमय्य, तया मृदा निष्पन्नायाम् उखायामग्निमुत्पाद्य, इष्टकाचिते देशे ज्योतिष्टोमादय ऋत्विग्भिरनुष्ठेयाः; एतत्सर्वं मनसि निधाय पूर्वं महर्षयोऽश्वागमनं निमित्तीकृत्य रशनां स्वीकृतवन्त इति। 'षो अन्तकर्मणि' इत्यस्माद्धातोरुत्पन्नत्वात् सामन्शब्दोऽवसानवाची; 'ऋतस्य सामन्' (यज्ञस्य परिसमाप्तये) 'सरं' (सरणे ऋत्विग्यजमानानां प्रवृत्तिं) 'आरपन्ती' (कथयन्ती प्रापयन्तीत्यर्थः*); या रशना पूर्वोक्तरीत्या यज्ञसमाप्तिपर्यन्तं प्रवृत्तिकारिणी भवति, 'तया' रशनया पुरा 'देवाः' 'सुतम् आ-बभूवुः' (सोमयागं प्राप्नुयुः), तादृशीम् इमां रशनां गृहीतवन्तः।

तमिमं मन्त्रं विनियुङ्क्ते,—"व्यृद्धं वा एतद्यज्ञस्य यदयजुष्केण क्रियते इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते यजुष्कृत्यै यज्ञस्य समृद्ध्यै" (५।१।२अ०) इति। 'यत्' अङ्गम् 'अयजुष्केण' (मन्त्ररहितव्यापारेण) निष्पाद्यते, 'यज्ञस्य' सम्बन्धि तत् 'एतत्' अङ्गम् ऋद्धिहीनमेव, तस्मात् 'इमाम्'— इति मन्त्रमुच्चार्य रशनामाददीत। अश्वोऽभिधीयते,-बध्वा धार्यते यया रशनया, सेयम् 'अश्वाभिधानी'। यद्यपि 'इमामगृभ्णन्' इति ऋगेवैषा, तथापि यजुर्वेदपठितत्वाद्यजुष्ट्वोपचारः। तस्मिन्मन्त्रे पठिते सति रशनादानं सयजुष्कत्वात् समृद्धं भवति।

* प्रार्थयन्तीत्यर्थः इति B. पु० पाठः।

स्वाꣳ अह[१०] । दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः । अग्निरमृतो अभवद्वयोभिर्यदेनं द्यौरजनयत्सुरेताः[११] । विश्वा रूपाणि प्रतिमुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे । वि नाकमख्यत् सविता वरेण्योऽनु प्रयाणमुषसो विराजति[१२] । नक्तोषासा समनसा विरूपे धापयेते शिशुमेकꣳ समीची । द्यावा क्षामा रुक्मः ॥ ४ ॥

अन्तर्विभाति देवा अग्निं धारयन् द्रविणोदाः[१३] । सुपर्णोऽसि गरुत्मान् त्रिवृत्ते शिरो गायत्रं चक्षुः स्तोम आत्मा साम ते तनूर्वामदेव्यं बृहद्रथन्तरे पक्षौ यज्ञायज्ञियं पुच्छं छन्दाꣳस्यङ्गानि धिष्णियाः शफा यजूꣳषि नाम[१४] । सुपर्णोऽसि गरुत्मान् दिवं गच्छ सुवः पत[१५] ॥ ५ ॥

नाभा । वने ये । नयामि । क्षामा रुक्मः । अष्टाचित्वारिꣳशच्च ॥ १० ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे प्रथमप्रपाठके दशमोऽनुवाकः ॥ ० ॥

कल्पः, 'प्रतूर्त्तं वाजिन्नाद्रवेत्यश्वमभिदधाति' इति। पाठस्तु,—"प्रतूर्त्तं वाजिन्नाद्रव वरिष्ठामनु संवतं। दिवि ते जन्म परममन्तरिक्षे नाभिः पृथिव्यामधि योनिः(१)" इति। संवन्यते, सम्यक् भज्यते मृद्ग्रहणार्थं सेव्यत इति खननयोग्या भूमिः संवत्; सा च पाषाणाद्यभावेनातिप्रशस्तत्वाद्वरिष्ठेत्युच्यते। हे 'वाजिन्' (अश्व), 'वरिष्ठां' 'संवतम्' 'अनु' (अभिलक्ष्य) 'प्रतूर्त्तं' 'आद्रव' (अतिशीघ्रमागच्छ)। 'ते' (तव) अश्वस्य 'दिवि' (द्युलोके) 'परमम्' (उत्कृष्टं) 'जन्म' (रोहितादिदेवस्वरूपेण द्युलोकजन्म प्रसिद्धम्, 'रोहितेन त्वाऽग्निर्देवतां गमयत्वित्याहैते वै देवाश्वाः' इति ह्यन्यत्राम्नातम्। तथा तव 'नाभिः' 'अन्तरिक्षे' वर्त्तते,—वायुर्नामका हि वायोरश्वा तदीयं रथं वहन्तोऽन्तरिक्षे सञ्चरन्ति, तद्रूपेण अस्यान्तरिक्षवर्त्तित्वम्। नाभिशब्देन कृत्स्नं शरीरमुपलक्ष्यते। तथा 'पृथिव्यामधि योनिः' (भूमेरुपरि तव निवासस्थानं), तत्तु प्रत्यक्षमेव दृश्यते। एवंमहिमा त्वं शीघ्रमागच्छेति पूर्वत्रान्वयः।

एतं मन्त्रं विनियुङ्क्ते,—"प्रतूर्त्तं वाजिन्नाद्रवेत्यश्वमभिदधाति रूपमेवास्यैतन्महिमानं व्याचष्टे" (५।१।२अ०) इति। 'वाजिन्नाद्रवेत्येवं' शीघ्रमागमनमश्वस्य स्वरूपभूतमेव 'महिमानम्' एतन्मन्त्रवाक्यं प्रकाशयति। अथवा अस्य मन्त्रस्य, एतद्रूपं वाक्यजातं युजमानादिरूपं 'महिमानम्' एव व्याचष्टे। वस्तुतो युजमानाभावेऽपि प्रशंसार्थमेवोच्यत इत्यर्थः।

कल्पः, 'तूष्णीं गर्दभरशनामादाय युञ्जायाङ्‌ रासभं युव-

नवमेऽनुवाके मन्थ्युत्पादनमुक्तम्। अथ दशमे अग्निधारणम् उच्यते। कल्पः, 'यदग्ने यानि-कानि चेति पञ्चभिरौदुम्बर-मपरशुवृक्णमुख्य इध्ममभ्यादधाति' इति। तत्र प्रथमामाह,— "यदग्ने यानि-कानि चा ते दारूणि दध्मसि। तदस्तु तुभ्यमिद्घृतं तञ्जुषस्व यविष्ठ्य[१]" इति। हे 'अग्ने', 'ते' (त्वदर्थं) 'यानि-कानि च' 'दारूणि' (दारुशब्देन कुठारच्छेदरहितमवि-दारितं काष्ठमुच्यते); तादृशानि यानि-कान्यरण्ये पतितानि काष्ठान्यानीय 'दध्मसि' (धारयामः) इति 'यत्', 'तत्' सर्वं 'तुभ्यं' (त्वदर्थं) 'घृतम्'-'इत्' (घृतमिव, घृतवत् प्रियम्) 'अस्तु'। हे 'यविष्ठ्य' (युवतम) 'तत्' दारुजातं 'जुषस्व'।

अथ द्वितीयामाह,—"यदत्त्युपजिह्विका यद्वम्रो अतिसर्पति। सर्वं तदस्तु ते घृतं तञ्जुषस्व यविष्ठ्य[२]" इति। जिह्वाः प्रधानज्वालाः तत्समोपवर्त्तिनी क्षुद्रज्वाला 'उपजिह्विका'। अस्माभिररण्यादानीतेषु दारुषु मध्ये 'यत्' दारु महारण्ये दावाग्नेः 'उपजिह्विका' (स्वल्पज्वाला) 'अत्ति'-भक्षयति, ईषद्दहतीत्यर्थः। 'वम्र'-शब्दः पिपीलिकासदृशं क्षुद्रजीवमाचष्टे, स च यत् काष्ठम् 'अतिसर्पति' (अतिशयेन सर्पति प्राप्नोति), काष्ठा-वयवेषु तत्र-तत्र सारं भक्षयतीत्यर्थः; तत्सर्वमित्यादि* पूर्ववत्।

अथ तृतीयामाह,—"रात्रिं-रात्रिमप्रयावं भरन्तोऽश्वायेव तिष्ठते घासमस्मै। रायस्पोषेण समिषा मदन्तोऽग्ने मा ते प्रति-वेशा रिषाम[३]" इति। हे 'अग्ने', 'ते' (तव) 'प्रतिवेशाः'

* 'सर्व्वं तत्' इत्यादि—इति पाठो भवितुं युक्तः।

मिति गर्दभम्' इति। मन्त्रमन्तरेणैव गर्दभस्य रशनामादाय 'युञ्जाथाम्' इति मन्त्रेण गर्दभमभिदध्यात्। पाठस्तु,—"युञ्जाथा रासभं युवमस्मिन् यामे वृषण्वसू। अग्निं भरन्तमस्मयुम्(१)" इति। यजमानः पत्नी चेत्येतौ द्वे दम्पती, 'युवं' 'रासभम्' 'अस्मिन्' 'यामे' 'युञ्जाथां',—यामो मृद्वहनरूपो नियमविशेषः, तस्मिन्निमित्तभूते सति, युवामुभौ गर्दभं रशनया बध्नीतं। कीदृशौ युवं?—'वृषण्वसू' (यागनिष्पादनद्वारा फलाभिवर्षणनिमित्तभूतं वसु धनं ययोस्तौ वृषण्वसू)। कीदृशं रासभं? 'अग्निं भरन्तं' (अग्निहेतुं मृदं वोढुं समर्थं) 'अस्मयुं' (अस्मानात्मन इच्छन्तम्) अस्मद्धितैषिणमिति यावत्।

एतं मन्त्रं विनियुङ्क्ते,—"युञ्जाथा रासभं युवमिति गर्दभमसत्येव गर्दभं प्रतिष्ठापयति तस्मादश्वाद्गर्दभोऽसत्तरः"(५।१।२ अ०) इति। 'गर्दभम्' इत्यत्र 'अभिदधाति' इति शेषोऽनुवर्त्तते। 'अस्मिन् यामे' इति मन्त्रेऽभिहितं मृद्वहनम् 'असत्' इत्युच्यते, भारवहनस्य निकृष्टव्यापारत्वात्। अत एतन्मन्त्रपाठेन 'असत्येव' निकृष्टव्यापारे 'गर्दभं' स्थापितवान् भवति। यस्मादत्र निकृष्टकार्ये स्थापितः, 'तस्मात्' लोकेऽपि 'गर्दभो' 'अश्वात्' निकृष्टतरः। रजकादय एव हि तमाद्रियन्ते, न तु राजामात्यादयः।

कल्पः, 'योगे-योगे इति तिसृभिरग्रप्रथमा अभि प्रव्रजन्ति यत्र मृदं खनिष्यन्तः स्युः' इति। तत्र प्रथमामाह,—"योगे-योगे तवस्तरं वाजे-वाजे हवामहे। सखाय इन्द्रमूतये(४)" इति। युज्यतेऽनुष्ठीयते इति योगः कर्म, 'योगे-योगे' (तत्तत्कर्मणि) 'तवस्तरं'

(प्रत्यासन्नाः) वयं 'मा' 'रिषाम' (हिंसां न प्राप्नुमः)। किं कुर्वन्तः?— 'रायस्पोषेण' (धनपुष्ट्या, धनपोषेण) 'इषा' (अन्नेन) च सम्यक् 'मदन्तः'। तथा 'रात्रिं-रात्रिं' (प्रतिदिनं) 'अप्रयावं' (पृथग्-भावमकृत्वा), एकमपि दिनमत्यक्त्वेत्यर्थः। 'अस्मै' (अग्नये) 'घासं' (समिद्रूपं भक्ष्यं) 'भरन्तः' (सम्पादयन्तः)। तत्र दृष्टान्तः,— 'तिष्ठते' 'अश्वायेव'। वाजिशालायां बद्ध्वा स्थापिताय प्रौढाय अश्वाय एकमपि दिनमवर्जयित्वा यथा घासं प्रयच्छन्ति, तद्वत्।

अथ चतुर्थीमाह,—"नाभा पृथिव्याः समिधानमग्निꣳ रायस्पोषाय बृहते हवामहे। इरंमदं बृहदुक्थं यजत्रं जेतार-मग्निं पृतनासु सासहिम्[४]" इति। 'बृहते' (प्रौढाय) 'राय-स्पोषाय' 'अग्निम्' इमं वयं 'हवामहे' (आह्वयामः)। कीदृशमग्निं?— 'पृथिव्याः' 'नाभा' 'समिधानं' (उखाया मध्ये सम्यक् दीप्यमानं), (इरया समिद्रूपेण अन्नेन माद्यतीति 'इरंमदः'), तं, (बृहन्ति उक्थानि प्रशंसनानि यस्यासौ 'बृहदुक्थः'), तं, 'यजत्रं' (याग-हेतुं), 'जेतारं' (राक्षसादिविषयजयशीलं), 'पृतनासु' 'अग्निं' (सङ्ग्रामेषु अग्रे गच्छन्तं), 'सासहिम्' (अस्मदपराधानामतिशयेन सोढारम्)।

अथ पञ्चमीमाह,—"याः सेना अभीत्वरीराव्याधिनीरुगणा उत। ये स्तेना ये च तस्करास्ताꣳस्ते अग्नेऽपिदधाम्यास्ये[५]" इति। 'याः' (काश्चित् परकीयाः) 'सेनाः' 'अभीत्वरीः' (अस्मदा-भिमुख्येन गमनशीलाः), 'आव्याधिनीः' (सर्वतोऽस्मान् पीडयन्त्यः), 'उगणाः' (उत्कृष्टगुणोपेताः) बहुसोमा इत्यर्थः, एवंविधा याः

(बलकरम्) अश्वम् 'इन्द्रम्' (इन्द्रियप्रदम्) 'ऊतये' (रक्षणाय) 'वाजे-वाजे' (तत्तदन्नप्राप्तिनिमित्ते) 'सखायः' (परस्परं सख्यं प्राप्ताः) ऋत्विग्यजमाना वयं 'हवामहे' (आह्वयामः)।

अथ द्वितीयामाह,—"प्रतूर्वन्नेह्यवक्रामन्नशस्तीरुद्रस्य गाणपत्यात् मयोभूरेहि। उर्वन्तरिक्षमन्विहि स्वस्ति-गव्यूतिरभयानि कृण्वन्(१)" इति। हे अश्व, त्वम् 'एहि' (आगच्छ)। किं कुर्वन्?— 'प्रतूर्वन्' (विरोधिनः शत्रून् हिंसन्), 'अशस्तीः' 'अवक्रामन्' (आहवैः क्रियमाणा अपकीर्त्तीर्निवारयन्)। किञ्च 'रुद्रस्य' (क्रूरदेवस्य) यत् गाणपत्यं (पैशुनसमूहपतित्वं), तस्मात् 'गाणपत्यात्' आगत्य 'मयोभूः' (अस्माकं सुखं भावयन्) 'एहि'। 'उरु' (विस्तीर्णम्) 'अन्तरिक्षम्' 'अनु'-वीक्ष्य 'इहि' (विस्तरेण गच्छ)। किं कुर्वन्?—गव्यूतौ (गोसमूहे) 'स्वस्ति' (श्रेयः) यथा भवति, तथा वर्त्तमानः 'स्वस्ति-गव्यूतिः', तादृशस्त्वम्; 'अभयानि कृण्वन्' (व्याघ्रादिभ्यो भयपरिहारं कुर्वन्)।

अथ तृतीयामाह,—"पूष्णा सयुजा सह। पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदच्छेहि(१)" इति। सह युज्यते सहायभूतो वर्त्तत इति सयुक्, तादृशेन 'पूष्णा' (पोषकेण) देवेन 'सह', हे अश्व, 'पृथिव्याः' 'सधस्थात्' 'पुरीष्यम्' 'अग्निम्' 'अच्छेहि' (प्राप्तुं गच्छ)। खनितुं योग्या कृत्स्नाऽपि मृत्तिका सह तिष्ठति,-मिलिता वर्त्ततेऽत्रेति सधस्थः प्रदेशविशेषः, तस्मात् प्रदेशादाप्तुमित्यन्वयः। 'अङ्गिरस्वत्' इति दृष्टान्तः पूर्ववत्।

अत्र प्रथमायामृचि प्रथमभागे वीप्सायास्तात्पर्यं दर्शयति,—

स्तेनाः सन्ति। 'उत' (अपि च) 'ये स्तेनाः' (गुप्तचोराः) 'ये च तस्कराः' (प्रकटचोराः) तान् सर्वान् तव 'आस्ये' (मुखे) 'अपि'-'दधामि' (प्रक्षिपामि)।

एतान् मन्त्रान् विनियुङ्क्ते,—"न ह स्म वै पुराग्निरपरशुवृक्णं दहति तदस्मै प्रयोग एवर्षिरस्वदयद् यदग्ने यानि-कानि चेति समिधमादधात्यपरशुवृक्णमेवास्मै स्वदयति" (५।२।१०अ०) इति। 'पुरा' (एतन्मन्त्रप्रयोगात् पूर्वं) कदाचिदपि 'अग्निः' 'अपरशुवृक्णं' (परशुच्छेदरहितं काष्ठं) 'न ह स्म वै दहति' (सर्वथा न दहति), अविदारितं काष्ठमग्नौ प्रक्षिप्तमपि न भस्मीभवति, किन्तु ज्वालया क्वचित् स्पृष्टं भवतीत्यर्थः। एवं सति 'प्रयोगः' (प्रयुज्यमानः) 'ऋषिभिः' एव ('यदग्ने यानि' इति मन्त्र एव) 'अस्मै' अग्नये तत्काष्ठमविदारितम् 'अस्वदयत्' (स्वादूकृतवान्)। एतदर्थमेव, यद्दारु, तद्घृतमस्त्विति मन्त्रे पठ्यते। तस्मात् 'यदग्ने यानि-कानि' इत्यादिमन्त्रैः समिध* आदध्यात्, तेन 'अस्मै' अग्नये परशुच्छेदरहितं काष्ठं 'स्वदयति' 'एव'।

एतद्वेदनं प्रशंसति,—"सर्वमस्मै स्वदते य एवं वेद" (५।२।१०अ०) इति।

यत्काष्ठम् अपरशुवृक्णमभ्याधेयं, तस्य जातिविशेषं विधत्ते,—"औदुम्बरीमादधात्यूर्ग्वा उदुम्बर ऊर्जमेवास्मा अपिदधाति" (५।२।१०अ०) इति।

'यदग्ने' इत्यादि मन्त्रमन्त्ररूपं सूक्तं प्रशंसति,—"प्रजापतिरग्नि-

* समिधमिति संहितानुसारी। पाठो भवितुं युक्तः।

"योगे-योगे तवस्तरमित्याह योगे-योग एवैनं युङ्क्ते" (५।१।२अ०) इति। रथवहनं योढ्रूवहनं वा यद्यदश्वस्य योग्यं कर्म, तत्र सर्वत्रैनमश्वं योजयत्येव लौकिकः, तस्मादत्रापि 'योगे-योगे' इति वीप्सोच्यते।

द्वितीयभागे वाजशब्दार्थं दर्शयति,—"वाजे-वाजे हवामह इत्याहान्नं वै वाजोऽन्नमेवावरुन्धे" (५।१।२अ०) इति।

तृतीयभागे इन्द्रशब्दतात्पर्यं दर्शयति,—"सखाय इन्द्रमूतय इत्याहेन्द्रियमेवावरुन्धे" (५।१।२अ०) इति।

अनेन मन्त्रेण साध्यम् अश्वपुरःसरं गमनं विधत्ते,—"अग्नि-र्देवेभ्योऽनिलायत तं प्रजापतिरन्वविन्दत् प्राजापत्योऽश्वोऽश्वेन सम्भरत्यनुवित्त्यै" (५।१।२अ०) इति। केनाप्यपराधेन देवेभ्यो निर्गतमग्निं प्रजापतिरन्विष्य लब्धवान्। अश्वश्च प्रजापतिजन्यत्वात् 'प्राजापत्यः', तस्मादश्वेन सहाग्निहेतुं मृदं सम्भरितुं गच्छेत्। तच्च गमनमग्नेरनुवेदनाय भवति।

तत्राश्वस्य गर्दभात् पुरतो गमनं विधत्ते,—"पापवस्यसं वा एतत् क्रियते यच्छ्रेयसा च पापीयसा च समानं कर्म कुर्वन्ति, पापीयान् ह्यश्वाद्गर्दभोऽश्वं पूर्वं नयन्ति पापवस्यसस्य व्यावृत्त्यै तस्माच्छ्रेयांसं पापीयान् पश्चादन्वेति" (५।१।२अ०) इति। 'श्रेयसा' (उत्तमेन) 'च' साधनेन, 'पापीयसा' (निकृष्टेनापि साधनेन) 'समानं' (तुल्यम्) एकं कार्यं कुर्वन्तीति यत्, तत् 'एतत्' 'पापवस्यसम्' एव क्रियते,—पापमेव वसु धनं यस्य कर्मणस्तत् पापवसु, अतिशयेन पापवसु, तत् 'पापवस्यसम्', अत्यन्तं निकृष्ट-

मसृजत तꣳ सृष्टꣳ रक्षाꣳस्यजिघाꣳसन्त्स एतद्राक्षोघ्नमपश्यत् तेन वै स रक्षाꣳस्यपाहत यद्राक्षोघ्नं भवत्यग्नेरेव तेन जातादृक्षाꣳस्यपहन्ति" (५।१।१०अ०) इति। रक्षोघ्नोऽयमग्निः, तत्सूक्तं 'राक्षोघ्नम्' 'यदग्ने यानि-कानि च' इत्यारभ्य 'अभित्रानुस्तयामि स्वाꣳ अहम्'-इत्येतदन्तम्। अनेन सूक्तेन रक्षांसि प्रजापतिर्हतवान्। तस्मादनेन सूक्तेनात्रापि तथैव भवितव्यं। तेन सूक्तेनोत्पन्नादग्नेः सकाशाद्रक्षाꣳसि विनश्यन्ति*।

कल्पः, 'दꣳष्ट्राभ्यां मलिम्लूनित्याश्वत्थीꣳ समिधमादधाति' इति। पाठस्तु,—"दꣳष्ट्राभ्यां मलिम्लून् जम्भ्यैस्तस्कराꣳ उत। हनूभ्याꣳ स्तेनान् भगवस्ताꣳस्त्वं खाद सुखादितान्(१)" इति। गुप्ता प्रकटाश्चेति द्विधाश्चोराः। प्रकटा अपि पुनर्द्विविधाः,—अरण्येषु मार्गमध्येऽपहृत्य प्रत्यक्षमेव पलायमानाः प्रकटाः, ततोऽप्यतिप्रकटा निर्भया ग्रामेष्वेव आगत्य बन्दीकाराः। त एते अत्र मलिम्लव इत्युच्यन्ते, (मलं पापाधिक्यमेषामस्तीति मलिनाः, तथाविधा भूत्वा म्लोचयन्ति चौर्यं कुर्वन्तीति मलिम्लवः) तान्, दन्तपङ्क्तिमध्ये याभ्यां तीक्ष्णदन्ताभ्यां क्रमुकादिकं भक्ष्यते, ते दंष्ट्रे, ततः पुरोवर्त्तिनो बहिर्दृश्यमाना दन्ता जम्भ्याः, अन्तर्गते तु हनू। तत्र 'मलिम्लून्' 'दंष्ट्राभ्यां' पीड़यित्वा, 'जम्भ्यैः' 'तस्करान्' पीड़यित्वा 'हनूभ्यां' 'स्तेनान्' पीड़यित्वा, हे 'भगवः' (पूजनीय अग्ने), 'तान्' सर्वान्, सुष्ठु खादिताः (पुनर्जीवनरहिताः) यथा भवन्ति, तथा 'त्वं' 'खाद' (भक्षय)।

---

* विनाश्यन्ति इति आदर्शपुस्तकपाठः। विनाशयति इति B.पु०पाठः।

मित्यर्थः । 'गर्दभः' 'अश्वात्' 'पापीयान्' इति प्रसिद्धम्; अत उभयोः समानं गमनं मा भूदिति 'अश्वं' 'पूर्वं' (पुरतो) नयेयुः; तथा सति पापवस्यसं निवारितं भवति । यस्मादेवं, 'तस्मात्' लोकेऽपि विद्याधनादिभिः श्रेयान् पुरुषः पुरतो गच्छति, निकृष्टः शिष्यः दरिद्रो वा 'पश्चात्', अनुगच्छति ।

द्वितीयमन्त्रगतस्य 'अश्वस्तोरपक्रामन्' इत्यस्य तात्पर्यं दर्शयति,—"वज्रो वै भवतो भ्रातृव्यो भवतीव खलु वा एष योऽग्निं चिनुते वज्रोऽश्वः प्रत्यक्षं नेष्यवक्रामन्नश्वस्तोरित्याह वज्रेणैव पाप्मानं भ्रातृव्यमवक्रामति" (५।१।२अ०) इति । 'भवतो' (भूतिमैश्वर्यं प्राप्नुवतः पुरुषस्य) 'भ्रातृव्यः' (विघ्नकारी) 'वज्रः' 'भवति' एव; 'श्रेयांसि बहुविघ्नानि' इति न्यायात् । अतोऽत्र 'योऽग्निं चिनुते' 'एष' 'भवतीव' 'खलु' (भूतिं श्रेयः प्राप्नोत्येव खलु) । अतोऽनेन भ्रातृव्यपरिहारोऽन्वेषणीयः । अश्वस्य वज्रयुक्तत्वसमानः, अतोऽश्वं सम्बोध्य, अश्वस्तोरित्युक्त्वा, अश्वरूपेण 'वज्रेणैव' विघ्नकारिणं 'पाप्मानं' 'भ्रातृव्यं' निराकरोति ।

तन्मन्त्रगतस्यैव 'गाणपत्यात्' इत्यस्य तात्पर्यं दर्शयति,—"रुद्रस्य गाणपत्यादित्याह रौद्रा वै पशवो रुद्रादेव पशून्निर्याच्यात्मने कर्म कुरुते" (५।१।२अ०) इति । पशूनां रौद्रत्वं वरबलाद-वगम्यते,—'सोऽब्रवीद् वरं वृणा, अहमेव पशूनामधिपतिरसानि' इत्यत्र रुद्रस्य वर आम्नातः । तस्मादत्र 'रुद्रस्य' 'गाणपत्यान्मयो-भूरेहि' इत्युक्त्वा, पशुस्वामिनो 'रुद्रादेव' तान् 'पशून्' निःशेषेण याचित्वा, तैः पशुभिः स्वार्थं कर्म करोति इति ।

एतन्मन्त्रसाध्यं समिदाधानं विधत्ते,—"आश्वत्थीमादधात्यश्वत्थो वै वनस्पतीनाꣳ सपत्नसाहो* विजित्यै" (५।२।१०ब्रा०) इति। सपत्नान् सहन्ते अभिभवन्तीति 'सपत्नसाहः'। अश्वरूपधारिणोऽग्नेरस्मिन् वृक्षेऽवस्थितत्वादश्वत्थस्य सपत्नसाहत्वं। तथावस्थानञ्च आधानब्राह्मणे श्रूयते, 'अग्निर्देवेभ्योऽनिलायत। अश्वो रूपं कृत्वा। सोऽश्वत्थे संवत्सरमतिष्ठत्। तदश्वत्थस्याश्वत्थत्वम्' इति। अतस्तदीया समित् विजयाय सम्पद्यते।

कल्पः, 'ये जनेषु मलिम्लव इति वैकङ्कतीम्' इति, आदधातीति शेषः। पाठस्तु,—"ये जनेषु मलिम्लवस्तेनासः तस्करा वने। ये कक्षेष्वघायवस्ताꣳस्ते दधामि जम्भयोः(७)" इति। ग्रामवर्त्तिषु 'जनेषु' वनेषु† गच्छत्सु च 'ये' त्रिविधाः पूर्वोक्ताश्चोराः सन्ति, 'ये' चान्ये व्याघ्रादयः 'कक्षेषु' स्थित्वा 'अघायवः' भवन्ति, (अघं हिंसनमिच्छन्तीति 'अघायवः)', 'तान्' सर्वान् तव 'जम्भयोः' 'दधामि'।

एतन्मन्त्रसाध्यं समिदाधानं विधत्ते,—"वैकङ्कतीमादधाति भा एवावरुन्धे" (५।२।१०ब्रा०) इति।

कल्पः, 'यो अस्मभ्यमरातीयादिति शमीमयीम्' इति। पाठस्तु,—"यो अस्मभ्यमरातीयाद् यश्च नो द्वेषते जनः। निन्दाद् यो अस्मान् दिप्साच्च सर्वं तं मस्मसा कुरु(८)" इति। पूर्वं चोरभेदा दर्शिताः, इदानीं शत्रुभेदा उच्यन्ते। ते च

* सपत्नसह इति आदर्शपुस्तके पाठः एवं परत्र।
† वनेषु इति आदर्शपुस्तके नास्ति।

तृतीयमन्त्रे 'सयुजा' इत्यस्य तात्पर्यं दर्शयति,—"पूष्णा सयुजा सहेत्याह पूषा वा अध्वनाꣳ सन्नेता समष्ट्यै" (५।१।२ब्रा०) इति। पोषकी देव एव उपद्रवपरिहारेण मार्गाणां सम्यक् 'नेता' भवति। अतस्तेन सह 'समष्ट्यै' (सङ्गत्यै) 'पूष्णा सयुजा' इत्युच्यते।

तस्मिन्नेव मन्त्रे 'पुरीष्यम्' इति विशेषणस्य 'अङ्गिरस्वत्' इति दृष्टान्तस्य च तात्पर्यं दर्शयति,—"पुरीषायतनो वा एष यदग्निरङ्गिरसो वा एतमग्रे देवतानाꣳ समभरन् पृथिव्याः सधस्थादग्निं॰ पुरीष्यमङ्गिरस्वदच्छेहीत्याह सायतनमेवैनं देवताभिः सम्भरति" (५।१।२ब्रा०) इति। पुरीषस्य पांशोः पूर्वोक्तरीत्या परम्परया अग्न्यायतनत्वम्, अतः पुरीष्यशब्देनाग्निं सायतनमेव सम्पादयति। 'अङ्गिरसः' च पुरा तम् 'एतम्' अग्निं 'देवतानां' पुरतः सम्पादितवन्तः, अतः 'अङ्गिरस्वत्' इत्युक्त्या देवताभिः सहितमेन सम्पादितवान् भवति। •

कल्पः, 'अग्निं पुरीष्यमङ्गिरस्वदच्छेम(७) इति येन द्वेष्येण सङ्गच्छते तमभिमन्त्रयते पश्यन् निर्दिशति' इति। मृत्खननं प्रतिगच्छन्तः पुरुषाः मार्गमध्ये यदि केनापि द्वेष्येण सङ्गच्छेरन्, तदानीम् इमं मन्त्रं पठेरन्। 'इमः' गच्छेम इत्यर्थः। शेषं पूर्ववत्। यदि द्वेष्यं न पश्यति, तदापि तं मनसा निर्दिश्य पठेत्।

अनेन पाठेन द्वेष्यस्यास्तं विनाशनं इत्येतद्दर्शयति,—"अग्निं पुरीष्यमङ्गिरस्वदच्छेम(८) इत्याह येन सङ्गच्छते वाजमेवास्य वृङ्क्ते" (५।१।२ब्रा०) इति।

कल्पः, 'अग्निं पुरीष्यमङ्गिरस्वद्भरिष्याम(९) इति वल्मीक-

त्रिविधाः,—अरातयो द्वेषिणो निन्दकाश्चेति; तत्र दातव्यत्वेन प्राप्तं धनं यो न ददाति, सोऽयम् अरातिः, कार्यविघातं यः करोति स द्वेषी, वाग्दौर्जन्यमात्रं यः करोति, स निन्दकः, हन्तुकामस्तुर्थः। तत्र 'यः' 'अस्मभ्यं' (अस्माकं) 'अरातीयात्' (अरातित्वमिच्छति); 'यो' यजमानान् 'अस्मान्' 'द्वेषते' (कार्य-नाशेन बाधते); 'यः' अप्यन्यः 'अस्मान्' 'निन्दात्' (निन्दति)। 'यश्च' अपरः 'अस्मान्' 'दीप्सात्' (दम्भितुं, हिंसितुमिच्छति), 'तं' 'सर्वं' जनं 'भस्मसा कुरु', (चूर्णजन्यशब्दस्यानुकरणं भस्मसेति) चूर्णीकुर्वित्यर्थः।

एतन्मन्त्रसाध्यं समिदाधानं विधत्ते,—"शमीमयीमादधाति शान्त्यै" (५।१।१०अ०) इति।

कल्पः, 'संशितं मे ब्रह्म उदेषां बाहू अतिरमित्युत्तमे यजमानं वाचयन् तूष्णीमौदुम्बर्या समिधात्रादधाति' इति। तत्र प्रथमामाह, संशितं मे ब्रह्म संशितं वीर्यं बलं। संशितं क्षत्रं जिष्णु यस्याहमस्मि पुरोहितः(६)" इति। 'मे' (मदीयं) ब्राह्मण्यं 'संशितं' (सम्यक् तीक्ष्णीकृतं), शास्त्रीय-मार्गवर्त्ति कृतमित्यर्थः, तथा, 'वीर्यं' (इन्द्रियशक्तिः), 'बलं' (शरीरशक्तिः), तदुभयं 'संशितं' (सम्यक् स्वकार्यक्षमं), तथा 'यस्य' (क्षत्रस्य राज्ञः) 'अहं' 'पुरोहितः' 'अस्मि', 'मे' (मदीयं) तत् 'क्षत्रं' 'जिष्णु' (जयशीलं) यथा भवति, तथा 'संशितम्' अस्तु इति शेषः।

अथ द्वितीयामाह,—"उदेषां बाहू अतिरमुद्वर्च उदू बलं।

वपाया सूर्यस्योदेतोस्तामुद्धृत्योपतिष्ठते' इति। वल्मीकस्य योऽवयव उन्नतत्वेनाभिवृद्धः, सेयं वपा, तथाविधासु वपासु मध्ये या वपा सूर्योदयस्याभिमुखा, तस्या अग्रं किञ्चित् उद्धृत्य, तां वपाम् अनेन मन्त्रेण 'उपतिष्ठते'। 'भरिष्यामः' (सम्पादयिष्यामः)। शेषं पूर्ववत्।

अनेन मन्त्रेण वपोपस्थानं विधत्ते,—"प्रजापतये प्रतिप्रोच्य अग्निः सम्भृत्य इत्याहेयं वै प्रजापतिस्तस्या एतच्छ्रोत्रं यद्वल्मी-कोऽग्निं पुरीष्यमङ्गिरस्वद्भरिष्याम इति वल्मीकवपामुपतिष्ठते सा-क्षादेव प्रजापतये प्रतिप्रोच्याग्निꣳ सम्भरति" (५।१।२अ०) इति। प्रजापतेः सकाशादनुज्ञां लब्ध्वा, अयम् अग्निः सम्पादनीय इत्यभिज्ञा 'आह'; तच्चोपपन्नं, प्रजापतिना पूर्वमग्नेर्लब्धत्वात्। 'तं प्रजापतिरन्वविन्दत्' इति पूर्वमेवोक्तम्। कथं तर्हि प्रजापतये वक्तव्यमिति चेत्? तदुच्यते,—प्रजापतिना सृष्टत्वात् 'इयं' (पृथिवी) एव 'प्रजापतिः', 'तस्याः' च वल्मीकवपैव 'श्रोत्रम्'; अतएवा-धानब्राह्मणे समाम्नातं, 'श्रोत्रꣳ ह्येतत् पृथिव्याः यद्वल्मीकः' इति। तस्मात् तां वपामनेन मन्त्रेण 'उपतिष्ठते'। तेनोपस्थानेन व्यव-धानमन्तरेणैव 'प्रजापतये' कथयित्वा 'अग्निं सम्भरति'।

कल्पः, 'अत्वरमाणाः प्रत्यायन्त्यग्निं पुरीष्यमङ्गिरस्वद्भराम(१) इति येन द्वेष्येण सङ्गच्छते तमभिमन्त्रयते पश्यन्निर्दिशति' इति। यद्वद् गमनकाले, तद्वद् आगमनकालेऽपि; तत्र 'भरिष्यामः' इति पाठः, अत्र तु 'भरामः' इति विशेषः। यद्यप्यागमनस्य नायं कालः, तथापि प्रसङ्गाद् बुद्धिस्थो मन्त्रोऽयमाम्नातः। तच्चोपरिष्टादुत्कर्षेत्।

क्षीणोमि ब्रह्मणाऽमित्रानुन्नयामि स्वाꣳ अहम्(१०)" इति ।
'एषां' (स्वकीयानां) राजब्राह्मणादीनां मध्ये एकैकस्य 'बाहू'
'उत्'-'अतिरं' (उत्कर्षेण वर्द्धितवानस्मि) लौकिकोक्तिरियं;
लोके हि योऽन्यस्मादुत्कृष्टो भवति, तं जना एवमाहुः—
स्वकीयहस्तमुपरितनं कृतवानिति । 'वर्चः' (कान्तिः) तामपि
'उत्'-'अतिरं' । 'बलं' (शरीरं) तदपि 'उत्'-'अतिरं' । 'ब्रह्मणा'
(मन्त्रसामर्थ्येन) 'अमित्रान्' 'क्षिणोमि' (क्षीणान् करोमि) । 'स्वान्'
(स्वकीयान्) पुरुषान् 'अहम्' 'उन्नयामि' (उत्कर्षं प्रापयामि) ।

एतन्मन्त्रसाध्यं यजमानवाचनं विधत्ते,—"सꣳशितं मे ब्रह्मो-
देषां बाहू अतिरमित्युत्तमे औदुम्बरी वाचयति ब्रह्मणैव क्षत्रꣳ
सꣳश्यति क्षत्रेण ब्रह्म तस्माद् ब्राह्मणो राजन्यवानत्यन्यं ब्राह्मणं
तस्माद् राजन्यो ब्राह्मणवानत्यन्यꣳ राजन्यम्" (५।२।१०अ०)
इति । 'उत्तमे' (गायत्रसूक्तस्यान्तिमे) ऋचो यजमानं वाचयेत् ।
औदुम्बर्यौ द्वे समिधौ तूष्णीमादध्यादिति शेषः । प्रथममन्त्रे
ब्रह्मक्षत्रयोः संशितत्वं यदुक्तं, तत्र परस्परोपकारो विज्ञायते ।
ब्राह्मणेनैव पुरोहितेन राजा धर्मे तीक्ष्णीकृतो भवति, राज्ञा
नियामकेन ब्राह्मणोऽपि संशितः स्वाचारे नियमितो भवति ;
यस्मादेवं, 'तस्माद्' राजन्येन स्वामिना युक्तो 'ब्राह्मणः' स्वामि-
रहितं 'ब्राह्मणं' *अत्येति । राजापि धर्मबोधकेन पुरोहितेन
ब्राह्मणेन युक्तस्तद्रहितमधार्मिकम् 'अन्यं' राजानम् 'अति' (अत्येति) ।

---

* पदमेव अत्रापि 'अति' इति संहिता उद्धृतमुपिता ।

गमनकालीनमन्त्रपदस्यापि तात्पर्यं दर्शयति,—"अग्निं पुरीष्यमङ्गिरस्वदच्छेम इत्याह येन सङ्गच्छते वाजमेवास्य वृङ्क्ते" (५।१।२अ०) इति।

कल्पः, 'अन्वग्निरुषसामग्रमख्यदिति वल्मीकवपायाः प्रक्रामति' इति। पाठस्तु,—"अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः। अनु सूर्यस्य पुरुत्रा च रश्मीननु द्यावापृथिवी आ ततान[10]" इति। अयम् 'अग्निः', 'उषसाम्' (उषःकालानाम्) 'अग्रम्' उपक्रमन् 'अख्यत्' (अनुक्रमेण प्रकाशितवान्)। अयं 'जातवेदाः' 'प्रथमः' (मुख्यः) सन् 'अहानि' 'अनु'-'अख्यत्'। 'सूर्यस्य' 'पुरुत्रा' (पुरून् बहून्) 'रश्मीन्' अनुक्रमेण 'अख्यत्'। किञ्च 'द्यावापृथिव्यावुभे' अप्यनुक्रमेण 'आ'-'ततान' (सर्वतो व्याप्तवान्)।

अनेन मन्त्रेणोषःकालादीनां क्रमेणाविर्भावः सिध्यतीत्येतद्दर्शयति,—"अन्वग्निरुषसामग्रमख्यदित्याहानुख्यात्यै" (५।१।२अ०) इति।

कल्पः, 'आगत्य वाज्यध्वन आक्रम्य वाजिन् पृथिवीमिति द्वाभ्यां मृत्खननमश्वमाक्रमय्य' इति। तत्र प्रथमायाः पाठस्तु,—"आगत्य वाज्यध्वनः सर्वा मृधो वि धूनुते। अग्निꣳ सधस्थे महति चक्षुषा नि चिकीषते[11]" इति। अयं 'वाजी' 'अध्वनः' (मार्गात्) 'आगत्य' (प्राप्य) 'सर्वा मृधः' (मार्गश्रमादीन् सर्वान् बाधकान्[?]) 'वि'-'धूनुते' (विविधं कम्पयति) विनाशयतीत्यर्थः। यत्र पांसवः सहावतिष्ठन्ते, तत् स्थानं सधस्थम्। 'महति' (विस्तीर्णे) 'सधस्थे' अयं

कल्पः, 'एकविंशतिनिर्बाधो रुक्मः सूत्रोतस्तं दृशानो रुक्म इति तमासीनो यजमानोऽन्तर्निर्बाधं प्रतिमुच्य बहिर्निर्बाधान् कुरुते' इति। पाठस्तु,—"दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः। अग्निरमृतो अभवद्वयोभिर्यदेनं द्यौरजनयत्सुरेताः(११)" इति। 'दृशानः' (दर्शनीयरूपः) 'रुक्मः' (सुवर्णनिर्मितः फलकाकार आभरणविशेषः) 'उर्व्या' (महत्या दीप्त्या) 'व्यद्यौत्' (विद्योतते स्म)। किं कुर्वन्?—'दुर्मर्षम्' (अतिरस्कार्य्यम्) 'आयुः' (जीवनं) 'श्रिये' (श्रयितुं) 'रुचानः', (वाञ्छन्); तथाविधः 'अग्निः' 'वयोभिः' (अन्नैर्हविर्भिः) 'अमृतोऽभवत्' 'यत्' (यस्मात्) 'एनं' (अग्निं) 'द्यौः' (द्युलोकवासी देवगणः) 'सुरेताः' सन् 'अजनयत्', तस्मादमृतत्वं युक्तम्। अत्र रुक्मस्याग्निधारणाङ्गत्वादग्नित्वमुपचरितम्।

अनेन मन्त्रेण साध्यं रुक्मप्रतिमोकं विधत्ते,—"मृत्युर्वा एष यदग्निरमृतꣳ हिरण्यꣳ रुक्ममन्तरं प्रति मुञ्चतेऽमृतमेव मृत्योरन्तर्द्धत्ते" (५।१।१०अ०) इति। अग्नेर्दाहेन विनाशकत्वान्मृत्युत्वं, हिरण्यस्याग्निसम्पर्केऽपि भस्मीभावादर्शनादमृतत्वं। एवं सति धारयिष्यमाणस्याग्नेः स्वकीयस्य उरसश्च 'अन्तरं' (मध्यवर्त्ति) यथा भवति, तथा 'रुक्मं' दीर्घसूत्रेण प्रोतं गले प्रतिमुञ्चेत्। तेन प्रतिमुक्तेन दाहकादग्निरूपात् 'मृत्योः' 'अमृतं' (रुक्मं) व्यवधानरूपं कृतवान् भवति।

तस्य रुक्मस्य विन्दुसदृशानाकारविशेषान् विधत्ते,—"एकविंशतिनिर्बाधो भवत्येकविंशतिर्वै देवलोका द्वादश मासाः

अश्वः 'चक्षुषा' दृष्ट्वा 'अग्निं' (अग्निहेतुं मृदं) 'नि-चिकीषते' (नितरां चेतुं सम्पादयितुमिच्छति)।

अथ द्वितीयामाह,—"आक्रम्य वाजिन् पृथिवीमग्निमिच्छ रुचा त्वं। भूम्या वृत्वाय नो ब्रूहि यतः खनाम तं वयम्(११)" इति। हे 'वाजिन्', 'पृथिवीं' 'आक्रम्य' (पादस्पर्शेन परीक्ष्य) 'त्वं' 'रुचा' (स्वकीयेन तेजसा मानसज्ञानेनेत्यर्थः) 'अग्निमिच्छ' (अग्निहेतुं मृदं निश्चिनु)। 'भूम्या वृत्वाय' (पृथिव्या सह वरणं कृत्वा पृथिवीं पृष्ट्वेत्यर्थः [?]) 'नः' (अस्माकं) 'ब्रूहि' (अयं प्रदेशोऽग्निहेतुमृद्योग्य इति कथय)। यस्मात् प्रदेशात् तादृशी मृल्लभ्यते, 'तं', (प्रदेशं) 'वयं' 'खनाम'।

अत्रैतयोर्मन्त्रयोः पृथगुपयोगं दर्शयति,—"आगत्य वाज्यध्वन आक्रम्य वाजिन् पृथिवीमित्याहेच्छत्येवैनं पूर्वया विन्दत्युत्तरया" (५।१ २अ०) इति। पूर्वस्यामृचि 'नि-चिकीषते' इत्यभिधानादिच्छामात्रं तया सम्पद्यते। उत्तरस्यामृचि 'नो ब्रूहि' इत्युक्तत्वात् तया तं प्रदेशं लभते।

विधत्ते,—"द्वाभ्यामाक्रमयति प्रतिष्ठित्या अनुरूपाभ्यां तस्मादनुरूपाः पशवः प्रजायन्ते" (५।१।२अ०) इति। मन्त्रयोर्द्वित्वं हि 'द्वाभ्यां' 'प्रतिष्ठित्यै' सम्पद्यते; तत्र पूर्वो मन्त्र इच्छाया अनुरूपः, उत्तरो मन्त्रो लाभस्यानुरूपः। तच्च पूर्वमुदाहृतं। यस्मात् 'अनुरूपाभ्यां' मन्त्राभ्याम् 'आक्रमयति'। 'तस्मात्' यजमानस्य अग्निहोत्राद्यनुष्ठानस्य 'अनुरूपा' एव गवाद्याः 'पशवः' 'प्रजायन्ते'।

कल्पः, 'द्यौस्ते पृष्ठमित्यश्वस्य पृष्ठ९ समार्ष्टि' इति। पाठस्तु,

पञ्चर्त्तवस्त्रय इमे लोका असावादित्य एकविंश एतावन्तो वै देवलोकास्तेभ्य एव भ्रातृव्यमन्तरेति" (५।१।१०अ०) इति। सुवर्णफलके निम्नोन्नतभावमापद्य स्पर्शकारिणं पुरुषं निःशेषेण बाधन्ते इति 'निर्बाधाः' स्फोटसदृशा अवयवविशेषाः, ते च एकविंशतिसङ्ख्याका यस्मिन् रुक्मे सोऽयम् 'एकविंशतिनिर्बाधः', तादृशं रुक्मं कुर्यात्। लोक्यन्ते भुज्यन्ते यैर्देशकालादिसाधनविशेषैः, ते लोकाः, मासादयश्च, देवानां भोगसाधनानीति ते एव लोका इत्युच्यन्ते। अतो निर्बाधगतैकविंशतिसङ्ख्याया मासादिकेभ्य आदित्यान्तेभ्य एकविंशतिलोकेभ्यो 'भ्रातृव्यम्' अन्तरितं करोति।

विहितान् निर्बाधान् प्रशंसति,—"निर्बाधैर्वै देवा असुरान् निर्बाधे कुर्वत तन् निर्बाधानां निर्बाधत्वं निर्बाधा भवति भ्रातृव्यानेव निर्बाधं कुरुते" (५।१।१०अ०) इति। चर्मखड्गधारिणो 'देवाः' चर्मणो बहिर्भागे खचितैः कांस्यादिमयैः प्रौढस्फोटाकारैः 'निर्बाधैः' स्वर्धर्षणार्थमागतान् 'असुरान्' आस्फाल्य भूमिपतनादिरूपे निश्चितबाधे अवस्थितान् 'कुर्वत'। यस्मान्निश्चितबाधा एते, तस्मात् 'निर्बाधाः'। अतोऽत्र रुक्मस्य निर्बाधत्वेन 'भ्रातृव्यान्' सर्वान् निश्चितबाधे पतितान् 'कुरुते'।

कल्पः, 'विश्वा रूपाणीति शिक्यपाशं प्रतिमुञ्चते' इति। पाठस्तु,—"विश्वा रूपाणि प्रतिमुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे। वि नाकमख्यत् सविता वरेण्योऽनु प्रयाणमुषसो विराजति(११)" इति। 'कविः' (विद्वान्) 'वरेण्यः' (श्रेष्ठः) 'सविता',

—द्यौस्ते पृष्ठं पृथिवी सधस्थमात्मान्तरिक्षꣳ समुद्रस्ते योनिः। विख्याय चक्षुषा त्वमभितिष्ठ पृतन्यतः(११)" इति। हे अश्व, द्युलोकस्तव 'पृष्ठं', 'पृथिवी' 'सधस्थं' (तवाग्निना सहावस्थानप्रदेशः), अन्तरिक्षलोकस्तव शरीरमध्यवर्त्ती जीवात्मा। 'समुद्रः' तव जन्मकारणम्, 'अप्सुयोनिर्वा अश्वः' इति श्रुतेः। एवं स्तूयमानः 'त्वं' 'चक्षुषा' 'विख्याय' (उखायोग्यां मृदं विलोक्य) 'पृतन्यतः' (सङ्ग्रामं कर्त्तुमिच्छतः) शत्रून् राक्षसादीन् तस्यां मृदि गूढरूपेणावस्थिताम् 'अभितिष्ठ' (पादेनाक्रम्य विनाशय)।

मन्त्रोक्तद्युलोकादिसम्बन्धमुपपादयति,—"द्यौस्ते पृष्ठं पृथिवी सधस्थमित्याहैभ्यो वा एतं लोकेभ्यः प्रजापतिः समैरयद्रूपमेवास्यैतन्महिमानं व्याचष्टे" (५।१।२अ०) इति। पुरा कदाचित् प्रजापतिः 'एतम्' अश्वम् एतेषु लोकेष्वन्विष्य समानीतवान्। तस्मात् विद्यमानमेव द्युलोकादिसम्बन्धरूपं 'महिमानं' मन्त्रो 'व्याचष्टे'; अतो नास्माभिर्वक्तव्यं किञ्चिदस्ति।

मृदाक्रमणवेलायामश्वपादस्याधस्ताद्द्वेष्यविषयध्यानं विधत्ते,—"वज्री वा एष यदश्वो दद्भिरन्यतो-दद्भ्यो भूयां लोमभिरुभया-दद्भ्योऽयं द्विष्यात् तमधस्पदं ध्यायेद्वज्रेणैवैनꣳ स्तृणुते" (५।१।२अ०) इति। वज्रसमानदन्तपङ्क्तिद्वयमस्यास्तीति 'अश्वो' 'वज्री', तस्मात् 'अन्यतो'-'दद्भ्यः' (एकतो दन्तपङ्क्तियुक्तेभ्यो गवादिभ्यः) अयम् 'अश्वः' 'दद्भिः' 'भूयान्' (दन्तैरधिकः)। 'उभया-दद्भ्यः' (दन्तपङ्क्तिद्वययुक्तेभ्यश्च) गर्दभादिभ्यः 'अयम्' अश्वः 'लोमभिः' (केसरैः पुच्छगतैश्च) 'भूयान्'। अतस्तादृशस्य अश्वस्य 'अधस्पदं'

'विश्वा रूपाणि' (समस्तानि जगद्रूपाणि) 'प्रतिमुञ्चते' (स्वस्मिन् स्वीकरोति) प्रकाशयतीत्यर्थः। 'द्विपदे चतुष्पदे' (मनुष्याणां पशूनाञ्च) 'भद्रं' (स्वस्वव्यवहारप्रकाशनरूपं श्रेयः) 'प्रासावीत्' (सम्पादितवान्); 'नाकं' (स्वर्गं) विशेषेण 'अख्यत्' (प्रकाशितवान्); 'उषसः' 'प्रयाणम्' 'अनु' (उषःकालेऽतीते) सति 'विराजति' (विशेषेण प्रकाशते)।

अनेन मन्त्रेण साध्यं शिक्यपाशप्रतिमोकं विधत्ते,—"सावित्रिया प्रतिमुञ्चते प्रसूत्यै" (५।१।१०अ०) इति। 'सविता वरेण्यः' इति मन्त्रलिङ्गादियं सावित्री सम्यक्प्रेरणाय सम्पद्यते।

कल्पः, 'नक्तोषासेति कृष्णाजिनमुत्तरम्' इति, प्रतिमुञ्चते इत्यनुवर्त्तते। पाठस्तु,—"नक्तोषासा समनसा विरूपे धापयेते शिशुमेकꣳ समीची। द्यावा क्षामा, रुक्मः अन्तर्विभाति देवा अग्निं धारयन् द्रविणोदाः(११)" इति। नक्तञ्च उषाश्च 'नक्तोषासा' (रात्रिदिवसावित्यर्थः), 'समनसा' (परस्परमेकमतियुक्ते) 'विरूपे' (रात्रिः कृष्णा, दिवसस्तु शुक्लरूपः,—इत्येवं विलक्षणरूपे) 'समीची' (समीच्यौ अनुकूले सत्यौ), 'एकं' 'शिशुम्' 'अग्निं' 'धापयेते' (यजमानकर्त्तृकमग्निधारणं सम्पादयतः)। 'द्यावा' (द्युलोके), 'क्षामा' (क्षितौ भूलोके), 'अन्तः' (तदुभयमध्यवर्त्तिनि अन्तरिक्षे) 'विभाति' अयं 'रुक्मः' अग्निः (विशेषेण प्रकाशते)। दीव्यन्ति विहरन्तीति 'देवाः' प्राणाः, ते च 'द्रविणोदाः' (यागद्वारेण द्रविणं धनरूपं फलं प्रयच्छन्ति, तादृशाः) यजमानस्य प्राणाः 'अग्निम्' एतं 'धारयन्' (धृतवन्तः)।

(पादस्याधस्तात्) देश्ये स्याते सति अश्वखुररूपेण 'वज्रेणैवैनं' द्वेष्यं छिनत्ति।

कल्पः, 'उत्क्रामेदक्रमीदिति द्वाभ्यां मृत्खनाद्दश्वमश्वमुत्क्रमय्य' इति। मृद् यस्मिन् प्रदेशे खन्यते, स प्रदेशो मृत्खनः, तस्मादश्वम् उदङ्मुखत्वेन निर्गमयेत्। तत्र प्रथमामृचमाह,— "उत्क्राम महते सौभगायास्मादास्थानाद्द्रविणोदा वाजिन्। वयꣳ स्याम सुमतौ पृथिव्या अग्निं खनिष्यन्त उपस्थे अस्याः(१४)" इति। हे 'वाजिन्' 'द्रविणोदाः' (धनप्रदः सन्) यजमानस्य 'महते सौभगाय' (सौभाग्याभिवृद्ध्यर्थं) 'अस्मादास्थानात्' (खननप्रदेशात्) 'उत्क्राम' (उद्गतो भव)। 'वयं' 'पृथिव्याः' 'सुमतौ' (अनुग्रहचित्ते) 'स्याम' (तिष्ठेम)। कीदृशा वयं?—'अस्याः' 'उपस्थे' (पृथिव्या उपरि) 'अग्निं' (अग्निहेतुं मृदं) 'खनिष्यन्तः' (खनितुमुद्युक्ताः)।

अथ द्वितीयामाह,—"उदक्रमीद् द्रविणोदा वाज्यर्वाऽकः स लोकꣳ सुकृतं पृथिव्याः। ततः खनेम सुप्रतीकमग्निꣳ सुवो रुहाणा अधि नाक उत्तमे(१५)" इति। 'द्रविणोदाः' (यागद्वारेण धनप्रदः) 'वाजी' (तथैवान्नप्रदः) अर्तीति* 'अर्वा' गमनकुशल इत्यर्थः। तादृशोऽयमश्वः स्थानादस्मात् 'उदक्रमीत्'। 'स' उत्क्रान्तोऽश्वः 'सुकृतं' (आक्रमणेन विरुद्धान् राक्षसादीनपहृत्य सुष्ठु कृतं) 'पृथिव्याः' सम्बन्धिनं 'लोकं' (खननप्रदेशं) 'अकः' (कृतवान्)। 'ततः' प्रदेशात् 'अग्निम्' (अग्नियोग्यां भूमिं) 'खनेम'। कीदृशम्? —अग्निं 'सुप्रतीकं' (सुमुखम्)। ये खनितारो वयं, ते कीदृशाः?—

* अर्त्तीति पाठो भवितुं युक्तः।

एतन्मन्त्रसाध्यं कृष्णाजिनप्रतिमोकं विधत्ते,—"नक्तोषासेत्यु-त्तरयाहोराचाभ्यामेवैनमुद्यच्छते" (५।१।१०अ०) इति। पूर्वा सावित्रीमृचमपेक्ष्य इयमुत्तरा। तया कृष्णाजिनं प्रतिमुञ्चते इति शेषः। तथा सति तन्मन्त्रप्रतिपादिताभ्याम् 'अहोराचाभ्यामे-वैनम् ऊर्द्धं धृतवान् भवति।

तस्य मन्त्रस्य चतुर्थपादे देवशब्देन प्राणा विवक्षिता इति दर्शयति,—"देवा अग्निं धारयन् द्रविणोदा इत्याह प्राणा वै देवा द्रविणोदा अहोराचाभ्यामेवैनमुद्यत्य प्राणैर्दाधार" (५।१। १०अ०) इति। उद्यमनमाचमहोराचयोः कृत्यं; धारणन्तु प्राणानामित्यर्थः।

रुक्म-शिक्यपाश-कृष्णाजिनानां यः प्रतिमोकः, तस्य काले उपवेशनं विधत्ते,—"आसीनः प्रतिमुञ्चते तस्मादासीनाः प्रजाः प्रजायन्ते" (५।१।१०अ०) इति। 'तस्मात्' 'आसीनः' प्रतिमोकात् लोकेऽपि 'प्रजाः' 'आसीनाः' एवोत्पद्यन्ते, नतूत्थिताः।

कृष्णाजिनस्य शिक्यात् बहिर्देशवर्त्तित्वं विधत्ते,—"कृष्णा-जिनमुत्तरं तेजो वै हिरण्यं ब्रह्म कृष्णाजिनं तेजसा चैवैनं ब्रह्मणा चोभयतः परिगृह्णाति" (५।१।१०अ०) इति। शिक्यस्य एकतो रुक्मम्, अन्यतः कृष्णाजिनम् इति, तेजोरूपेण रुक्मेण, वेदरूपेण कृष्णाजिनेन 'च' 'उभयतः' शिक्यं परिगृहीतं भवति। कृष्णाजिनस्य ब्रह्मरूपत्वं दीक्षाप्रकरणे समाम्नातम्, 'ब्रह्मणो वा एतद्रूपं यत्कृष्णाजिनम्' इति।

'सुवः' 'अधि'-'रुहाणाः' (स्वर्गं अधिरोहणकामाः)। कीदृशे स्वर्गे? 'उत्तमे' (सुखयुक्ते) 'नाके' (कं सुखम्, अ-कं दुःखं, तद्रहिते)।

तदिदं मन्त्रद्वयं विनियुङ्क्ते,—"उत्क्रामोदक्रमीदिति द्वाभ्यामुत्क्रमयति प्रतिष्ठित्या अनुरूपाभ्यां तस्मादनुरूपाः पशवः प्रजायन्ते" (५।१।२अ०) इति। मन्त्रयोरादावुत्क्रमणाभिधानादनुष्ठेयार्थं प्रत्यनुरूपत्वम्।

कल्पः, 'अपो देवीरुपसृजेत्यश्वस्य पदेऽप उपसृज्य' इति। पाठस्तु,—"अपो देवीरुपसृज मधुमतीरयक्ष्माय प्रजाभ्यः। तासाꣳ स्थानादुज्जिहतामोषधयः सुपिप्पलाः(११)" इति। 'देवीः' (देवनशीलाः) 'अपः' 'उपसृज' (अस्मिन् खननप्रदेशे अहमुपसृजामि)। कीदृशीः अपः?—'मधुमतीः' (मधुराः)। किमर्थं?—'अयक्ष्माय प्रजाभ्यः' (प्रजानामारोग्याय) 'तासां' (प्रक्षिप्तानामपां) 'स्थानात्' (अस्मात् प्रदेशात्), 'सुपिप्पलाः' (शोभनफलाः) ओषधयः 'उज्जिहताम्' (उत्पद्यन्ताम्)।

अनेन मन्त्रेणोदकसेचनं विधत्ते,—"अप उपसृजति यत्र वा आप उपगच्छन्ति तदोषधयः प्रतितिष्ठन्त्योषधीः प्रतितिष्ठन्तीः पशवोऽनु प्रतितिष्ठन्ति पशून् यज्ञो यज्ञं यजमानो यजमानं प्रजास्तस्मादप उपसृजति प्रतिष्ठित्यै" (५।१।२अ०) इति। अपामोषधीनां पशूनां यज्ञस्य यजमानस्य प्रजानां चोत्तरोत्तरं प्रतिष्ठा पूर्व-पूर्वाधीनेति प्रसिद्धम्। तस्मात् सर्वप्रतिष्ठार्थमप उपसृजेत्।

कल्पः, 'पदे हिरण्यं निधाय जिघर्म्यग्निमा त्वा जिघर्मीति मनस्वतीभ्यामेकामाहुतिꣳ हिरण्ये हुत्वा' इति। तत्र प्रथमामृच-

शिक्यस्योद्यमनहेतुरज्जुसङ्ख्यां विधत्ते,—"षडुद्यामꣳ शिक्यं भवति षड्वा ऋतव ऋतुभिरेवैनमुद्यच्छते" (५।१।१०अ०) इति।

पक्षान्तरं विधत्ते,—"यद्द्वादशोद्यामꣳ संवत्सरेणैव" (५।१।१०अ०) इति। 'द्वादश मासाः संवत्सरः' इत्युक्तत्वात् 'संवत्सरेणैव' एनमुद्यच्छते।

शिक्यस्य प्रकृतिद्रव्यं विधत्ते,—"मौञ्जं भवत्यूर्ग्वै मुञ्जा ऊर्जैवैनꣳ समर्धयति" (५।१।१०अ०) इति।

कल्पः, 'सुपर्णोऽसि गरुत्मानित्युख्यमवेक्ष्य' इति। पाठस्तु,—"सुपर्णोऽसि गरुत्मान् त्रिवृत्ते शिरो गायत्रं चक्षुः स्तोम आत्मा साम ते तनूर्वामदेव्यं बृहद्रथन्तरे पक्षौ यज्ञायज्ञियं पुच्छं छन्दाꣳस्यङ्गानि धिष्णियाः शफा यजूꣳषि नाम(१४)" इति। हे अग्ने, त्वं 'सुपर्णः' पक्षिरूपः 'असि', पक्ष्याकारेण चेष्यमाणत्वात्; अत एवाम्नायते, 'वयसां वा एष प्रतिमया चीयते यदग्निः' इति। तत्र दृष्टान्तः,—'गरुत्मान्' यथा पक्षिराजस्तद्वत्। पक्ष्याकारस्यावयवाः सम्पद्यन्ते*—'त्रिवृत्ते शिरः' (बहिष्पवमानस्तोत्रे योऽयं त्रिवृत्स्तोमः, स एव स्तोमः शिरस्थानीयः); प्रजापतिमुखजन्यत्वेन उक्तत्वात्। यद्गायत्राख्यं 'साम', तत् त्वदीयं 'चक्षुः', यः पञ्चदशादिस्तोमः, स एव जीवात्मा। यद्वामदेवाख्यं 'साम', सा 'तनूः' (शिरोव्यतिरिक्तशरीरस्थानीयं)। ये बृहद्रथन्तराख्ये सामनी 'ते' तव पक्षस्थानीये। यद् यज्ञायज्ञियाख्यं साम, तत् तव

---

* सम्पद्यते इति सर्व्वत्र पाठो न सम्यक्।

माह,—"जिघर्म्यग्निं मनसा घृतेन प्रतिक्ष्यन्तं भुवनानि विश्वा। पृथुं तिरश्चा वयसा बृहन्तं व्यचिष्ठमन्नꣳ रभसं विदानम्[१७]" इति। अहम् 'अग्निं' 'मनसा' ध्यायन् 'घृतेन' 'जिघर्मि' (क्षारयामि दीपयामि वा)। कीदृशमग्निं?—विश्वानि 'भुवनानि' 'प्रतिक्ष्यन्तं' (सर्वेषु लोकेषु प्रत्येकं निवसन्तं), 'तिरश्चा' 'पृथुं' (तिर्यक्क्रमणेन विस्तृतं), 'वयसा बृहन्तं' (वय उपलक्षितेन कालेन प्रौढं)। 'पृथुम्' इत्यनेन बहुदेशव्याप्तिः, 'वयसा' इत्यनेन बहुकालव्याप्तिरुक्ता। किञ्च यत् 'अन्नं' 'व्यचिष्ठम्' (अतिशयेन विविधमञ्चनं गमनं पूजनं वा यस्य तद्व्यचिष्ठं, भक्ष्यभोज्यादिरूपेण बहुविधं स्वादुत्वेन पूज्यञ्चेत्यर्थः) तादृशम् 'अन्नं' 'रभसं' (शीघ्रमेव) 'विदानं' (लभमानम्)।

अथ द्वितीयामाह,—"आ त्वा जिघर्मि वचसा घृतेनारक्षसा मनसा तज्जुषस्व। मर्यश्रीः स्पृहयद्वर्णो अग्निर्नाभिमृशे तनुवा जर्हृषाणः[१८]" इति। हे अग्ने, त्वाम् 'आ'-'जिघर्मि' 'वचसा' (मन्त्रेण अनेन) 'घृतेन' (सर्वतः क्षारयामि)। 'अरक्षसा' 'मनसा' (क्रौर्यरहितेन चित्तेन) 'तत्' (घृतम्) 'जुषस्व'। अयमग्निः 'मर्यश्रीः' (मर्त्यैः* आश्रयणीयः), 'स्पृहयद्वर्णः' (यजमानैः स्पृहणीयरूपः), 'नाभिमृशे' (अभिमर्शनं कर्तुं न शक्यः), 'तनुवा जर्हृषाणः' (घृतपानपुष्टेन शरीरेणात्यन्तं हृष्टः) ईदृशमग्निं त्वाम् 'आ-जिघर्मि' इति योजना।

आभ्यां मन्त्राभ्यां हिरण्ये होमं विधत्ते,—"यदध्वर्युरनग्नावाहुतिं जुहुयादन्धोऽध्वर्युः स्याद्रक्षाꣳसि यज्ञꣳ हन्युर्हिरण्यमुपास्य जुहोत्यग्निवत्येव जुहोति नान्धोऽध्वर्युर्भवति न यज्ञꣳ रक्षाꣳसि

* मर्त्यैः इति आदर्शपुस्तकपाठः।

पुच्छस्थानीयम्। यानि गायत्र्यादीनि छन्दांसि, तानि हृदयाद्य-ङ्गस्थानीयानि। ये सोमिकवेद्यां होत्रियादि—'धिष्णियाः', 'ते' तव शफस्थानीयाः। यानि 'यजूंषि', तानि तव नाम-स्थानीयानि।

एतन्मन्त्रं विनियुङ्क्ते,—"सुपर्णोऽसि गरुत्मानित्यवेक्षते रूप-मेवास्यैतन्महिमानं व्याचष्टे" (५।१।१०अ०) इति। 'अवेक्षते' उख्यमिति शेषः। मन्त्रस्वरूपेणैवार्थप्रतीतेर्नात्र पृथग्व्याख्यानमपे-क्षितम्।

कल्पः, 'सुपर्णोऽसि गरुत्मानित्यादयोत्थाय' इति। पाठस्तु,—"सुपर्णोऽसि गरुत्मान् दिवं गच्छ सुवः पत(१५)" इति। हे अग्ने, त्वं 'गरुत्मान्' (गरुड इव पक्षिरूपः) 'असि'। अत आकाशं प्रति 'गच्छ'; ततोऽपि 'सुवः पत' (स्वर्गलोकं प्राप्नुहि)।

मन्त्रस्य स्वर्गप्राप्तिपरत्वं दर्शयति,—"दिवं गच्छ सुवः पते-त्याह सुवर्गमेवैनं लोकं गमयति" (५।१।१०अ०) इति। 'एनं' यजमानमात्मानम्॥

अत्र विनियोगसङ्ग्रहः,—

यदग्ने,-पञ्चभिः काष्ठं वङ्कावौदुम्बरं क्षिपेत्।
दंष्ट्राऽश्वत्थीमादधाति, ये, च वैकङ्कतीं तथा॥
यो अस्मभ्यं, शमीकाष्ठं, संशित-इयवाचनम्।
दृष्ट्वा, रुक्मं निजे कण्ठे बद्ध्वा, बिभेति मन्त्रतः॥
सागन्युखाशिक्यपाशं तु स्वाम्यत्र प्रतिमुञ्चते।

घ्नन्ति" (५।१।३अ०) इति । अग्निरहिते भूप्रदेशे होमेन 'अध्वर्युः' 'अन्धो' भवति । होमाधिकरणस्याग्नेरदर्शनात् । एतदेव छिद्रमुपलभ्य रक्षांसि 'यज्ञं' विनाशयेयुः । अत एतद्दोषपरिहाराय भूमौ 'हिरण्यं' निधाय तस्मिन् जुहुयात् । तथा सति हिरण्यस्याग्निसदृशत्वादयं प्रदेशोऽग्निमान् भवतीति नोक्तदोषद्वयम् ।

प्रथममन्त्रस्य प्रथमपादे मनःशब्दस्योपयोगं दर्शयति,—"जिघर्म्यग्निं मनसा घृतेनेत्याह मनसा हि पुरुषो यज्ञमभिगच्छति" (५।१।३अ०) इति । मनसा यज्ञाभिगमनं नाम 'यज्ञं करिष्ये' इत्येवं रूपः सङ्कल्पः ।

द्वितीयपादस्य तात्पर्यं दर्शयति,—"प्रतिक्ष्यन्तं भुवनानि विश्वेत्याह सर्वꣳ ह्येष प्रत्यङ्क्षेति" (५।१।३अ०) इति । 'एषः' अग्निः 'सर्वं' यजमानमुद्दिश्य 'प्रत्यङ्' (अभिमुखं) 'क्षेति' (निवसति) ।

तृतीयपादे 'पृथुं बृहन्तं' इत्यनयोस्तात्पर्यं दर्शति,—"पृथुं तिरश्चा वयसा बृहन्तमित्याहाल्पो ह्येष जातो महान् भवति" (५।१।३अ०) इति । 'एषः' अग्निः जातमात्रेण 'अल्पः', पश्चादाहुतिभिर्वर्द्धमानो देशव्याप्त्या कालव्याप्त्या च 'महान् भवति' ।

चतुर्थपादे 'व्यचिष्ठम्' इतिपदेन सूचितं पूजार्थलक्षणं स्वादुत्वं दर्शयति,—"व्यचिष्ठमन्नꣳ रभसं विदानमित्याहान्नमेवास्मै स्वदयति" (५।१।३अ०) इति ।

वेदनं प्रशंसति,—"सर्वमस्मै स्वदते य एवं वेद" (५।१।३अ०) इति ।

द्वितीयमन्त्रस्य प्रथमपादे 'वचसा' इतिपदस्याभिप्रायं दर्शयति,—

मक्षो,ऽजिनं चोपरिष्टात्, सुपर्णोऽग्निमवेचते ।
सुपर्णः साग्निरुत्तिष्ठेन्मन्त्राः पञ्चदशेरिताः ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये चतुर्थकाण्डे प्रथमप्रपाठके दशमोऽनुवाकः ॥ ० ॥

---

अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि । स इद् देवेषु गच्छति[१] । सोम यास्ते मयो-भुव ऊतयः सन्ति दाशुषे । ताभिर्नोऽविताभव[२] । अग्निर्मूर्धा भुवः[३-४] । त्वन्नः सोम या ते धामानि[५ ६] । तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात्[७] । अचित्ती यच्चकृमा दैव्ये जने दीनैर्दक्षैः प्रभूती पूरुषत्वता ॥ १ ॥

देवेषु च सवितर्मानुषेषु च त्वन्नो अत्र सुवतादनागसः[८] । चोदयित्री सूनृतानां चेतन्ती सुमतीनां । यज्ञं दधे सरस्वती[९] । पावीरवी कन्या चित्रायुः सरस्वती वीरपत्नी धियं धात् । ग्नाभिरच्छिद्रꣳ शरणꣳ सजोषा दुराधर्षं गृणते शर्म यꣳसत्[१०] । पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः । पूषा वाजꣳ सनोतु नः[११] । शुक्रं ते अन्यद्यजतं ते अन्यत् ॥ २ ॥

"आ त्वा जिघर्मि वचसा घृतेनेत्याह तस्मात् यत् पुरुषो मनसाभिगच्छति तद्वाचा वदति" (५।१।३अ०) इति। यस्मात् प्रथममन्त्रे मनसेत्युक्त्वा द्वितीयमन्त्रे वचसेत्युक्तं, तस्मात् लोकेऽपि पुरुषो मनसा यत् कार्यं चिन्तयति, तत्पश्चात् वाचा वदति।

द्वितीयपादे अरचो-निषेधवाचिशब्दस्य* तात्पर्यं दर्शयति,—"अरचसेत्याह रचसामपहत्यै" (५।१।३अ०) इति।

तृतीयपादे मनुष्यैराश्रयणीयत्वेन वर्णस्य स्पृहणीयत्वेन चाग्नेः पूज्यत्वं सम्पाद्यते इति दर्शयति,—"मर्यश्रीः स्पृहयद्वर्णो अग्निरित्याहापचितिमेवास्मिन् दधाति" (५।१।३अ०) इति।

वेदनं प्रशंसति,—"अपचितिमान् भवति य एवं वेद" (५।१।३अ०) इति।

मन्त्रयोरुभयोर्मनःशब्दोपेतत्वं प्रशंसति,—"मनसा त्वैतामाप्नुमर्हति यामध्वर्युरनग्नावाहुतिं जुहोति मनस्वतीभ्यां जुहोत्याहुत्योराप्त्यै" (५।१।३अ०) इति। अनग्नौ हूयमाना आहुतिर्मनसैव प्राप्तुमर्हा, अग्नौ हुतेत्येवं सङ्कल्पयितुं शक्यत्वात्, तस्मादाहुत्योः प्राप्तये मनःशब्दयुक्ताभ्यामृग्भ्यां जुहुयात्।

मन्त्रद्वित्वं प्रशंसति,—"द्वाभ्यां प्रतिष्ठित्यै" (५।१।३अ०) इति।

कल्पः, 'अपादाय हिरण्यं परि वाजपतिः कविरग्निरिति तिसृभिरभ्रिया मृत्खननं प्रत्यृचं परिलिखति वार्म्यां वर्षीयसीम्' इति। तत्र प्रथमामाह,—"परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत्। दधद्रत्नानि दाशुषे(१९)" इति। अयम् 'अग्निः' 'हव्यानि'

* अरचो निषेधवाचीशब्दस्य इति सर्व्वस्मिन् पुस्तके पाठो न सम्यक्।

विष्णुरूपे अहनी द्यौरिवासि। विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु[१२]। तेऽवर्द्धन्त स्वतवसो महित्वनाऽऽनाकं तस्थुरुरु चक्रिरे सदः। विष्णुर्यद्धावद्वृषणं मदच्युतं वयो न सीदन्नधि बर्हिषि प्रिये[१३]। प्र चित्रमर्कं गृणते तुराय मारुताय स्वतवसे भरध्वं। ये सहांसि सहसा सहन्ते ॥ ३ ॥

रेजते अग्ने। पृथिवी मखेभ्यः[१४]। विश्वे देवा विश्वे देवाः[१५-१६]। द्यावा नः पृथिवी इमं सिध्रमद्य दिविस्पृशं। यज्ञं देवेषु यच्छतां[१७]। प्र पूर्वजे पितरा नव्यसीभिर्गीर्भिः कृणुध्वं सदने ऋतस्य। आ नो द्यावापृथिवी दैव्येन जनेन यातं महि वां वरूथं[१८]। अग्निं स्तोमेन बोधय समिधानो अमर्त्यं। हव्या देवेषु नो दधत्[१९]। स हव्यवाडमर्त्य उशिग्दूतश्चनोहितः। अग्निर्धिया समृण्वति[२०]। शन्नो भवन्तु वाजे-वाजे[२१-२२] ॥ ४ ॥

पूरुषत्वता। यजतं ते अन्यत्। सहन्ते। चनोहितः। अष्टौ च ॥ ११ ॥

युञ्जानः। इमामगृभ्णन्। देवस्य। सं ते। वि पाजसा। वसवस्त्वा। समास्त्वा। ऊर्द्ध्वा अस्य। आकूतिं। यदग्ने यानि। अग्ने यं यज्ञम्। एकादश ॥ ११ ॥ * ॥ ० ॥

परितः 'अक्रमीत्' (स्वीकृतवान्)। कीदृशोऽग्निः ?—'वाजपतिः' (अन्नस्य पालयिता)। किं कुर्वन् ?—'दाशुषे' (हविर्दत्तवते) यजमानाय 'रत्नानि' 'दधत्' (रमणीयानि धनानि सम्पादयन्)।

अथ द्वितीयामाह,—"परि त्वाग्ने पुरं वयं विप्रꣳ सहस्य धीमहि। धृषद्वर्णं दिवे-दिवे भेत्तारं भङ्गुरावतः(१०)" इति। सहसि बले भवः 'सहस्यः', 'सहसस्पुत्रो अद्भुतः' इति श्रुत्यन्तरात्; तादृश (बलवान्*) हे 'अग्ने', 'वयं' त्वां 'परि'-'धीमहि' (परितः स्वीकुर्मः। कीदृशं त्वां ?—'पुरं' (असकृदपेक्षितफलानां पूरयितारम्), 'विप्रं' (ब्राह्मणजात्यभिमानिनं देवं), 'धृषद्वर्णं' (धृषत्† वैरिणां धर्षयिता वर्णः स्वरूपविशेषो यस्यासौ धृषद्वर्णः तं), 'दिवे-दिवे' (प्रतिदिनं) 'भङ्गुरावतः' 'भेत्तारं' (भञ्जनीयं पापं भङ्गुरं, तदस्यास्तीति भङ्गुरावान् विघातको राक्षसादिः, तस्य विनाशयितारम्)।

अथ तृतीयामाह,—"त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि। त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः(११)" इति। हे 'अग्ने', 'त्वं' 'द्युभिः' (स्वर्गैः) निमित्तभूतैस्तत्र तत्र यागशालासु 'जायसे'। किञ्च 'त्वमाशुशुक्षणिः' (आर्द्रां भूमिं शीघ्रमेव शोषयिता) 'जायसे'। 'त्वमद्भ्यः' (वर्षधाराभ्यः) अशनिरूपेण 'जायसे'। 'त्वमश्मनस्परि' (पाषाणस्योपरि) पाषाणान्तरसङ्घट्टनेन 'जायसे'। 'त्वं वनेभ्यः' दावाग्निरूपेण 'जायसे'। 'ओषधीभ्यः' (ओषधिकार्येभ्यो भेषजेभ्यः) 'त्वं'

---

* बलवन् इति पाठो भवितुं युक्तः।

† धृषन् इति पाठो भवितुं युक्तः।

युञ्जानः। वर्म च स्थ। आदित्यास्त्वा। भारती।
स्वाऽं अह्नऽं। षट्चत्वारिंशत् ॥ ६४ ॥
युञ्जानः। वाजे वाजे ॥

॥०॥ हरिः ओम् ॥०॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे प्रथम-प्रपाठके एकादशोऽनुवाकः ॥ ० ॥

॥ * ॥ समाप्तश्च प्रथमः प्रपाठकः ॥ * ॥

दशमेऽनुवाके वह्निधारणमुक्तम्। अथैकादशे चातुर्मास्यगते वैश्वदेवाख्ये प्रथमपर्वणि विहितानां हविषां याज्यानुवाक्या उच्यन्ते। तत्र प्रथमस्याज्यभागस्य चोदकप्राप्तामपवदितुमन्यां पुरोनुवाक्यामाह,—"अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि। स इद्देवेषु गच्छति(१)" इति। हे 'अग्ने', 'अध्वरं' (हिंसारहितं), 'यं' 'यज्ञं' 'विश्वतः' 'परिभूरसि' (सर्वतः प्राप्तवानसि)। 'स इत्' (स एव) यज्ञः 'देवेषु' 'गच्छति'।

अथ द्वितीयाज्यभागस्य पुरोऽनुवाक्यामाह,—"सोम यास्ते मयो-भुव ऊतयः सन्ति दाशुषे। ताभिर्नोऽविता भव(२)" इति। हे 'सोम', 'दाशुषे' (हविर्दत्तवते) यजमानाय 'मयो-भुवः' (सुखं भावयितुः) 'ते' (तव) "'याः' 'ऊतयः' (रक्षणप्रकाराः) 'सन्ति', 'ताभिः' (ऊतिभिः) 'नः' (अस्माकं) 'अविता' (रक्षकः) 'भव'।

आयमे'; यद्वा वंशदयसत्कर्षणादिभ्यो 'आयमे'। 'नृणां' 'नृपते', (सर्वेषामपि मनुष्याणां पालक), त्वं गृहे-गृहे 'शुचिः' (शुद्धिहेतुः सन्) 'आयमे', 'पुनर्दाहेन सृष्टमयम्' इत्यादिश्रुतेः।

एतैर्मन्त्रैः साध्यं परिलेखनं विधत्ते,—"यज्ञमुखे-यज्ञमुखे वै क्रियमाणे यज्ञꣳ रक्षाꣳसि जिघाꣳसन्त्येतर्हि खलु वा एतद्यज्ञमुखं यर्ह्येनदाहुतिरश्नुते परिलिखति रक्षसामपहत्यै" (५।१।३अ०) इति। यज्ञस्य मुखं (प्रारम्भः) 'यज्ञमुखं'। यदा यज्ञः प्रारभ्यते, तदा 'रक्षांसि' आगत्य यज्ञं हन्तुमिच्छन्ति। एवञ्च सति अत्रापि अश्वपदाङ्कितम् 'एतत्' स्थानम् 'आहुतिः' यदा प्राप्नोति, तदानीम् एतदेवाश्वपदस्थानं यज्ञप्रारम्भरूपं भवति। अतोऽत्र प्राप्तानां 'रक्षसामपहत्यै' परिलेखनं कुर्यात्।

मन्त्रत्रयं विनियुङ्क्ते,—"तिसृभिः परिलिखति त्रिवृद्वा अग्नि-र्यावानेवाग्निस्तस्माद्रक्षाꣳस्यपहन्ति" (५।१।३अ०) इति। आहव-नीय-गार्हपत्य-दक्षिणाग्निरूपेणाग्नेस्त्रिगुणत्वम्। सर्वस्मादप्येतस्मादग्नेः रक्षसामपघातो मन्त्रत्रित्वेन* सम्पद्यते।

परि वाजपतिरित्येतां विशेषाकारेण विधत्ते,—"गायत्रिया परि लिखति तेजो वै गायत्री तेजसैवैनं परिगृह्णाति" (५।१।३अ०) इति। पादत्रयोपेतत्वादियं गायत्री, तस्याश्चाग्निना सह प्रजापति-मुखादुत्पन्नत्वात् तेजस्त्वम्। 'एनम्' (अश्वप्रदेशम्)।

'त्वमग्ने द्युभिः' इत्येतां विधत्ते,—"त्रिष्टुभा परि लिखतीन्द्रियं वै त्रिष्टुगिन्द्रियेणैवैनं परिगृह्णाति" (५।१।३अ०) इति।

* मन्त्रत्रित्वेन इति पाठो भवितुं युक्तः।

अथ 'आग्नेयमष्टाकपालं निर्वपति' इत्यस्मिन् हविषि याज्या-पुरोनुवाक्ययोः प्रतीके दर्शयति,—"अग्निर्मूर्द्धा, भुवः(१-४)" इति। 'अग्निर्मूर्द्धा' इति पुरोनुवाक्या, 'भुवो यज्ञस्य' इति याज्या। एतच्चोभयमैष्टिके होत्रकाण्डे समाम्नातम्, तत्र अस्माभिरुदाहृत्य, "चक्षुषी वा एतद्यज्ञस्य" (२का०।६प्र०।२अ०) इत्यस्मिन्ननुवाके व्याख्यातम्।

अथ 'सौम्यं चरुम्' इत्यस्मिन् हविषि याज्यानुवाक्ययोः प्रतीके दर्शयति,—"त्वम्नः सोम, या ते धामानि(५-६)" इति। 'त्वम्नः सोम विश्वतः' इति पुरोनुवाक्या, 'या ते धामानि' इति याज्या; एतच्चोभयं "स प्रत्नवन्नि काव्या" इत्यनुवाके (२का०।३प्र०। १४अ०) व्याख्यातम्।

अथ 'सावित्रं द्वादशकपालम्' इत्येतस्य हविषः पुरोनुवाक्या-माह,—"तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्(७)" इति। 'यः' सविता अस्माकं बुद्धीः प्रेरयति, 'तत्सवितुः' 'देवस्य' वरणीयं 'भर्गः' (तेजो) ध्यायेम।

तत्रैव याज्यामाह,—"अचित्ती यच्चकृमा दैव्ये जने दीनै-र्दक्षैः प्रभूती पूरुषत्वता। देवेषु च सवितर्मानुषेषु च त्वन्नो अत्र सुवतादनागसः(८)" इति। पूरुषस्य भावः पूरुषत्वं, पूरुषत्वमेव 'पूरुषत्वता', सा 'च' 'प्रभूती' (अतिबहुला), देहेन्द्रियादिसङ्घातेषु पुरुषोऽहमस्मीत्यादिनात्माभिमानभ्रान्तिरत्यन्तं दृढेत्यर्थः। तथा सति, हे 'अचित्ती', कर्त्तव्याकर्त्तव्ययोरज्ञानेन 'दीनैर्दक्षैः' (विषयलम्पटतया दीनत्वं प्राप्तैः, स्वस्वव्यापारकुशलैरिन्द्रियैः)

'परि त्वाग्ने' इत्येतां विधत्ते,—"अनुष्टुभा परिलिखत्यनुष्टुप् सर्वाणि छन्दांसि परिभूः पर्याप्त्यै" (५।१।२ अ०) इति। वाग्रूपेयमनुष्टुप् सर्वाणि छन्दांसि (परितो भवति व्याप्नोतीति) 'परिभूः', अतः सेयं 'पर्याप्त्यै' सम्पद्यते।

अस्या अनुष्टुभः पाठ्यास्तं मन्त्रद्वयमध्यवर्त्तित्वं प्रशंसति,—"मध्यतोऽनुष्टुभा वाग्वा अनुष्टुप् तस्मान्मध्यतो वाचा वदामः" (५।१।२ अ०) इति। 'अनुष्टुभा' परिलिखतीति शेषः। यस्मात् वाग्रूपा अनुष्टुप् मध्यतः पठिता, तस्माद्वयमपि मुखमध्यवर्त्तिजिह्वासाध्यया 'वाचा' सम्भाषणं कुर्मः।

गायत्रीत्रिष्टुभोः पाठप्राप्तमाद्यन्तरूपत्वं प्रशंसति,—"गायत्रिया प्रथमया परि लिखत्यथानुष्टुभाथ त्रिष्टुभा तेजो वै गायत्री यज्ञोऽनुष्टुगिन्द्रियं त्रिष्टुप् तेजसा चैवेन्द्रियेण चोभयतो यज्ञं परिगृह्णाति"(५।१।२ अ०) इति। पूर्वं प्रशस्तापि मध्यवर्त्तिनो अनुष्टुप्, पुनरपि पार्श्वस्थाभ्यां सह प्रशस्यते। यज्ञनिष्पादकवाग्रूपत्वादनुष्टुभो यज्ञत्वम्। तस्मात् उभयतो गायत्रीत्रिष्टुभोः पाठेन मध्यवर्त्तिनं यज्ञमेव 'तेजसा वै चेन्द्रियेण चोभयतः' परिगृहीतवान् भवति॥

अत्र विनियोगसङ्ग्रहः,—

इमां, रज्जुं समादाय, प्रष्ठ, तुरगबन्धनम्।
युञ्जा, गर्दभमाबध्य, योगे, यान्ति त्रिभिर्मृदा*॥
'इमा'ऽन्ता दग्निमित्यादेर्गमने द्वयमन्त्रणम्।

* मृदमिति J. पु० पाठः।

'दैव्ये जने' (देवतासम्बन्धिनि शरीरे) 'यत् चकृम' (यत् पापं वयं कृतवन्तः), हे 'सवितः', 'त्वं' 'देवेषु' मनुष्येषु 'च' 'अत्र' (अस्मिन् कर्मणि) 'नः' (अस्मान्) 'अनागसः' (पापरहिताः) यथा भवामः, तथा 'सुवतात्' (प्रेरय)।

अथ 'सारस्वतं चरुम्' इत्यस्य पुरोनुवाक्यामाह,—"चोदयित्री सूनृतानां चेतन्ती सुमतीनाम्। यज्ञं दधे सरस्वती(९)" इति। 'सूनृतानां' (प्रियवाक्यानां) 'चोदयित्री' (प्रेरयित्री) 'सुमतीनां' (शोभनबुद्धीनाम्) अस्माकं हृद्यं 'चेतन्ती' (जानन्ती) 'सरस्वती' 'यज्ञम्' इमं 'दधे' (धारितवती)।

तत्रैव याज्यामाह,—"पावीरवी कन्या चित्रायुः सरस्वती वीरपत्नी धियं धात्। ग्नाभिरच्छिद्रꣳ शरणꣳ सजोषा दुराधर्षं गृणते शर्म यꣳसत्(१०)" इति। 'सरस्वती' 'धियं धात्' (अस्मदीये कर्मणि सावधानां बुद्धिं धारयतु)। कीदृशी?—'पा-वीर-वी' (पातॄन् वीरांश्च वयति जनयतीति 'पा-वीरवी'), 'कन्या' (कमनीया), 'चित्रायुः' (विचित्रं जीवनं यस्याः सा), 'वीरपत्नी' (वीराणां पालयित्री), 'ग्नाभिः' (छन्दोभिः) युक्ता, 'सरस्वती' 'सजोषाः' (यजमानेन समानप्रीतिः) सती 'गृणते' (स्तुवते) यजमानाय 'शर्म यंसत्' (सुखं प्रयच्छतु)। कीदृशं 'शर्म'?—'अच्छिद्रम्' (अविच्छिन्नं), 'शरणं' (रक्षकं), 'दुराधर्षं' (अन्यैर्धर्षयितुमशक्यम्)।

अथ 'पौष्णं चरुम्' इत्यस्य पुरोनुवाक्यामाह,—"पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः। पूषा वाजꣳ सनोतु नः(११)" इति। अयं 'पूषा' 'नः' (अस्माकं) 'गा अन्वेतु' (रक्षणाय पृष्ठतो गच्छतु)।

'श्यामो'ऽन्त्येन वपा जया, 'रामो'ऽन्त्या द्वेष्यमन्त्रणम्॥
अन्वग्नि, गच्छेदागत्य द्वाभ्यामाक्रमयेद्धुवम्।
द्यौस्ते,ऽश्वपृष्ठं संमार्ष्टि हुत्वा-द्वाभ्यां तद्वमः।
अपः, पदेऽपो निनयेज्जिघ-द्वाभ्यां जुहोति हि॥
परि त्रिभिः परिलिखेदेकविंशतिरीरिताः॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्ण-यजुःसंहिताभाष्ये चतुर्थकाण्डे प्रथमप्रपाठके द्वितीयोऽनुवाकः॥२॥

---

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां पृथिव्याः सधस्थेऽग्निं पुरीष्यमङ्गिरस्वत् खनामि(१)। ज्योतिष्मन्तं त्वाग्ने सुप्रतीकमजस्रेण भानुना दीद्यानं*। शिवं प्रजाभ्योऽहिंसन्तं पृथिव्याः सधस्थेऽग्निं पुरीष्यमङ्गिरस्वत् खनामि(२)। अपां पृष्ठमसि सप्रथा उर्वग्निं भरिष्यदपरावपिष्ठं। वर्धमानं मह आ च पुष्करं दिवो मात्रया वरिणा प्रथस्व(३)। शर्म च स्थः॥१॥

वर्म च स्थो अच्छिद्रे बहुले उभे। व्यचस्वती संवसाथां भर्त्तमग्निं पुरीष्यं(४)। संवसाथाꣳ सुवर्विदा

*क्वचित् दीधानमिति पाठः।

किञ्च, अयं 'पूषा' सर्वतोऽस्मान् 'रक्षतु'। 'पूषा' 'नः' (अस्मभ्यं) 'वाजम्' (अन्नं) 'सनोतु' (सम्पादयतु)।

तत्रैव याज्यामाह,—"शुक्रं ते अन्यत् यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि। विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु(१२)" इति। हे 'पूषन्', 'ते' (तव) 'शुक्रं' (शुद्धस्वरूपम्) 'अन्यत्' (अनेकप्रकारं), उदयकाले रक्तवर्णं रूपं 'अन्यत्', मध्याह्नकाले श्वेतवर्णं रूपम् 'अन्यत्',-इत्येवमनेकप्रकारत्वम्। 'ते' (तव) 'यजतं' (पूजनमपि) 'अन्यत्',—प्रातःकाले "मित्रस्य चर्षणीधृतः" इत्यादिभिर्मन्त्रैः पूज्यसे, मध्याह्ने तु "आ सत्येन" इत्यादिभिः। तथा, त्वया निष्पादिते 'अहनी' अपि 'विषुरूपे' (नानारूपे)। अहःशब्दश्छत्रिन्यायेन रात्रिमप्युपलक्षयति। अहः प्रकाशोपेतं, रात्रिस्तमोयुक्तेति नानारूपत्वं। एवं विचित्रकार्ययुक्तोऽपि त्वं 'द्यौरिवासि,-आकाशं यथा एकरूपं, तद्वत् त्वमपि पक्षपातराहित्यादेकरूपोऽसि। (मीयन्ते पदार्था याभिस्त्विन्तर्वृत्तिस्ताः चित्तवृत्तयो 'मायाः'। कव्यदानवाचिना च स्वधाशब्देन कृत्स्नमप्यन्नमुपलक्ष्यते। हे 'स्वधावः' (अन्नवत्), 'विश्वा हि' 'मायाः' सर्वा अप्यस्मदीयचित्तवृत्तीः 'अवसि' (रक्षसि)। हे 'पूषन्' 'इह' (कर्मणि) 'ते' (तव) 'रातिः' 'भद्रा' 'अस्तु' (फलप्रदानं समीचीनं भवतु)।

अथ 'मारुतं सप्तकपालम्' इत्यस्य पुरोनुवाक्यामाह,—"तेऽवर्द्धन्त स्वतवसो महित्वना आ नाकं तस्थुरुरु चक्रिरे सदः। विष्णुर्यत् ह आवद्वृषणं मदच्युतं वयो न सीदन्नधि बर्हिषि

समीची उरसात्मना। अग्निमन्तर्भरिष्यन्ती ज्योतिष्मन्तमजस्रमित्[५]। पुरीष्योऽसि विश्वभराः। अथर्वा त्वा प्रथमो निरमन्थदग्ने[६]। त्वामग्ने पुष्करादध्यथर्वा निरमन्थत। मूर्ध्नो विश्वस्य वाघतः[७]। तमु त्वा दध्यङ्ङृषिः पुत्र ईधे॥ २॥

अथर्वणः। वृत्रहणं पुरन्दरं[८]। तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमं। धनञ्जयं रणे-रणे[९]। सीद होतः स्व उ लोके चिकित्वान्त्सादया यज्ञꣳ सुकृतस्य योनौ। देवावीर्देवान् हविषा यजास्यग्ने बृहद्यजमाने वयो धाः[१०]। नि होता होतृषदने विदानस्त्वेषो दीदिवाꣳ असदत्सुदक्षः। अदब्धव्रतप्रमतिर्वसिष्ठः सहस्रम्भरः शुचिजिह्वो अग्निः[११]। सꣳसीदस्व महाꣳ असि शोचस्व॥ ३॥

देववीतमः। वि धूममग्ने अरुषं मियेध्य सृज प्रशस्त दर्शतं[१२] जनिष्वा हि जेन्यो अग्रे अह्नाꣳ हितो हितेष्वरुषो वनेषु। दमे-दमे सप्त रत्ना दधानोऽग्निर्होता नि षसादा यजीयान्[१३]॥ ४॥

स्थः। ईधे। शोचस्व। सप्तविꣳशतिश्च॥ ३॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे प्रथमप्रपाठके तृतीयोऽनुवाकः॥ ०॥

प्रिये[१३]" इति। 'तवः' बलं, 'स्वं' (स्वाधीनं) तवो येषां, ते 'स्वतवसः', तादृशाः 'ते' (मरुतः) 'महित्वना' (महत्त्वेन) स्वकीयेन 'अवर्द्धन्त'; 'ते' (मरुतः) 'नाकं' (स्वर्गं) 'आ'-'तस्थुः' (प्राप्तवन्तः); 'उरु' 'सदः' 'चक्रिरे' (स्वर्गे यजमानाय स्थानं कृतवन्तः)। 'वृषणं' (कामानां वर्षकं), 'मदच्युतम्' (हर्षच्यावकम् अत्यन्तहर्षकारणमित्यर्थः, तादृशं यद् बर्हिः (मरुत्सम्बन्धि कर्म) 'विष्णुः' 'ह' (विष्णुरेव) 'यत्' 'आवत्' (पालितवान्), तस्मिन् 'प्रिये' 'बर्हिषि' मरुतोऽधिष्ठाय 'वयो न' (वय इव) 'सीदन्', यथा पक्षिणः सायंकाले वृक्षे सीदन्ति, तद्वत् अवतिष्ठन्तीति।

तत्रैव याज्यामाह,—"प्र चित्रमर्कं गृणते तुराय मारुताय स्वतवसे भरध्वं। ये सहांसि सहसा सहन्ते रेजते अग्ने पृथिवी मखेभ्यः[१४]" इति। हे ऋत्विग्यजमानाः, 'चित्रमर्कं' (विविधमर्चनं) 'मारुताय' (मरुत्समूहाय) 'प्र'-'भरध्वं' (प्रकर्षेण सम्पादयत)। कीदृशाय 'मारुताय?', 'गृणते' (हविर्दानाय गृणते), 'तुराय' (शीघ्रगामिने), 'स्वतवसे' (स्वाधीनबलाय)। 'ये' भवन्तः, ऋत्विग्यजमानाः, 'सहसा' (मरुतां बलेन) 'सहांसि' (वैरिबलानि) 'सहन्ते' (अभिभवन्ति) इति पूर्वत्रान्वयः। हे 'अग्ने', त्वमेव तत्पश्येत्यध्याहारः। किन्तद्द्रष्टव्यमिति?—तदुच्यते, इयं 'पृथिवी' 'मखेभ्यः' (मारुतयज्ञेभ्यः) 'रेजते' (कम्पते),—कथं नामैतदीया यज्ञा निर्विघ्नेन समाप्यन्ते?—इति प्रयत्नं करोति,—तदिदमिति।

अथ 'वैश्वदेवीमामिक्षाम्' इत्यस्मिन् हविषि याज्यापुरोनु-

द्वितीये मृदाक्रमणमुक्तम्, अथ तृतीये खननमभिधीयते। कल्पः, 'देवस्य त्वा सवितुः प्रसव इति द्वाभ्यां खनति' इति। प्रथममन्त्रपाठस्तु,—"देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां पृथिव्याः सधस्थेऽग्निं पुरीष्यमङ्गिरस्वत् खनामि(१)" इति स्पष्टोऽर्थः।

द्वितीयमन्त्रपाठस्तु,—"ज्योतिष्मन्तं त्वाऽग्ने सुप्रतीकमजस्रेण भानुना दीद्यानं। शिवं प्रजाभ्योऽहिꣳसन्तं पृथिव्याः सधस्थेऽग्निं पुरीष्यमङ्गिरस्वत् खनामि(१)" इति। हे 'अग्ने', 'पृथिव्याः' 'सधस्थे' (उपरिप्रदेशे) 'पुरीष्यं' (पांसुयोग्यम्) अग्निं त्वाम् अङ्गिरस इव अहं 'खनामि'। कीदृशं त्वां?—'ज्योतिष्मन्तं' (ज्वालायुक्तं), 'सुप्रतीकं' (सुमुखं), 'अजस्रेण भानुना दीद्यानं' (निरन्तरं वर्त्तमानेन रश्मिना प्रकाशमानं), 'प्रजाभ्यः' (प्रजोपकारार्थं) 'शिवं' (शान्तं), अत एव 'अहिंसन्तं' (हिंसामकुर्वन्तम्)।

एतन्मन्त्रद्वयसाध्यं खननं विधत्ते,—"देवस्य त्वा सवितुः प्रसव इति खनति प्रसूत्या अथो धूममेवैतेन जनयति ज्योतिष्मन्तं त्वाग्ने सुप्रतीकमित्याह ज्योतिरेवैतेन जनयति" (५।१।४ अ०) इति। प्रथममन्त्रे सवितुः प्रसव इत्युच्चारणं प्रेरणाय सम्पद्यते, किञ्चैतेन मन्त्रेण धूममेवोत्पादयति, न तु ज्वालां; तस्मात् द्वितीयमन्त्रादौ ज्योतिष्मन्तमित्येतेन शब्देन ज्योतिर्जनयत्येव।

तस्य मन्त्रस्य द्वितीयार्द्धे शिवशब्दतात्पर्यं दर्शयति,—"सोऽग्निर्जातः प्रजाः शुचार्पयत्तं देवा अर्द्धर्चेनाशमयञ्छिवं प्रजाभ्योऽहिꣳसन्तमित्याह प्रजाभ्य एवैनꣳ शमयति" (५।१।४ अ०) इति।

वाक्ययोः प्रतीके दर्शयति,—"विश्वे देवा विश्वे देवा(१५-१६)" इति। 'विश्वे देवा ऋतावृधः' इति पुरोनुवाक्या; 'विश्वे देवाः शृणुत' इति याज्या। एतच्चोभयं "नवो नवो भवति" (२का०।४प्र०। १४अ०) इत्येतस्मिन्ननुवाके व्याख्यातम्।

'द्यावापृथिव्यमेककपालम्' इत्यस्य पुरोनुवाक्यामाह,—"द्यावा नः पृथिवी इमꣳ सिध्रमद्य दिविस्पृशं। यज्ञं देवेषु यच्छताम्(१७)" इति। 'द्यावा' 'पृथिवी' (द्युदेवता, पृथिवीदेवता) चेति उभे 'अद्य' (अस्मिन् दिने) 'नः' (अस्मदीयम्) 'इमं' 'यज्ञं' 'देवेषु' समर्पयेतां। कीदृशं यज्ञं?—'सिध्रं' (फलस्य साधकं), 'दिविस्पृशं' ('अग्नौ प्रास्ताहुतिः (?) सम्यगादित्यमुपतिष्ठते' इतिन्यायेन स्वर्गस्पर्शयुक्तम्)।

तत्रैव याज्यामाह,—"प्र पूर्वजे पितरा नव्यसीभिर्गीर्भिः कृणुध्वꣳ सदने ऋतस्य। आ नो द्यावापृथिवी दैव्येन जनेन यातं महि वां वरूथम्(१८)" इति। 'पूर्वजे' (प्रथमोत्पन्ने) द्यावापृथिव्यौ, 'पितरा' (मातापितृसमाने) 'द्यौः पिता पृथिवी माता' इति श्रुत्यन्तरात्। हे ऋत्विग्यजमानाः, 'ऋतस्य' 'सदने' (यज्ञस्य स्थाने) 'नव्यसीभिः' (अतिशयेन नूतनाभिः) 'गीर्भिः' (मन्त्ररूपाभिर्वाग्भिः) 'कृणुध्वं' (द्यावापृथिव्योः स्तुतिं कुरुध्वं)। हे द्यावापृथिव्यौ 'दैव्येन जनेन' (देवसम्बन्धिना पुरुषसमूहेन) सह 'नः' (अस्मान्) प्रति 'आ'-'यातं'। 'वां' (युवयोः) सम्बन्धि 'वरूथं' (यज्ञगृहं) 'महि' (पूज्यम्)।

अथ तत्रैव स्विष्टकृतः पुरोनुवाक्यामाह,—"अग्निꣳ स्तोमेन

ज्वालामहित उत्पन्नः ‘अग्निः’ उत्पत्तिमात्रेणैव ‘प्रजाः’ सर्वाः तापेनायोजयत्, ‘तं’ (तादृशम्) अग्निं शिवमित्याद्यर्द्धर्चेन ‘देवाः’ शान्तिमकुर्वन्, तस्मादस्य अर्द्धर्चस्य पाठेन प्रजोपकाराय ‘एव’ ‘एनं’ शान्तं करोति।

मन्त्रद्वित्वं प्रशंसति,—“द्वाभ्यां खनति प्रतिष्ठित्यै” (५।१।४ अ०) इति।

कल्पः, ‘अपां पृष्ठमसीति पुष्करपर्णमाहृत्यैतयैव विचेष्य’ इति। मृदं प्रचेप्तुं पुटिकां कृत्वेत्यर्थः। पाठस्तु,—“अपां पृष्ठमसि सप्रथा उर्वग्निं भरिष्यदपरावपिष्ठं। वर्धमानं मह आ च पुष्करं दिवो मात्रया वरिणा प्रथस्व[१]” इति। हे पुष्करपर्ण, त्वम् ‘अपां पृष्ठमसि’ (पृष्ठवदुपरिभागे वर्त्तमानमसि)। कीदृशं?—‘सप्रथाः’ (सविस्तारं) अत एव ‘उर्वग्निं भरिष्यत्’ (अग्निमाधनं मृदं बहुलं यथा भवति, तथा भरितुं समर्थम्, ‘अपरावपिष्ठं’ (परावपो विनाशः, अतिशयेन तद्रहितं), ‘वृधमानं’ (अस्मत्सम्बन्धाद्दिने-दिने वृद्धियुक्तं), ‘महः’ (निर्लेपत्वाद्युक्त्या पूजनीयं), ‘पुष्करं’ (अग्निनिष्पादनद्वारा पुष्टिकरं), तादृशं त्वं, ‘मात्रया’ (परिमाणेन) ‘दिवो’ ‘वरिणा’ (आकाशादप्याधिक्येन) ‘आ’ (समन्तात्) ‘प्रथस्व’ (विस्तृतं भव)।

तमेतं मन्त्रं विनियुङ्क्ते,—“अपां पृष्ठमसीति पुष्करपर्णमाहरत्यपां वा एतत् पृष्ठं यत् पुष्करपर्णꣳ रूपेणैवैनदाहरति” (५।१।४ अ०) इति। ‘अपाम्’ उपरि-वर्त्तमानत्वस्य विद्यमानस्यैवार्थस्य अभिधायित्वादनुरूपेणैव मन्त्रेणैनं पुष्करपर्णमाहरति।

बोधय समिधानो अमर्त्यं। हव्या देवेषु नो दधत्(१९)" इति।
हे यजमान, त्वं 'समिधानः' 'अग्निं' दीपयन् 'अमर्त्यं' (मरण-रहितं) 'अग्निं' स्विष्टकृद्रूपं 'स्तोमेन' (स्तोत्रेण) तोषयित्वा अनेन प्रकारेण 'बोधय'। केन प्रकारेण? इति—तदुच्यते, 'नः' (अस्मदीयानि) 'हव्या' (हवींषि) 'देवेषु' 'दधत्' (स्थापयेति)।

तत्रैव याज्यामाह,—"स हव्यवाडमर्त्य उशिग्दूतश्चनोहितः। अग्निर्धिया समृण्वति(२०)" इति। स्विष्टकृद्रूपः 'अग्निः' 'धिया' (करुणायुक्तेन चेतसा) 'समृण्वति' (सम्यगिह प्राप्नोति)। कीदृशः 'अग्निः'?—(हव्यं वहतीति) 'हव्यवाट्', 'अमर्त्यः' (मरणरहितः), 'उशिक्' (अनुग्रहपूर्वमस्मान् कामयमानः), 'दूतः' (देवानामाज्ञा-कारी) 'चनोहितः' (चनसा मनुष्याणां यजमानानां 'हितः' अभीष्टकारी)।

अथ 'वाजिनो यजति' इति विहिते कर्मणि याज्यानुवाक्ययोः प्रतीके दर्शयति,—"शन्नो भवन्तु वाजे-वाजे(२१ २२)" इति। 'शन्नो भवन्तु वाजिनः' इति पुरोनुवाक्या; 'वाजे-वाजे वाजिनः' इति याज्या। एतदुभयं "देवस्याह सवितुः प्रसवे" (१का०।७प्र०। ८अ०) इत्यनुवाके व्याख्यातम्॥

अत्र विनियोगसङ्ग्रहः—

अथ याज्या वैश्वदेवे चातुर्मास्याद्यपर्वणि।
अग्ने, सैमानुवाकस्तु अग्नीषोमाज्यभागयोः॥

कल्पः, 'शर्म च स्थो वर्म च स्थ इति द्वाभ्यामुत्तरेण मृत्खननं कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमास्तृणात्युपरिष्टात् पुष्करपर्णमुत्तानम्' इति। प्रथममन्त्रपाठस्तु,—"शर्म च स्थो वर्म च स्थो। अच्छिद्रे बहुले उभे। व्यचस्वती संवसाथां भर्त्तमग्निं पुरीष्यम्[४]" इति। हे कृष्णाजिन-पुष्करपर्णे, 'उभे' (युवां) 'शर्म च स्थः' (अग्नेः सुखकारणे अपि भवथः)। तथा 'वर्म च स्थः' (कवचवद्रक्षके अपि भवथः)। कीदृशे?—'अच्छिद्रे' (छिद्ररहिते), 'बहुले' (विस्तीर्णे), 'व्यचस्वती' (आच्छादनप्रकारवती) पुटिकादिसदृशे इत्यर्थः। तथा-विधे युवां 'संवसाथां' (सम्यक् मृदमाच्छादयतम्)। ततः 'पुरीष्यम्' 'अग्निं' 'भर्त्तं' (धारयतम्)।

द्वितीयमन्त्रपाठस्तु,—"संवसाथाꣳ स्वर्विदा समीची उरसा त्मना। अग्निमन्तर्भरिष्यन्ती ज्योतिष्मन्तमजस्रमित्[५]" इति। हे कृष्णाजिन-पुष्करपर्णे, युवां 'त्मना' (स्वयमेव परनिरपेक्षे सति* 'उरसा' (उरःसदृशेन) भवदीयस्वरूपेण 'संवसाथां' (सम्यगाच्छादयतम्)। कीदृशे युवां?—'स्वर्विदा' (स्वर्गविदे स्वर्गलाभसाधने इत्यर्थः), 'समीची' (मृद्बन्धनायानुकूले), 'अजस्रमित्' (निरन्तरमेव) 'ज्योतिष्मन्तम्' 'अग्निम्', 'अन्तः' (स्वोदरे) 'भरिष्यन्ती' (धारयिष्यन्ती)।

अनेन मन्त्रद्वयेन साध्यं पुष्करपर्णस्य प्रमाणमुत्तरत्र विधातुमादौ पुष्करपर्णे मृदः सम्भरणं विधत्ते,—"पुष्करपर्णेन सम्भरति योनिर्वा अग्नेः पुष्करपर्णꣳ सयोनिमेवाग्निꣳ सम्भरति" (५।१।

* सती इति पाठो भवितुं युक्तः।

अग्ने* भुवस्तथाग्नेये त्वष्टा, या ते, च सौम्यके।
तत्त्वेति युग्मः साविन्ने ; चोद, सारस्वते तथा ॥
पूषा, पौष्णे ; मारुत ते, विश्वे द वैश्वदेविके।
द्यावा, द्यावापृथिव्ये स्यादग्निं, स्विष्टकृतो यजिः ॥
ग्नं, वाजे, वाजिनो मन्त्रा द्वाविंशतिरुदीरिताः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे प्रथमप्रपाठके एकादशोऽनुवाकः ॥ ० ॥

समाप्तश्च प्रथमः प्रपाठकः ॥ ० ॥

---

* अग्निभुव इति पाठो भवितुं युक्तः।

४ अ०) इति। पुष्करपर्णस्याग्निस्थानीयत्वम् आरुणकेतुक-चयने समाम्नातम्,—'जानुदघ्नीमुत्तरवेदीं खात्वा। अपां पूरयित्वा गुल्फदघ्नं। पुष्करपर्णैः पुष्करदण्डैः पुष्करैश्च सꣳस्तीर्य। तस्मिन् विहायसे। अग्निं प्रणीयोपसमाधाय' इति। अतः पुष्करपर्णस्याग्नियोनित्वात् 'सयोनिमेवाग्निं' सम्भृतवान् 'भवति।

पुष्करपर्णवत् तेनैव मन्त्रद्वयेन कृष्णाजिनस्यास्तरणं विधातुमादौ कृष्णाजिने मृदः स्थापनं विधत्ते,—"कृष्णाजिनेन सम्भरति यज्ञो वै कृष्णाजिनं यज्ञेनैव यज्ञꣳ सम्भरति" (५।१।४अ०) इति। कृष्णाजिनस्य यज्ञरूपत्वं दर्शपूर्णमासब्राह्मणेऽवगम्यते,—'यज्ञो देवेभ्यो ऽनिलायत। कृष्णो [?] रूपं कृत्वा। यत्कृष्णाजिने हविरध्यवहन्ति। यज्ञादेव तद्यज्ञं प्रयुङ्क्ते' इति। तदत्रापि कृष्णाजिनरूपेण 'यज्ञेनैव' अग्निरूपं 'यज्ञं सम्भरति'।

चर्मान्तरपरित्यागेन कृष्णाजिनस्वीकारे हेतुं दर्शयति,—"यद्ग्राम्याणां पशूनां चर्मणा सम्भरेद्ग्राम्यान् पशूञ्छुचार्पयेत् कृष्णाजिनेन सम्भरत्यारण्यानेव पशूञ्छुचार्पयति तस्मात् समावत् पशूनां प्रजायमानानामारण्याः पशवः कनीयाꣳसः शुचा ह्यृताः" (५।१।४अ०) इति। ग्राम्यपशूनां गवादीनां चर्मणि अग्निसम्भरणे गवादयः सन्तापेन संयोजिता भवन्ति; कृष्णाजिनेन सम्भरणे तु आरण्या एव पशवः सन्तापेन योज्यन्ते; यस्मादेवं, 'तस्मात्' लोकेऽपि चतुष्पात्त्वाद्याकारसाम्येन प्रजायमानानां पशूनां मध्ये ग्राम्याः श्रेष्ठाः, आरण्या एव कनिष्ठाः, यस्मात् ते "शुचा" 'ऋताः' (शुचं प्राप्ताः), तस्मात् तेषां कनिष्ठत्वं युक्तम्। न हि

श्रीगणेशाय नमः ।

अथ तैत्तिरीयसंहिताभाष्ये

चतुर्थकाण्डे द्वितीयप्रपाठके

प्रथमोऽनुवाकः ।

॥ हरिः ॐ ॥

विष्णोः क्रमोऽस्यभिमातिहा गायत्रं छन्द आरोह पृथिवीमनु विक्रमस्व निर्भक्तः सः यं द्विष्मो(१) विष्णोः क्रमोऽस्यभिशस्तिहा त्रैष्टुभं छन्द आरोहान्तरिक्षमनु विक्रमस्व निर्भक्तः स यं द्विष्मो(२) विष्णोः क्रमोऽस्यरातीयतो हन्ता जागतं छन्द आरोह दिवमनु विक्रमस्व निर्भक्तः स यं द्विष्मो(३) विष्णोः ॥ १ ॥

क्रमोऽसि शत्रूयतो हन्तानुष्टुभं छन्द आरोह दिशोऽनु विक्रमस्व निर्भक्तः स यं द्विष्मः(४) । अक्रन्ददग्निस्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् । सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः(५) । अग्नेऽभ्यावर्तिन्नभि न आवर्तस्वायुषा वर्चसा सन्या मेधया प्रजया धनेन(६) । अग्ने ॥ २ ॥

ग्राम्यगवादय इव शालाप्रवेश-भक्ष्यप्रदानादिभिरारण्याः पोष्यन्ते, अतस्तेषां शोकप्राप्तिः ।

तस्य कृष्णाजिनस्य लोम्नामुपरि सम्भरणं विधत्ते,—"लोमतः सम्भरत्यतो ह्यस्य मेध्यम्" (५।१।४ अ०) इति । यस्मात् 'अस्य' (कृष्णाजिनस्य) 'अतः' (इदं) लोमयुक्तं स्थानं 'मेध्यं', तस्मात् तत्र सम्भरेत् ।

इदानीमुक्तसम्भरणसिद्धये पूर्वोक्तमन्त्रद्वयसाध्यमुभयास्तरणं विधत्ते,—"कृष्णाजिनञ्च पुष्करपर्णञ्च सꣳस्तृणातीयं वै कृष्णाजिनमसौ पुष्करपर्णमाभ्यामेवैनमुभयतः परिगृह्णाति" (५।१।४ अ०) इति । कृष्णाजिनपुष्करपर्णयोरधरोत्तरभावेन लोकद्वयरूपत्वम् ।

कल्पः, 'पुरीष्योऽसि विश्वभरा इति मृत्खननमभिमन्त्र्य' इति । पाठस्तु,—"पुरीष्योऽसि विश्वभराः । अथर्वा त्वा प्रथमो निरमन्थदग्ने(१)" इति । हे खननप्रदेश, त्वं 'पुरीष्योऽसि' (पुरीषस्य बहुलपांसोर्योग्योऽसि), अत एव 'विश्वभरा' 'असि' (विश्वं कृत्स्नम् उखारूपं बिभर्त्तीति विश्वभराः) । हे अग्ने, अथर्वाख्य ऋषिः, 'प्रथमः' (इतरेभ्यः पूर्वभावी) सन् त्वां 'निरमन्थत्' (निःशेषेण मथितवान्) ।

अथर्वणः प्रथमनिर्मन्थनं* नाम प्रथमदर्शनमित्यभिप्रायं दर्शयति,—"अग्निर्देवेभ्योऽनिलायत तमथर्वाऽन्वपश्यदथर्वा त्वा प्रथमो निरमन्थदग्न इत्याह य एवैनमन्वपश्यत् तेनैवैनꣳ सम्भरति" (५।१।४ अ०) इति । 'अन्वपश्यत्' (अन्विष्य दृष्टवान्) ।

---

* प्रथमनिर्मथनम् इति B. J. एवं आदर्शपुस्तके पाठः ।

अङ्गिरः शतं ते सन्त्वावृतः सहस्रं त उपावृतः। तासां पोषस्य पोषेण पुनर्नो नष्टमाकृधि पुनर्नो रयिमाकृधि (७)। पुनरूर्जा निवर्त्तस्व पुनरग्न इषाऽऽयुषा। पुनर्नः पाहि विश्वतः (८)। सह रय्या निवर्त्तस्वाग्ने पिन्वस्व धारया। विश्वप्स्निया विश्वतस्परि (९)। उदुत्तमं वरुण पाशमस्मदवाधमं ॥ ३ ॥

वि मध्यमꣳ श्रथाय। अथा वयमादित्य व्रते तवानागसो अदितये स्याम (१०)। आ त्वा हार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलिः। विशस्त्वा सर्वा वाञ्छन्त्वस्मिन् राष्ट्रमधिश्रय (११)। अग्ने बृहन्नुषसामूर्ध्वो अस्थान्निर्जगन्वान् तमसो ज्योतिषाऽऽगात्। अग्निर्भानुना रुशता स्वङ्ग आ जातो विश्वा सद्मान्यप्राः (१२)। सीद त्वं मातुरस्याः ॥ ४ ॥

उपस्थे विश्वान्यग्ने वयुनानि विद्वान्। मैनामर्चिषा मा तपसाभिशूशुचोऽन्तरस्याꣳ शुक्रज्योतिर्विभाहि (१३)। अꣳन्तरग्ने रुचा त्वमुखायै सदने स्वे। तस्यास्त्वं हरसा तपं जातवेदः शिवो भव (१४) शिवो भूत्वा मह्यमग्नेऽथो सीद शिवस्त्वं। शिवाः कृत्वा दिशः सर्वाः स्वां योनिमिहाऽऽसदः (१५)। हꣳसः शुचिषद्, वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्। नृषद्वर-

कल्पः, 'त्वामग्ने पुष्करादधीति कृष्णाजिने पुष्करपर्णे च सम्भरति सतसृभिस्तिसृभिर्वा गायत्रीभिर्ब्राह्मणस्य त्रिष्टुग्भी-राजन्यस्य' इति। यद्यप्यत्र 'त्वामग्ने'-इत्यादिकास्तिस्र एव गायत्र्य आम्नाताः, तथापि चतुष्कपक्षे 'पुरीष्योऽसि विश्वभराः' इत्यनेन पूर्वोक्तेन मन्त्रेण सह सङ्ख्या पूरणीया। 'पुरीष्योऽसि' इत्ययं मन्त्रः पूर्वं व्याख्यातः। द्वितीयमन्त्रपाठस्तु,—"त्वामग्ने पुष्करादध्यथर्वा निरमन्थत। मूर्ध्नो विश्वस्य वाघतः(७)" इति। हे 'अग्ने', 'अथर्वा' मुख्य ऋषिः 'पुष्करादधि' (पद्मपत्रस्योपरि) 'त्वां' 'निरमन्थत' (निःशेषेण मथितवान्)। अत एव पञ्चमकाण्डे ब्राह्मणमाम्नातम्,'पुष्करपर्णे ह्येनमुपश्रितमविन्दत्' (१।४अ०) इति। कीदृशात् पुष्करात्?—'मूर्ध्नः' (उत्तमाङ्गवत्प्रशस्तात्)। 'विश्वस्य वाघतः' (सर्वस्य जगतो वाहकात्)। इदं हि पुष्करपर्णमग्नि-मन्थननिष्पादनादिद्वारा सर्वं जगन्निर्वहति।

तृतीयमन्त्रपाठस्तु,—"तमु त्वा दध्यङ्ङृषिः पुत्र ईधे अथर्वणः। वृत्रहणं पुरन्दरम्(८)" इति। हे अग्ने, 'अथर्वणः' 'पुत्रः' 'दध्यङ्'-नामक ऋषिः 'तमु त्वा' 'ईधे' (त्वामेव प्रज्वालितवान्)। कीदृशं त्वां?—'वृत्रहणं' (वैरिनाशनं), 'पुरन्दरं' (रुद्ररूपेणासुर-सम्बन्धिनां त्रयाणां पुराणां विदारितारम् [?])।

चतुर्थमन्त्रपाठस्तु,—"तमु त्वा पाथ्यो वृषा समीधे दस्यु-हन्तमं। धनञ्जयꣳ रणे-रणे(९)" इति। हे अग्ने, 'पाथ्य'-नामकः कश्चिदृषिः, 'तमु त्वा' 'समीधे' (तमेव त्वां प्रज्वालितवान्)। कीदृशः पाथ्यः?—'वृषा' (श्रेष्ठः)। कीदृशं त्वां?—'दस्युहन्तमं'

सद्दंतसद्व्योमसद्ब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्(११) ॥ ५ ॥

दिवमनुविक्रमस्व निर्भक्तः स यं द्विष्मो विष्णोः। धनेन। अग्ने। अधमम्। अस्याः। शुचिपत्। षोडश च ॥ १ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे द्वितीय-प्रपाठके प्रथमोऽनुवाकः ॥ ० ॥

श्रीगणेशाय नमः।

आद्यप्रपाठके ह्युक्तो योऽग्निः सोऽयं प्रपञ्चितः।
प्रपाठके द्वितीये तु स्याद्देवयजनग्रहः ॥
चयनार्थस्तत्र चानुवाका एकादशेरिताः।
आमन्त्र्यां स्थापनं वात्सप्रसूक्तेन ह्युपस्थितिः ॥
उखाग्नेर्नयनं*, गार्हपत्याग्निचयनं, भुवः।
कर्षणं, चौषधावापः, लोष्टक्षेपादिकं तथा ॥
रुक्मादेरुपधानं, स्व-यमाहृत्यादिकस्य च।
निधानं पशुशीर्षाणां, याज्या अर्थ्या उदीरिताः ॥

तत्र प्रथमानुवाके आमन्त्र्याम् उखाग्निस्थापनं प्रतिपाद्यते।

---

* उखाग्निश्चयनमिति क्वचित् पाठः साधुरिव प्रतिभाति।

(तस्कराणामतिशयेन हन्तारं), 'रणे-रणे' 'धनञ्जयं' (तेषु-तेषु सङ्ग्रामेषु धनस्य जेतारम्)। इत्यमिमा गायत्र्यः उक्ताः।

अथ त्रिष्टुभां चतसृणां मध्ये प्रथमामाह,—"सीद होतः स्व उ लोके चिकित्वान्त्सादया यज्ञꣳ सुकृतस्य योनौ। देवावीर्देवान् हविषा यजास्यग्ने बृहद्यजमाने वयो धाः(१०)" इति। हे 'होतः' (होमनिष्पादक), 'चिकित्वान्' (अभिज्ञः) त्वं, स्वकीय एव स्थाने उत्तरवेदिरूपे 'सीद' (उपविश)। 'यज्ञं' च, इमं 'सुकृतस्य योनौ' (पुण्यकर्मणो योग्यस्थाने) 'सादय' (स्थापय)। (देवान् वेति कामयत इति) 'देवावीः' (देवप्रिय इत्यर्थः) ) तादृशस्त्वं देवान् 'हविषा' 'यजासि' (पूजयसि)। हे अग्ने, 'यजमाने' 'बृहत्' 'वयः' (दीर्घमायुः) 'धाः' (स्थापय)।

अथ द्वितीयामाह—"नि होता होतृषदने विदानस्त्वेषो दीदिवाꣳ असदत् सुदक्षः। अदब्धव्रतप्रमतिर्वसिष्ठः सहस्रम्भरः शुचिजिह्वो अग्निः(११)" इति। 'होतृषदने' (होमनिष्पादकस्य योग्यस्थाने) उत्तरवेदिरूपे 'अग्निः' नितराम् 'असदत्' (सम्यगुपविष्टवान्)। कीदृशोऽग्निः?—'होता' (देवानामाह्वाता), 'विदानः' (स्थानाभिज्ञः) 'त्वेषः' (दीप्तिमान्), 'दीदिवान्' (देवेभ्यो हविषो दाता)। 'सुदक्षः' (अत्यन्तकुशलः), 'अदब्धव्रतप्रमतिः' (अदब्धे अविनाशिते व्रते कर्मणि प्रकृष्टा मतिर्यस्य, स तथाविधः), 'वसिष्ठः' (अतिशयेन वासयिता), (सहस्रसङ्ख्याकानि हवींषि भरति पोषयतीति) 'सहस्रम्भरः', (शुचिः शुद्धा होमयोग्या जिह्वा ज्वाला यस्यासौ) 'शुचिजिह्वः'।

कल्पः, 'उपरि नाभेर्धारयमाणो विष्णोः क्रमोऽसीति चतुरो विष्णुक्रमान् प्राचः क्रामति' इति। पाठस्तु,—"विष्णोः क्रमोऽस्यभिमातिहा गायत्रं छन्द आरोह पृथिवीमनुविक्रमस्व निर्भक्तः स यं द्विष्मो[१] विष्णोः क्रमोऽस्यभिशस्तिहा त्रैष्टुभं छन्द आरोहान्तरिक्षमनुविक्रमस्व निर्भक्तः स यं द्विष्मो[२] विष्णोः क्रमोऽस्यरातीयतो हन्ता जागतं छन्द आरोह दिवमनुविक्रमस्व निर्भक्तः स यं द्विष्मो[३] विष्णोः क्रमोऽसि शत्रूयतो हन्ताऽऽनुष्टुभं छन्द आरोह दिशोऽनुविक्रमस्व निर्भक्तः स यं द्विष्मः[४]" इति। यज्ञप्रयोगं कृत्स्नं व्याप्नोतीति 'विष्णुः' यजमानः; यद्वा विष्णुना (परमेश्वरेण) अभेदोपचारं कृत्वा स विष्णुरित्युच्यते। हे प्रथमपादविन्यास, त्वं 'विष्णोः' 'अभिमातिहा' (पापघाती) 'क्रमोऽसि', 'पाप्मा वा अभिमातिः' इति श्रुत्यन्तरम्। तादृशस्त्वं 'गायत्रं छन्द' 'आरोह' (अनुग्राहकत्वेन स्वीकुरु)। ततः 'पृथिवीमनुविक्रमस्व' (भूदेवतारूपमिमं प्रदेशं विशेषेण व्याप्नुहि)। 'यम्' (अभिमातिं), वयं 'द्विष्मः', सोऽयं 'निर्भक्तः' (अस्मात् प्रदेशान्निःसारितः)। एवमुत्तरेष्वपि योज्यम्।

'अभिशस्तिहा' मिथ्यापवादघाती। अरातिरवश्यंदातव्यस्यादानाभावः, तम् आत्मन इच्छतीति 'अरातीयन्', तस्य 'हन्ता' विनाशकः। प्रहारेण हन्तृत्वं शत्रुत्वं तदिच्छतीति 'शत्रूयन्', तस्य 'हन्ता' विनाशकः। अत्र सर्व्वत्र यजमानः स्वात्मानं विष्णुत्वेन भावयेत्। चतुर्णां प्रक्रमाणां प्रदेशान् पृथिव्यादिलोकरूपत्वेन

अथ तृतीयामाह,—"सꣳसीदस्व महाꣳ असि शोचस्व देववीतमः। वि धूममग्ने अरुषं मियेध्य सृज प्रशस्त दर्शतम्(११)" इति। हे 'अग्ने', त्वम् अस्मिन् पुष्करपर्णे 'सं-सीदस्व' (सम्यगुपविश)। त्वम् अनेकक्रतुहेतुत्वात् 'महानसि', (देवान् वेति गच्छतीति, देववीः, अतिशयेन देववीः) 'देववीतमः', तादृशस्त्वं 'शोचस्व' (दीप्यस्व)। हे 'मियेध्य' (मेधार्ह), 'प्रशस्त' (उत्कृष्ट) 'अग्ने', 'अरुषं' (अरोषणं अनुग्रं) 'दर्शतं' (द्रष्टुं शक्यं शान्तं) 'धूमं' विशेषेण 'सृज'।

अथ चतुर्थीमाह,—"जनिष्वा हि जेन्यो अग्रे अह्नां हितो हितेष्वरुषो वनेषु। दमे-दमे सप्त रत्ना दधानोऽग्निर्होता निषसादा यजीयान्(१२)" इति। हे 'अग्ने', त्वम् 'अह्नाम्' 'अग्रे' (प्रभातकाले) 'जनिष्व' (उत्पद्यस्व)। कीदृशस्त्वं?—'जेन्यः' (जयशीलः) 'हितेषु' 'हितः' (हविर्भुजो ये देवास्तुभ्यं हितमाचरन्ति, ये च मनुष्या ऋत्विग्यजमानास्तुभ्यं हितमाचरन्ति तेषु सर्वेषु हितेषु त्वमपि हितो भवसि), 'वनेषु' 'अरुषः' (नानाविधफलवृक्षोपेतेषु वनेषु कोपरहितः), कोपे च दावाग्निरूपेण वनानि दहतीत्यर्थः*। अयम् 'अग्निः' 'दमे-दमे' (यजमानानां गृहे-गृहे) 'नि-षसाद' (उपविष्टः)। कीदृशोऽग्निः?—'सप्त रत्ना दधानः' (रत्नसमानान् ज्वालाविशेषान् सप्तसङ्ख्याकान् धारयमाणः)। अत एव 'सप्तजिह्वः' इति सर्वत्र प्रसिद्धः। आथर्वणिकास्त्वामनन्ति,—

* न दहतीत्यर्थः इति J. पु० पाठः। दहसीति तु पाठो भवितुं युक्तः।

भावयेत्। गायत्र्यादिच्छन्दोभिमानीदेवताः* तेषां प्रक्रमाणमनुग्राहिकाः।

एतैर्मन्त्रैः साध्यान् विष्णुक्रमान् विधत्ते,—"विष्णुमुखा वै देवाश्छन्दोभिरिमाँल्लोकाननपजय्यमभ्यजयन् यद्विष्णुक्रमान् क्रमते विष्णुरेव भूत्वा यजमानश्छन्दोभिरिमाँल्लोकाननपजय्यमभिजयति विष्णोः क्रमोऽस्यभिमातिहेत्याह गायत्री वै पृथिवी त्रैष्टुभम् अन्तरिक्षं जागती द्यौरानुष्टुभीर्दिशश्छन्दोभिरेवेमाँल्लोकान् यथापूर्वमभिजयति" (५।२।१अ०) इति। 'देवाः' पूर्वं स्वेषु विष्णुमेव मुख्यं कृत्वा छन्दोभिमानिदेवैः सहिताः 'अनपजय्यम्' (अन्यैर्जेतुं यथा न शक्यन्ते तथा) 'इमान्' 'लोकान्' 'अभ्यजयन्', अतो 'यजमानः' अपि विष्णुक्रमैस्तथा 'जयति'। गायत्र्यादिच्छन्दोदेवानां पृथिव्यादिलोकस्वामित्वेन तैः सह लोकानां जेतुं शक्यतया, मन्त्रेषु 'गायत्रं छन्द आरोह' इत्यादि पठितमित्यभिप्रायः।

कल्पः, 'अक्रन्ददग्निरित्येताम् अनूदृच्य'† इति। पाठस्तु,—"अक्रन्ददग्निस्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन्। सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः(५)" इति। अयम् 'अग्निः' 'अक्रन्दत्' (अस्मदरिष्टनिवारणार्थं गर्जतु)। किमिव?—'स्तनयन्निव' 'द्यौः' (यथा द्युलोकस्थो मेघः सस्यशोषभीतिं निवारयति तद्वत्)। किं कुर्वन्?—'क्षाम' (दाहकम्,

* गायत्र्यादिच्छन्दोभिमानि-देवता इति पाठो भवितुं युक्तः।
† अनूद्य किं वा अनूच्य इति पाठो भवितुं युक्तः।

'काली कराली च मनोजवा च
सुलोहिता या च सुधूम्रवर्णा ।
स्फुलिङ्गिनी विश्वरुची च देवी
लेलायमाना इति सप्त जिह्वाः' ॥ इति ।

स च 'अग्निः' 'होता' (देवानामाह्वाता), 'यजीयान्' (अतिशयेन यष्टा) ।

उक्तासु गायत्रीषु 'त्वामग्ने' इत्यस्यां पुष्करादधीत्यस्य अंशस्य तात्पर्यं दर्शयति,—"त्वामग्ने पुष्करादधीत्याह पुष्करपर्णे ह्येन-मुपश्रितमविन्दन्" (५।१।४अ०) इति । अथर्वा यदा अग्निमन्विष्टवान्, तदानीं कस्मिंश्चित्पुष्करपर्णेऽवस्थितमेनमग्निं लब्धवान् । तस्मात् पुष्करादधीत्युक्तिर्युक्ता ।

अनन्तरमन्त्रे परित्यज्यान्यमृषिं, दधीच एव स्वीकारे कारणं दर्शयति,—"तमु त्वा दध्यङ् ऋषिरित्याह दध्यङ् वा आथर्वणस्तेजस्व्यासीत् तेज एवास्मिन् दधाति" (५।१।४अ०) इति । अन्यत्र मन्त्रान्तरे दधीचो महिमा प्रपञ्चितः,—'दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा' इत्यादौ* तस्मात् दधीचस्तेजस्वित्वम् ।

उपरितनमन्त्रेण पाथ्यशब्देन दध्यङ् एव विवक्षितो नान्य इत्येतद्दर्शयति,—"तमु त्वा पाथ्यो वृषेत्याह पूर्वमेवोदितमुत्तरेणाभिगृणाति" (५।१।४अ०) इति । यः पूर्वमन्त्रोक्तो दध्यङ्,

* शीर्ष्णेत्यादाविति आदर्शपुस्तकपाठः ।

अस्मद्विरुद्धं) 'ररिहत्' (लिलिहानः)। 'वीरुधः' 'समञ्जन्' (पुष्पफलसमृद्धलतावदस्मदनुकूलानि सम्यगभिव्यञ्जयन्)। 'हि' (यस्मात्) 'जज्ञानः' (उत्पद्यमानः) 'सद्यः' 'ईं' (तदानीमेव) 'इद्धः' (दीप्तः) सन् जगत् 'वि' 'अख्यत्' (प्रकाशयति)। 'रोदसी' (द्यावापृथिव्योः) 'अन्तः' 'भानुना' (रश्मिना) स्वयम् 'आ'-'भाति' (समन्तात् प्रकाशते)।

एतस्य मन्त्रस्यानुवचनं विधत्ते,—"प्रजापतिरग्निमसृजत सो-ऽस्मात्सृष्टः पराङैतमेतयाऽन्वैदक्रन्ददिति तया वै सोऽग्नेः प्रियं धामावारुन्ध यदेनामन्वाहाग्नेरेवैतया प्रियं धामावरुन्धे" (५।२।१अ०) इति। 'सृष्टः' 'सः' (अग्निः) 'अस्मात्' (प्रजापतेः) 'पराङ्' (आवृत्तिरहितः) 'ऐत्' (अगच्छत्); 'अक्रन्ददिति' एतया ऋचा 'एतम्' (अग्निम्) 'अनु'-गम्य 'सः' (प्रजापतिः) 'तया' एव ऋचा 'अग्नेः' 'प्रियं' स्थानं प्राप्तवान्। अत एवास्या अनुवचनम् 'अग्नेः' प्रियस्य स्थानस्य सम्पादनाय भवति।

कल्पः, 'अग्नेऽभ्यावर्त्तिन्निति चतसृभिः प्रदक्षिणमावर्त्तते' इति। तत्र प्रथमामाह,—"अग्नेऽभ्यावर्त्तिन्नभि न आवर्त्तस्वायुषा वर्चसा सन्या मेधया प्रजया धनेन(१)" इति। आभिमुख्येन आवर्त्तितुं शीलमस्यास्तीति आवर्त्ती, तादृश हे 'अग्ने', आयुरादिभिः सह 'नः' (अस्मान्) 'अभि'-लक्ष्य 'आवर्त्तस्व'। 'आयुः' अपमृत्युरहितं*। 'वर्चः' कान्तिर्बलं वा। 'सनिः' धनदानं। 'मेधा' श्रुतार्थ-

---

* रहितत्वम् इति राहित्यम् इति वा पाठो भवितुं युक्तः।

स एवात्र सन्मार्गवर्त्तित्वात् पाथ्य इत्युच्यते। अतः पूर्वमन्त्रोदितमेवार्थमुत्तरमन्त्रेण प्रतिपादयति।

एतैर्मन्त्रैः साध्यमग्निसम्भरणं विधत्ते,—"चतसृभिः सम्भरति चत्वारि छन्दाꣳसि छन्दोऽभिरेव" (५।१।४ अ०) इति। 'त्वामग्ने' इत्याद्यास्तिस्रः, ततः पूर्वा 'पुरीष्योऽसि' इत्येका, तदेवं चतस्रः। गायत्री त्रिष्टुप् जगत्यनुष्टुबिति छन्दसां चतुष्टम्। अतः सङ्ख्यासाम्याच्छन्दोभिरेवाग्निः सम्भृतो भवति। 'सीद होतः' इत्यादीनां त्रिष्टुभां चतुष्टम्। अत्रापि 'चतसृभिः सम्भरति' इति विधिर्योजनीयः।

गायत्रीणां त्रिष्टुभां चाधिकारिभेदेन व्यवस्थां विधत्ते,—"गायत्रीभिर्ब्राह्मणस्य गायत्रो हि ब्राह्मणस्त्रिष्टुग्भी राजन्यस्य त्रैष्टुभो हि राजन्यः" (५।१।४ अ०) इति। मुखजत्वसाम्येन ब्राह्मणो गायत्रः। बाहुजत्वसाम्येन राजन्यस्त्रैष्टुभः।

अथ काम्यं समुच्चयं विधत्ते,—"यं कामयेत वसीयान्त्स्यादित्युभयीभिस्तस्य सम्भरेत् तेजश्चैवास्मा इन्द्रियञ्च समीची दधाति" (५।१।४ अ०) इति। तत्र गायत्रीभिस्तेजः प्राप्तिः, त्रिष्टुब्भिरिन्द्रियप्राप्तिः।

समुच्चितमन्त्रगतामष्टसङ्ख्यां प्रशंसति,—"अष्टाभिः सम्भरत्यष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानेवाग्निस्तꣳ सम्भरति" (५।१।४ अ०) इति।

चतस्रः त्रिष्टुभः प्रत्येकं प्रशंसति,—"सीद होतरित्याह देवता एवास्मै सꣳसादयति निहोतेति मनुष्यान्त्सꣳसीदस्वेति वयाꣳसि

धारणशक्तिः। 'प्रजा' पुत्रादिः। 'धनं' सुवर्णं। धनशब्देन सम्पादयितव्यम् उच्यते। 'सनि'-शब्देन सम्पादितस्य बन्धुभ्यः प्रदानशक्तिरुच्यते।

अथ द्वितीयामाह,—"अग्ने अङ्गिरः शतं ते सन्त्वावृतः सहस्रं त उपावृतः। तासां पोषस्य पोषेण पुनर्नो नष्टमाकृधि पुनर्नो रयिमाकृधि(७)" इति। हे 'अङ्गिरः' (अङ्गसौष्ठवयुक्त)'अग्ने', 'ते' (तव) 'आवृतः' 'शतं' 'सन्तु' (आवृतिशक्तयः शतसङ्ख्याकाः भवन्तु)। तथा 'ते' (तव) 'उपावृतः' (उपावृतिशक्तयः सहस्र-सङ्ख्याका भवन्तु)। स्वस्यैवावर्त्तनम् आवृत्। समीपवर्त्तिनां पुरुषाणां द्रव्यविशेषाणाञ्चावर्त्तनम् उपावृत्। अस्मासु स्नेहातिशयेन त्वमपि पुनःपुनः आवर्त्तस्व; त्वदीयाः पुरुषास्त्वदीयानि च द्रव्याणि पुनःपुनः आवर्त्तन्तामित्यर्थः। 'तासां' आवृतिशक्तीनां शत-सहस्रसङ्ख्याकानां यः पोषः (समृद्धिः), तस्यापि 'पोषस्य' अन्यः पोषः (अयुतलक्षादिसङ्ख्याकाभिवृद्धिः), तादृशेन 'पोषेण' 'नः' (अस्मदीयं) 'नष्टं' धनं 'पुनः' (भूयः) अपि 'आकृधि' (आहृत्तं कुरु)। 'पुनः' (भूयः) अपि 'रयिं' (पूर्वसम्पादितं धनं) 'आकृधि' (सर्वतः सम्पादितं कुरु)।

अथ तृतीयामाह,—"पुनरूर्जा निवर्त्तस्व पुनरग्न इषाऽऽयुषा। पुनर्नः पाहि विश्वतः(८)" इति। हे 'अग्ने', त्वं 'ऊर्जा' (क्षीरादि-रसेन सह) 'पुनः' 'निवर्त्तस्व' (अत्रागच्छ)। 'इषा' (अन्नेन) 'आयुषा' सह 'पुनः' आगच्छ। 'नः' (अस्मान्) 'पुनः'-पुनः कृतात् 'विश्वतः' (सर्वस्मादपराधात्) 'पाहि'।

जनिष्वा हि जेन्यो अग्रे अह्नामित्याह देवमनुष्यानेवास्मै सञ्चन्नान् प्रजनयति" (५।१।४ अ०) इति। 'सीद होतः' इत्येतस्यां प्रथमायां त्रिष्टुभि 'देवावीः' इतिपदेन देवतानां संसादनं सूचितम्। यद्वा 'देवान् हविषा यजासि' इत्यनेन तत्सूचितम्। 'नि होता' इत्यस्यां द्वितीयायां त्रिष्टुभि 'होतृषदने' इतिपदेन होत्रादीनां मनुष्याणां संसादनं सूचितं भवति। 'सं-सीदस्व' इत्यस्यां तृतीयायां त्रिष्टुभि 'धूमं वि सृज' इत्येवमन्तरिक्षगामिना धूमेनान्तरिक्षचारिणां पक्षिणां सूचितत्वात् तेषां संसादनं 'सं-सीदस्व' इत्यस्यां तृतीयायामुक्तम्। 'जनिष्व' इत्यस्यां चतुर्थ्यां त्रिष्टुभि 'जनिष्व' इत्युत्पादनस्य सूचितत्वात् पूर्वोक्तान् सन्नान् देवमनुष्यान् तदुपलक्षितानि वयांसि च प्रकर्षेण जनयति॥

अत्र विनियोगसङ्ग्रहः,—

देव-द्वाभ्यां खनेच्चापां पद्मपत्रं समाहरेत्।
शर्म-द्वाभ्यां चर्मपत्रे स्तृणात्यथ पुरीत्यतः॥
चतुष्टयात् सम्भरति विप्रस्य, क्षत्रियस्य तु।
सीदेत्यादिचतुष्केण मन्त्रा द्वादश वर्णिताः॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये चतुर्थकाण्डे प्रथमप्रपाठके तृतीयोऽनुवाकः॥०॥

---

अथ चतुर्थीमाह,—"सह रय्या निवर्त्तस्वाग्ने पिन्वस्व धारया। विश्वप्स्न्या विश्वतस्परि(९)" इति। हे 'अग्ने', 'रय्या' (धनेन) 'सह' 'निवर्त्तस्व'। 'प्सा भक्षणे' इति धातुः, विश्वैः सर्वैः प्सायते भक्ष्यते, पीयते इति 'विश्वप्स्नी', तादृश्या वृष्टि-'धारया' 'विश्वतस्परि' (सर्वेषां तृणधान्यलतापादपानामुपरि) 'पिन्वस्व' (सिञ्च)।

एतैर्मन्त्रैरावर्त्तनं विधत्ते,—"ईश्वरो वा एष पराङ् प्रदघो यो विष्णुक्रमान् क्रमते चतसृभिरावर्त्तते चत्वारि छन्दांसि छन्दांसि खलु वा अग्नेः प्रिया तनूः प्रियामेवास्य तनुवमभिपर्यावर्त्तते*" (५।२।१ अ०) इति। 'यः' (यजमानः) 'विष्णुक्रमान्' आचरति, 'एष' 'पराङ्' (आवृत्तिरहितः), 'प्रदघः' 'ईश्वरः' (प्रकर्षेण गन्तुं समर्थः) पुनरावृत्तिं न लभत इत्यर्थः। अत आवृत्तिलाभाय 'चतसृभिः' ('अग्नेऽभ्यावर्त्तिन्' इत्यादिभिः ऋग्भिः) आवृत्तिं कुर्यात्। गायत्री-त्रिष्टुप्-जगत्यनुष्टुबिति-चतुर्णां छन्दसाम् अध्यादानादावुपात्तत्वादग्निशरीरत्वम्।

आवृत्तौ प्रादक्षिण्यं विधत्ते,—"दक्षिणा पर्यावर्त्तते स्वमेव वीर्यमनुपर्यावर्त्तते तस्माद्दक्षिणोर्द्ध आत्मनो वीर्यावत्तरोऽथो आदित्यस्यैवावृतमनुपर्यावर्त्तते" (५।२।१ अ०) इति। 'दक्षिणा' प्रादक्षिण्येन, दक्षिणमवस्थाप्य वामभागस्य परिभ्रमणं प्रादक्षिण्यम्। पुरुषस्य दक्षिणे भागे सामर्थ्यातिशयसद्भावात् तदेवानुसृत्यावृत्तिः

* अत्र J. पुस्तके 'दक्षिणा पर्यावर्त्तत' इत्युत्तरत्र उद्धृतांशोऽपि विधृतः।

सन्ते वायुर्मातरिश्वा दधातूत्तानायै हृदयं यद्विलिष्टं। देवानां यश्चरति प्राणथेन तस्मै च देवि वषड़स्तु तुभ्यं[१]। सुजातो ज्योतिषा सह शर्म वरूथमासदः सुवः। वासो अग्ने विश्वरूपꣳ सं व्ययस्व विभावसो[२]। उदुत्तिष्ठ स्वध्वरावा नो देव्या कृपा। दृशे च भासा बृहता सुशुक्वनिराऽऽग्ने याहि सुशस्तिभिः[३]॥१॥

ऊर्द्ध्व ऊषु ण ऊतये तिष्ठा देवो न सविता। ऊर्द्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे[४]। स जातो गर्भो असि रोदस्योरग्ने चारुर्विभृत ओषधीषु। चित्रः शिशुः परि तमाꣳस्यक्तः प्र मातृभ्यो अधि कनिक्रदन्नाः[५]। स्थिरो भव वीड्वङ्ग आशुर्भव वाज्यर्वन्। पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहनः[६]। शिवो भवः॥ २॥

प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः। मा द्यावापृथिवी अभि शूशुचो मान्तरिक्षं मा वनस्पतीन्[७]। प्रैतु वाजी कनिक्रदन्नानदद्रासभः पत्वा। भरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरा[८]। रासभो वां कनिक्रदत् सुयुक्तो वृषणा रथे। स वामग्निं पुरीष्यमाशु दूतो वहादितः[९]। वृषाग्निं वृषणं भरन्नपां गर्भꣳ समुद्रियं। अग्न आ याहि॥ ३॥

हता भवति। यस्मात् दक्षिणभागे 'वीर्यं' श्रुतेरभिप्रेतं, 'तस्मात्' लोकेऽपि सर्वेषु व्यापारेषु दक्षिणहस्तस्यैव वीर्यातिशय उपलभ्यते। किञ्च आदित्यो मेरुं प्रदक्षिणीकरोति, तदप्यत्रानुसृतं भवति।

कल्पः, 'उदुत्तममिति शिक्यपाशमुन्मुच्य' इति। पाठस्तु,— "उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमꣳ श्रथाय। अथा वयमादित्य व्रते तवानागसो अदितये स्याम(१०)" इति। हे 'वरुण', 'उत्तमं' (उत्तमाङ्गे शिरसि स्थापितं) त्वदीय-'पाशम्' 'उत्'-कृष्य 'श्रथाय' (विनाशय)। अधमाङ्गे स्थापितं (पादप्रदेशे स्थापितं) 'पाशं' 'अव'-कृष्य विनाशय। 'मध्यम'-प्रदेशे स्थापितं पाशं 'वि'-च्छेदय। 'अथ' (पाशत्रयविनाशानन्तरम्) 'आदित्य' (सूर्यसदृश) वरुण, 'वयम्' 'अनागसः' (पापरहिताः) सन्तः 'तव' 'व्रते' (त्वदीये कर्मणि) 'अदितये' (अखण्डितत्वाय) 'स्याम' (योग्या भवेम)।

अनेन मन्त्रेण शिक्यपाशोन्मोकमभिप्रेत्य मन्त्रगतस्य वरुणपाशस्य प्रसङ्गं दर्शयति,—"शुनःशेपमाजीगर्त्तिं वरुणो गृह्णात् स एतां वारुणीमपश्यत् तया वै स आत्मानं वरुणपाशादमुञ्चद्वरुणो वा एतं गृह्णाति य उखां प्रतिमुञ्चत उदुत्तमं वरुण पाशमस्मदित्याह आत्मानमेवैतया वरुणपाशान्मुञ्चति" (५।२।१अ०) इति। शुनःशेपो नाम ऋषिः, स चाजीगर्त्तस्य पुत्रः; तं कदाचित् 'वरुणः' 'गृह्णात्' (गृहीतवान्), वरुणगृहीतत्वञ्च जलोदरव्याधिना अभिव्यज्यते। 'स' च (शुनःशेपः) तत्परिहाराय 'उदुत्तमम्'

वीतयं ऋतꣳ सत्यं[१०] । ओषधयः प्रतिगृह्णीताग्नि-मेतꣳ शिवमायन्तमभ्यत्र युष्मान् । व्यस्यन् विश्वा अमतीररातीर्निषीदन्नो अप दुर्मतिꣳ हनत्[११] । ओषधयः प्रति मोदध्वमेनं पुष्पावतीः सुपिप्पलाः । अयं वो गर्भ ऋत्वियः प्रत्नꣳ सधस्थमासदत्[१२] ॥ ४ ॥

सुशस्तिभिः । शिवो भव । याहि । षट्चिꣳशच्च ॥ ॥ ४ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे प्रथमप्रपाठके चतुर्थोऽनुवाकः ॥ ० ॥

तृतीयेऽनुवाके मृत्खननमुक्तम् । अथ चतुर्थे मृदाहरणम् उच्यते । कल्पः, 'मन्ते वायुरिति मृत्खननेऽप आनीय' इति । पाठस्तु,—"मन्ते वायुर्मातरिश्वा दधातूत्तानायै हृदयं यद्वि-लिष्टं । देवानां यश्चरति प्राणथेन तस्मै च देवि वषडस्तु तुभ्यम्[१]" इति । हे पृथिवि, 'उत्तानायै' (ऊर्द्धाभिमुखेनावस्थि-तायाः) तव 'हृदयं' (हृदयमदृशं) 'यत्' (खननस्थानं) 'विलिष्टं' (विशेषेणाल्पीकृतं), तत् खननस्थानं 'वायुः' 'मं'-'दधातु' (तृणादि-पूरणसहितेनानेन जलप्रक्षेपेण वायुर्यथापूर्वं सम्यक् करोतु)। कीदृशो वायुः ?—'मातरिश्वा' (मातरि अन्तरिक्षे सर्वप्राणिनाम् इयत्तापरिच्छेदकारिणि शेतेऽवतिष्ठते इति मातरिश्वा) ; यो वायुः 'देवानां' 'प्राणथेन' (प्राणभावेन) 'चरति' (व्यवहरति) । हे 'देवि'

इत्येतां वारुणीमृचम् 'अपश्यत्' । ततः 'तया' एव ऋचा 'स' शुनःशेपः स्वात्मानं 'वरुणपाशात्' मोचितवान् । अतोऽत्रापि 'यः' (यजमानः) 'उखां' 'प्रतिमुञ्चते' सोऽयं वरुणगृहीतः सन् तत्परिहाराय 'उदुत्तमम्'—इत्यनया शिक्यपाशमुन्मुच्य तन्मन्त्रप्रसादेन वरुणपाशात् मुक्तो भवति ।

कल्पः, 'आ त्वा हार्षमित्याहृत्य' इति । पाठस्तु,—"आ त्वा हार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलिः । विशस्त्वा सर्वा वाञ्छन्तु अस्मिन् राष्ट्रमधिश्रय(११)" इति । हे अग्ने, त्वाम् 'आ'-'हार्षं' (आहृतवानस्मि) । त्वञ्च उखाया 'अन्तः' 'अभूः' (अवस्थितोऽसि); 'अविचाचलिः' (अत्यन्तं चलनरहितः), 'ध्रुवस्तिष्ठ' (स्थिरस्तिष्ठ) । 'सर्वा' 'विशः' (प्रजाः) 'वाञ्छन्तु' त्वां । 'अस्मिन्' (यजमाने) 'राष्ट्रम्' इदम् 'अधिश्रय' (अधिकं स्थापय ।

अस्य मन्त्रस्य प्रथमपादे वह्नेराहरणं प्रसिद्धमेव प्रतीयते इति दर्शयति,—"आ त्वा हार्षमित्याहा ह्येनꣳ हरति" (५।२।१अ०) इति ।

द्वितीयपादे अन्वयव्यतिरेकाभ्यां प्रतिष्ठा सिध्यतीत्याह,—"ध्रुवस्तिष्ठाविचाचलिरित्याह प्रतिष्ठित्यै" (५।२।१अ०) इति ।

तृतीयपादे प्रजासमृद्धिं, चतुर्थपादे राज्यस्थैर्यञ्च क्रमेण दर्शयति,—"विशस्त्वा सर्वा वाञ्छन्त्वित्याह विशैवैनꣳ समर्द्धयत्यस्मिन् राष्ट्रमधिश्रयेत्याह राष्ट्रमेवास्मिन् ध्रुवमकः" (५।२।१अ०) इति । 'विशा' (प्रजया) 'एनं' (यजमानम्) 'अस्मिन्' (यजमाने) 'अकः' (करोति) ।

(पृथिवि), 'तुभ्यं', 'तस्मै' (वायवे च) 'वषडस्तु' (इदं हुणसहितं जलं हुतमस्तु)।

अनेन मन्त्रेण साध्यं जलप्रक्षेपं विधत्ते,—"क्रूरमिव वा अस्या एतत् करोति यत् खनत्यप उपसृजत्यापो वै शान्ताः शान्ताभिरेवास्यै शुचꣳ शमयति" (५।१।५अ०) इति। भूप्रदेशं खनतीति यत्, तदेतत् पृथिव्याः 'क्रूरम्' एव 'करोति' इति, हस्तादिच्छेदवत् व्यथाहेतुत्वात्। तत्क्रौर्यपरिहाराय मृत्खननप्रदेशे अपोऽवनयेत्। 'आपः' च शीतलत्वेन 'शान्ताः', एतादृशीभिरेव अद्भिः पृथिव्याः खननजन्यं शोकं 'शमयति'।

मन्त्रे देवतान्तरपरित्यागेन वायुकथने प्रयोजनमाह,—"मन्त्रे वसुर्मातरिश्वा दधात्वित्याह प्राणो वै वायुः प्राणेनैवास्यै प्राणꣳ सन्दधाति" (५।१।५अ०) इति। वायोर्देवप्राणत्वात् तेनैवास्याः पृथिव्याः प्राणसन्धानं सम्पद्यते।

पुनरपि वायोरन्यत्प्रयोजनमाह,—"मन्त्रे वायुरित्याह तस्माद्वायुप्रच्युता दिवो वृष्टिरीर्त्ते" (५।१।५अ०) इति। यस्मात् प्रयोजनान्तरमपि विवक्षितमिति वायुशब्दः प्रयुक्तः, 'तस्मात्' एव कारणात् 'वृष्टिः' 'दिवः' सकाशात् 'वायुप्रच्युता' सती प्रवर्त्तते।

मन्त्रस्य चतुर्थपादे वषट्शब्दान्तर्गतेन षट्शब्देन स्मारिताम् ऋतुसङ्ख्यामुपजीव्य प्रशंसति,—"तस्मै च देवि वषडस्तु तुभ्यमित्याह षड्वा ऋतव ऋतुष्वेव वृष्टिं दधाति तस्मात् सर्वान् ऋतून् वर्षति" (५।१।५अ०) इति। अत्राम्नातपाठानुसारेण षकारमभ्युपेत्य 'षड्वा ऋतवः' इति व्याख्यातम्।

चतुर्थपादपाठकाले यजमानविषयं काम्यं मनसा ध्यानं विधत्ते,—"यं कामयेत राष्ट्रꣳ स्यादिति तं मनसा ध्यायेत् राष्ट्रमेव भवति" (५।२।१अ०) इति। 'यं' (यजमानम्) उद्दिश्य राज्यमस्त्विति 'कामयेत', अध्वर्युस्तं चतुर्थपादोच्चारणकाले 'ध्यायेत्'।

कल्पः,'उपतिष्ठतेऽग्रे बृहन्नुषमामूर्द्ध्वो अस्थात्'इति। पाठस्तु,—"अग्रे बृहन्नुषमामूर्द्ध्वो अस्थान्निर्जग्मिवान् तमसो ज्योतिषाऽऽगात्। अग्निर्भानुना रुशता स्वङ्ग आ जातो विश्वा सद्मान्यप्राः(११)" इति। अयमग्निः 'बृहन्*' 'उषसाम्' 'अग्रे' (उषसां मुखे) 'ऊर्द्ध्वो' 'अस्थात्' (अग्निहोत्रादौ बोध्यमान उत्तिष्ठति)। 'ज्योतिषा' (स्वकीयेन तेजसा) 'तमसः' 'निर्जग्मिवान्' (निर्गतः सन्)'आगात्'। कीदृशोऽग्निः ?—'रुशता' (तमो हिंसता) 'भानुना' रश्मिना 'स्वङ्गः' (शोभनशरीरः)। किञ्च 'जातः' (उत्पन्नमात्र एव) 'विश्वा' 'सद्मानि' (सर्वाणि स्थानानि) 'आ'-'अप्राः' (स्वकीयेन तेजसा सर्वत्र पूरितवान्)।

अस्य मन्त्रस्य प्रथमार्द्धे भागत्रयं क्रमेण व्याचष्टे,—"अग्रे बृहन्नुषमामूर्द्ध्वो अस्थादित्याहाग्रमेवैनꣳ समानानां करोति निर्जग्मिवान् तमस इत्याह तम एवास्मादपहन्ति ज्योतिषाऽऽगादित्याह ज्योतिरेवास्मिन् दधाति" (५।२।१अ०) इति।

कल्पः, 'सीद त्वं मातुरस्या उपस्थ इति तस्यां चतसृभि-

---

* बृहत् इति J. एवं आदर्श-पुस्तके पाठः।

अथ शाखान्तरपाठानुसारेण षकारं परित्यज्य व्याचष्टे,— "यद्वषट्कुर्याद्यातयामाऽस्य वषट्कारः स्याद्यन्न वषट्कुर्याद्रक्षाꣳसि यज्ञꣳ हन्युर्वडित्याह परोक्षमेव वषट्करोति नास्य यातयामा वषट्कारो भवति न यज्ञꣳ रक्षाꣳसि घ्नन्ति" (५ १।५अ०) इति। अत्रेदं चिन्तनीयम्। किमस्मिन् मन्त्रे वषट्शब्दः प्रयोक्तव्यः, न वा ? इति। नाद्यः, अत्रैव वषट्कारस्य प्रयोगे सति गतसारत्वेन वक्ष्यमाणवायव्य-पश्चादौ वषट्कारासम्भवप्रसङ्गात्। न द्वितीयः, वज्ररूपस्य वषट्कारस्याभावे रक्षोभिर्यज्ञहननप्रसङ्गात्। तद्दोषद्वय-परिहाराय षकारं परित्यज्य 'वड्' इत्येवं ब्रूयात्, तथा सति वषट्कारस्य सम्पूर्णस्यानुक्तत्वान्न गतसारत्वम्। एकदेशस्योक्तत्वाच्च यज्ञघातोऽपि। तदेतं ब्राह्मणेनैव पाठविकल्पस्य व्याख्यातत्वा-न्नित्यकाम्यप्रयोगविषयतया पाठद्वयं व्यवस्थापनीयम्।

कल्पः, 'समुद्यम्य कृष्णाजिनस्यान्तान् सुजातो ज्योतिषा सहेति क्षौमेण मौञ्जेनार्कमयेन वा दाम्नोपनह्यति' इति। पाठस्तु,— "सुजातो ज्योतिषा सह शर्म वरूथमा-सदः सुवः। वासो अग्ने विश्वरूपꣳ सं व्ययस्व विभावसो(१)" इति। हे 'अग्ने', 'सुजातः' (सुष्ठूत्पन्नः) त्वं, 'ज्योतिषा' (त्वदीयेन ज्योतिषा) 'सह' 'शर्म' (सुखं) यथा भवति, तथा 'सुवः' (स्वर्गसदृशं) 'वरूथं' (कृष्णा-जिननिर्मितं गृहम्) 'आ-सदः' (प्राप्नुहि)। हे 'विभावसो' (विभैव दीप्तिरेव वसुर्धनं* यस्यासौ विभावसुः) तादृश हे 'अग्ने', 'विश्व-

वसु धनं इति पाठो भवितुं युक्तः।

रुख्यꣳ सादयति' इति। ओदुम्बर्य्यासन्द्याः* प्रकृतत्वात् सैव 'तस्याम' इति परामृश्यते। तत्र प्रथमामाह,—"सीद त्वं मातुरस्या उपस्थे विश्वान्यग्ने वयुनानि विद्वान्। मैनामर्चिषा मा तपसाभिशूशुचोऽन्तरस्याꣳ शुक्रज्योतिर्विभाहि(१३)" इति। हे 'अग्ने', 'त्वं' मातृसमानाया आसन्द्याः 'उपस्थे' (उत्सङ्गे) 'सीद' (उपविश)। कीदृशस्त्वं?—'विश्वानि' 'वयुनानि' (सर्वान् ज्ञानोपायान्) 'विद्वान्'। 'एनां' (आसन्दीम्) 'अर्चिषा' (त्वदीयदीप्त्या) 'मा' 'शूशुचः' (अत्यन्तं मा दीपय), 'तपसा' (सन्तापेन) अपि 'मा' 'अभिशूशुचः'। अर्चिः कारणं, तपः कार्य्यं, कारणेनैष तापो भवति, कार्य्येण तु भूयान्; तदुभयं मा कुर्वित्यर्थः। 'अस्याम्' (उखायाम्) 'अन्तः' 'शुक्रज्योतिः' (निर्मलप्रकाशः सन्) 'विभाहि' (विशेषेण दीप्यस्व)।

अथ द्वितीयामाह,—"अन्तरग्ने रुचा त्वमुखायै सदने स्वे। तस्यास्त्वꣳ हरसा तपन् जातवेदः शिवो भव(१४)" इति। हे 'अग्ने', 'उखायै' (तस्या उखाया) 'अन्तः' (मध्ये) 'स्वे' 'सदने' (स्वकीये स्थाने) 'रुचा' (दीप्त्या) युज्यस्व। हे 'जातवेदः', 'त्वं' 'तस्याः' (आसन्द्याः) 'शिवो भव' (सुखप्रदो भव)। किं कुर्वन्?— 'हरसा' (तेजसा) 'तपन्' (ज्वलन्)।

अथ तृतीयामाह,—"शिवो भूत्वा मह्यमग्नेऽथो सीद शिवस्त्वं। शिवाः कृत्वा दिशः सर्वाः स्वां योनिमिहासदः(१५)" इति।

* औदुम्बर्यासन्द्या इति पाठो भवितुं युक्तः।

रूपं' (बहुप्रकाररूपं) 'वासः' (कृष्णाजिनरूपं वस्त्रं) 'सं-व्ययस्व' (परिधत्स्व)।

तमेतं मन्त्रं विनियुङ्क्ते,—"सुजातो ज्योतिषा सहेत्यनुष्टुभो-ऽप-नह्यत्यनुष्टुप् सर्वाणि छन्दाꣳसि छन्दाꣳसि खलु वा अग्नेः प्रिया तनुः प्रिययैवैनं तनुवा परि दधाति" (५।१।५अ०) इति। श्रुत्यन्तरे 'वाग्वा अनुष्टुप्' इत्युक्तत्वात् वाग्द्वारा सर्व-च्छन्दोरूपत्वम्। शाखान्तरे आधानप्रकरणे, 'या ते अग्ने पशुषु पवमाना प्रिया तनुः' इत्यारभ्य, 'या गायत्रे या त्रैष्टुभे या जागते' इति छन्दःसु प्रियशरीरावस्थानकथनाच्छन्दसामग्नि-प्रियशरीरत्वम्, अतः 'प्रिया' एव, अनया अनुष्टुब्रूपया 'तनुवा' परिधानं कृतवान् भवति।

एतद्वेदनं प्रशंसति,—"वेदुको वासो भवति य एवं वेद" (५।१।५अ०) इति। 'वेदुकः' (लाभशीलः) 'वासः' प्रति 'भवति', एतद्वेदिता वस्त्रं प्राप्नोतीत्यर्थः।

कल्पः, 'उदु तिष्ठ स्वध्वरोर्ध्व ऊषु ण ऊतय इति साविचीभ्या-मुत्तिष्ठति' इति। तयोः प्रथमामाह,—"उदु तिष्ठ स्वध्वरावा नो देव्या कृपा। दृशे च भासा बृहता सुशुक्वनिराऽऽग्ने याहि सुशस्तिभिः(१)" इति। हे 'अग्ने', 'स्वध्वर' (सुष्ठु यागनिर्वाहक), 'उदु तिष्ठ' (उत्तिष्ठैव), उत्थाय च 'नः' (अस्मान्) 'देव्या कृपा' (देवस्वभावया क्रीड़ापरया कृपया) 'अव' (पालय)। हे 'अग्ने' 'बृहता' 'भासा' (प्रौढ़ेन तेजसा) 'सुशुक्वनिः' (सुष्ठु शुचां रश्मीनां वनिता यः, सोऽयं सुशुक्वनिः, तादृशः) सन्, 'सुशस्तिभिः'

हे 'अग्ने', 'मह्यं' (मदर्थं) 'शिवः' (शान्तो) 'भूत्वा' 'अथो' (अनन्तरं) 'शिवः' 'सीद' (सर्वान् प्रति शान्तः सन्नुपविश)। 'सर्वाः' 'दिशः' शान्ताः 'कृत्वा' 'इह' (अस्यामुखायाम्) 'स्वां योनिं' (स्वकीयं स्थानम्) 'आसदः' (आगत्योपविश।

अथ चतुर्थीमाह,—"हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्। नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्[१६]" इति। (हन्ति स्वयमाहवनीयादिदेशेषु गच्छतीति वा, वैरिणं हिनस्तीति वा) 'हंसः' अयमग्निः (शुचौ यजने सीदतीति) 'शुचिषत्', (यजमानं वासयतीति) 'वसुः', (अन्तरिक्षे धूमज्वालारूपेण सीदतीति) 'अन्तरिक्षसत्', 'होता' (देवानामाह्वाता), वेद्यां यज्ञसम्बन्धिन्यां सीदतीति 'वेदिषत्', 'अतिथिर्दुरोणसत्' (अतिथिसमानः सन्, 'दुरोणेषु' यजमानगृहेषु सीदतीति 'दुरोणसत्'), ('नृषु' मनुष्येषु जठराग्निरूपेण सीदतीति) 'नृषत्', ('वरे' श्रेष्ठे, श्रोत्रियगृहे सीदतीति) 'वरसत्', ('ऋते' यज्ञे तन्निष्पादकत्वेन सीदतीति) 'ऋतसत्', ('व्योमनि' आकाशे सूर्यरूपेण सीदतीति) 'व्योमसत्', ('अप्सु' वृष्टिधारारूपासु वैद्युतरूपेण जायते प्रादुर्भवतीति) 'अब्जाः', (गोकार्ये घृते ज्वालारूपेण जायते व्यज्यते इति) 'गोजाः', (ऋतार्थं यज्ञार्थमेव जातत्वात्) 'ऋतजाः', (अद्रौ पर्वते दावानलरूपेण जायते इति) 'अद्रिजाः';—ईदृशोऽग्निः 'बृहत्' 'ऋतं' (प्रौढमग्निचयनोपेतं यज्ञं) निष्पादयत्विति शेषः।

एतन्मन्त्रसाध्यमग्निस्थापनं विधत्ते,—"चतसृभिः सादयति

(शोभनकीर्त्तिभिः सह) 'दृशे' (सर्वैः प्राणिभिर्द्दष्टुभिर्द्दष्टुम्) 'आ'-'याहि'।

अथ द्वितीयामाह,—"ऊर्द्ध ऊषु ण ऊतये तिष्ठा देवो न सविता। ऊर्द्धो वाजस्य सविता यदञ्जिभिर्वाघद्भिर्विह्वयामहे(४)" इति। हे अग्ने, 'नः' (अस्माकं) 'ऊतये' (रक्षणाय) 'ऊर्द्ध ऊषु' 'तिष्ठ' (ऊर्द्ध एव सन् अवस्थितो भव)। क इव?—'देवो न सविता' (यथा सविता देव ऊर्ध्व एव सन् अस्मान् रक्षति, तद्वत्)। यस्त्वम् 'ऊर्द्धः' स त्वं, 'वाजस्य सविता' (अन्नस्य दाता भव)। 'यत्' (यस्मात् कारणात्) 'अञ्जिभिः' (मन्त्रादिभिर्व्यञ्जकैः) 'वाघद्भिः' (हव्यवाहकैर्ऋत्विग्भिः) 'वि-ह्वयामहे' (वयं त्वां विविधमाह्वयामः)। तस्मादूर्द्ध एव तिष्ठेति सर्वत्रान्वयः।

एतन्मन्त्रद्वयं विनियुङ्क्ते,—"वारुणो वा अग्निरुपनद्ध उदु-त्तिष्ठ स्वध्वरोर्द्ध ऊषु ण ऊतय इति सावित्रीभ्यामुत्तिष्ठति सवितृ-प्रसूत एवास्योर्द्धां वरुणमेनिमुत्सृजति" (५।१।५अ०) इति। योऽयं 'अग्निः' अत्र कृष्णाजिनेनोपनिबद्धः, सोऽयं 'वारुणः', (उपद्रव-कारिणो वरुणस्याधीनः)। अतस्तत्परिहाराय सवितृलिङ्गकाभ्याम् एताभ्याम् ऋग्भ्यां बद्धमग्निं हस्ते गृहीत्वा उत्तिष्ठेत्। द्वितीयमन्त्रे, 'देवो न सविता' इत्युक्तत्वादेते सावित्र्यौ, एताभ्यामुत्थाने सति सवित्रैवानुज्ञातः 'अस्य' (अग्नेः) 'वरुणमेनिं' (वरुणकृतां बाधां) परिहरति।

मन्त्रद्वित्वं प्रशंसति,—"द्वाभ्यां प्रतिष्ठित्यै"(५।१।५अ०) इति।

कल्पः, 'स जातो गर्भो असीति हरति' इति। पाठस्तु,—

चत्वारि छन्दाꣳसि छन्दोभिरेव" (५।२।१अ०) इति। 'सादयति' इत्यनुवर्त्तते। 'सीद त्वं मातुरस्या' इत्यादिभिः 'चतसृभिः' औदुम्बर्यामुख्याग्निं स्थापयत्। 'छन्दोभिरेव' स्थापितवान् भवति।

'इꣳसः' इत्यादिकायामुत्तमायामृचि च्छन्दोविशेषं प्रशंसति,—"अतिच्छन्दसोत्तमया वर्ष्म वा एषा छन्दसां यदतिच्छन्दा वर्ष्मैवैनꣳ समानानां करोति" (५।२।१अ०) इति। अतिच्छन्दसि अन्यच्छन्दसामन्तर्भावात् सर्वेषामन्येषां च्छन्दसामियम् अतिच्छन्दोयुक्ता ऋक् 'अतिच्छन्दा' शरीरम्। अत ईदृश्योत्तमाया* सादनेन 'एनं' (यजमानं) 'समानानाम्' अन्येषां पुरुषाणां शरीरस्थानीयमेव करोति। तस्मादनया 'उत्तमया' सादयन्ति।

अत्रोत्तमायां ये बहवः सच्छब्दा 'शुचिषत्' इत्यादयः, तान् प्रशंसति,—"सद्वती भवति सत्वमेवैनं गमयति" (५।२।१अ०) इति। 'इंसः' इत्यादिकाया ऋचो बहुभिः सच्छब्दैरुपेतत्वात् सैव 'सद्वती'। 'एनं' (यजमानं) 'सत्वं' (चिरकालावस्थायित्वं) प्रापयति॥

अत्र विनियोगसङ्ग्रहः,—

'विष्णोः'—चतुर्भिराक्रामेत्, अक्रन्देत्यनुवर्त्तयेत्।

'अग्ने'—चतुर्भिरावृत्त उद्, पाशं विमुञ्चति॥

---

* ईदृश्या उत्तमया इति J. पु० पाठः। ईदृश्या उत्तमाया इति पाठो भवितुं युक्तः।

"स जातो गर्भो असि रोदस्योरग्ने चारुर्विभृत ओषधीषु। चित्रः शिशुः परि तमांस्यक्तः प्र मातृभ्यो अधि कनिक्रदद्गाः(५)" इति। हे 'अग्ने', 'स' त्वं द्यावापृथिव्योः 'गर्भः' सन् इदानीं 'जातः' 'असि', कीदृशस्त्वं?—'चारुः' (पूजनीयः), 'ओषधीषु' 'विभृतः' (भुज्यमानास्वोषधीषु उदराग्निरूपः सन् विशेषेण पोषितः), 'चित्रः' (नानावर्णाभिर्ज्वालाभिर्विचित्ररूपः), इदानीमुत्पन्नत्वात् 'शिशुः', 'तमांसि' 'परि'-'अक्तः' (परिहर्त्तुमभिव्यक्तः)। तादृशस्त्वं, 'मातृभ्यः' (ओषध्यर्थं) 'अधि-कनिक्रदत्', (अधिकं क्रन्दन्) 'प्र'-'गाः' (प्रकर्षेण गच्छ)। यथा लोके शिशुर्मातरमुद्दिश्य क्रन्दन् स्वसदने गच्छति तद्वत्।

अस्य मन्त्रस्य प्रथमपादेऽभिहितद्यावापृथिवीगर्भत्वं विशदयति,—"स जातो गर्भो असि रोदस्योरित्याहेमे वै रोदसी तयोरेष गर्भो यदग्निस्तस्मादेवमाह" (५।१।५अ०) इति। 'इमे' (द्यावापृथिव्यौ) एव रोदःशब्दाभिधेये, तयोर्मध्ये समुत्पन्नत्वात् तद्गर्भस्त्वं, यस्मादेवं, 'तस्मात्' मन्त्रो युक्तमेव 'आह'।

द्वितीयपादे, 'विभृतश्चारुः' इतिपदयोर्निमित्तनैमित्तिकभावेन अन्वयं दर्शयति,—"अग्ने चारुर्विभृत ओषधीष्वित्याह यदा ह्येतं विभरन्त्यथ चारुतरो भवति" (५।१।५अ०) इति। यस्मिन् काले जठरे प्रविष्टा ओषधयः एतमुदराग्निं विशेषेण पोषयन्ति, तदानीम् अयम् अग्निः 'चारुतरः' (पटुतरः) भवति।

चतुर्थपादे, 'प्र मातृभ्यः' इत्येतस्य तात्पर्यं दर्शयति,—"प्र मातृभ्यो अधि कनिक्रदद्गा इत्याहौषधयो वा अस्य मातरस्ताभ्य एवैनं

आ लोख्यमाहरेदग्नेऽभ्युपस्थाय चतुष्टयात्।
सोदेत्यादेस्तयामन्त्यां सादयेत् षोडशोदिताः॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्ण-यजुःसंहिताभाष्ये चतुर्थकाण्डे द्वितीयप्रपाठके प्रथमोऽनुवाकः॥ ०॥

---

दिवस्परि प्रथमं जज्ञे अग्निरस्मद्द्वितीयं परि जातवेदाः। तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः[१]। विद्मा ते अग्ने त्रेधा त्रयाणि विद्मा ते सद्म विभृतं पुरुत्रा। विद्मा ते नाम परमं गुहा यद्विद्मा तमुत्सं यत आजगन्थ[२]। समुद्रे त्वा नृमणा अप्स्वन्तर्नृचक्षा ईधे दिवो अग्न ऊधन् तृतीये त्वा ॥ १ ॥

रजसि तस्थिवांसमृतस्य योनौ महिषा अहिन्वन्[३]। अक्रन्ददग्निस्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन्। सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः[४]। उशिक्पावको अरतिः सुमेधा मर्त्तेष्वग्निरमृतो निधायि। इयर्त्ति धूममरुषं भरिभ्रदुच्छुक्रेण शोचिषा द्यामिनक्षत्[५]। विश्वस्य केतुर्भुवनस्य गर्भ आ ॥ २ ॥

प्रच्यावयति" (५।१।५।५अ०) इति। ओषधीनाम् उष्णवीर्यतया जाठराग्निजनकत्वान्मातृत्वम्, अतो मातर्यमेवैनमग्निं प्रकर्षेण गमयति। अत एवोत्तरत्र 'ओषधयः प्रतिगृह्णीत' इति मन्त्रेण ओषधीषु स्थापनं विधास्यति।

कल्पः, 'स्थिरो भव वीड्वङ्ग इति गर्दभस्य पृष्ठ आदधाति' इति। पाठस्तु,—"स्थिरो भव वीड्वङ्ग आशुर्भव वाज्यर्वन्। पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहनः(१)" इति। अग्नेर्हेतुभूतं पुरीषं यो गर्दभो वहति, तादृश हे गर्दभ, (इयर्ति* गच्छतीति अर्वा) हे 'अर्वन्' (गमनकुशल), त्वं 'स्थिरः' (चलनरहितः) 'भव'; 'वीड्वङ्गः' (दृढकायः), 'आशुः' (वेगवान्), 'वाजी' (अन्नहेतुश्च) 'भव'। तथा 'पृथुः' (विस्तीर्णपृष्ठः), 'सुषदः' 'अग्नेः' (सुखासनश्च) 'भव'।

तमेतं मन्त्रं विनियुङ्क्ते,—"स्थिरो भव वीड्वङ्ग इति गर्दभ आसादयति मन्त्रयत्येवैनमेतया स्थेम्ने" (५।१।५अ०) इति। गर्दभस्योपरि स्थैर्यार्थम् 'एतया' ऋचा 'एनम्' अग्निं सम्यक् बद्धवान् भवति। अग्निरूपा मृत् यथा भूमौ न पतति, तथा स्थापनीया।

गर्दभस्थापनं प्रशंसति,—"गर्दभेन सम्भरति तस्माद् गर्दभः पशूनां भारभारितमः" (५।१।५अ०) इति। यस्मादत्र बलीवर्दादीन् अनादृत्य गर्दभेनैव मृदं वाहयन्ति, 'तस्मात्' लोकेऽपि गवादीनां पशूनां मध्ये गर्दभ एव 'भारभारितमः' (वोढृव्यो

* इयर्त्ति इति प्राठो भवितुं युक्तः।

रोदसी अपृणाज्जायमानः। वीडुश्चिदद्रिमभि-
नत्परायन् जना यदग्निमयजन्त पञ्च[६]। श्रीणामु-
दारो धरुणो रयीणां मनीषाणां प्रार्पणः सोम-
गोपाः। वसोः सूनुः सहसो अप्सु राजा विभात्यग्र
उषसामिधानः[७]। यस्ते अद्य कृणवद्भद्रशोचेऽपूपं
देव घृतवन्तमग्ने। प्र तं नय प्रतरां वस्यो अच्छाभि
द्युम्नं देवभक्तं यविष्ठ[८] आ॥३॥

तं भज सौश्रवसेष्वग्न उक्थ उक्थ आ भज शस्यमाने।
प्रियः सूर्ये प्रियो अग्ना भवात्युज्जातेन भिनददुज्ज-
नित्वैः[९]। त्वामग्ने यजमाना अनु द्यून्विश्वा वसूनि
दधिरे वार्याणि। त्वया सह द्रविणमिच्छमाना व्रजं
गोमन्तमुशिजो विवव्रुः[१०]। दृशा नो रुक्म उर्व्या
व्यद्यौद् दुर्मर्षमायुः श्रिये रुचानः। अग्निरमृतो
अभवद्वयोभिर्यदेनं द्यौरजनयत्सुरेताः[११]॥४॥

तृतीये त्वा। गर्भ आ। यविष्ठ आ। यत्। चत्वारिं
च॥२॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे द्वितीयप्रपाठके
द्वितीयोऽनुवाकः॥०॥

प्रथमेऽनुवाके वह्नेरासन्द्यां स्थापनमुक्तम्। द्वितीये तस्याग्ने-
रुपस्थानमुच्यते। कल्पः, 'दिवस्परीत्येकादशभिर्द्वादशभिर्वाऽऽ-

द्रव्यविशेषो भारः, तं भरति धारयतीति भारभारी, अतिशयेन भारभारी भारभारितमः) प्रौढ़भारं वहतीत्यर्थः।

प्रकारान्तरेण तदेव प्रशंसति,—"गर्दभेन सम्भरति तस्माद् गर्दभोऽप्यनालेशेऽत्यन्यान् पशून् मेद्यत्यन्नꣳ ह्येनेनार्कꣳ सम्भरति"* (५।१।५अ०) इति। यस्मात् 'एनेन' (गर्दभेन) 'अर्कं' 'अन्नं' 'सम्भरति'। यागद्वारा अन्नहेतुत्वादियं मृदेवान्नं, तस्यार्चनीयत्वादर्कशब्दाभिधेयत्वम्। यस्माद्दत्रान्नं वहति, तस्माल्लोके गर्दभो भक्ष्यस्याल्पत्वेऽपि अन्यान् पशून् अतिक्रम्य मेदस्वी भवति। 'अना'-शब्दो वर्णविकारेणान्नवाची, तस्य लेशोऽल्पत्वम्। जीर्णतुषतृणादिभक्षणेनैव गर्दभो जीवति, न तु बलीवर्दाश्वादीनामिव तत्तत्काले घृततैलादिपानं वा चणककुलत्थादिखाद्यभक्षणं वा तस्यास्ति; तथापि मेदस्वित्वम्; एतदन्नसम्भरणाल्लभ्यते।

पुनरपि प्रकारान्तरेण तदेव प्रशंसति,—"गर्दभेन सम्भरति तस्माद् गर्दभो द्विरेताः सन् कनिष्ठं पशूनां प्रजायतेऽग्निर्ह्यस्य योनिं निर्दहति" (५।१।५अ०) इति। यस्मादुपरि धार्यमाणो मृद्रूपः 'अग्निः' 'अस्य' गर्दभस्य प्रजोत्पादनसामर्थ्यं निर्दग्धं करोति, 'तस्मात्' लोके 'गर्दभो द्विरेताः' अपि 'सन्' 'पशूनां' मध्ये 'कनिष्ठम्' अपत्यमुत्पादयति। अश्वादिवद्बहुमूल्यानर्हत्वात् कनिष्ठत्वम्। गर्दभस्य स्वकीयं रेत एकम्, अश्वतरस्य रेतो द्वितीयमिति द्विरेतस्त्वम्। एतच्च सप्तमकाण्डे स्पष्टमाम्नातम्,—"तासां परिगृहीतानामश्वतरोऽत्यप्रवर्त्तत तस्यानुहाय रेत आदत्त तद्गर्दभ-

* सम्भरन्ति इति J. पु० पाठः।

दशभिर्वा वात्सप्रेणोपतिष्ठते पूर्वेद्युर्विष्णुक्रमान् क्रामत्युत्तरेद्युरुपतिष्ठते एवꣳ सदा क्रयाद्यदहः सोमं क्रीणीयात्तदहरुभयꣳ समस्येत् प्रचक्रामेदुप च तिष्ठति' इति। तत्र प्रथमामाह,—

"दिवस्परि प्रथमं जज्ञे अग्निरस्मद्द्वितीयं परि जातवेदाः। तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः[१]" इति। 'अग्निः' 'प्रथमं' 'दिवस्परि' (द्युलोकस्योपरि) 'जज्ञे' (सूर्यरूपेणोत्पन्नः) 'अस्मत्'-'परि' (अस्मदीयस्य मनुष्यलोकस्योपरि) 'जातवेदाः' 'द्वितीयं' 'जज्ञे' (प्रसिद्धवह्निरूपेण द्वितीयं जन्म प्राप्तवान्)।'अप्सु' (समुद्रे) 'तृतीयं' 'जज्ञे' (वडवानलरूपेणोत्पन्नः) 'अजस्रं' (त्रिष्वपि जन्मसु) ('नृमणाः' नृषु यजमानेषु मनोऽनुग्रहबुद्धिर्यस्यासौ) 'नृमणाः' अग्निः 'एनं' (ईदृशमग्निम्) 'इन्धानः' (पुरोडाशादिभिर्दीपयन्) 'स्वाधीः' (स्वायत्तचित्तः) 'जरते' (जरापर्यन्तं परिचरतीत्यर्थः।

अथ द्वितीयामाह,—"विद्मा ते अग्ने त्रेधा त्रयाणि विद्मा ते सद्म विभृतं पुरुत्रा। विद्मा ते नाम परमं गुहा यद् विद्मा तमुत्सं यत आजगन्थ[२]" इति। हे 'अग्ने' यानि पूर्वस्मिन् मन्त्रे 'दिवस्परि' इत्यादिना त्रेधास्वरूपाणि उक्तानि आदित्याग्निवड़वानलरूपाणि, तानि 'त्रयाणि' (त्रित्वसङ्ख्याकानि रूपाणि) वयं 'विद्म' (ज्ञातुमिच्छाम)। किञ्च 'ते' (तव) 'पुरुत्रा' (पुरुषु प्रदेशेषु गार्हपत्याहवनीयान्वाहार्यपचनाग्नीध्रीयशामित्ररूपेषु) 'सद्म' 'विभृतं' (अवस्थापितं सम्पादितं), तदपि 'विद्म'। किञ्च 'ते' (तव) 'परमं' (उत्कृष्टं) 'गुहा' (गुह्यं गाप्यं) 'देवेद्धमन्विद्ध' इत्यादिमन्त्रप्रतिपाद्यं

ऽन्यमार्द तस्माद्गर्दभो द्विरेताः" (१।१अ०) इति । यद्यपि कनिष्ठोत्पादनं निन्दाहेतुः, तथाप्यग्निभरणस्य लिङ्गत्वेन प्रशंसैव सम्पद्यते ।

कल्पः, 'शिवो भव प्रजाभ्य इत्याहितमभिमन्त्रयते' इति । पाठस्तु,—"शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः । मा द्यावापृथिवी अभि शूशुचो मान्तरिक्षं मा वनस्पतीन्[७]" इति । अङ्गिरोभिर्ऋषिभिः पूर्वं सम्पादितत्वादङ्गेष्ठत्वाद्वा अयमग्निः अङ्गिराः । हे 'अङ्गिरः' अग्ने, त्वं 'मानुषीभ्यः' 'प्रजाभ्यः' 'शिवः' (शान्तः) 'भव' । किञ्च द्यावापृथिव्यौ 'अभि'-लक्ष्य 'मा' 'शूशुचः' (शोकं सन्तापं मा कार्षीः) । तथा 'अन्तरिक्षम्' 'अभि' 'मा' 'शूशुचः' । तथा 'वनस्पतीन्' 'अभि' 'मा' 'शूशुचः' ।

प्रजासामर्थ्ये शिवो भवेत्युक्तायाः शान्तेः प्रसङ्गं दर्शयति,— "प्रजासु वा एष एतर्ह्यारूढः स ईश्वरः प्रजाः शुचा प्रदहः शिवो भव प्रजाभ्य इत्याह प्रजाभ्य एवैनꣳ शमयति" (५।१।५अ०) इति । यदा अयमग्निः गर्दभमारोहति,'एतर्हि' (एतस्मिन् काले) 'एषः' अग्निः 'प्रजासु' एव 'आरूढः' भवति । गर्दभस्य प्रजान्तःपातित्वात्, मनुष्यवच्चेतनत्वेन प्रजापतेरुत्पन्नत्वात् तदन्तःपातित्वम् । ततः प्रजास्वारूढोऽग्निस्ताः 'प्रजाः' सन्तापेन प्रदग्धुं समर्थः स्यात् । तस्मात् 'शिवो भव'-मन्त्रपाठेन प्रजार्थम् एनम् अग्निं शान्तं करोति ।

तस्य मन्त्रस्य द्वितीयपादे 'मानुषीभ्यः' इति विशेषणं मनुष्यादितस्तृगगवादिकल्प्य प्रजाविषयम्-इत्येतद्दर्शयति,—"मानुषीभ्यस्त्वमङ्गिर इत्याह मानव्यो हि प्रजाः" (५।१।५अ०) इति ।

'नाम' 'यत्' अस्ति, तदपि 'विद्म'। देवेद्धादीनां नामत्वं मन्त्रान्तरे मन्त्रलिङ्गबलादवगम्यते,—'अग्ने देवेद्ध मन्विद्ध मन्द्रजिह्व' इति। किञ्च 'यतः' (उत्सात् वृष्टिरूपात प्रस्रवणात्) 'आजगन्थ' (वैद्युतरूपेण त्वमागतोऽसि), 'तम्' अपि 'उत्सं' 'विद्म'।

अथ तृतीयामाह,—"समुद्रे त्वा नृमणा अप्स्वन्तर्नृचक्षा ईधे दिवो अग्न ऊधन्। तृतीये त्वा रजसि तस्थिवाꣳसमृतस्य योनौ महिषा अहिन्वन्(१)" इति। हे 'अग्ने', त्वाम् 'ईधे' यजमानोऽहं (दीपयामि)। कीदृशो यजमानः?—'नृमणाः' (नृषु मनुष्येषु कर्मानुष्ठानपरेषु ऋत्विक्षु मनः अनुसन्धानकारि चित्तं यस्यासौ 'नृमणाः'), 'नृचक्षाः' (नृषु पुरुषेषु वेदपारङ्गतेषु मध्ये चष्टे मन्त्रान् विस्पष्टं वक्तीति 'नृचक्षाः')। कीदृशं त्वाम्?—'समुद्रे' 'तस्थिवांसं' (वड़वानलरूपेणावस्थितम्), 'अप्सु' वृष्टिरूपासु, 'अन्तः' वैद्युतरूपेण 'तस्थिवांसम्', तथा 'दिवो' (द्युलोकस्य) ऊधस्थानीय*-समुद्रवृष्ट्यपेक्षया तृतीयस्थाने 'रजसि' (रञ्जनात्मके तेजोमण्डले) सूर्यरूपेण 'तस्थिवांसम्'। 'महिषाः' (महान्तो) यजमानाः 'ऋतस्य योनौ' (यज्ञसम्बन्धिस्थाने) 'अहिन्वन्' त्वां (प्रीणयन्ति)।

अथ चतुर्थीमाह,—"अक्रन्ददग्निस्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन्। सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः(४)" इति। अयम् 'अग्निः' 'अक्रन्दत्'

---

* स्थानीये इति पाठो भवितुं युक्तः।

यथा प्रथमार्द्धे चेतनविषया शान्तिः प्रार्थिता, तथोत्तरार्द्धेऽप्यचेतनविषया शान्तिः प्रार्थिता-इत्येतद्दर्शयति,—"मा द्यावापृथिवी अभि शूशुचो मान्तरिक्षं मा वनस्पतीनित्याहैभ्य एवैनं लोकेभ्यः शमयति" (५।१।५।अ०) इति।

कल्पः, 'प्रैतु वाजी कनिक्रददिति तिसृभिरत्वरमाणा अश्वप्रथमाः प्रत्यायन्ति' इति। तत्र प्रथमामाह,—"प्रैतु वाजी कनिक्रदन्नानदद्रासभः पत्वा। भरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरा[८]" इति। अयं 'वाजी' (तुरगः) 'कनिक्रदत्' (हर्षेण हेषाशब्दं कुर्वन्) 'प्रैतु' (प्रथमं गच्छतु)। अथ 'रासभः' (गर्दभः) 'नानदत्' (हर्षेण शब्दं कुर्वन्) 'पत्वा' (गमनशीलः), 'पुरीष्यम्' अग्निं दाहकं भरन्नपि स्वकीयात् 'आयुषः पुरा' 'मा पादि' अपमृत्युना मृतो मा भूत्।

अथ द्वितीयामाह,—"रासभो वां कनिक्रदत् सुयुक्तो वृषणा रथे। स वामग्निं पुरीष्यं माशुर्दूतो वहादितः[९]" इति। हे 'वृषणा' (सेचनसमर्थावश्वगर्दभौ), 'वां' (युवयोः) मध्ये 'रासभः' (गर्दभोऽयं) 'कनिक्रदत्' (हर्षेण भृशं क्रोडयन्*) 'रथे' 'सुयुक्तः' (रथसदृशे मृद्भाण्डे सुष्ठु प्रयुक्तः)। 'वां' (युवयोः) मध्ये 'स' (तादृशः) गर्दभः 'दूतः' (राजप्रेषितदूतवत्) 'आशुः' (शीघ्रगामी सन्) 'इतः' (अस्मात् स्थानात्) 'पुरीष्यम्' 'अग्निं' 'वहात्' (वहतु)।

अथ तृतीयामाह,—"वृषाग्निं वृषणं भरन्नपां गर्भं समु-

* क्रन्दयन् इति आदर्शपुस्तकपाठः।

(अस्मदनिष्टनिवारणार्थं गर्जतु) । किमिव ?—'स्तनयन्निव द्याः' (यथा द्युलोकस्थो मेघो गर्जन् सस्यशोषभीतिं निवारयति तद्वत्)। किं कुर्वन् ?—'क्षाम' (दाहकमस्मद्विरुद्धं) 'रेरिहत्' (लेलिहानः), 'वीरुधः'•'समञ्जन्' (पुष्पलतावदस्मदनुकूलानि सस्यगभिषिञ्चन्)। 'हि' (यस्मात्) 'जज्ञानः' (उत्पद्यमानः) 'सद्यः' 'ईम्' (तदानीमेव) 'इद्धः' (दीप्तः) विविधं जगत् 'अख्यत्' (प्रख्यापयति)। 'रोदसी' (द्यावापृथिव्योः) 'अन्तः' 'भानुना' (रश्मिना) स्वयम् 'आ'-'भाति' (समन्तात् प्रकाशते)।

अथ पञ्चमीमाह,—"उशिक् पावको अरतिः सुमेधा मर्त्येष्वग्निरमृतो निधायि। इयर्त्ति धूममरुषं भरिभ्रदुच्छुक्रेण शोचिषा द्यामिनक्षत्(५)" इति। 'उशिक्' (अनुग्रहपूर्वमस्मान् कामयमानः), 'पावकः' (शोधकः), 'अरतिः' (यागरहितेषु प्रीतिरहितः), 'सुमेधाः' (शोभना मेधा सेवकाभिप्रायधारणशक्तिर्यस्यासौ 'सुमेधाः)', 'अमृतः' (मरणरहितः); तादृशः 'अग्निः' 'मर्त्येषु' (मनुष्येषु) 'निधायि' (निहितः)। 'अरुषम्' (अरोषं चक्षुराद्युपद्रवरहितं) 'धूमं' 'भरिभ्रत्' (अतिशयेन धारयन्) 'उत्'-'इयर्त्ति' (ऊर्द्ध्वं प्रसारयति)। 'शुक्रेण' 'शोचिषा' (निर्मलेन तेजसा प्रभारूपेण) 'द्याम्' 'इनक्षत्' (सचति, व्याप्नोति)।

अथ षष्ठीमाह,—"विश्वस्य केतुर्भुवनस्य गर्भ आ रोदसी अपृणाज्जायमानः। वीडुंचिदद्रिमभिनत् परायन् जना यदग्निमयजन्त पञ्च(६)" इति। 'विश्वस्य केतुः' (जगतो ज्ञाता), 'भुवनस्य गर्भः' (गर्भवदन्तरवस्थितः)। 'जायमानः' (जातमात्र

द्रियं । अग्न आ याहि वीतय ऋतꣳ सत्यम्(१०)" इति । 'वृषा' (वर्षणे सेचने समर्थः) गर्दभः, 'वृषणं' (फलाभिवर्षणसमर्थम्) 'अग्निं' 'भरन्' (वहन्) गच्छत्विति शेषः । कीदृशमग्निम् ?— 'अपां गर्भं' (मेघस्थानां जलानां मध्ये विद्युद्रूपम्), 'समुद्रियं' (समुद्रे वड़वाग्निरूपेणोत्पन्नम्) । तादृश हे 'अग्ने', 'वीतये' (प्रजननाद्यर्थम्), 'ऋतं सत्यं' च गत्वा 'आ'-'याहि' । ऋत-सत्य-शब्दाभ्यां मन्त्रब्राह्मणानुसारेण द्यावापृथिव्यौ विवच्येते । अवश्य-भाविनः कृष्यादिफलहेतुत्वात् पृथिव्या ऋतत्वम् । अवश्य-भाविनः कर्मफलस्य हेतुत्वात् स्वर्गस्य सत्यत्वम् ।

तत्र प्रथममन्त्रस्य प्रथमपादे, वाजीशब्देनाश्वो विवक्षितः-इत्येतद्दर्शयति,—"प्रैतु वाजी कनिक्रददित्याह वाजी ह्येषः" (५।१।५ ब्रा०) इति । हिशब्देन लोकप्रसिद्धिर्द्योतिता ।

द्वितीयपादे, गर्दभशब्दपरित्यागेन रासभशब्दप्रयोगः ऋषि-व्यवहारानुसारी-इत्येतद्दर्शयति,—"नानदद्रासभः पत्वेत्याह रासभ इति ह्येतमृषयोऽवदन्" (५।१।५ ब्रा०) इति ।

तृतीयपादार्थे प्रत्यक्षप्रसिद्धिं* दर्शयति,—"भरन्नग्निं पुरीष्य-मित्याग्निꣳ ह्येष भरति" (५।१।५ ब्रा०) इति ।

चतुर्थपादे, अग्निवहनप्रयुक्तापमृत्युपरिहाराय आयुः-प्रार्थनं दर्शयति,—"मा पाद्यायुषः पुरेत्याह आयुरेवास्मिन् दधाति तस्माद् गर्दभः सर्वमायुरेति तस्माद्गर्दभे पुराऽऽयुषः प्रमीते बिभ्यति" (५।१।

* तृतीयपादे ऋचिप्रत्यक्षप्रसिद्धिमिति B. पु० पाठः । तृतीयपादे ऋतिप्रत्यक्षप्रसिद्धिमिति J. पु० पाठः ।

एव) सन् 'रोदसी' (द्यावापृथिव्यौ) 'आपृणात्' (सर्वतः स्वतेजसा पूरयति) । 'यत्' (यदा) 'पशुः' यजमानसहिता ऋत्विग्रूपाः (पशुसङ्ख्याकाः) जनाः 'अग्निमयजन्त', तदानीं 'परायन्' (आकृति-रूपेणादित्यसमीपं गच्छन्) 'वीतुस्थित्' (अदृढमेव) 'अद्रिं' (पर्वतसमानं मेघम्) 'अभिनत्' (विदारितवान्) ।

अथ सप्तमीमाह,—"श्रीणामुदारो धरुणो रयीणां मनीषाणां प्रार्पणः सोमगोपाः । वसोः सूनुः सहसो अप्सु राजा विभात्यग्र उषसामिधानः(७)" इति । 'श्रीणां' (गवाश्वादीनां सम्पदाम्) 'उदारः' (उत्कर्षेण प्रापयिता), 'रयीणां' (धनानां) 'धरुणो' (धारयिता), 'मनीषाणाम्' (अपेक्षितानां स्वर्गादिफलानां) 'प्रार्पणः' (प्रापयिता), 'सोमगोपाः' (यजमानेनानुष्ठेयस्य सोम-यागस्य रक्षिता), 'वसोः' (निवासहेतोः) 'सहसः' (मथनवेगरूपस्य बलस्य) 'सूनुः' (पुत्रः), 'अप्सु' (वृष्टिरूपासु) 'राजा' (वैद्युतरूपेण दीप्यमानः), 'उषसाम्' 'अग्रे' (उषसां प्रातःकाले) 'इधानः' (अग्निहोत्रिभिर्दीप्यमानः) 'विभाति' (विशेषेण भासते) ।

अथाष्टमीमाह,—"यस्ते अद्य कृणवद्भद्रशोचेऽपूपं देव घृत-वन्तमग्ने । प्र तं नय प्रतरां वस्यो अच्छाभिसुम्नं देवभक्तं यविष्ठ(८)" इति । हे 'भद्रशोच' (कल्याणदीप्ते) 'अग्ने' 'देव', 'ते' (तव) 'अद्य' (अस्मिन् दिने) 'घृतवन्तम्' 'अपूपम्' (उपस्तरणाभि-घारणोपेतं पुरोडाशं) 'यः' यजमानः 'कृणवत्' (करोति) । हे 'यविष्ठ' (युवतम), 'देवभक्तं' (देवेषु भक्तियुक्तं) 'तं' पुरो-डाशकारिणं यजमानम् 'अभिसुम्नम्' 'अच्छ' (अभिमतं धनं

५ अ०) इति। यस्मात् अनेन मन्त्रेण आयुः स्थापितं, तस्मात् तृणादिदुराहारं* भक्षयन्नपि गर्दभोऽश्ववच्छूलादिना न म्रियते, किन्तु सर्वमायुरेति। यस्माच्च गर्दभस्य सर्वायुःप्राप्तिः स्वाभाविकी, 'तस्मात्' लोके तिर्यग्विषये वैद्यशास्त्रप्रसिद्धात् आयुषः 'पुरा' (कदाचित्) अकस्मात् 'गर्दभे' मृते सति उत्पातोऽयमिति प्रजा 'बिभ्यति'।

तृतीयमन्त्रस्य प्रथमपादे, गर्दभस्यापत्योत्पादकत्वेन वृषत्वम्, अग्नेः फलाभिवर्षकत्वेन वृषत्वं प्रसिद्धम्-इत्येतद्दर्शयति,—"वृषाग्निं वृषणं भरन्नित्याह वृषा ह्येष वृषाग्निः" (५।१।५ अ०) इति।

द्वितीयपादे, वैद्युतरूपेण जलगर्भत्वमग्नेः प्रसिद्धम्-इति दर्शयति,—"अपां गर्भꣳ समुद्रियमित्याहापाꣳ ह्येष गर्भो यदग्निः" (५।१।५ अ०) इति।

तृतीयपादे, 'वीतये' इतिशब्देन प्रजननाद्यर्थः साक्षाद्विवक्षितः, द्यावापृथिव्योर्वियोगस्तु अग्निकृतप्रजननार्थः-इत्येतदभिप्रायं दर्शयति,—"अग्न आ याहि वीतय इति वा इमौ लोकौ व्यैतामग्न आ याहि वीतय इति यदाहानयोर्लोकयोर्वीत्यै" (५।१।५ अ०) इति। पुरा द्यावापृथिव्याख्यौ 'लोकौ' एकीभावमापन्नौ सन्तौ यदा वियुक्तौ भवतः, तदानीम् आवयोर्मध्ये प्रजननाद्यर्थं हे 'अग्ने', त्वम्-'आ'-'याहि' इत्यनेनाभिप्रायेण अग्निकृतप्रजननादिव्यापारस्यावकाशं दातुं वियुक्तौ अभूताम्।

---

* तृषादिदुराहारमिति B. पु० पाठः।

प्राप्नु) प्रकर्षेण 'नय' (प्रेरय)। कीदृशं द्युम्नं ?—'प्रतरां' (प्रकृष्टतरां) 'वस्यः' (अतिशयेन निवासकारणम्)।

अथ नवमीमाह,—"आ तं भज सौश्रवसेष्वग्न उक्थ-उक्थ आभज शस्यमाने। प्रियः सूर्ये प्रियो अग्ना भवात्युज्जातेन भिनददुज्जनित्वैः(९)" इति। शोभनं श्रवः कीर्त्तिः सुश्रवः, तस्य सम्बन्धीनि (तत्कारणानि) कर्माणि सौश्रवसानि, तेषु कर्मसु 'उक्थे' (निष्केवल्यप्रउगादिरूपे तत्तच्छस्ते) 'शस्यमाने' सति 'तं' (देवभक्तं यजमानम्) 'आ'-'भज' (सर्वतः सेवय, सम्प्रेरय) निरन्तरं कर्मानुष्ठायिनं कुर्वित्यर्थः। 'आभज' इतिद्विरुक्तैर्वाक्यद्वयमिदं कर्त्तव्यम्, सौश्रवसेषु कर्मसु प्रेरयेत्येकं वाक्यम्, तत्तच्छस्ते प्रेरयेत्येकं वाक्यम्। अयं यजमानः 'सूर्ये' 'प्रियः' 'भवाति' (भवतु), 'अग्ना' (वह्नावपि) 'प्रियो' भवतु। तथा 'जातेन' (उत्पन्नेन) पुत्रेण 'उत्'-'भिनदत्' (उद्भेदमभिवृद्धिं प्राप्नोतु); तथा 'जनित्वैः' (जनिष्यमाणैः) पौत्रादिभिश्च 'उत्'-'भिनदत्'।

अथ दशमीमाह,—"त्वामग्ने यजमाना अनुद्यून् विश्वा वसूनि दधिरे वार्याणि। त्वया सह द्रविणमिच्छमाना व्रजं गोमन्तमुशिजो विवव्रुः(१०)" इति। हे 'अग्ने', 'यजमानाः' सर्वे 'अनुद्यून्' (प्रतिदिनं) 'त्वाम्' 'अनु' (त्वामेवानुगच्छन्तः) 'वार्याणि' (वरणीयानि) 'विश्वा' 'वसूनि' (सर्वाणि धनानि) 'दधिरे' (धृतवन्तः)। 'त्वया सह' अवस्थितास्ते यजमानाः 'द्रविणमिच्छमानाः' (पुनरप्यधिकं द्रव्यं कामयमानाः) उशिजो, (धनसाध्यानि कर्माणि

तस्मादयं मन्त्रः प्रजननाद्यर्थमन्त्यागमनं वदन् तद्वकाशप्रदाय्यो-र्द्यावापृथिव्योर्वियोगाय सम्पद्यते ।

अस्य मन्त्रस्य चरमभागे गन्तव्यत्वेन निर्दिष्टयोर्ऋतसत्ययो-स्तात्पर्यं दर्शयति,—"प्रच्युतो वा एष आयतनादगतः प्रतिष्ठाꣳ स एतर्ह्यध्वर्युञ्च यजमानञ्च ध्यायत्यृतꣳ सत्यमित्याहेयं वा ऋतमसौ सत्यमनयोरेवैनं प्रतिष्ठापयति नार्त्तिमार्च्छत्यध्वर्युर्न यजमानः" (५।१।५अ०) इति। एषोऽग्निः खननप्रदेशात् स्वकीयात् 'आयतनात्' 'प्रच्युतः' अन्यत्रापि न क्वचित् प्रतिष्ठां गतः ; 'सः' अग्निरेतस्मिन् काले कुपितोऽध्वर्युयजमानौ हन्तुं 'ध्यायति', अतोऽस्य प्रतिष्ठार्थं द्यावापृथिवीविवक्षया मन्त्रे ऋतसत्यशब्दौ प्रयुक्तौ । तेन अनयोर्लोकयोरग्नेः स्थापनादध्वर्युयजमानौ न विनश्यतः ।

कल्पः,—'उत्तरेण विहारं परिश्रित ओषधयः प्रतिगृह्णीता-ग्निमेतमिति द्वाभ्यामोषधीषु पुष्पवतीषु फलवतीषूपावहरति' इति। तत्र प्रथमामाह,—"ओषधयः प्रति गृह्णीताग्निमेतꣳ शिवमायन्त-मभ्यत्र युष्मान्। व्यस्यन् विश्वा अमतीररातीर्निषीदन्नो अप दुर्मतिꣳ हनत(११)" इति। हे 'ओषधयः', 'अत्र' (अस्मिन् परि-श्रिते देशे) 'युष्मान्' अभिमुखीकृत्य 'आयन्तम्' (आगच्छन्तं) 'शिवं' (शान्तं) 'एतम्' अग्निं 'प्रति'-'गृह्णीत' (स्वीकुरुत) । अयं चाग्निर्युष्मासु 'निषीदन्' 'नः' (अस्माकं) 'दुर्मतिम्' 'अप'-'हनत' (प्रमादालस्यादियुक्तां बुद्धिं 'अपहनत' अपहरतु)। किं कुर्वन् ?— 'विश्वा' 'अरातीः' 'अमतीः' 'व्यस्यन्' (शत्रुममाना रोगजनिता बाधाः सर्वाः परिहरन्) ।

कामयमानाः) 'गोमन्तं' (बहुभिर्गोभिर्युक्तं) 'व्रजं' (गोनिवास-स्थानं) 'विवव्रुः' (विशेषेण वृतवन्तः)।

अथ एकादशीमाह,—"दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्ष-मायुः श्रिये रुचानः। अग्निरमृतो अभवद्वयोभिर्यदेनं द्यौर-जनयत् सुरेताः(११)" इति। 'दृशानः' (दर्शनीयरूपः) 'रुक्मः' (सुवर्णसदृशरूपः) 'उर्व्या' (महत्या) दीप्त्या 'व्यद्यौत्' (विद्योतते स्म)। किं कुर्वन्?—'दुर्मर्षं' (इतरैरतिरस्कार्यं) 'आयुः' (जीवनं) 'श्रिये' (श्रयितुं) 'रुचानः' (वाञ्छन्)। तथाविधः 'अग्निः' 'वयोभिः' (अन्नै*र्हविर्भिः) 'अमृतो अभवत्', 'यत्' (यस्मात्) 'एनम्' (अग्निं) 'द्यौः' (द्युलोकवासी देवगणः) 'सुरेताः' 'सन्', 'अजनयत्', तस्मादमृतत्वं युक्तम्।

तदेतदेकादशमन्त्रात्मकं सूक्तं विनियुङ्क्ते,—"वात्सप्रेणोपतिष्ठत एतेन वै वत्सप्रीर्भालन्दनोऽग्नेः प्रियं धामावारुन्धाग्नेरेवैतेन प्रियं धामावरुन्धे"(५।२।१अ०) इति। वत्सप्रीनामकेन महर्षिणा अधीतं 'दिवस्परि' इत्यादिकं सूक्तं वात्सप्रं, तेनाग्निम् उपतिष्ठेत। भाल-न्दनस्य पुत्रो वत्सप्री-नामको महर्षिः 'एतेन' (सूक्तेन) 'अग्नेः' 'प्रियं' 'धाम' (स्थानं) प्राप्तवान्, ततो यजमानः अपि तथा प्राप्नोति।

तस्य सूक्तस्य एकादशमन्त्रसमूहात्मकत्वं विधत्ते,—"एकादशं

---

* अन्नैः इति B. पु॰ पाठः।

अथ द्वितीयामाह,—"ओषधयः प्रति मोदध्वमेनं पुष्पावतीः सुपिप्पलाः। अयं वो गर्भ ऋत्वियः प्रत्नꣳ सधस्थमासदत्(१२)" इति। 'पुष्पावतीः' (प्रशस्तपुष्पोपेताः), 'सुपिप्पलाः' (शोभनफलोपेताः) हे 'ओषधयः', 'एनम्' (अग्निं) 'प्रति' 'मोदध्वं' (हृष्टा भवत)। 'अयम्' अग्निः 'वः' (युष्माकम्) 'ऋत्वियः' (ऋतुकालीनः) 'गर्भः' भूत्वा 'प्रत्नं' (पुरातनं) 'सधस्थं' (गर्भयोग्यं स्थानम्) 'आसदत्' (प्राप्तवान्)।

अथ प्रथममन्त्रप्रथमपादे ओषधिप्रतिग्रहणप्रार्थनया सूचितां वरुणशान्तिं दर्शयति,—"वरुणो वा एष यजमानमभ्येति यदग्निरुपनद्ध ओषधयः प्रतिगृह्णीताग्निमेतमित्याह शान्त्यै" (५।१।५अ०) इति। कृष्णाजिने बद्धो योऽग्निः, स एष बन्धकेन वरुणपाशेन युक्तत्वात् 'वरुणः' सन् 'यजमानम्' 'अभि'-लक्ष्य बाधितुम् आगच्छति। अतस्तच्छान्त्यर्थम् ओषधीभिः प्रतिग्रहः।

तृतीयपादे, अरातिशब्देन राक्षसाः सूचिताः-इति दर्शयति,—"व्यस्यन् विश्वा अमतीररातीरित्याह रक्षसामपहत्यै" (५।१।५अ०) इति।

चतुर्थपादे, दुर्बुद्धपरिहारोऽनुष्ठानप्रतिष्ठार्थः-इति दर्शयति,—"निषीदं नो अप दुर्मतिꣳ हनदित्याह प्रतिष्ठित्यै" (५।१।५अ०) इति।

द्वितीयमन्त्रप्रथमपादे, ओषधिप्रतिमोदप्रार्थनया जाठराग्निसमृद्धिः-इत्येतद्दर्शयति,—"ओषधयः प्रति मोदध्वमेनमित्याहौषधयो वा अग्नेर्भागधेयं ताभिरेवैनꣳ समर्धयति"(५।१।५अ०)

भवल्लोकधैव यजमाने वीर्यं दधाति" (५।२।१ अ०) इति। 'एकधैव' (युगपदेव) समूहस्य युगपत्प्रवृत्तत्वात्।

तदिदं सूक्तं विष्णुक्रमांश्च लोकद्वयहेतुत्वेन प्रशंसति, "स्तोमेन वै देवा अस्मिन् लोक आर्ध्नुवंश्छन्दोभिरमुष्मिन्त्स्तोमस्येव खलु वा एतद्रूपं यद्वात्सप्रं यद्वात्सप्रेणोपतिष्ठत इममेव तेन लोकमभिजयति यद्विष्णुक्रमान् क्रमतेऽमुमेव तैर्लोकमभिजयति" (५।२।१ अ०) इति। गीत्याश्रयाणाम् आवृत्तानामृचां समूहः स्तोमः (स्तुतिहेतुर्मन्त्रसमूहः) एतल्लोकसमृद्धिप्राप्तिसाधनं; समूहाकारमन्त्रेण विशिष्टानि छन्दांसि स्वर्गसमृद्धिकारणानि। तथा सति वात्सप्रसूक्तं समूहरूपत्वात् एतल्लोकसमृद्धिकरं, छन्दःशब्दोपेता विष्णुक्रममन्त्रास्तु बहुत्वात् स्वर्गसमृद्धिहेतवः।

उभयानुष्ठानस्य कालविशेषं विधत्ते,—"पूर्वेद्युः प्रक्रामत्युत्तरेद्युरुपतिष्ठते तस्माद्योगे न्यासां प्रजानां मनः क्षेमे न्यासां तस्माद्यायावरः क्षेम्यस्येशे तस्माद्यायावरः क्षेम्यमध्यवस्यति"(५।२।१ अ०) इति। अलब्धस्य लाभो योगः, लब्धस्य परिपालनं क्षेमः, अर्जनशीला बहुव्ययाः काश्चित् प्रजाः, योग एव श्रेयानिति मन्यन्ते, अतः परमर्जयितुमशक्ता व्ययभीरवः काश्चित् प्रजाः, क्षेम एव श्रेयानिति मन्यन्ते, तदिदं प्रजानां मनोवैलक्षण्यं क्रमणोपस्थानकालहेतुकं। यस्मात् प्रयाणशीलस्य पुरुषस्यार्जयितुमवकाशो नास्ति, 'तस्मात्' 'यायावरः' (प्रयाणशीलः) पुरुषः 'क्षेम्यस्य ईशे' (विद्यमानद्रव्यरक्षणस्यैव प्रभुर्भवति)। यस्मादेवं लोके दृष्टं, 'तस्मात्' अत्र देवयजनदेशं प्रति 'यायावरो' (यजमानः) साधनान्तर-

इति। 'ओषधयः' अन्नरूपेण जाठराग्नेर्भागः, पुरोडाशरूपेणाग्ने-र्देवतायाः भागः, अतः ओषधिस्थापनेनाग्निद्वयसमृद्धिः।

द्वितीयपादे सुपिप्पलशब्दतात्पर्यं दर्शयति,—"पुष्पावतीः सुपिप्पला इत्याह तस्मादोषधयः फलं गृह्णन्ति" (५।१।५ ब्रा०) इति। यस्माद्‌च 'सुपिप्पला' इत्युक्तं, 'तस्मात्' लोकेऽपि 'ओष-धयः' स्वकाले सम्पूर्णं 'फलं गृह्णन्ति'।

द्वितीयार्द्धे 'सधस्थमासदत्' इत्यस्य तात्पर्यं दर्शयति,—"अयं वो गर्भ ऋत्वियः प्रत्नꣳ सधस्थमासददित्याह याभ्य एवैनं प्रच्यावयति तास्वेवैनं प्रतिष्ठापयति" (५।१।५ ब्रा०) इति। मृत्-खननभूमौ पूर्वमुत्पन्नाभ्यो 'याभ्यः' ओषधीभ्यः प्रच्याव्य अयमग्नि-रानीतः, तम् अग्निम् उपावहरणप्रदेशे 'तासु एव' ओषधीषु स्थापितवान् भवति।

'ओषधयः प्रतिगृह्णीत' इत्यादिकं मन्त्रद्वयं विनियुङ्क्ते,—"द्वाभ्यामुपावहरति प्रतिष्ठित्यै" (५।१।५ ब्रा०) इति।

अत्र विनियोगसङ्ग्रहः,—

सं, मृत्खनेऽपो निनयेत्, सुजातो, हृतबन्धनम्।
उद्-द्वाभ्यां समुत्थाय, स जातस्त्वाहरेन्मृदम्॥
स्थिरो, गर्दभ आधाय, शिव, आहितमक्षणम्।
प्रैतु-त्रिभिः शनैर्याति ओष-द्वाभ्यामिमां मृदम्॥
उपाहरेदोषधीषु मन्त्रा द्वादश वर्णिताः।

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्ण-यजुःसंहिताभाष्ये चतुर्थकाण्डे प्रथमप्रपाठके चतुर्थोऽनुवाकः॥४॥

सम्पादनेच्छां परित्यज्य विद्यमानान्येव उख्याग्न्यादिसाधनानि उपस्थानादिव्यापारैः परोक्षितुमध्यवस्यति ।

सोमविक्रीतित्वं द्योतयितुं तदङ्गानुष्ठानकालविशेषं चावगमयितुं दीक्षाङ्गं किञ्चिद्विधत्ते,—"मुष्टीकरोति वाचं यच्छति यज्ञस्य धृत्यै" (५।२।२अ०) इति। 'स्वाहा यज्ञं मनसा' इत्यादिभिर्मन्त्रैर्हस्तयोरङ्गुल्याकुञ्चनं मुष्टीकरणं, मौनं वाग्यमः, तदुभयं यज्ञस्य पालनदार्ढ्याय भवति ।

अत्र विधियोगसङ्ग्रहः,—*

दिव इत्यनुवाकेन वात्सप्रेणोपतिष्ठते ।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये चतुर्थकाण्डे द्वितीयप्रपाठके द्वितीयोऽनुवाकः ॥ ० ॥

---

अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः । प्र प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे(१) । उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिः । स नो भव शिवतमः सुप्रतीको विभावसुः(२) । प्रेदग्ने ज्योतिष्मान्याहि शिवेभिरर्चिभिस्त्वं बृहद्भिर्भानुभिर्भासन्

---

* अयं पाठ आदर्शपुस्तके नास्ति ।

वि पाजसा पृथुना शोशुचानो बाधस्व द्विषो रक्षसो अमीवाः। सुशर्मणो बृहतः शर्मणि स्यामग्नेरहꣳ सुहवस्य प्रणीतौ[१]। आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन। महे रणाय चक्षसे[२]। यो वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः[३]। तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः[४]। मित्रः॥ १॥

सꣳसृज्य पृथिवीं भूमिं च ज्योतिषा सह। सुजातं जातवेदसमग्निं वैश्वानरं विभुम्[५] अयक्ष्माय त्वा सꣳसृजामि प्रजाभ्यः। विश्वे त्वा देवा वैश्वानराः सꣳसृजन्त्वाऽऽनुष्टुभेन छन्दसाऽङ्गिरस्वत्[६]। रुद्राः सम्भृत्य पृथिवीं बृहज्ज्योतिः समीधिरे। तेषां भानुरजस्र इच्छुक्रो देवेषु रोचते[७] सꣳसृष्टां वसुभी रुद्रैर्धीरैः कर्मण्यां मृदं। हस्ताभ्यां मृद्वीं कृत्वा सिनीवाली करोतु॥ २॥

ताम्[८]। सिनीवाली सुकपर्दा सुकुरीरा स्वौपशा। सा तुभ्यमदिते मह्योखां दधातु हस्तयोः[९]। उखां करोतु शक्त्या बाहुभ्यामदितिर्धिया। माता पुत्रं यथोपस्थे साग्निं बिभर्तु गर्भ आ[१०]। मखस्य शिरोऽसि[११] यज्ञस्य पदे स्थः[१२]। वसवस्त्वा कृण्वन्तु गाय-

मा हिꣳसीस्तनुवा प्रजाः[३]। समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिं। आ ॥ १ ॥

अस्मिन् हव्या जुहोतन[४] प्रप्रायमग्निर्भरतस्य शृण्वे वि यत् सूर्यो न रोचते बृहद्भाः। अभि यः पूरुं पृतनासु तस्थौ दीदाय दैव्यो अतिथिः शिवो नः[५]। आपो देवीः प्रति गृह्णीत भस्मैतत् स्योने कृणुध्वꣳ सुरभावु लोके तस्मै नमन्तां जनयः सुपत्नीः मातेव पुत्रं बिभृता स्वेनं[६]। अप्स्वग्ने सधिष्टवा ॥ २ ॥

सौषधीरनुरुध्यसे गर्भे संजायसे पुनः[७]। गर्भो अस्योषधीनां गर्भो वनस्पतीनां। गर्भो विश्वस्य भूतस्याग्ने गर्भो अपामसि[८]। प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने। सꣳसृज्य मातृभिस्त्वं ज्योतिष्मान् पुनरासदः[९]। पुनरासद्य सदनमपश्च पृथिवीमग्ने। शेषे मातुर्यथोपस्थेऽन्तरस्याꣳ शिवतमः[१०]। पुनरूर्जा ॥ ३ ॥

निवर्तस्व पुनरग्न इषाऽऽयुषा। पुनर्नः पाहि विश्वतः[११]। सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया विश्वप्स्निया विश्वतस्परि[१२]। पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः घृतेन

षेण छन्दसाऽङ्गिरस्वत् पृथिव्यसि[१३] रुद्रास्त्वा कृण्वन्तु त्रैष्टुभेन छन्दसाऽङ्गिरस्वदन्तरिक्षमसि[१४] ॥ ३ ॥

आदित्यास्त्वा कृण्वन्तु जागतेन छन्दसाऽङ्गिरस्वद् द्यौरसि[१५] विश्वे त्वा देवा वैश्वानराः कृण्वन्त्वानुष्टुभेन छन्दसाऽङ्गिरस्वद्दिशोऽसि ध्रुवासि धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान् यजमानाय[१६] अदित्यै रास्नासि[१७] अदितिस्ते बिलं गृह्णातु पाङ्क्तेन छन्दसाऽङ्गिरस्वत्[१८]। कृत्वाय सा महीमुखां मृन्मयीं योनिमग्नये। तां पुत्रेभ्यः सम्प्रायच्छददितिः श्रपयानिति[१९] ॥ ४ ॥

मित्रः। करोतु। अन्तरिक्षमसि। प्र। चत्वारि च ॥५॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे प्रथमप्रपाठके पञ्चमोऽनुवाकः ॥ ० ॥

चतुर्थानुवाके मृदाहरणमुक्तम्। अथ पञ्चमे उखानिर्माणमुच्यते। कल्पः, 'वि पाजसेति विस्नस्य' इति। पाठस्तु,—"वि पाजसा पृथुना शोशुचानो बाधस्व द्विषो रक्षसो अमीवाः। सुशर्मणो बृहतः शर्मणि स्यामग्नेरहꣳ सुहवस्य प्रणीतौ[१]" इति। हे अग्ने, 'पृथुना' (विस्तृतेन) 'पाजसा' (बलेन) 'शोशुचानः' (दीप्यमानः) त्वं 'द्विषः' (शत्रून्) 'रक्षसः' (राक्षसान्) 'अमीवाः' (रोगांश्च) विशेषेण 'बाधस्व'। 'अहं' 'सुशर्मणः' (शोभनसुखस्य)

त्वं तनुवौ वर्धयस्व सत्या सन्तु यजमानस्य कामाः[१३]। बोधा नो अस्य वचसो यविष्ठ मंहिष्ठस्य प्रभृतस्य स्वधावः। पीयति त्वो अनु, त्वो गृणाति वन्दारुस्ते तनुवं वन्दे अग्ने[१४]। स बोधि सूरिर्मघवा वसुदावा वसुपतिः। युयोध्यस्मद्द्वेषांसि[१५] ॥ ४ ॥

आ। तव। ऊर्जा। अनु। षोडश च ॥ ३ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे द्वितीयप्रपाठके तृतीयोऽनुवाकः ॥ ० ॥

द्वितीयेऽनुवाके वह्नेरुख्यस्योपस्थानमुक्तम्; तृतीये चयनार्थस्य देवयजनस्य परिग्रहोऽभिधीयते। कल्पः, 'प्रतकालेऽन्नपतेऽन्नस्य नो देहीत्यौदुंबरीं समिधं प्रतेत्काभ्यादधाति(?)' इति। प्रतार्थे चीरद्रव्ये। पाठस्तु,—"अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः। प्र प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे[१]" इति। हे 'अन्नपते' अग्ने, 'अनमीवस्य' (अरोगस्य) 'शुष्मिणः' (बलहेतोः), 'अन्नस्य' प्राप्तिं 'नः' (अस्मभ्यं) 'देहि'। 'प्रदातारं' (प्रकर्षेण हविषो दातारं) यजमानं, 'प्र'-'तारिषः' (प्रकर्षेण दुरितात् तारय) 'नः' (अस्माकं) 'द्विपदे चतुष्पदे' (मनुष्याय पशवे च) 'ऊर्जं' (बलं) 'धेहि' (संपादय)। अस्य मन्त्रस्य प्रथमपादे अन्नपतिशब्दार्थं दर्शयति,—"अन्नपतेऽन्नस्य नो देहीत्याहाग्निर्वा अन्नपतिः स एवास्मा अन्नं प्रयच्छति" (५।२।२अ०) इति।

'बृहतः' (प्रौढस्य) 'सुहवस्य' (सुखेनाह्वातुं शक्यस्य) 'अग्नेः' 'प्रणीतौ' परिचर्यायां सत्यां यत् शर्म (सुखं), तस्मिन् सुखे 'स्याम्' (सर्वदा अवतिष्ठेयम्)।

तमिमं विनियुङ्क्ते,—"वारुणो वा अग्निरुपनद्धो वि पाजसेति विस्रꣳसयति सवितृप्रसूत एवास्य विषूचीं वरुणमेनिं विसृजति" (५।१।६ अ०) इति। यद्यपि अमन्त्रकेण लौकिकविस्रंसनेन लौकिकबन्धो निवर्त्तते, तथापि सवितृप्रेरणमन्त्रेण वरुणपाशस्य निवृत्त्यभावेन सवितृप्रेरणाय मन्त्रपाठः। अस्य मन्त्रस्य बन्धविमोचनायैव सविता परमेश्वरेण निर्मितत्वात् तत्पाठे सति सवितृप्रेरितो भवति। वरुणस्य सम्बन्धिनी पाशबन्धकृता बाधा 'वरुणमेनिः' सा च 'विषूची' (सर्वतः प्रसृता), बहुधा रज्जुभिरावेष्ट्य धृतत्वात्, अस्याग्नेस्तादृशीं वरुणमेनिं मन्त्रेण विमोचितवान् भव।

कल्पः, 'आपो हि ष्ठा मयो भुव इति तिसृभिरप उपसृज्य' इति। तत्र प्रथमामाह,—"आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन। महे रणाय चक्षसे(१)" इति। 'हि'-शब्द एवकारार्थः, प्रसिद्ध्यर्थो वा। हे 'आपः', यूयमेव 'मयोभुवः' 'स्थ' (सुखस्य भावयित्र्यो भवत)। स्नानपानादिहेतुत्वेन सुखोत्पादकत्वं प्रसिद्धम्। 'ताः' (तादृश्यो यूयं) 'नः' (अस्मान्) 'ऊर्जे' (रसाय भवदीयरसानुभवार्थं) 'दधातन' (स्थापयत)। किञ्च 'महे' (महते) 'रणाय' (रमणीयाय) 'चक्षसे' (दर्शनीयाय) 'दधातन', अस्मान् परतत्त्वसाक्षात्कारयोग्यान् कुरुतेत्यर्थः।

द्वितीयपादे अनमीवशब्दार्थं दर्शयति,—"अनमीवस्य शुष्मिण इत्याहायक्ष्मस्येति वावैतदाह" (५।२।२अ०) इति।

उत्तरार्द्धे 'तारिषो, धेहि' इति पदयोस्तात्पर्यं दर्शयति,—"प्र प्रदातारं तारिष ऊर्जन्नो धेहि द्विपदे चतुष्पदे इत्याहाशिषमेवैतामाशास्ते" (५।२।२अ०) इति।

कल्पः, 'उद् त्वा विश्वे देवा इत्युख्यमुद्यम्य' इति। पाठस्तु,—"उद् त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिः। स नो भव शिवतमः सुप्रतीको विभावसुः(२)" इति। हे 'अग्ने', 'विश्वे' (सर्वे) अपि 'देवाः' प्राणरूपाः 'चित्तिभिः' (उद्यमनकुशलाभिः धीवृत्तिभिः) 'उद्' (ऊर्ध्वमेव) त्वां 'भरन्तु'। 'स' त्वं 'नः' (अस्माकं) 'शिवतमः' (शान्ततमः) 'सुप्रतीकः' (सुमुखः) 'विभावसुः' (प्रभया वासयिता) 'भव'।

अस्य मन्त्रस्य प्रथमपादे देवशब्दार्थं दर्शयति,—"उद् त्वा विश्वे देवा इत्याह प्राणा वै विश्वे देवाः प्राणैरेवैनमुद्यच्छते" (५।२।२अ०) इति। दीव्यन्ति स्वस्वकार्येषु व्यवहरन्ति इति देवाः प्राणाः।

द्वितीयपादे बुद्ध्यादिशब्दान् परित्यज्य चित्तिशब्दप्रयोगस्य तात्पर्यं दर्शयति,—"अग्ने भरन्तु चित्तिभिरित्याह यस्मा एवैनं चित्तायोद्यच्छते तेनैवैनꣳ समर्धयति" (५।२।२अ०) इति। चित्तिशब्देन* चित्ताभिप्रेतकार्यं सूच्यते, तथा सति यस्मै कार्याय इदमुद्यमनं, तेनैव कार्येण एनमग्निं समृद्धं† करोति।

* चित्तशब्देन इति J. पु० पाठः।
† समृद्धिमिति J. पु० पाठो न साधुः।

अथ द्वितीयामाह,—"यो वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः[१]" इति 'वः' (युष्माकं) 'शिवतमः' (शान्ततमः सुखैकहेतुः) 'यः' 'रसः' अस्ति, 'इह' (अस्मिन् कर्मणि) 'नः' (अस्मान्) 'तस्य भाजयत' (रसं प्रापयत)। तत्र दृष्टान्तः,— 'उशतीरिव मातरः' इति, 'उशतीः' (कामयमानाः प्रीतियुक्ताः) 'मातरः', यथा वत्सान् स्वीयस्तन्यरसं* प्रापयन्ति तद्वत्।

अथ तृतीयामाह,—"तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः[४]" इति। 'यस्य' (रसस्य) 'क्षयाय' (क्षयेण निवासेन) 'जिन्वथ' (यूयं प्रीता भवथ)। 'तस्मै' (रसाय) 'वः' (युष्मान्) 'अरङ्गमाम' (अलं भृशं प्राप्नुमः)। किञ्च हे 'आपः', यूयं 'नः' (अस्मान्) 'जनयथ' (पुत्रोत्पादकान् कुरुत)।

एतैर्मन्त्रैः साध्यं जलसेचनं विधत्ते,—"अप उपसृजत्यापो वै शान्ताः शान्ताभिरेवास्य शुचꣳ शमयति" (५।१।६ अ॰) इति। अस्याग्नेः 'शुचं' शोकं दाहमित्यर्थः।

'आपो हि ष्ठा' इत्याद्यृचस्तत्र विनियुङ्क्ते,—"तिसृभिरुपसृजति त्रिवृद्वा अग्निर्यावानेवाग्निस्तस्य शुचꣳ शमयति" (५।१।६ अ॰) इति। आहवनीयादिरूपेणाग्नेस्त्रैगुण्यम्। तस्य सर्वस्याग्नेर्मन्त्रत्रयेण दाहशान्तिः।

कल्पः, 'मित्रः सꣳसृज्य पृथिवीमिति द्वाभ्याꣳ सꣳसर्जनीयैः सꣳसृजत्यर्मकपालैः पिष्टैर्वेणुक्षारैर्व्रीहितुषैः पलाशकषायेण शर्कराभिः पिष्टाभिः कृष्णाजिनलोमभिरजलोमभिः' इति। तत्र

---

* स्वियस्तन्यरसम् इति सर्वत्र पाठो न सम्यगिव प्रतिभाति।

यदुक्तं सूत्रकारेण,-'सीद त्वं मातुरस्या उपस्थ इति चतसृभिर्द्वयोषि शकटे प्रउग उख्यमासादयति' इति; ईषायुगयोर्मेलनस्थानं प्रउगं; तदेतत् सूत्रकारोक्तमासादनं विधत्ते,—"चतसृभिरासादयति चत्वारि छन्दाꣳसि छन्दोभिरेवातिच्छन्दसोत्तमया वर्ष्म वा एषा छन्दसां यदतिच्छन्दा वर्ष्मैवैनꣳ समानानां करोति सद्वती भवति सत्वमेवैनं गमयति" (५।२।२ब्रा०) इति। सीद त्वमित्यादयस्तिस्र ऋचस्तद्ब्राह्मणं चेत्येतत् सर्वं प्रथमानुवाके व्याख्यातम्।

कल्पः, 'प्रेदग्ने ज्योतिष्मान् याहीति प्रयाति' इति। पाठस्तु—"प्रेदग्ने ज्योतिष्मान् याहि शिवेभिरर्चिभिस्त्वं। बृहद्भिर्भानुभिर्भासन्मा हिꣳसीस्तनुवा प्रजाः[१]" इति। हे 'अग्ने', 'शिवेभिरर्चिभिः' (शान्ताभिर्ज्वालाभिः) 'ज्योतिष्मान्' (प्रकाशयुक्तः) 'त्वं' 'प्रत्'-'याहि' (देवयजनप्रदेशं प्रति प्रयाह्येव)। 'बृहद्भिर्भानुभिः' प्रौढैः रश्मिभिः 'भासन्' (जगदवभासयन्) 'तनुवा' (स्वकीयेन दाहकेन शरीरेण) 'प्रजाः' 'मा हिंसीः'।

अस्य मन्त्रस्य प्रथमपादे ज्योतिष्मच्छब्दस्य तात्पर्यं दर्शयति,—"प्रेदग्ने ज्योतिष्मान् याहीत्याह ज्योतिरेवास्मिन्दधाति" (५।२।२ब्रा०) इति।

चतुर्थपादे हिंसां निषेद्धुं प्रसक्तिं दर्शयति,—"तनुवा वा एष हिनस्ति यꣳ हिनस्ति मा हिꣳसीस्तनुवा प्रजा इत्याह प्रजाभ्य एवैनꣳ शमयति" (५।२।२ब्रा०) इति। अग्निः 'यं' पुरुषं 'हिनस्ति', न शस्त्रेण प्रहृत्य हन्ति, किन्तु ज्वालासहितेन स्वशरीरेण

प्रथमामाह,—"मित्रः सꣳसृज्य पृथिवीं भूमिं च ज्योतिषा सह। सुजातं जातवेदसमग्निं वैश्वानरं विभुम्(५)" इति। मित्रनामकः सर्वेषामाप्तो देवः, 'पृथिवीं' (विस्तृतामिमां) 'भूमिं' (मृदं) चशब्दादस्यां मृदि उपसृष्टा अपश्च, 'ज्योतिषा' (ज्योतिःशब्दोपलक्षितेन दार्ढ्यहेतुना वक्ष्यमाणार्मकपालादिना 'संसृज्य' अग्निं 'सुजातम्' अकरोदिति शेषः। अग्निशब्दोपलक्षिताम् उखां निर्मितवानित्यर्थः। कीदृशमग्निं?—'जातवेदसं' (उत्पन्नप्राण्यभिज्ञं), 'वैश्वानरं' (सर्वपुरुषोपकारकत्वेन तत्सम्बन्धिनं), 'विभुं' (सर्वेषु यजमानगृहेषु व्याप्तम्)।

अथ द्वितीयामाह,—"अयक्ष्माय त्वा सꣳसृजामि प्रजाभ्यः। विश्वे त्वा देवा वैश्वानराः सꣳसृजन्त्वानुष्टुभेन छन्दसाऽङ्गिरस्वत्(६)" इति। हे अग्ने, त्वां 'प्रजाभ्यः' (प्रजानाम्) 'अयक्ष्माय' (रोगाभावाय) 'संसृजामि' (अर्मकपालादिभिः संयोजयामि)। 'वैश्वानराः' (सर्वपुरुषोपकारिणः), 'विश्वे' (सर्वेऽपि) 'देवाः' 'आनुष्टुभेन छन्दसा' सहकारिणा युक्ताः त्वां 'संसृजन्तु'। किंवत्?—यथा अङ्गिरसः* पूर्वं संयोजितवन्तस्तद्वत्।

मन्त्रे देवतान्तरपरित्यागेन मित्रस्यैव स्वीकारे कारणं दर्शयति,—"मित्रः सꣳसृज्य पृथिवीमित्याह मित्रो वै शिवो देवानां तेनैवैनꣳ सꣳसृजति शान्त्यै" (५।१।६ अ०) इति। 'देवानां' मध्ये 'मित्रः' 'शिवः' (शान्तः); अतोऽग्नेः 'शान्त्यै' मित्रस्य स्वीकारः।

* अङ्गिर इति सर्वत्र पाठो न युक्तः।

तं दग्ध्वा हन्ति; अतः 'तनुवा मा हिंꣳसीः' इति प्रार्थ्यते।

प्रयाणकाले शकटस्य ध्वनौ सति प्रायश्चित्तं विधत्ते,—"रक्षाꣳसि वा एतद्यज्ञꣳ सचन्ते यदन उत्सर्जत्यक्रन्ददित्यन्वाह रक्षसामपहत्यै" (५।२।२अ०) इति। 'यत्' 'अनः' (शकटम्) 'उत्सर्जति' (गमने ध्वनिं करोति), 'एतत्' (यज्ञसाधनं शकटं) 'रक्षांसि' 'सचन्ते' (समवयन्ति), अतस्तत्परिहाराय 'अक्रन्ददग्निः' इत्येकामृचमनुब्रूयात्; सा च पूर्वानुवाके समाम्नाता व्याख्याता च।

विधत्ते, "अनसा वहन्त्यपचितिमेवास्मिन्दधाति तस्मादनस्वी च रथी चातिथीनामपचिततमौ" (५।२।२अ०) इति। एतमग्निं 'अनसा' (शकटेन) देवयजनप्रदेशं 'वहन्ति' (प्रापयेत्), तथा सति 'अस्मिन्' अग्नौ पूजां सम्पादितवान् भवति। यस्मादेवं, 'तस्मात्' लोकेऽपि प्रयाणकाले शकटारूढो रथारूढश्चातिथीनां मध्ये पूज्यतमौ; परिवृढो हि तथा गच्छति, न तु दरिद्रः।

एतद्वेदनं प्रशंसति,—"अपचितिमान् भवति य एवं वेद" (५।२।२अ०) इति।

कल्पः, 'समिधाग्निं दुवस्यतेति घृतानुषिक्तामवसिते समिधमादधाति' इति। पाठस्तु,—"समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिं। आऽस्मिन् हव्या जुहोतन(४)" इति। हे ऋत्विग्यजमानाः, तम् 'अग्निं' 'समिधा' 'दुवस्यत' (परिचरत), घृतानुषिक्तयाऽनया परिचरतेत्यर्थः। 'घृतैः' एतत्सेकैः 'अतिथिम्' इव एनं 'बोधयत' (उद्दीपयत)। ततश्च 'अस्मिन्' हव्यानि (हवींषि) 'आ'-'जुहोतन' (साकल्येन जुहुत)।

अथ दार्ढ्यहेतुभिः कपालैः संसर्गं विधत्ते,—"यन्नाम्याणां पात्राणां कपालैः सङ्सृजेद् ग्राम्याणि पात्राणि शुचार्पयेदर्मकपालैः सङ्सृजत्येतानि वा अनुपजीवनीयानि तान्येव शुचार्पयति" (५।१।६ अ०) इति। पाकसाधनानां भाण्डानां कपालैः संसर्गे सति सर्वाणि 'पात्राणि' 'शुचा अर्पयेत्' (विकृतगृहदाहादिकृतेन भङ्गेन योजितानि भवेयुः)। अतस्तत् मा भूदिति 'अर्मकपालैः' संयोजयेत्। चिरकालशून्यग्रामे भूमौ अवस्थितानि पुरातनानि अर्मकपालानि; तेषां प्राणिभिः अनुपजीवनीयत्वात् तान्येव भङ्गेन योजितानि भवन्ति, न तु गृहोपकरणानि भाण्डानि।

अथ भूमिष्ठैः क्षुद्रपाषाणैश्चूर्णीकृतैः संसृगं विधत्ते'—"शर्कराभिः सङ्सृजति धृत्या अथो शन्त्वाय" (५।१।६ अ०) इति। 'धृत्यै' निर्माणकाले भङ्गराहित्येन दार्ढ्याय। 'अथो शन्त्वाय' इति पाककालेऽपि भङ्गराहित्येन सुखावस्थानाय।

द्रव्यान्तरसंसर्गं विधत्ते,—"अजलोमैः सङ्सृजत्येषा वा अग्नेः प्रिया तनूर्यदजा प्रिययैवैनं तनुवा सङ्सृजत्यथो तेजसा" (५।१।६ अ०) इति। अजस्य जातेरग्नेश्च प्रजापतिमुखजत्वसाम्यादजा इयम् अग्नेः 'प्रिया तनूः'। न केवलं प्रियत्वं किन्तु अग्निसम्बन्धात् तेजोरूपत्वमपि, अतः 'प्रियया' तन्वा 'तेजसा' चाग्निं समर्धयति।

पुनरपि द्रव्यान्तरसंसर्गं विधत्ते,—"कृष्णाजिनस्य लोमभिः सङ्सृजति यज्ञो वै कृष्णाजिनं यज्ञेनैव यज्ञ्ँ सङ्सृजति" (५।१।६ अ०) इति। अन्यत्र, 'यज्ञो देवेभ्योऽनिलायत कृष्णो रूपं

तमेतं मन्त्रं विनियुङ्क्ते,—"समिधाग्निं दुवस्यतेति घृतानुषिक्ता-मवसिते समिधमादधाति यथा अतिथये आगताय सर्पिष्वदातिथ्यं क्रियते तादृगेव तत्" (५।२।१अ०) इति। 'अवसिते' (प्रयाणे समाप्ते सति)। 'सर्पिष्वत्' घृतयुक्तमन्नम्।

कल्पः, 'उत्तरया त्रिष्टुभा राजन्यस्य' इति। 'समिधमाद-धाति' इत्यनुवर्त्तते। पाठस्तु,—"प्रप्रायमग्निर्भरतस्य शृण्वे वि यत् सूर्यो न रोचते बृहद्भाः। अभि यः पूरुं पृतनासु तस्थौ दीदाय दैव्यो अतिथिः शिवो नः(५)" इति। 'अयमग्निः' 'भरतस्य' (हविर्भरणवतः) यजमानस्य आह्वानं 'प्रप्र'-'शृण्वे' (प्रकर्षेण शृणोतु)। 'यत्' (यः) अग्निः 'सूर्यो न' (सूर्य इव) भासमानः सन् 'बृहत्' 'वि'-'रोचते' (अत्यन्तं दीप्यते)। 'यः' अग्निः 'पृतना-सु' (संग्रामेषु) 'पूरुं' (जयपूर्त्तिम्) 'अभि'-'तस्थौ' (सर्वतः करोति); सोऽग्निः 'नः' (अस्माकम्) 'अतिथिः' 'दीदाय' (अतिथिरिवेहास्मासु आगच्छतु)। कीदृशोऽग्निः?—'दैव्यः' (देवेभ्यो हितः) 'शिवः' (परममङ्गलरूपः)।

"समिधाग्निं, प्रप्रायमग्निः" इत्यनयोः समिदाधानमन्त्रयो-र्विषयव्यवस्थां विधत्ते,—"गायत्रिया ब्राह्मणस्य गायत्रो हि ब्राह्मणस्त्रिष्टुभा राजन्यस्य त्रैष्टुभो हि राजन्यः" (५।२।१अ०) इति। समिधाग्निमिति गायत्री, प्रप्रायमग्निरिति त्रिष्टुप्।

कल्पः, 'आपो देवीः प्रतिगृह्णीत भस्मैतदिति तिसृभिरप्सु भस्म प्रवेशयति' इति।

तत्र प्रथमामाह,—"आपो देवीः प्रतिगृह्णीत भस्मैतत्स्योने

कृत्वा' इत्युक्तत्वात्, यज्ञस्य कृष्णाजिनत्वम्। अतः कृष्णाजिनरूपेण 'यज्ञेन' अग्निरूपं 'यज्ञं' 'संसृजति' इति।

कल्पः, 'रुद्राः सम्भृत्य पृथिवीमिति मृदꣳ सङ्क्लिष्य' इति। पाठस्तु,—"रुद्राः सम्भृत्य पृथिवीं बृहज्ज्योतिः समीधिरे। तेषां भानुरजस्र इच्छुक्रो देवेषु रोचते(७)" इति। रुद्रनामका देवाः 'पृथिवीम्' (उखानिष्पादिकां मृदं) 'सम्भृत्य' (सम्यक् भरणं कृत्वा) उखाकरणाय यथा मृद् भवति, तथा हस्ताभ्यां सङ्घट्टनं कृत्वेत्यर्थः। तथा कृत्वा 'बृहज्ज्योतिः' 'समीधिरे' (प्रौढमग्निं दीपितवन्तः)। 'तेषां' (रुद्राणाम्) अयमग्निः 'भानुः' (भासमानः) 'अजस्र इत्' (निरन्तर एव),'शुक्रः' (दीप्तियुक्तः), 'देवेषु' 'रोचते' (शोभते)।

कल्पः, 'सꣳसृष्टां वसुभिरिति तिसृभिः कर्त्रे प्रयच्छति' इति। तत्र प्रथमामाह,—"सꣳसृष्टां वसुभीरुद्रैर्धीरैः कर्मण्यां मृदं। हस्ताभ्यां मृद्वीं कृत्वा सिनीवाली करोतु ताम्(८)" इति। पूर्वमन्त्रे रुद्रशब्देन वसवोऽप्युपलक्षिताः। अतः 'धीरैः' (बुद्धिमद्भिः) 'वसुभीरुद्रैः' च या मृत् कपालादिभिः संयोजिता सती कर्मण्या (उखाकर्मयोग्या सम्पन्ना जाता) तां 'मृदं' 'सिनीवाली' देवी पुनरपि स्व-'हस्ताभ्यां' 'मृद्वीं कृत्वा' 'करोतु' (उखां निष्पादयतु)।

अथ द्वितीयामाह,—"सिनीवाली सुकपर्दा सुकुरीरा स्वौपशा। सा तुभ्यमदिते मह्योखां दधातु हस्तयोः(९)" इति। या 'सिनीवाली सुकपर्दा' (कपर्दोऽत्र स्त्रीणामुचितः केशबन्धविशेषः, शोभनः कपर्दो यस्याः, सा 'सुकपर्दा')। कुरीरशब्देन

कृणुध्वꣳ सुरभावु लोके। तस्मै नमन्तां जनयः सुपत्नीर्मातेव पुत्रं बिभृता स्वेनम्(१)” इति। हे ‘आपो देवीः’ (देव्यः), ‘भस्म’ (उख्याग्नेरुपरिमस्थितं भस्म) ‘प्रतिगृह्णीत’। एतदेवाभिप्रेत्य सूत्रकारेणोक्तं—‘यदुखां भस्माभिनिषोदेदुख्यमादायोदकान्तं गत्वा’ इति। ‘एतत्’ (प्रतिगृहीतं भस्म) ‘स्योने’ (सुखकरे) ‘सुरभावु’ (सुगन्धयुक्ते एव) ‘लोके’ (स्थाने) ‘कृणुध्वं’ (स्थापयत)। (शोभनः पतिर्वरुणरूपो यासान्ताः) ‘सुपत्न्यः’ (‘आपो वरुणस्य पत्नय आसन्’ इत्यन्यत्र श्रुतं) ‘जनयः’ (अग्नेर्जनन्यः) आपः (वाड़व-वैद्युतरूपमग्निं प्रति अपाञ्जनयितृत्वं)। ईदृश्य आपः ‘तस्मै’ (अग्नये) ‘नमन्तां’ (प्रह्वीभवन्तु), तमग्निं पालयितुं वश्याः सावधाना भवन्त्वित्यर्थः। हे आपः, ‘माता’ ‘पुत्रं’ पालयति यद्वत्, तद्वत् ‘एनम्’ (अग्निं) सुष्ठु ‘विभृता’ (पोषयत दीपयत)।

अथ द्वितीयामाह,—“अप्स्वग्ने सधिष्टव सौषधीरनुरुध्यसे गर्भे सञ्जायसे पुनः(७)” इति। हे ‘अग्ने’, ‘तव’ ‘सधिः’ (महः बलं) भस्मरूपं ‘अप्सु’ ‘वर्त्तते’, ‘स’ त्वम् ‘ओषधीरनुरुध्यसे’ (व्रीहियवाद्योषधीरनुसरसि); जाठराग्निरूपेण तत्स्वीकारात् अरण्योः ‘गर्भे’ स्थितः सन् ‘पुनः’-पुनः सम्यक् ‘जायसे’।

अथ तृतीयामाह,—“गर्भो अस्योषधीनां गर्भो वनस्पतीनां। गर्भो विश्वस्य भूतस्याग्ने गर्भो अपामसि(८)” इति। भेषजरूपैस्तृणविशेषैरुत्पद्यमानत्वात् त्वम् ‘ओषधीनाम्’ ‘गर्भोऽसि’। तथा अरणीभ्यामुत्पद्यमानत्वात् ‘वनस्पतीनां’ ‘गर्भः’ असि। हे ‘अग्ने’, ‘विश्वस्य भूतस्य’ (सर्वस्य प्राणिजातस्य) जातस्य जठरे

स्त्रीभिः शृङ्गारार्थं शिरसि* धार्य्यमाणं जालकम् उच्यते, शोभनं कुरीरं यस्याः सा 'सुकुरीरा'। उपशेते (सम्यक् शयनं कुरुते) यैरवयवविशेषैस्ते सर्वे उपशाः, तेषां समूह औपशः, शोभन औपशो यस्याः सा 'स्वौपशा'। हे 'मह' (प्रौढ़े) 'अदिते' देवि,† 'सा' 'सिनीवाली' 'तुभ्यं' (तव) 'हस्तयोः' 'उखां' (मृदम्) 'आ'-'दधातु'।

अथ तृतीयामाह,—"उखां करोतु शक्त्या बाहुभ्यामदितिर्धिया। माता पुत्रं यथोपस्थे साग्निं बिभर्त्तु गर्भ आ(१०)" इति। इयम् 'अदितिः' 'धिया' (बुद्धिकौशलेन), 'बाहुभ्यां' (हस्तकौशलेन), 'शक्त्या' (शरीरबलेन) च इमाम् 'उखां' 'करोतु'। 'यथा' लोके 'माता' स्वकीयं 'पुत्रं' 'उपस्थे' (उत्सङ्गे) बिभर्त्ति, तथा सा अदितिः 'गर्भे' (स्वोत्सङ्गे) तम् 'अग्निं' 'आ' कर्मसमाप्तेः, 'बिभर्त्तु'।

उक्तस्य मन्त्रचतुष्टयस्य तात्पर्य्यं दर्शयति,—"रुद्राः सम्भृत्य पृथिवीमित्याह्येता वा एतं देवता अग्रे समभरं ताभिरेवैनꣳ सम्भरति" (५।१।६ अ०) इति। रुद्राः, वसवः, सिनीवाली, अदितिश्चेत्येतच्छब्दपरामृष्टा देवताः।

कल्पः, 'मखस्य शिरोऽसीति पिण्डं कृत्वा' इति। पाठः,—"मखस्य शिरोऽसि(११)" इति। हे मृत्पिण्ड, त्वं 'मखस्य' (यज्ञस्य) शिरः-स्थानम् 'असि'।

* शिरसा इति J. पु० पाठः।
† भूमिदेवि इति B. एवं J. पु० पाठः।

वर्त्तमानतया 'गर्भः' असि। तथा वाड़ववैद्युतरूपेण 'अपां' 'गर्भः' 'असि'।

एतैर्मन्त्रैः साध्यं प्रवेशनं विधत्ते, "अप्सु भस्म प्रवेशयत्यप्सु-योनिर्वा अग्निः स्वामेवैनं योनिं गमयति" (५।२।१०अ०) इति।

"आपो देवीः" इत्यादिकान् मन्त्रान् विनियुङ्क्ते,—"तिसृभिः प्रवेशयति त्रिवृद्वा अग्निर्यावानेवाग्निस्तं प्रतिष्ठां गमयति"(५।२।१०अ०) इति। आहवनीयादिरूपेणाग्नेस्त्रिवृत्त्वम्।

कल्पः,—'भस्मनोपादाय प्रपीड्य, 'प्रसद्य भस्मना' इति द्वाभ्या-मुखायां प्रत्यवधाय' इति।

तत्र प्रथमामाह,—"प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने। सꣳसृज्य मातृभिस्त्वं ज्योतिष्मान् पुनरासदः(९)" इति। हे 'अग्ने', 'भस्मना' सह 'योनिं' (कारणभूतां) 'पृथिवीं' 'प्रसद्य'। किं पृथिवी-मेव? 'न'-इत्याह,—'अपश्च' योनिभूताः प्रतिपद्य। किंच 'मातृ-भिः' अद्भिः पृथिव्या च 'संसृज्य' (एकीभूय) 'त्वं ज्योतिष्मान्' (भृशं ज्योतिःसम्पन्नः) 'पुनः' (पश्चात्) 'आसदः' (स्वीयमेव स्थान-मुखाम् आसीद)।

अथ द्वितीयामाह,—"पुनरासद्य सदनमपश्च पृथिवीमग्ने। शेषे मातुर्यथोपस्थेऽन्तरस्याꣳ शिवतमः(१०)" इति। हे 'अग्ने', 'पुनः' अपि 'सदनं' (स्वस्थानं) 'अपः' 'पृथिवीं' 'च' 'आसद्य' (प्रतिपद्य) पुनः 'अस्याम्' एवोखायाम् 'अन्तः' (मध्ये) 'शिवतमः' (शान्त-तमः) 'शेषे' (शयनं करोषि)। 'यथा' 'मातुः' 'उपस्थे' (उत्सङ्गे) सुतः सुखं शेते, तद्वत्।

तत्र मखशब्दार्थं दर्शयति,—"मखस्य शिरोऽसीत्याह यज्ञो वै मखस्तस्यै तच्छिरो यदुखा तस्मादेवमाह" (५।१।६ अ०) इति।

कल्पः, 'यज्ञस्य पदे स्थ इति कृष्णाजिनं पुष्करपर्णञ्चाभिमृशति' इति। पाठः,—"यज्ञस्य पदे स्थः[१२]" इति। हे कृष्णाजिनपुष्करपर्णे, युवाम् उभे 'यज्ञस्य' पादरूपे 'स्थः'।

कृष्णाजिनपुष्करपर्णयोर्यज्ञप्राप्तिहेतुत्वाद्यज्ञपदत्वं प्रसिद्धमित्येतद्दर्शयति,—"यज्ञस्य पदे स्थ इत्याह यज्ञस्य ह्येते पदे अथो प्रतिष्ठित्यै" (५।१।६ अ०) इति।

कल्पः, 'वसवस्त्वा कृण्वन्तु गायत्रेण छन्दसेति चतुर्भिर्महीमुखां करोति बह्वभार्यस्याध्वर्युरेकभार्यस्य क्रियमाणामेतैर्यजुर्भिरेव यजमानोऽनुमन्त्रयते' इति। पाठस्तु,—"वसवस्त्वा कृण्वन्तु गायत्रेण छन्दसाऽङ्गिरस्वत् पृथिव्यसि[१३] रुद्रास्त्वा कृण्वन्तु त्रैष्टुभेन छन्दसाऽङ्गिरस्वदन्तरिक्षमसि[१४] आदित्यास्त्वा कृण्वन्तु जागतेन छन्दसाऽङ्गिरस्वद्द्यौरसि[१५] विश्वे त्वा देवा वैश्वानराः कृण्वन्त्वानुष्टुभेन छन्दसाऽङ्गिरस्वद्दिशोऽसि ध्रुवाऽसि धारया मयि प्रजाꣳ रायस्पोषं गौपत्यꣳ सुवीर्यꣳ सजातान् यजमानाय[१६]" इति। हे उखे, वस्वाख्या देवाः सहकारिणा 'गायत्रेण छन्दसा' सह, अङ्गिरस इव त्वां 'कृण्वन्तु' (निष्पादयन्तु)। त्वञ्च पृथिवीरूपा 'असि'। एवमुत्तरेषु त्रिष्वपि योज्यम्। 'वैश्वानराः' (सर्वमनुष्योपकारिणः)। हे उखे, त्वं 'ध्रुवाऽसि' (दृढाऽसि), अतो 'मयि' अध्वर्यौ अन्यस्मिन् वा उखाकर्त्तरि प्रजादिकं 'धारय' (स्थापय,

एतौ मन्त्रौ विनियुङ्क्ते,—"परा वा एषोऽग्निं वपति योऽप्सु भस्म प्रवेशयति ज्योतिष्मतीभ्यामवदधाति ज्योतिरेवास्मिन्दधाति" (५।२।२अ०) इति। 'यो' यजमान उखाग्निमम्बद्धं 'भस्म' 'अप्सु' 'प्रवेशयति', 'एषोऽग्निं' 'परा'-'वपति' (नाशयति)। अतो विनाश-परिहाराय जलगतं भस्म निष्पीड्य ज्योतिष्मच्छब्दोपेताभ्या-मृग्भ्याम् उखायामवदध्यात्। 'त्वं ज्योतिष्मान् पुनरासदः' इत्येवं ज्योतिष्मच्छब्दोपेतत्वम्।

मन्त्रद्वयं प्रशंसति,—"द्वाभ्यां प्रतिष्ठित्यै" (५।२।२अ०) इति।

कल्पः,—'पुनरूर्जा सह रय्येति पुनरुदैति' इति। निष्पीडित-भस्मोपेतायामुखायामग्निं स्थापयतीत्यर्थः।

तत्र प्रथमामाह,—"पुनरूर्जा निवर्त्तस्व पुनरग्न इषाऽऽयुषा। पुनर्नः पाहि विश्वतः(११)" इति। हे 'अग्ने', त्वं 'ऊर्जा' (क्षीरादि-रसेन) सह 'पुनः' 'निवर्त्तस्व' (अत्रागच्छ)। 'इषा' (अन्नेन) 'आ-युषा' सह पुनरागच्छ। 'नः' (अस्मान्) 'पुनः'-पुनः कृतात् 'विश्वतः' (सर्वस्मात्) अपराधात् 'पाहि'।

अथ द्वितीयामाह,—"सह रय्या निवर्त्तस्वाग्ने पिन्वस्व धारया। विश्वप्स्निया विश्वतस्परि(१२)" इति। हे 'अग्ने', 'रय्या' (धनेन) 'सह' 'निवर्त्तस्व'। 'प्सा भक्षणे' इति धातुः, विश्वैः सर्वैः प्सायते भक्ष्यते पीयत इति विश्वप्स्नी; तादृश्या वृष्टिधारया 'विश्वतस्परि' (सर्वेषां तृणगुल्मलतापादपादीनामुपरि) (पिन्वस्व) सिञ्च।

यजमानार्थमपि प्रजादिकं सम्पादय)। ध्रुवासीत्यादिरन्त्यभागः पूर्वेष्वपि त्रिष्वनुषज्यते।

'संसृष्टाम्' इत्याद्यृग्भिः कर्त्रे प्रदानं, 'वसवस्त्वा' इत्यादिभिर्यजुर्भिर्यजमानानुमन्त्रणञ्च क्रमेण विधत्ते,—"प्रान्याभिर्यच्छत्यन्वन्यैर्मन्त्रयते मिथुनत्वाय" (५।१।६ अ०) इति। 'अन्याभिः' 'वसवस्त्वा' इत्यादियजुर्भ्यो विलक्षणाभिर्ऋग्भिः। 'अन्यैः' 'संसृष्टाम्' इत्याद्यृग्भ्यो विलक्षणैः 'वसवस्त्वा' इत्यादियजुर्भिः। ऋचां स्त्रीलिङ्गत्वाद्यजुषाम् अतथात्वान्मिथुनत्वम्।

निर्मातव्याया उखायाः कक्ष्यात्रयं विधत्ते,—"त्र्युद्धिं करोति त्रय इमे लोका एषां लोकानामाप्त्यै" (५।१।६ अ०) इति। 'उद्धिः' ऊर्द्धमवस्थितोऽवयवविशेषः। यथा भाण्डस्योपरि अन्यद्भाण्डं, तस्याप्युपरि पुनरन्यद्भाण्डमिति कक्ष्यात्रयं, तथेयमेकैव उखा कक्ष्यात्रययुक्ता कार्या।

'वसवस्त्वा' इत्यादिभिर्मन्त्रैर्यजमानस्यानुमन्त्रणं पूर्वं विहितम्। इदानीं तैरेव मन्त्रैः कर्तुः कर्मनिष्पादनं विधत्ते,—"छन्दोभिः करोति वीर्यं वै छन्दांसि वीर्येणैवैनां करोति" (५।१।६ अ०) इति। 'छन्दोभिः' छन्दोलिङ्गकैः 'वसवस्त्वा' इत्यादिभिर्मन्त्रैः।

कल्पः,—"अदित्यै रास्नासि(१०)" 'इति रास्नां करोति' इति। रशनासदृशी भाण्डस्य गलगता रेखा 'रास्ना'। हे रेखे, त्वम् 'अदित्यै' (भूमिरूपाया उखायाः) 'रास्ना' (काञ्चीगुणस्थानीया रशना) 'असि'।

मन्त्रद्वयं विनियुङ्क्ते,—"परा वा एष प्रजां पशून् वपति योऽप्सु भस्म प्रवेशयति पुनरूर्जा सह रय्येति पुनरुदैति प्रजामेव पशूनात्मन्धत्ते" (५।२।२अ०) इति। भस्मनोऽप्सु प्रवेशनेन विनाशितायाः प्रजायाः पशूनाञ्च स्वात्मनि स्थापनाय 'पुनरुदैति' (पूर्वमुखाया अपनीतमग्निं पुनरपि निष्पीडितभस्मसहितायाम् उखायां मन्त्रद्वयेन स्थापयेत्)। तत्र मन्त्रद्वयबलात् प्रजायाः पशूनाञ्च स्वात्मनि स्थापनं भवति।

कल्पः,—'पुनस्त्वादित्या रुद्रा वसवः समिन्धतामिति पुनरुख्यमुपसमिन्धे' इति। पाठस्तु,—"पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः। घृतेन त्वं तनुवो वर्द्धयस्व सत्याः सन्तु यजमानस्य कामाः(११)" इति। हे अग्ने, त्वाम् 'आदित्या रुद्रा वसवः' च 'पुनः' 'समिन्धतां' (उपशान्तं पुनः सन्दीपयन्तु)। हे 'वसुनीथ' (वसूनां धनानां नीथ प्रापयितः), 'ब्रह्माणो' (ब्राह्मणाः) ऋत्विजः 'यज्ञैः' निमित्तभूतैस्त्वां 'पुनः' 'समिन्धतां'। 'त्वं' 'घृतेन तुष्टः सन्' 'तनुवः' (अस्मदीय शरीराणि) 'वर्धयस्व', तत्त्वतस्त्वयि तुष्टे सति 'यजमानस्य' 'कामाः' 'सत्याः सन्तु'।

अस्मिन् मन्त्रे रुद्राद्युक्तेस्तात्पर्यं दर्शयति,—"पुनस्त्वादित्या रुद्रा वसवः समिन्धतामित्याहैता वा एतं देवता अग्रे* समैन्धत ताभिरेवैनꣳ समिन्धे" (५।२।२अ०) इति।

---

* अग्र इति J. पु० पाठः।

कल्पः, 'अदितिस्ते बिलं गृह्णात्विति बिलं कृत्वा' इति। पाठस्तु,—"अदितिस्ते बिलं गृह्णातु पाङ्क्तेन छन्दसाऽङ्गिरस्वत्(१८)" इति। हे उखे, 'अदितिः' भूमिः सहकारिणा 'पाङ्क्तेन छन्दसा' सह अङ्गिरस इव 'ते' (तव) 'बिलम्' (अन्तश्छिद्रं) 'गृह्णातु' (करोतु)।

तं मन्त्रं विनियुङ्क्ते,—"यजुषा बिलं करोति व्यावृत्त्यै" (५।१।६अ०) इति। लौकिकस्य हि भाण्डस्यान्तरेणैव यजुः, बिलं क्रियते, अत्र तु 'यजुषा'* इति तद्व्यावृत्तिः।

उखायाः प्रादेशपरिमाणं विधत्ते,—"इयतीं करोति प्रजापतिना यज्ञमुखेन सम्मिताम्" (५।१।६अ०) इति। यज्ञपुरुषस्य मुखस्य ऊर्द्धचुबुकयोर्मध्यवर्त्ती† प्रादेशमात्रं, तच्च प्रजापतिसृष्टत्वात् प्रजापतिस्वरूपं, तेन मुखेन परिमिता भवति; तत्परिमाणं हस्तेन अभिनीय प्रदर्शनार्थम् 'इयतीम्' इत्युच्यते।

अथ विधत्ते,—"द्विस्तनां करोति द्यावापृथिव्योर्दोहाय" (५।१।६अ०) इति। यथा योषितः स्तनौ, एवमस्या उखाया द्वौ स्तनाकारौ मृदा निष्पाद्यौ, तथा सति द्विस्तनत्वात् द्यावापृथिव्योः सारांशदोहनं सम्पद्यते।

पक्षान्तरं विधत्ते,—"चतुस्तनां करोति पशूनां दोहाय" (५।१।६अ०) इति।

पुनरप्यन्यं पक्षं विधत्ते,—"अष्टास्तनां करोति छन्दसां

* समन्त्रकमिति J. पु० पाठः।
† मूर्द्धचिबुकयोर्मध्यवर्त्ति इति पाठो भवितुं युक्तः।

कल्पः,—'बोधा' 'स बोधि' इतिबोधवतीभ्यामुपतिष्ठते' इति। तत्र प्रथमामाह,—"बोधा नो अस्य वचसो यविष्ठ मंहिष्ठस्य प्रभृतस्य स्वधावः। पीयति त्वो अनु त्वो गृणाति वन्दारुस्ते तनुवं वन्दे अग्ने(१४)" इति। हे 'स्वधावः' (स्वधोपलक्षितान्नवन्*), 'यविष्ठ' (युवतम), 'नः' (अस्मदीयस्य) 'वचसः' (स्तुतिरूपस्य) 'बोध' (तात्पर्यं बुध्यस्व)। कीदृशस्य वचसः?-'मंहिष्ठस्य' (अतिशयेनाभिवृद्धिहेतोः), 'प्रभृतस्य' (प्रकृष्टेन आदरेण सम्पादितस्य), 'पीयति त्वः'(ओप्यायी† वृद्धावित्यस्मात् धातोरुत्पन्नः पीयतिशब्दः, 'त्वः'-शब्द ‡ एकशब्दार्थे वर्त्तते), भवदीयस्तुतिकारिणोर्द्वयोर्यजमानयोर्मध्ये 'त्वः' (एकः) स्तोता यजमानः 'पीयति' (वृद्धिमधिकं वक्ति, उचितोक्तिमुल्लङ्घ्य निन्दारूपेणातिप्रशंसारूपेण वा यत्किञ्चिद्वक्ति)। 'त्वो' 'अनु'-'गृणाति',—'त्वः', (एकः) स्तोता अनुकूलम् (उचितमेव) वक्ति; अतोऽस्मदभिप्रायं बुध्यस्वेति प्रार्थ्यते। अतो 'वन्दारुः' (अभिवन्दनपरः) अहं हे 'अग्ने', त्वदीयां तनुवं 'वन्दे'।

अथ द्वितीयामाह,—"स बोधि सूरिर्मघवा वसुदावा वसुपतिः। युयोध्यस्मद्द्वेषांसि(१५)" इति। हे अग्ने,'स' त्वं 'बोधि' (अस्मदभिप्रायं बुध्यस्व)। कीदृशस्त्वं?-'सूरिः' (विद्वान्), 'मघवा'

---

* स्वधोपलक्षितान्नवान् इति J. पु० पाठः।

† ओप्यायो वृद्धावित्यस्मात् इति आदर्शपुस्तकपाठः।
ओप्यायो वृद्धानित्यस्मात् इति J. पु० पाठः।

‡ त्वशब्दः इति पाठो भवितुं युक्तः।

दोहाय" (५।१।६ अ०) इति। अष्टसङ्ख्याकानि छन्दांसि मन्त्रान्तरे समाम्नातानि, 'गायत्री त्रिष्टुप् जगत्यनुष्टुक् पङ्क्त्या सह बृहत्युष्णिहा ककुत्' इति।

अष्टत्वसङ्ख्यासाम्याच्छन्दसा सारदोहनं सम्पद्यते। तदेतत् सर्वं सूत्रकारेण सङ्गृहीतम्,—'अश्रीणाꣳ रास्नायास्य मन्त्रौ द्वौ चतुरः षड़ष्टौ वा स्नानान् करोति' इति।

अधिकारिविशेषेणाश्रिषु सङ्ख्याविशेषं विधत्ते,—"नवाश्रिम् अभिचरतः कुर्यात् त्रिवृतमेव वज्रꣳ सम्भृत्य भ्रातृव्याय प्रहरति स्तृत्यै" (५।१।६ अ०) इति। त्रिवृत्स्तोमस्य नवभिर्ऋग्भिरुपेतत्वादश्रिसङ्ख्यायास्त्रिवृत्त्वं सम्पद्यते। स च त्रिवृत्स्तोमो वैरिविनाशकत्वात् वज्रसमानः। अतो नवसङ्ख्यया भ्रातृव्याय वज्रप्रहरणं सम्पद्यते।

अभिचाराभावे तु अश्रिसङ्ख्यां सूत्रकारो दर्शयति,—'कुर्वꣳस्तस्तोऽश्रीः प्रतिदिशमुन्नयत्यष्टाश्रिर्वा' इति।

कल्पः, 'कृत्वाय सा महीमुखामित्युत्तरतः सिकतासु प्रतिष्ठाप्य' इति। पाठस्तु, "कृत्वाय सा महीमुखां मृण्मयीं योनिमग्नये। तां पुत्रेभ्यः सम्प्रायच्छददितिः श्रपयानिति(१९)" इति। 'सा' इयम् 'अदितिः' 'मृण्मयीं' (मृत्कार्यां) 'अग्नये' 'योनिं' (अग्नेः कारणभूतां) 'महीम्' (महतीम्) 'उखां' 'कृत्वाय' (निष्पाद्य), ततस्ताम् 'उखां' 'पुत्रेभ्यः' (स्वपुत्रसदृशेभ्यः) अपणकारिभ्यः 'सम्प्रायच्छत्' (सम्यक् दत्तवती)। किं कुर्वती?-इति, तदुच्यते— 'श्रपयानिति' (श्रपयन्तु भवन्त इति) ब्रुवती।

(अन्नवान्), 'वसुदावा' (वसुप्रदः), 'वसुपतिः' (धनपतिः) । तादृशस्त्वं 'द्वेषांसि' (शत्रुभिः कृतान् द्वेषान्) 'अस्मत्' 'युयोधि' (अस्माकमपाकुरु) ।

तदेतत् मन्त्रद्वयं विनियुङ्क्ते,—"बोधा, स बोधीत्युपतिष्ठते बोधयत्येवैनं तस्मात् सुप्ता प्रजाः प्रबुध्यन्ते" (५।२।३ब्रा०) इति । 'बोधा' इति मन्त्रेण, 'स बोधि' इति मन्त्रेण च एतमग्निं बोधयत्येव । यस्मादत्र शान्तमग्निं पुनरुद्बोधयति, तस्माल्लोकेऽपि प्रजाः स्वापं प्राप्य पुनः प्रबुध्यन्ते ।

उपस्थानदेशं विनियुङ्क्ते,—"यथास्थानमुपतिष्ठते तस्माद् यथास्थानं पशवः पुनरेत्योपतिष्ठन्ते*" (५।२।३ब्रा०) इति । आहवनीयस्य दक्षिणभागो यजमानस्योपस्थानदेशः, अतोऽत्रापि दक्षिणदेश एव स्थित्वोपतिष्ठते. यस्मादेवं, तस्माल्लोकेऽपि पशवः प्रातःकाले शालाया निर्गत्यारण्ये गत्वा सायं पुनरागत्य स्वं स्वं स्थानमेव सेवन्ते ॥

अत्र विनियोगसङ्ग्रहः,—

अन्ना,-ऽऽदधाति समिधमुद्यच्छेदुद्वाऽनलम् ।
प्रेत्प्रयात्यथ समिधा, गम्यते समिधं क्षिपेत् ॥
राजन्यस्वेत् प्रेतिमन्त्रः, आपो, भस्माप्सु वेशयेत् ।
त्रिभिः, प्रसद्यतु-द्वाभ्यामुखायां स्थापयेदमुम् ॥

---

* पुनरेत्योपतिष्ठते इति J. पु० पाठः ।

2 z

तमेतं मन्त्रं विनियुङ्क्ते,—"कृत्वाय सा महीमुखामिति नि-दधाति देवतास्वेवैनां प्रतिष्ठापयति" (५।१।६अ०) इति। अदितिपुत्राणां देवतारूपत्वाद्देवतासु प्रतिष्ठापनं सम्पद्यते ॥

अत्र विनियोगसङ्ग्रहः,—

वि पा, विस्रंसयेदापास्त्रिभिर्म्दि जलं क्षिपेत्।
मित्र-द्वाभ्यां शर्करादिर्योगो रुद्रेति मक्षिपेत् ॥
संसृ-त्रिभिर्मृत्तिकां तामुखा कर्त्रे प्रयच्छति।
मख-पिण्डकृतिर्यज्ञ-चर्मपर्णाभिमर्शनम् ॥
कुर्यादसु-चतुर्भिस्तां ध्रुवासीत्यनुषज्यते।
अदि, रास्नामदि, बिलं कुर्यात्कृत्वाय, तामुखाम् ॥
सिकतासु स्थापयीत मन्त्रा एकोनविंशतिः।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे प्रथमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

वसवस्त्वा धूपयन्तु गायत्रेण छन्दसाऽङ्गिरस्वत्[१] रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन छन्दसाऽङ्गिरस्वत्[२] आ-दित्यास्त्वा धूपयन्तु जागतेन छन्दसाऽङ्गिरस्वत्[३] विश्वे त्वा देवा वैश्वानरा धूपयन्त्वानुष्टुभेन छन्दसा-ऽङ्गिरस्वत्[४] इन्द्रस्त्वा धूपयत्वङ्गिरस्वत्[५] विष्णुस्त्वा धूपयत्वङ्गिरस्वत्[६] वरुणस्त्वा धूपयत्वङ्गिरस्वत्[७]

पुनर्द्वाभ्यामुदैत्यग्निं, पुनस्त्वेति समिन्धयेत्।
बोध, द्वाभ्यामुपस्थानं मन्त्राः पञ्चदशेरिताः॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे द्वितीयप्रपाठके तृतीयोऽनुवाकः॥ ० ॥

---

अपेत वीत वि च सर्पतातो येऽत्र स्थ पुराणा ये च नूतनाः। अदादिदं यमोऽवसानं पृथिव्या अक्रन्निमं पितरो लोकमस्मै(१)। अग्नेर्भस्मास्यग्नेः पुरीषमसि(२) सञ्ज्ञानमसि कामधरणं मयि ते कामधरणं भूयात्(३)। सं या वः प्रियास्तनुवः सं प्रिया हृदयानि वः। आत्मा वो अस्तु॥ १ ॥

संप्रियः संप्रियास्तनुवो मम(४)। अयꣳ सो अग्निर्यस्मिन्त्सोममिन्द्रः सुतं दधे जठरे वावशानः। सहस्रिय वाजमत्यं न सप्तिꣳ ससवान्त्सन्त्स्तूयसे जातवेदः(५)। अग्ने दिवो अर्णमच्छा जिगास्यच्छा देवाꣳ ऊचिषे धिष्णिया ये। याः परस्ताद्रोचने सूर्यस्य याश्चावस्तादुपतिष्ठन्त आपः(६)। अग्ने यत्ते। दिवि वर्चः पृथिव्यां यदोषधिषु॥ २ ॥

अप्सु वा यजत्र। येनान्तरिक्षमुर्वाततन्थ त्वेषः स

अदितिस्त्वा देवी विश्वदेव्यावती पृथिव्याः सधस्थेऽङ्गिरस्वत् खनत्ववट[८] देवानां त्वा पत्नीः ॥ १ ॥

देवीर्विश्वदेव्यावती पृथिव्याः सधस्थेऽङ्गिरस्वद्दधतूखे[९] धिषणास्त्वा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वदभीन्धतामुखे[१०] ऽग्नास्त्वा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वच्छ्रपयन्तूखे[११] वरूत्रयो जनयस्त्वा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वत् पचन्तूखे[१२।१३]। मित्रैतामुखां पचैषा मा भेदि। एतां ते परि ददाम्यभित्यै[१४]। अभीमां ॥ २ ॥

महिना दिवं मित्रो बभूव सप्रथाः। उत श्रवसा पृथिवीं[१५]। मित्रस्य चर्षणीधृतः श्रवो देवस्य। सानसिं। द्युम्नं चित्रश्रवस्तमं[१६]। देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः। सुबाहुरुत शक्त्या[१७]। अपद्यमाना पृथिव्याशा दिश आ पृण। उत्तिष्ठ बृहती भवोर्ध्वा तिष्ठ ध्रुवा त्वं[१८]। वसवस्त्वाऽऽछृन्दन्तु गायत्रेण छन्दसाऽङ्गिरस्वत्[१९] रुद्रास्त्वाऽऽछृन्दन्तु त्रैष्टुभेन छन्दसाऽङ्गिरस्वत्[२०] आदित्यास्त्वाऽऽछृन्दन्तु जागतेन छन्दसाऽङ्गिरस्वत्[२१] विश्वे त्वा देवा वैश्वानरा आ छृन्दन्त्वानुष्टुभेन छन्दसाऽङ्गिरस्वत्[२२] ॥ ३ ॥

भानुरर्णवो नृचक्षाः(७)। पुरीष्यासो अग्नयः प्रावणेभिः सजोषसः। जुषन्ताꣳ हव्यमाहुतमनमीवा इषो महीः(८)। इडामग्ने पुरुदꣳसꣳ सनिं गोः शश्वत्तमꣳ हवमानाय साध। स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे(९)। अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः। तं जानन्॥ ३॥

अग्न आ रोहाथा नो वर्धया रयिं(१०)। चिदसि तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद(११) परिचिदसि तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद(१२) लोकं पृण छिद्रं पृणाथो सीद शिवा त्वं। इन्द्राग्नी त्वा बृहस्पतिरस्मिन् योनावसीषदन्(१३)। ता अस्य सूददोहसः सोमꣳ श्रीणन्ति पृश्नयः। जन्मन् देवानां विशस्त्रिष्वा रोचने दिवः(१४)॥ ४॥

अस्तु। ओषधिषु। जानन्। अष्टाचत्वारिꣳशच्च॥४॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे द्वितीयप्रपाठके चतुर्थोऽनुवाकः॥ ०॥

तृतीयेऽनुवाके वह्नेरुख्यस्य चयनदेशं प्रति नयनमुक्तम्; अथ चतुर्थे गार्हपत्यचयनमुच्यते। कल्पः, 'अपवृत्ते दीक्षापरिमाणे अपेत वीतेति गार्हपत्यचितेरायतनं व्यायाममात्रं चतुरस्रं

पत्नीः। इमाः। रुद्रास्त्वा छृन्दन्तु। एकान्नविंꣳशतिश्च ॥ ६ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे प्रथमप्रपाठके षष्ठोऽनुवाकः ॥ ० ॥

पञ्चमेऽनुवाके उखानिर्माणमुक्तम्। अथ षष्ठे तत्संस्कारोऽभिधीयते। कल्पः, 'वसवस्त्वा धूपयन्तु गायत्रेण छन्दसेति सप्तभिरश्वशकेनोखां धूपयन्ति' इति। पाठस्तु, "वसवस्त्वा धूपयन्तु गायत्रेण छन्दसाऽङ्गिरस्वत्(१) रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन छन्दसाऽङ्गिरस्वत्(२) आदित्यास्त्वा धूपयन्तु जागतेन छन्दसाऽङ्गिरस्वत्(३) विश्वे त्वा देवा वैश्वानरा धूपयन्त्वानुष्टुभेन छन्दसाऽङ्गिरस्वत्(४) इन्द्रस्त्वा धूपयत्वङ्गिरस्वत्(५) विष्णुस्त्वा धूपयत्वङ्गिरस्वत्(६) वरुणस्त्वा धूपयत्वङ्गिरस्वत्(७)" इति। हे उखे, त्वाम् अष्टौ 'वसवः' सहकारिणा 'गायत्रेण छन्दसा' सह, अङ्गिरस इव 'धूपयन्तु' (अश्वशकजन्येन धूमेन संस्कुर्वन्तु)। एवमुत्तरेष्वपि षट्सु योजनीयम्।

एतान् मन्त्रान् विनियुङ्क्ते,—"सप्तभिर्धूपयति, सप्त वै शीर्षण्याः प्राणाः शिर एतद्यज्ञस्य यदुखा, शीर्षन्नेव यज्ञस्य प्राणान् दधाति तस्मात् सप्त शीर्षन् प्राणाः" (५।१।७अ०) इति। शिरोवर्त्तिषु सप्तसु छिद्रेषु सञ्चरन्तः 'प्राणाः' सप्तसङ्ख्याकाः। उखा च यज्ञशिरःस्थानीया, तस्मात् सप्तभिर्धूपने सति यज्ञस्य

परिमण्डलं बोद्धव्या' इति। पाठस्तु,—"अपेत वीत वि च सर्पतातो येऽत्र स्थ पुराणा ये च नूतनाः। अदादिदं यमोऽवसानं पृथिव्या अक्रन्निमं पितरो लोकमस्मै[१]" इति। यमस्य सर्व-भूम्यधिपतित्वात् तद्भृत्याः पृथिव्यां सर्वत्र वर्त्तन्ते। हे यम-भृत्याः, 'अत्र' (देवयजनस्थाने) पुरातना 'ये' यूयं 'स्थ' 'नूतनाः' 'च' 'ये' यूयं 'स्थ', ते सर्वेऽपि 'अपेत' (अस्मात् स्थानादपगच्छत)। 'वीत' (अत्यन्तं विदूरं गच्छत)। 'वि'-'सर्पत' 'च' 'अतः' (अस्मात् स्थानात् अपेत्य सान्निध्यं परित्यज्य विविधं गच्छत)। 'पृथिव्याः' 'इदम्' 'अवसानं' (स्थानं) 'यमः' अस्मभ्यम् 'अदात्', 'पितरः' च 'अस्मै' (यजमानाय) 'इमं' 'लोकम्' 'अक्रन्' (एतच्चयनस्थानं कृतवन्तः)।

तमेतं मन्त्रं विनियुङ्क्ते,—"यावती वै पृथिवी तस्यै यम आधिपत्यं परीयाय यो वै यमं देवयजनमस्या अनिर्याच्याग्निं चिनुते यमायैनꣳ स चिनुतेऽपेतेत्यध्यवसाययति यममेव देव-यजनमस्यै निर्याच्यात्मनेऽग्निं चिनुते" (५।२।३अ०) इति। सर्वस्याः पृथिव्या आधिपत्ये यमेन प्राप्ते सति 'यः' (यजमानः) 'यमं' प्रति 'अस्याः' (पृथिव्याः सम्बन्धि) 'देवयजनम्' अ-याचित्वा तत्र 'अग्निं' 'चिनुते', तच्चयनं यमार्थमेव भवति, न तु स्वयं तत्फलभाग् भवति। अतः 'यमं' याचितुम् 'अपेत'-इति-मन्त्रेण 'अध्यवसाययति' (देवयजनं निश्चिनुयात्)। अतो याचित-त्वात् स्वार्थमेव तच्चयनं भवति।

तमिमं मन्त्रं प्रशंसति,—"इष्वग्रेण वा अस्या अनामृतमि-

शिरस्येव प्राणानवस्थापयति; यस्मादेवं, 'तस्मात्' प्रतिपूरुषं शिरसि छिद्रभेदेन 'सप्त' 'प्राणा' वर्त्तन्ते ।

धूपसाधनं विधत्ते,—"अश्वशकेन धूपयति प्राजापत्यो वा अश्वः सयोनित्वाय" (५।१।७अ०) इति । अश्वस्य शकृत् अश्वशकः । अश्वस्य प्राजापत्यत्वमसकृदुक्तम्, अग्निरपि प्राजापत्यः, 'प्रजापतिरग्निमचिनुत' इति श्रवणात्; अत उभयोः समानयोनित्वम् ।

कल्पः, 'अदितिस्त्वा देवीत्यग्रेण गार्हपत्यमवटं खात्वा' इति । पाठस्तु,—"अदितिस्त्वा देवी विश्वदेव्यावती पृथिव्या सधस्थेऽङ्गिरस्वत् खनत्ववट(८)" इति । विश्वेषां देवानां योग्या उपचारा 'विश्वे देव्याः',* ते अस्यां सन्तीति 'विश्वदेव्यावती'; तादृशी, इयम् 'अदितिः' 'देवी' 'पृथिव्याः सधस्थ' (भूम्या उपरि) हे 'अवट' त्वाम् अङ्गिरस इव 'खनतु' ।

अस्मिन् मन्त्रे खननकर्तृत्वमदितेरुपपादयति,—"अदितिस्त्वेत्याहेयं वा अदितिरदित्यैवादित्यां खनत्यस्या अक्रूरंकाराय न हि स्वः स्वं हिनस्ति" (१।५।७अ०) इति । 'इयं' भूमिरेवात्र अदितिशब्देन विवचिता, अवटखननं हि भूम्यामेव; ततोऽदितेः खननकर्तृत्वे सति भूमेर्हिंसा न भवति । 'न हि' लोके कश्चिदपि स्वयं स्वात्मानं 'हिनस्ति' । तस्मात् खननलक्षण-क्रूरकार्यकरणाभावाय इदम् अदितिकर्तृत्वं सम्पाद्यते† ।

* विश्वदेव्या इति पाठो भवितुं युक्तः ।
† सम्पद्यते इति B. एवं J. पु० पाठः ।

च्छन्तो नाविन्दन्ते देवा एतद्यजुरपश्यन्नपेतेति यदेतेनाध्यवसाययत्यनाक्रान्त एवाग्निं चिनुते" (५।२।३अ०) इति। म्रतैः प्राणिभिराक्रान्तमाक्रान्तं, तथा न भवतीति 'अनाक्रान्तं', तादृशम् 'अस्याः' (पृथिव्याः सम्बन्धि) स्थानम् 'इच्छन्तः' (अपेक्षमाणाः) 'देवाः' वालाग्रेण परिमितम् ईषदपि 'नाविन्दन्' (नालभन्त), सर्वमपि भूमिस्थानं प्रेतैराक्रान्तमेवेत्यर्थः। यद्यत् स्थानमन्विष्यते तत्र तत्र विचारणायां बहवः प्रेता अतीता भवन्ति। एतदेवाभिप्रेत्यं महाभारते स्मर्यते, "अत्र भीष्मशतं दग्धं द्रोणानाञ्च शतत्रयम्" इति। एवं सति 'देवाः' तत्परिहारोपायं विचार्य 'एतद्यजुः' (यजुर्वेदस्थम्) 'अपेत वीत' इत्येतं मन्त्रम् 'अपश्यन्'। तस्मादनेन मन्त्रेण प्रेतानां निःसारितत्वात् तैरनाक्रान्ते 'एव' स्थाने 'अग्निं चिनुते'।

गार्हपत्यचितिस्थानस्योद्धननं विधत्ते,—"उद्धन्ति यदेवास्या अमेध्यं तदपहन्ति" (५।२।३अ०) इति। 'अस्याः' (पृथिव्याः) उपरि निष्ठीवनादिना यत् स्थानम् 'अमेध्यं' जातं, 'तत्' उद्धननेन विनिवार्यते।

उद्धते प्रदेशे जलेनावोक्षणं विधत्ते,—"अपोऽवोक्षति शान्त्यै" (५।२।३अ०) इति। उद्धननेन निष्पन्ना भूमिः जलेन शान्ता भवति।

कल्पः, 'अग्नेर्भस्मासीति सिकता निवपति' इति। पाठस्तु,— "अग्नेर्भस्मास्यग्नेः पुरीषमसि[१]" इति। हे सिकतास्वरूप, त्वम् 'अग्नेः' 'भस्म' (भासकम्) 'असि'। सिकताधारो हि अग्निर-

कल्पः, 'लोहितपचनीयैः सम्भारैरवकीर्य देवानां त्वा पत्नी-रिति तस्मिन्नुखामवदधाति' इति। पाठस्तु,—"देवानां त्वा पत्नीर्देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वद्दधतूखे(९)" इति। 'विश्वदेव्यावतीः' (समस्तदेवार्होपचारयुक्ताः) या 'देवानां' पत्न्यो देव्यः ताः 'पृथिव्याः' 'सधस्थे' (उपरि) अङ्गिरस इव हे 'उखे' त्वां 'दधतु' (स्थापयन्तु)।

देवपत्नीनाम् उखाकर्तृत्वं पुरातनमित्येतद्दर्शयति,—"देवानां त्वा पत्नीरित्याह देवानां वा एतां पत्नयोऽग्रे कुर्वन्ताभिरेवैनां दधाति" (५।१।७अ०) इति। पुरा देवपत्नीभिरुखायाः कृत-त्वात् इदानीमपि ताभिरेव स्थापिता भवति।

कल्पः, 'लोहितपचनीयैः सम्भारैः प्रच्छाद्य धिषणास्त्वा देवी-रिति चतुर्भिरुखायामग्निमभ्यादधाति' इति। पाठस्तु,—"धिषणा-स्त्वा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वदभीन्धतामुखे(१०) ग्नास्त्वा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वच्छ्रपयन्तूखे(११) वरूत्रयो जनयस्त्वा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वत् पचन्तूखे(१२।१३)" इति। विद्याभिमानिन्यो देवता 'धिषणाः'। हे 'उखे', त्वां ता देवताः 'अभीन्धताम्' (अभितो ज्वालयन्तु)। छन्दोभिमानिन्यो देवता 'ग्नाः'; ताः त्वां 'श्रपयन्तु' (तव पच्य-मानतां सम्पादयन्तु। 'वरूत्रयो जनयः' इति पदभेदेन मन्त्र-भेदः। होतृप्रशास्त्रादिषु सप्तसु होतृकेष्वभिमानिन्यो देवता 'वरूत्रयः'; "सेनेन्द्रस्य" इत्याद्यनुवाकेनोक्ता देवपत्न्यो 'जनयः'। तत्र 'वरूत्रयः' त्वां 'पचन्तु' (तव पक्वतां सम्पादयन्तु)। तथा 'जनयः' त्वां

तितोष्णो भवति, तथा त्वम् 'अग्नेः' अवस्थानाय 'पुरीषमसि' (पांसुरूपमसि)।

एतन्मन्त्रसाध्यं सिकतावापं विधत्ते,—"सिकता निवपत्येतद्वा अग्नेर्वैश्वानरस्य रूपꣳ रूपेणैव वैश्वानरमवरुन्धे" (५।२।३ अ०) इति। आधानप्रकरणे वैश्वानरस्य रूपं, 'पृथिव्यां परिस्रुता' इत्याम्नातत्वात् सिकताशरीरं वैश्वानरस्याग्नेः स्वरूपम्।

कल्पः, 'सञ्ज्ञानमित्यूषान्' इति। निवपतीत्यनुवर्त्तते। पाठस्तु,—"सञ्ज्ञानमसि कामधरणं मयि ते कामधरणं भूयात्[१]" इति। हे ऊषस्वरूप, त्वं 'सञ्ज्ञानं' (पशुसम्बन्धि सम्यक् ज्ञानम्) 'असि'। पशवो हि आघ्राणेन सम्यक् ज्ञात्वा तम् ऊषप्रदेशं लिहन्ति, तथा 'कामधरणम्' 'असि' (यज्ञियांशत्वेन ब्राह्मणे वक्ष्यमाणत्वात् यज्ञद्वारा कामानां धारकमसि)। अतः 'ते' यत्कामधरणसामर्थ्यं, तत् 'मयि' 'भूयात्'।

एतन्मन्त्रसाध्यमूषनिवपनं विधत्ते,—"ऊषां निवपति पुष्टिर्वा एषा प्रजननं यदूषाः पुष्ट्यामेव प्रजननेऽग्निं चिनुतेऽथो सञ्ज्ञान एव सञ्ज्ञानꣳ ह्येतत् पशूनां यदूषाः" (५।२।३ अ०) इति। पुष्टिहेतुत्वं प्रजोत्पत्तिहेतुत्वञ्च ऊषाणां यज्ञद्वारा द्रष्टव्यम्। तस्मादूषनिवापे सति पुष्टिहेतौ प्रजननहेतौ च देशेऽग्निस्थितो भवति। किञ्च सञ्ज्ञानहेतावेव देशे अग्निस्थितो भवति। ऊषाणां पशुज्ञानहेतुत्वं लोके प्रसिद्धं; पशवो हि ऊषरप्रदेशं ज्ञात्वा तत्रत्यं लवणोदकमेव पातुं गच्छन्ति, (पीत्वा च पुष्टिं प्राप्नुवन्ति। अतः सञ्ज्ञानत्वं पुष्टिहेतुत्वञ्च। यदुक्तं सूत्रकारेण,

'पचन्तु' (पक्वत्वपरीक्षां कुर्वन्तु)। 'वरूत्रयः' इति मन्त्रे 'त्वा देवीः' इत्याद्युत्तरभागोऽनुषज्यते।

एतेषु मन्त्रेषु धिषणादिशब्दानामस्मदुक्तार्थपरतां दर्शयति, धिषणास्त्वेत्याह विद्या वै धिषणा विद्याभिरेवैनामभीन्धेऽग्नास्त्वेत्याह छन्दाꣳसि वैऽग्नाश्छन्दोभिरेवैनाꣳ श्रपयति वरूत्रयस्त्वेत्याह होत्रा वै वरूत्रयो होत्राभिरेवैनां पचति जनयस्त्वेत्याह देवानां वै पत्नीर्जनयस्ताभिरेवैनां पचति" (५।१।७अ०) इति। स्पष्टोऽर्थः।

अदितिस्त्वा देवीत्यादीनामुक्तानां मन्त्राणां सङ्ख्यां प्रशंसति,— "षड्भिः पचति षड्वा ऋतव ऋतुभिरेवैनां पचति"(५।१।७अ०) इति। अवटखननादीनामपि पाकाङ्गत्वेन 'षड्भिः पचति' इत्युच्यते।

'वरूत्रयो जनयः' इत्यनयोः स्वाभिप्रेतं मन्त्रभेदं दर्शयितुं 'पचन्तु' इति मन्त्रभागस्यानुषङ्गरूपामावृत्तिं दर्शयति,—"द्विः पचन्त्वित्याह तस्मात् द्विः संवत्सरस्य सस्यं पच्यते" (५।१।७अ०) इति। वरूत्रयः पचन्तु, जनयः पचन्त्वित्येवं द्विः प्रयोगः।

कल्पः, 'मित्रैतामुखां पचेति पच्यमानां तिसृभिर्मन्त्रोभिरुपचरन्ति' इति। तत्र प्रथमामाह,—"मित्रैतामुखां पचैषा मा भेदि। एतां ते परि ददाम्यभित्त्यै[१४]" इति। हे 'मित्र' (सर्वप्राणिहितकारिन्) देव, त्वम् 'एताम्' 'उखां' 'पच' (पक्वां कुरु)। 'एषा' च उखा 'मा भेदि' (भिन्ना मा भवतु)। 'एताम्' (उखाम्) 'अभित्त्यै' (भेदाभावाय) 'ते' (तुभ्यं) 'परि ददामि' (परित्राणाय ददामि)।

'तान्निवपन् यददश्चन्द्रमसि कृष्णं तदिहास्त्विति मनसा ध्यायति' इति ।

तदेतद्विधत्ते,—"द्यावापृथिवी सहास्तां ते वियती अब्रूता-मस्त्वेव नौ सह यज्ञियमिति यदमुष्या यज्ञियमासीत् तदस्या-मदधात्त ऊषा अभवन् यदस्या यज्ञियमासीत् तदमुष्यामदधात् तददश्चन्द्रमसि कृष्णमूषान्निवपन्नदो ध्यायेद् द्यावापृथिव्योरेव यज्ञियेऽग्निं चिनुते" (५।२।३अ०) इति । पुरा सृष्टिकाले प्रजापतिना सृष्टे द्यावापृथिव्यौ जतुकाष्ठवत् संसृष्टे तिष्ठतः, ते यदा प्रजापतेरनुज्ञया वियुज्येते, तदानीं परस्परानुरागेण एवं भागं कृतवत्यौ, 'नौ' (आवयोः) 'यद्' यज्ञयोग्यं सारं, 'तत्' 'सह' 'एव' 'अस्तु' इति । ततः 'अमुष्याः' (दिवः)* 'यत्' यज्ञयोग्यं सारम् 'आसीत्', 'तत्' 'अस्यां' (पृथिव्यां) सा द्यौः स्थापितवती । तच्च द्युसारभूतं भूमाविदानीं दृश्यमानाः 'ते' (प्रसिद्धाः) 'ऊषाः' आसन् । 'यत्' च 'अस्याः' (पृथिव्याः) यज्ञ-योग्यं सारम् 'आसीत्', 'तत्' (सारम्) 'अमुष्यां' (दिवि) सा पृथिवी स्थापितवती । 'तत्' स्थापितं 'अदः' 'चन्द्रमसि' दृश्यमानं 'कृष्णं' रूपम् अभूत् । अत उभयोः सारयोरेकीभावाय 'ऊषान्' 'निवपन्' 'अदः' चन्द्रमसि कृष्णरूपं 'ध्यायेत्', तेन ध्यातेन 'द्यावापृथिव्योः' सम्बन्धिनि यज्ञयोग्ये सारे अग्निं चितवान् भवति ।

कल्पः, 'मं या वः प्रियास्तनुव इत्यूषान् सिकतासु संसृज्य'

* दिवि इति आदर्शपुस्तकपाठः ।

अथ द्वितीयामाह,—"अभीमां महिना दिवं मित्रो बभूव सप्रथाः। उत श्रवसा पृथिवीम्[१५]" इति। 'मित्रः' 'इमाम्' (उखाम्) 'अभि'-'बभूव' (अभितः प्राप्तवान्)। कीदृशो मित्रः?—'सप्रथाः' (सविस्तारः, प्रचुरकीर्त्तिरित्यर्थः)। कीदृशीमिमां?—'महिना दिवं' (महिम्ना द्युलोकसदृशीं 'उत' (अपि च) 'श्रवसा पृथिवीं' (श्रवणेन पृथिवीसदृशीम्)।

अथ तृतीयामाह,—"मित्रस्य चर्षणीधृतः श्रवो देवस्य। सानसिं। द्युम्नं चित्रश्रवस्तमम्[१६]" इति। 'चर्षणीधृतः' (मनुष्याणां धारयितुः' 'मित्रस्य' 'देवस्य' 'श्रवः' (श्रोतुं योग्यं यशो मदुदस्तीति शेषः), 'सानसिं' (फलदानशीलं), 'द्युम्नं' (द्रविणप्रदं), 'चित्रश्रवस्तमं' (चित्रं श्रवः कीर्त्तिर्यस्यासौ चित्रश्रवाः, अतिशयेन तादृशः, तम्) एतादृशमुखारूपं स मित्रः पचत्विति शेषः।

देवतान्तरपरित्यागेन मित्रदेवताकमन्त्रस्वीकारे कारणं दर्शयति,—"वारुण्युखाऽभीद्धा मैत्रियोपैति शान्त्यै" (५।१।७अ०) इति। 'अभीद्धा' (प्रज्वलिता) या इयम् 'उखा', सेयं दुस्पर्शाद् 'वारुणी', तस्या मैत्र्या ऋचा शान्तिर्भवति।

कल्पः, 'पक्वां देवस्त्वा सवितोद्वपत्वित्युद्वास्य' इति। पाठस्तु,—"देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः। सुबाहुरुत शक्त्या[१७]" इति। हे उखे, 'सविता' 'देवः' त्वां स्वकीयया 'शक्त्या' 'उद्वपतु' (अवटादूर्ध्वमानयतु)। कीदृशः सविता?—'सुपाणिः' (शोभनौ पाणी यस्यासौ) 'सुपाणिः', (शोभनाः अङ्गुलयो यस्यासौ) 'स्वङ्गुरिः', छान्दसो रेफः। 'उत' (अपि च) (शोभनौ बाहू यस्यासौ)

इति। पाठस्तु,—"सं या वः प्रियास्तनुवः सम्प्रिया हृदयानि वः। आत्मा वो अस्तु सम्प्रियः सम्प्रियास्तनुवो मम[४]" इति। हे सिकताः, ऊषाः, 'वः', (युष्माकं) 'याः', 'प्रियास्तनुवः' ताः परस्परं 'सं'-सृज्यन्तां। 'वः' (युष्माकं) 'प्रियाः' (प्रियाणि) 'हृदयानि' अपि 'सं'-सृज्यन्तां। तथा 'वः' (युष्माकं) 'आत्मा' अपि 'सम्प्रियः' 'अस्तु'। अपि च 'मम' अपि 'तनुवः' 'सम्प्रियाः' सन्तु।

कल्पः, 'अयꣳ सो अग्निरिति चतस्रो मध्ये प्राचीरिष्टका गार्हपत्यचितावुपदधाति' इति। 'अयꣳ सो अग्निः' इत्येतस्मिन् सूक्ते प्रथमामाह,—"अयꣳ सो अग्निर्यस्मिन् सोममिन्द्रः सुतं दधे जठरे वावशानः। सहस्रियं वाजमत्यन्न सप्तिꣳ ससवान् सन्त्स्तूयसे जातवेदः[५]" इति। 'यस्मिन्' गार्हपत्यचितिरूपेऽग्नौ 'वावशानः' (कामयमानः) 'इन्द्रः' 'सुतं' 'सोमम्' (अभिषुतं) 'जठरे' 'दधे' (स्वोदरे धारयति), 'स' (तादृशः) 'अयम्' 'अग्निः' इदानीम् इष्टकाभिश्चीयते इति शेषः। हे 'जातवेदः', 'अत्यं' 'सप्तिं' 'न' (सत्वर-गमनकुशलमश्वमिव) 'सहस्रियं' (सहस्रसङ्ख्याकेन धनेन सम्मितं) 'वाजम्' (अन्नं) 'ससवान्' (दत्तवान्) 'सन्' यजमानैः 'स्तूयसे'।

अथ द्वितीयामाह,—"अग्ने दिवो अर्णमच्छा जिगास्यच्छा देवाꣳ ऊचिषे धिष्णिया ये। याः परस्ताद्रोचने सूर्यस्य याश्चावस्तादुपतिष्ठन्त* आपः[६]" इति। हे इष्टकारूप 'अग्ने', 'दिवः' (सकाशात्) 'अर्णम्' (उदकम्) 'अच्छ' (आभिमुख्येन) 'जिगासि'

---

* याश्चाधस्तादुपतिष्ठन्त इति क्वचित् पाठः।

'सुबाहुः'। मणिबन्धस्योभयतोऽवस्थितौ* भागौ पाणिशब्देन च उच्येते।

अस्मिन् मन्त्रे सवितृशब्दतात्पर्यं दर्शयति,—"देवस्त्वा सवितोद्वपत्वित्याह सवितृप्रसूत एवैनां ब्रह्मणा देवताभिरुद्वपति" (५।१।७अ०) इति। सवित्रा प्रेरितः सन् 'एनां' 'ब्रह्मणा' (मन्त्रेण) 'देवताभिः' च सहोद्वपनं कृतवान् भवति।

कल्पः, 'अपद्यमाना पृथिव्याशा दिश आ पृणेत्युत्तरतः सिकतासु प्रतिष्ठाप्य' इति। पाठस्तु, "अपद्यमाना पृथिव्याशा दिश आ-पृण। उत्तिष्ठ बृहती भवोर्द्ध्वा तिष्ठ ध्रुवा त्वम्(१८)" इति। हे उखे, 'पृथिवि' (पृथिव्यां, भूमौ) 'अपद्यमाना' (भङ्गमप्राप्नुवती) 'त्वं', 'आशाः' (प्राच्याद्या दिशो मुख्याः), 'दिशः' (आग्नेय्याद्या विदिशः) च 'आ-पृण' (सर्वतः पूरय, सर्वत्र प्रसिद्धा भव)। 'उत्तिष्ठ' (अवटाद्बहिरागत्य उत्थिता भव), उत्थाय च 'बृहती' (प्रौढा) 'भव'। तादृशी त्वं, 'ऊर्द्ध्वा' सती 'ध्रुवा' (स्थिरा) 'भव', 'ऊर्द्ध्वा' (ऊर्द्ध्वमुखी) स्थिरा 'तिष्ठ'।

अस्य मन्त्रस्य यद्दिशामापूरणमुक्तं, सेयमग्नेः प्रभवाया व्याप्तिः† इत्येतत्तात्पर्यं दर्शयति,—"अपद्यमाना पृथिव्याशा दिश आ-पृणेत्याह तस्मादग्निः सर्वा दिशोऽनु विभाति" (५।१।७अ०) इति। यस्मादुखायाः सर्वदिक्पूर्त्तिः प्रार्थ्यते, 'तस्मात्' उखया सिश्रितः 'अग्निः' स्वतेजसा 'सर्वा दिशः' प्रकाशयति।

'ऊर्द्ध्वा तिष्ठ' इत्यस्य तात्पर्यं दर्शयति,—"उत्तिष्ठ बृहती भव

---

* मणिबन्धस्योभयतोऽवस्थितौ इति J. पु० पाठः।

† प्रभया व्याप्तिः इति पाठो भवितुं युक्तः।

(प्राप्नोषि), यागद्वारेण पुष्टिं सम्पादयसीत्यर्थः। 'ये' देवाः 'धिष्णियाः' (धिष्णियाधाराः) तान् देवान् 'अच्छ' (आभिमुख्येन) 'ऊचिषे' (हविः स्वीकुरुतेति ब्रूषे), त्वयि अत्रोपहिते त्वया समाहूता इव देवा आगत्य हविः स्वीकरिष्यन्तीत्यर्थः। 'सूर्यस्य' 'रोचने' (दीप्तिरूपे) च स्थले सन्ति 'याः' 'आपः', 'परस्तात्' (ऊर्द्ध्वदिशि) 'उपतिष्ठन्ते'; 'याश्चावस्तात्' (अधोभागे) वर्त्तन्ते, ताः सर्वाः त्वयि उपहिते इहागमिष्यन्तीति शेषः।

अथ तृतीयामाह,—"अग्ने यत्ते दिवि वर्चः पृथिव्यां यदोषधीष्वप्सु वा यजत्र। येनान्तरिक्षमुर्वाततन्थ त्वेषः स भानुरर्णवो नृचक्षाः[७]" इति। हे 'यजत्र' (यागनिष्पादक) 'अग्ने', 'ते' (तव) 'यत्' 'वर्चः' 'दिवि' सूर्यरूपेण वर्त्तते, 'पृथिव्यां' वह्निज्वालारूपेण वर्त्तते। तथा 'यत्' तेज 'ओषधीषु' तत्फलपरिपाककालाकारेण वर्त्तते। 'अप्सु' वड़वानलरूपेण वर्त्तते। 'येन' त्वदीयेन वर्चसा विद्युद्रूपेण 'उरु' (विस्तीर्णम्) 'अन्तरिक्षम्' 'आततन्थ' (सर्वतो विस्तारितवानसि) प्रकाशितवानित्यर्थः। 'त्वेषः' (दीप्तिमान् सर्वदीपवर्चःसमूहः*) 'भानुः' (भासकः), 'अर्णवः' (समुद्ररूपविस्तीर्णः), 'नृचक्षाः' (मनुष्यान् प्रख्यापयिता)। तथाविधतेजोरूपामिष्टकामुपदधामीति शेषः।

अथ चतुर्थीमाह,—"पुरीष्यासो अग्नयः प्रावणेभिः सजोषसः। जुषन्ताꣳ हव्यमाहुतमनमीवा इषो महीः[८]" इति।

---

* अत्र समूहति विसर्गशून्य एव सर्व्वत्र पाठो नास्मभ्यं रोचते।

ऊर्द्ध्वा तिष्ठ ध्रुवा त्वमित्याह प्रतिष्ठित्यै" (५।१।७अ०) इति।

कल्पः, 'वसवस्त्वाऽऽकृन्दन्तु गायत्रेण छन्दसेति चतुर्भिरजाक्षीरेणोखामाकृणत्ति' इति। पाठस्तु,—"वसवस्त्वाऽऽकृन्दन्तु गायत्रेण छन्दसाऽङ्गिरस्वत्[१९] रुद्रास्त्वाऽऽकृन्दन्तु त्रैष्टुभेन छन्दसाऽङ्गिरस्वत्[२०] आदित्यास्त्वाऽऽकृन्दन्तु जागतेन छन्दसाऽङ्गिरस्वत्[२१] विश्वे त्वा देवा वैश्वानरा आ-कृन्दन्त्वानुष्टुभेन छन्दसाऽङ्गिरस्वत्[२२]" इति। हे उखे, वसुनामका देवाः, अङ्गिरस इव त्वां सिञ्चन्तु। एवमुत्तरत्रापि योज्यम्।

एतैर्मन्त्रैः साध्यं सेचनं विधत्ते,—"असुर्यं पात्रमनाकृणमाकृणत्ति देवत्राऽकः" (५।१।७अ०) इति। यज्ञसाधनं पात्रमग्निदग्धं सत् द्रवद्रव्येण यदि न सिक्तं भवति, तदानीमसुरयोग्यं भवेत्, तत्परिहाराय आसिञ्चेत्। सिक्तं पात्रं 'देवत्रा' (देवेषु) 'अकः' (करोति) देवयोग्यं भवतीत्यर्थः।

सेचनसाधनं विधत्ते,—"अजक्षीरेणाकृणत्ति परमं वा एतत् पयो यदजक्षीरं परमेणैवैनां पयसाऽऽकृणत्ति" (५।१।७अ०) इति। लोके अजक्षीरस्य सर्वव्याधिपरिहारहेतुत्वात्, वेदेऽपि "आग्नेयी वा एषा यदजा" इत्युक्तत्वात् परमत्वम्। लोके दग्धस्य पात्रस्य सेचनमन्तरेणैव सेवनं कुर्वन्ति। अतस्तद्व्यावृत्त्यर्थमिह मन्त्रेण सेचनं विधत्ते,—"यजुषा व्यावृत्त्यै" (५।१।७अ०) इति।

सामान्येन मन्त्रं विधाय विशेषेण छन्दोलिङ्गकान् मन्त्रान् विधत्ते,—"छन्दोभिराकृणत्ति छन्दोभिर्वा एषा क्रियते छन्दोभिरेव छन्दाᳪंस्याकृणत्ति" (५।१।७अ०) इति। पूर्वं (५अ०) 'वसवस्त्वा

एते 'अग्नयः' इष्टकारूपाः 'आहुतं' 'हव्यं' 'जुषन्ताम्'। कीदृशा अग्नयः?—(पुरीषे पांसुरूपे भवाः) 'पुरीष्यासः', 'प्रावणेभिः' (प्रकर्षेण सम्भजनशीलैर्मनोभिः)। 'सजोषसः' (परस्परं समानप्रीतयः) 'अनमीवाः' (रोगरहिताः), 'इषः' (अभीष्टप्राप्तिहेतवः), 'महीः' (प्रौढाः), तथाविधाग्निरूपाम् इष्टकामुपदधामीति शेषः।

कल्पः, 'इडामग्नेऽयं ते योनिर्ऋत्विय इति द्वे पुरस्तात्समीचो' इति। उपदधातीत्यनुवर्त्तते। तत्र प्रथमामाह,—"इडामग्ने पुरुदꣳसꣳ सनिं गोः शश्वत्तमꣳ हवमानाय साध। स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे[९]" इति। हे 'अग्ने', 'हवमानाय' (होतुं प्रवृत्ताय) यजमानाय 'गोः' 'सनिं' (गवादिपशूनां दातारं) 'साध' (सम्पादय)। कीदृशं सनिं?—'इडां' (सर्वैरीड्यां प्रशंसनीयं), 'पुरुदंसं' (बहुधा दर्शनीयं), 'शश्वत्तमं' (अत्यन्तमविच्छेदेन वर्त्तमानं)। किञ्च त्वत्प्रसादात् 'नः' (अस्माकं) 'सूनुः' 'स्यात्' (पुत्रोऽस्तु)। कीदृशः?—तनयः, औरस इत्यर्थः। पुत्रसामान्यस्य 'सूनु'-शब्देनोक्तत्वात् दत्तपुत्रादिव्यावृत्तये विशेषवाची तनयशब्दः प्रयुज्यते, 'विजावा' (विविधानां जनयिता)। हे 'अग्ने', 'ते' (तव) 'सा' 'सुमतिः' (तथाविधानुग्रहबुद्धिः) 'अस्मे' 'भूतु' (अस्मासु भवतु)।

अथ द्वितीयामाह,—"अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः। तं जानन्नग्न आरोहाथा नो वर्द्धया रयिम्[१०]" इति। हे 'अग्ने', 'अयम्' (इष्टकारूपः पदार्थः) 'ते' (तव) 'योनिः' (उत्पत्तिहेतुः) 'ऋत्वियः' (ऋतुकालीनः स्त्रीपुरुष-

कृण्वन्तु गायत्रेण छन्दसा' इति छन्दोलिङ्गकैर्मन्त्रैः 'एषा क्रियते', अत इयं छन्दोरूपा; तस्मादुखारूपाणि छन्दांसि, मन्त्ररूपैः 'छन्दोभिरेव* सिक्तानि भवन्ति।

अत्र विनियोगसङ्ग्रहः,—

वसवः सप्तभिर्धूपोऽदितिस्त्वेत्यवटं खनेत्।
देवीस्त्वां तत्र संस्थाप्य, धिषणेतिचतुष्टयात्॥
अग्निं क्षिपेन्मन्त्रभेदो वरू-जन-पदद्वयात्।
मित्रत्रयेणोपचारो देव, उद्वासयेदुखाम्॥
अपेति सिकतास्त्वेतां निधाय, वसवेत्यतः।
चतुष्टयादजाक्षीरं सिञ्चेद् द्वाविंशतिर्मताः॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्ण-यजुःसंहिताभाष्ये चतुर्थकाण्डे प्रथमप्रपाठके षष्ठोऽनुवाकः॥७॥

---

समा॑स्त्वाग्न ऋ॒तवो॑ वर्द्धयन्तु संवत्स॒रा ऋष॑यो॒ यानि॑ स॒त्या। सं दि॒व्येन॑ दीदिहि रोच॒नेन॒ विश्वा॒ आ भा॑हि प्र॒दिशः॑ पृथि॒व्याः[१]। सञ्चे॒ध्यस्वा॑ग्ने॒ प्र च॑ वोधयैनमु॒च्च॑ तिष्ठ मह॒ते सौभ॑गाय। मा च॑ रिषदुप-स॒त्ता ते॑ अग्ने ब्र॒ह्माण॑स्ते य॒शसः॑ सन्तु॒ मान्ये[२]। त्वा-म॑ग्ने वृणते ब्राह्म॒णा इ॒मे शि॒वो अ॑ग्ने॒॥ १॥

सं॒ वर॑णे भवा नः। स॒प॒त्न॒हा नो॑ अभिमाति॒जिच्च॒ स्वे गये॑ जागृ॒ह्यप्रयुच्छन्[३]। इ॒हैवाग्ने॒ अधि॑ धारया

* छन्दोभिरय। इति आदर्शपुस्तकपाठः। न सम्यक्।

सङ्गमतुल्यः) इति,'यतः' (योनेः) 'जातः' (यत इष्टकारूपादुत्पन्नः) त्वम् 'अरोचथाः' (दीप्तिमानसि)। हे 'अग्ने', 'तं' (तथाविधमिष्टकारूपयोनिं) 'जानन्' (जायमानः) सन् 'आरोह' (प्राप्नुहि)। 'अथ' 'नः' (अस्माकं) 'रयिं' (धनं) 'वर्द्धय'।

कल्पः, 'एवं पश्चाच्चिदसि परिचिदसि इति समीची तिरश्ची वा द्वे' इति। उपदधातीत्यनुवर्त्तते। प्रथममन्त्रपाठस्तु,—"चिदसि तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद(११)" इति। भोगान् चिनोति सम्पादयतीति 'चित्'। हे इष्टके, त्वं 'चिदसि'। यया देवतया त्वमभिमन्यते*, 'तया' 'देवतया' अनुगृहीतस्त्वं 'ध्रुवा' (स्थिरा भूत्वा) 'सीद' (अवतिष्ठ)। तत्र दृष्टान्तः,—'अङ्गिरस्वत्' (अङ्गिरो निरुपहितेष्टका यथा ध्रुवा भवति तद्वत्)।

द्वितीयमन्त्रपाठस्तु,—"परिचिदसि तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद(१२)" इति। 'परि' भोगांश्चिनोति सम्पादयतीति 'परिचित्'। शेषं पूर्ववत्। 'तया देवतया' इत्यादिवाक्यं पूर्वेष्वप्युपधानमन्त्रेषु प्रयोक्तव्यं। तथा च सूत्रकारेणोक्तं, 'तया देवतया अन्ततो दधाति' इति॥ उक्तेषूपधानमन्त्रेषु, 'अयꣳ सो अग्निः' इत्यारभ्य 'अथा नो वर्द्धया रयिम्' इत्येतदन्तं षडृचमेकं सूक्तम्।

तदिदं प्रशंसति,—"अयꣳ सो अग्निरिति विश्वामित्रस्य सूक्तं भवत्येतेन वै विश्वामित्रोऽग्नेः प्रियं धामावारुन्धाग्नेरेवैतेन प्रियं धामावरुन्धे" (५।२।३ अ०) इति।

---

* अभिमन्यसे इति पाठो भवितुं युक्तः।

रयिं मा त्वा निक्रन् पूर्वचितो नि कारिणः। क्षत्र-
मग्ने सुयममस्तु तुभ्यमुपसत्ता वर्द्धतां ते अनिष्टृतः(४)।
क्षत्रेणाग्ने स्वायुः सꣳ रभस्व मित्रेणाग्ने मित्रधेये यत-
स्व। सजातानां मध्यमस्था एधि राज्ञामग्ने विहव्यो
दीदिहीह(५)। अति॥ २॥

निहो अतिस्त्रिधोत्यचित्तिमत्यरातिमग्ने। विश्वा
ह्यग्ने दुरिता सहस्वाथास्मभ्यꣳ सहवीराꣳ रयिं
दाः(६)। अनाधृष्यो जातवेदा अनिष्टृतो विराडग्ने
क्षत्रभृद्दीदिहीह। विश्वा आशाः प्रमुञ्चन्मानुषी-
र्भियः शिवाभिरद्य परि पाहि नो वृधे(७)। बृहस्पते
सवितर्बोधयैनꣳ सꣳशितं चित्सन्तराꣳ सꣳशिशाधि।
वर्द्धयैनं महते सौभगाय॥ ३॥

विश्व एनमनुमदन्तु देवाः(८)। अमुत्रभूयादध
यद्यमस्य बृहस्पते अभिशस्तेरमुञ्चः। प्रत्यौहतामश्विना मृत्युमस्माद्देवानामग्ने भिषजा शचीभिः(९)।
उद्वयं तमसस्परि पश्यन्तो ज्योतिरुत्तरं। देवं देवत्रा
सूर्यमगन्म ज्योतिरुत्तमम्(१०)॥ ४॥

इमे शिवो अग्ने। अति। सौभगाय। चतुस्त्रिꣳ-
शच्च॥ ७॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे प्रथम-
प्रपाठके सप्तमोऽनुवाकः॥ ७॥

तस्मिन् सूक्ते चतसृभिराद्याभिर्ऋग्भिः साध्यमिष्टकोपधानं विधत्ते,—"छन्दोभिर्वै देवाः सुवर्गं लोकमायन् चतस्रः प्राचीरुपदधाति चत्वारि छन्दाꣳसि छन्दोभिरेव तद्यजमानः सुवर्गं लोकमेति" (५।२।३अ०) इति। छन्दोयुक्ताभिश्चतसृभिर्ऋग्भिरुपधायेत्यध्याहारः। देववद् यजमानोऽपि छन्दोयुक्ताभिर्ऋग्भिश्चतस्र इष्टकाः प्रागग्रा उपदध्यात्।

अथ सूक्तगताभ्यां पञ्चम-षष्ठ-मन्त्राभ्यामुपरितनयजुर्भ्यां च साध्यमिष्टकोपधानं विधत्ते,—"तेषां सुवर्गं लोकं यतां दिशः समव्लीयन्त ते द्वे पुरस्तात् समीची उपादधत द्वे पश्चात् समीची ताभिर्वै ते दिशो दृꣳहन् यद् द्वे पुरस्तात् समीची उपदधाति द्वे पश्चात् समीची दिशां विधृत्यै" (५।२।३अ०) इति। यदा चतस्र इष्टका उपधाय 'ते' (देवाः)-स्वर्गं 'लोकं' गच्छन्ति, तदा 'तेषां' सम्बन्धिन्यो 'दिशः' पालकाभावात् 'समव्लीयन्त' (सम्यक् विशीर्णा अभवन्), दिग्वर्त्तिन्यः प्रजाः विह्वला अभवन्नित्यर्थः; तन्मा भूदिति देवाः 'पुरस्तात्' दिशि ऋग्भ्यां 'द्वे' इष्टके,'पश्चात्' च यजुर्भ्यां 'द्वे' इष्टके 'उपादधत'। 'ताभिः' चतसृभिरिष्टकाभिः 'ते' (देवाः) 'दिशः' 'दृꣳहन्' (दृढीकृतवन्तः)। तथा यजमानोऽप्युपदध्यात्।

अथ पूर्वमुपहिताश्चतस्रश्च इदानीमुपहिताश्चतस्रश्च मिलित्वा पुनः प्रशंसति,—"अथो पशवो वै छन्दाꣳसि पशूनेवास्मै समीचो दधात्यष्टावुपदधात्यष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानेवाग्निस्तं चिनुतेऽष्टावुपदधात्यष्टाक्षरा गायत्री गायत्री सुवर्गं लोकमञ्जसा

वेद सुवर्गस्य लोकस्य प्रज्ञात्यै" (५।२।३अ०) इति। दिशां विधारणायोपधानं पूर्वमुक्तम्, अपि च छन्दसां पशुप्राप्तिहेतुत्वेन पशुरूपत्वाच्छन्दोयुक्ताभिर्ऋग्भिरुपधानेन 'समीचः' 'पशून्' सम्पादयति। उपरितनाभ्यां द्वाभ्यां सह अष्टत्वेन गायत्रीसाम्यं। मुखजत्वेन गायत्रीसम्बद्धः 'अग्निर्यावान्' अस्ति, 'तं' सर्वं 'चिनुते'। किञ्च गायत्र्याः स्वर्गलोकाभिज्ञत्वात् तत्साम्यं स्वर्गाभिज्ञानाय सम्पद्यते।

कल्पः, 'अवशिष्टं त्रयोदशभिर्लोकं पृणाभिः प्रच्छादयति लोकं-पृण ता अस्य सूददोहस इति द्वाभ्यां-द्वाभ्यां मन्त्राभ्यामेकैकां लोकं-पृणामुपदधाति' इति। तत्र प्रथमामाह,—"लोकं पृण छिद्रं पृणाथो सीद शिवा त्वं। इन्द्राग्नी त्वा बृहस्पतिरस्मिन् योनावसीषदन्(१३)" इति। हे इष्टके, 'लोकं' (गार्हपत्यचयनार्थे देशे पूर्वोक्ताभिरिष्टकाभिरनाक्रान्तमवशिष्टं स्थानं) 'पृण' (पूरय); तथा 'छिद्रं' 'पृण' (द्वयोरिष्टकयोर्मध्ये किञ्चिदपि छिद्रं यथा न दृश्यते, तथा 'पृण' (पूरय) अत्यन्तं श्लिष्टा भवेत्यर्थः। 'अथो' (अपि च) 'त्वं' 'शिवा' (शान्ता) सती 'सीद' (तिष्ठ)। 'इन्द्राग्नी' 'बृहस्पतिः' चेत्येते देवा 'अस्मिन्' 'योनौ' (स्थाने) त्वां 'असीषदन्' (सादितवन्तः)।

अथ द्वितीयामाह,—"ता अस्य सूददोहसः सोमं श्रीणन्ति पृश्नयः। जन्मन् देवानां विशस्त्रिष्वा रोचने दिवः(१४)" इति। 'दिवः' 'रोचने' (स्वर्गस्य प्रकाशके) 'अस्य' 'जन्मन्' (यजमानस्य जन्मनि निमित्तभूते) सति 'देवानां' सम्बन्धिन्यो

'विशः' (प्रजारूपाः) 'पृश्नयः' (अल्पगोमदृशाः) 'सूददोहसः' (सूदस्यान्नस्य दोहयित्र्यः) 'ताः' इष्टकाः 'सोमं' 'श्रीणन्ति' (पक्वं कुर्वन्ति)। कदा ?- 'आ'-'त्रिषु' (आ समन्तात् यानि प्रातःसवनादीनि, तेषु), निरन्तरं सोमैकहेतव एता इष्टका इत्यर्थः।

एतन्मन्त्रद्वयसाध्यमुपधानं विधत्ते,—"त्रयोदश लोकं-पृणा उपदधात्येकविंꣳशतिः सम्पद्यन्ते प्रतिष्ठा वा एकविंꣳशः प्रतिष्ठा गार्हपत्य एकविंꣳशस्यैव प्रतिष्ठां गार्हपत्यमनु प्रतितिष्ठति" (५।२।३ अ०) इति। लोकम् इष्टकानाक्रान्तमवशिष्टं देशं पूरयन्तीति 'लोकं-पृणः',—एतन्नामका इष्टकास्त्रयोदशसङ्ख्याका उपदध्यात्। एवं सति पूर्वोक्ताभिरष्टभिः सह 'एकविंशतिः' 'सम्पद्यन्ते'। तथा सति 'एकविंशस्तोमः यथा स्तोमान्तराणां त्रिवृदादीनां 'प्रतिष्ठा', तथा नित्यंधार्यो 'गार्हपत्यः' अपि आहवनीयादीनां 'प्रतिष्ठा'। तदुभय-'प्रतिष्ठाम्' 'अनु' यजमानः 'प्रतितिष्ठति' इति।

वेदनं प्रशंसति,—"प्रत्यग्निं चिक्यानस्तिष्ठति य एवं वेद" (५।२।३ अ०) इति। 'चिक्यानः' (चयनं कृतवान् भूत्वा) प्रतितिष्ठतीत्यर्थः। एवं निरूपिता सेयमेका चितिः।

ईदृशीनां चितीनामुपर्यधोभावेन वर्त्तमानानां पञ्चसङ्ख्यां विधत्ते,—"पञ्चचितीकं चिन्वीत प्रथमं चिन्वानः पाङ्क्तो यज्ञः पाङ्क्ताः पशवो यज्ञमेव पशूनवरुन्धे"(५।२।३ अ०) इति। 'प्रथमं' 'चिन्वानः' (प्रथमवारमग्निचयनं कुर्वन्) यजमानः 'पञ्चचितीकं' (पञ्चसङ्ख्याका अनन्तरोक्ताश्चितयो यस्याग्नेस्तादृशं) 'चिन्वीत'। धानादिपयस्यान्तैः पञ्चभिर्हविर्भिर्युक्तत्वात् 'पाङ्क्तो यज्ञः'।

दीदिहीह[५]" इति। हे 'अग्ने', 'स्वेन' (त्वदीयेन बलेन) 'स्वायुः' (अस्मदीयं शोभनमायुः) 'संरभस्व' (संरच, आयुःसंरचणे अप्रमत्तो भव)। हे 'अग्ने', 'मित्रधेये' (मित्राणामस्माकं धारणे) 'मित्रेण' (अनुग्रहयुक्तेन चित्तेन) 'यतस्व' (प्रयत्नं कुरु)। अग्निना सह प्रजापतेर्मुखतो जातत्वाद् ब्राह्मणा अग्नेः सजाताः, तेषां 'मध्यमस्था एधि' (मध्यमे प्रदेशे अवस्थितो भव) सर्वदा ब्राह्मणान् याजयेत्यर्थः। ह्वयतेऽत्रेति हवा यज्ञाः; विविधाश्च ते हवाश्च विहवाः, विहवान् अर्हतीति 'विहव्यः'। हे 'अग्ने', त्वं 'इह' (भूमौ) 'राज्ञां' 'विहव्यः' (विविधयज्ञप्रवर्त्तकः सन्) 'दीदिहि' (अतिशयेन दीप्यस्व)।

अथ षष्ठीमाह,—"अति निहो अति स्रिधोऽत्यचित्तिमत्यरातिमग्ने। विश्वा ह्यग्ने दुरिता सहस्वाथास्मभ्यꣳ सह वीराꣳ रयिं दाः[६]" इति। निकृष्टानि श्व-शूकरादिजन्मानि जिहीते प्राप्नोति यैर्दुरितैः, तानि दुरितानि हकारान्तेन निह्-शब्देनोच्यन्ते। शरीरशोषणादिहेतवो रोगविशेषाः स्रिध्-शब्देनोच्यन्ते। हे 'अग्ने', 'निहो' (दुरितानि) 'अति'-'सहस्व' (अतिशयेन विनाशय)। 'स्रिधः' (रोगांश्च) 'अति'-'सहस्व'। 'अचित्तिं' (कर्मानुष्ठानविषयमज्ञानं) च 'अति'-'सहस्व'। 'अरातिं' (कर्मविघ्नकारिणं शत्रुं) च 'अति'-'सहस्व'। हिशब्दोऽपिशब्दार्थः। किं बहुना, हे 'अग्ने', विश्वान्यपि दुरितानि (अनिष्टकराणि) 'सहस्व' (विनाशय)। 'अथ' (अनन्तरम्), 'अस्मभ्यं' 'सहवीरां' (वीरैः पुत्रैः सहितां) 'रयिं' (धनं) 'दाः' (देहि)।

सपुच्छैश्चतुर्भिः पादैश्च 'पाङ्क्ताः पशवः'; एवं चयनं कृत्वा 'यज्ञं' 'पशून्' च प्राप्नोति।

द्वितीयवारमग्निचयनं कुर्वतश्च सङ्ख्यां विधत्ते,—"त्रिचितीकं चिन्वीत द्वितीयं चिन्वानस्त्रय इमे लोका एष्वेव लोकेषु प्रतितिष्ठति" (५।२।३अ०) इति। 'द्वितीयं' (द्वितीयवारम्)।

तृतीयवारमग्निचयनं कुर्वतः सङ्ख्यां विधत्ते,—"एकचितीकं चिन्वीत तृतीयं चिन्वान एकधा वै सुवर्गो लोक एकवृतैव सुवर्गं लोकमेति" (५।२।३अ०) इति। 'एकधा' (एकप्रकारः), सुखैकस्वाभाव्यात्, स्वर्गं प्राप्तस्य तद्धेतुकर्मसमाप्तेः पूर्वं पुनरावृत्त्यभावाच्च। 'एकवृता' (एकगुणकया) चित्या, त्रिगुणत्व-पञ्चगुणत्ववर्जितया।

पांसुप्रक्षेपं विधत्ते,—"पुरीषेणाभ्यूहति तस्मात् माꣳसेनास्थि छन्नम्" (५।२।३अ०) इति। यस्मादस्थिसमाः कठिना इष्टकाः मांससमेन मृदुना पांसुना 'अभ्यूहति' (छादयति)। 'तस्मात्' लोकेऽपि 'मांसेन अस्थि छन्नम्'।

वेदनं प्रशंसति,—"न दुश्चर्मा भवति य एवं वेद" (५।२।३अ०) इति।

चितिगतां पुरीषगतां च सङ्ख्यां मिलित्वा प्रशंसति,—"पञ्च चितयो भवन्ति पञ्चभिः पुरीषैरभ्यूहति दश सम्पद्यन्ते दशाक्षरा विराडन्नं विराड्विराज्येवान्नाद्ये प्रतितिष्ठति" (५।२।३अ०) इति। एकां चितिं कृत्वा पुरीषेणाच्छादयेत्, तस्या उपरि द्वितीयां चितिं कृत्वा तामप्याच्छादयेत्,—एवं चितिपञ्चकेन पुरीषपञ्चकेन दशसङ्ख्यासम्पत्तेर्विराट्छन्दोद्वारेणान्ने 'प्रतितिष्ठति' इति।

2 B

अथ सप्तमीमाह,—"अनाधृष्यो जातवेदा अनिष्टृतो विराडग्ने क्षत्रभृद्दीदिहीह। विश्वा आशाः प्रमुञ्चन्मानुषीर्भियः शिवाभिरद्य परि-पाहि नो वृधः⁽⁷⁾" इति। हे 'अग्ने', त्वम् 'इह' (कर्मणि) 'दीदिहि' (दीप्यस्व)। 'अनाधृष्यः' (इतः परं केनाप्यधर्षणीयः), 'जातवेदाः' (उत्पन्नसमस्तजगदभिज्ञः), 'अनिष्टृतः' (इतः पूर्वमपि केनाप्यहिंसितः), 'विराट्' (विविधं राजमानः), (क्षत्रं बलं बिभर्त्तीति) 'क्षत्रभृत्'। किञ्च यथोक्तविशेषणविशिष्टस्त्वं 'शिवाभिः' (शान्ताभिरनुग्रहदृष्टिभिः) 'अद्य' (अस्मिन् कर्मणि) 'नः' (अस्मान्) 'वृधे' (अभिवृद्धये) 'परि-पाहि' (सर्वतः पालय)। किं कुर्वन्?—'विश्वा आशाः' (निषिद्धाचरणविषया सर्वास्तृष्णाः) 'मानुषीर्भियः' (मनुष्येषु प्रसक्ताः व्याध्यादिभीतीश्च) 'प्रमुञ्चन्' (प्रकर्षेण निवारयन्)।

अथाष्टमीमाह,—"बृहस्पते सवितर्बोधयैनꣳ सꣳशितंचित् सन्तराꣳ सꣳशिशाधि। वर्धयैनं महते सौभगाय विश्व एनमनुमदन्तु देवाः⁽⁸⁾" इति। अत्र बृहस्पतिसवितृशब्दावग्निपरौ, सामिधेनीनामाग्नेयत्वात्। बृहस्पतिसवितृभ्यां तुल्य हे अग्ने, 'एनं' (यजमानं) 'बोधय' (कर्मणि बुद्धिमन्तं कुरु)। 'संशितंचित्' (पूर्वमेव निशितबुद्धिमपि) 'एनं' 'सन्तरां' 'संशिशाधि' (पुनरप्यतिशयेन सम्यगनुशासनवन्तं कुरु)। 'एनं' (यजमानं) 'महते' 'सौभगाय' 'वर्द्धय'। 'विश्वे' (सर्वेऽपि) 'देवाः' 'एनं' (यजमानम्) 'अनुमदन्तु' (समीचीनोऽयमिति हृष्यन्तु)।

अथ नवमीमाह,—"अमुत्रभूयादध यद् यमस्य बृहस्पते अभि-

अत्र विनियोगसङ्ग्रहः,—

अपोद्धन्ति चितिस्थानम्, अग्नेस्तु सिकतां वपेत्।
सञ्ज्ञानमूषां निवपेत्, सं या, संसृजते द्वयम्॥
अयं,—चतसृभिः प्राचीरिष्टका आदधाति हि।
इडां,—द्वाभ्यां पुरस्तात् द्वे, चिद्द्वाभ्यां पश्चिमद्वयम्॥
लोकं लोकं-पृणा-द्वाभ्यां मन्त्रा अत्र चतुर्दश॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये चतुर्थकाण्डे द्वितीयप्रपाठके चतुर्थोऽनुवाकः॥ ०॥

---

समितꣳ सङ्कल्पेथाꣳ संप्रियौ रोचिष्णू सुमनस्यमानौ। इषमूर्जमभिसंवसानौ सं वां मनाꣳसि सं व्रता समु चित्तान्याकरं(१)। अग्ने पुरीष्याधिपा भवा त्वन्नः इषमूर्जं यजमानाय धेहि(२)। पुरीष्यस्त्वमग्ने रयिमान् पुष्टिमाꣳ असि। शिवाः कृत्वा दिशः सर्वाः स्वां योनिमिहासदः(३)। भवतं नः समनसौ समोकसौ॥ ॥ १ ॥

अरेपसौ मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः(४)। मातेव पुत्रं पृथिवी पुरीष्यमग्निꣳ स्वे योनावभारुखा। तां विश्वैर्देवैरृतु-

ग्रस्तेरमुञ्चः। प्रत्यौहतामश्विना मृत्युमस्मात् देवानामग्ने भिषजा शचीभिः(९)" इति। 'भूयः'(भावः),'अमुत्र' (स्वर्गे)'भूयः','अमुत्रभूयः', स्वर्गे चिरावस्थानमित्यर्थः। पञ्चमी निमित्तार्था। अधशब्दो धकारयुक्त इदानीमित्यस्मिन्नर्थे वर्त्तते। हे बृहस्पतितुल्य अग्ने, 'अमुत्रभूयात्' (स्वर्गे चिरावस्थानं निमित्तीकृत्य) 'अध' (इदानीं) 'यमस्याभिग्रस्तेः' (यमसम्बन्धिहिंसानिमित्तात् पापात्) अस्मात् 'अमुञ्चः' (मोचितवानसि) इति 'यत्', तेन अस्माकं पारलौकिक-विषये चिन्ता नास्तीति शेषः। हे 'अग्ने', 'देवानां' भिषजौ अश्विनौ देवौ 'शचीभिः' (स्वकीयशक्तिभिः) 'अस्मात्' (यजमानात्) 'मृत्युं' 'प्रत्यौहतां' (अपमृत्युमिह लोके निराकुरुताम्)।

अथ दशमीमाह,—"उद्वयं तमसस्परिपश्यन्तो ज्योतिरुत्तरं। देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम्(१०)" इति। 'वयं' 'तमसः' 'उत्तरं' 'ज्योतिः' (तमसो विनाशकत्वेनोत्कृष्टमग्निसम्बन्धि ज्योतिः) 'उत्'-'परिपश्यन्तः' (उत्कर्षेण सर्वतोऽवलोकयन्तः), 'देवत्रा' (देवेषु मध्ये) 'सूर्यं' 'देवं' (सूर्यरूपेण वर्त्तमानमग्निसम्बद्धमेव) 'उत्तमं' 'ज्योतिः' 'अगन्म' (प्राप्ताः स्मः)।

अथ विनियोगसङ्ग्रहः,—

समाख्या सामिधेन्यः स्युः शता आग्निके पशौ।

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्ण-यजुःसंहिताभाष्ये चतुर्थकाण्डे प्रथमप्रपाठके सप्तमोऽनुवाकः॥ ७॥

---

भिः संविदानः प्रजापतिर्विश्वकर्मा विमुञ्चतु[५]।
यदस्य पारे रजसः शुक्रं ज्योतिरजायत। तं नः
पर्षदति द्विषोऽग्ने वैश्वानर स्वाहा[६]। नमः सु ते नि-
र्ऋते विश्वरूपे॥ २॥

अयस्मयं विचृता बन्धमेतं यमेन त्वं यम्या संविदा-
नोत्तमं नाकमधिरोहयेमं[७]। यत्ते देवि निर्ऋति-
राबबन्ध दाम ग्रीवास्वविचर्त्यं। इदं ते तद्विष्याम्या-
युषो न मध्यादथा जीवः पितुमद्धि प्रमुक्तः[८]। यस्या-
स्ते अस्याः क्रूर आसं जुहोम्येषां बन्धानामवसर्जनाय।
भूमिरिति त्वा जना विदुर्निर्ऋतिः॥ ३॥

इति त्वाहं परिवेद विश्वतः[९]। असुन्वन्तं यज-
मानमिच्छ स्तेनस्येत्यां तस्करस्यान्वेषि। अन्यमस्म-
दिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु[१०]।
देवीमहं निर्ऋतिं वन्दमानः पितेव पुत्रं दसये वचो-
भिः। विश्वस्य या जायमानस्य वेद शिरः-शिरः
प्रति सूरी विचष्टे[११]। निवेशनः सङ्गमनो वसूनां
विश्वा रूपाभिचष्टे॥ ४॥

शचीभिः देव इव सविता सत्यधर्मेन्द्रो न तस्थौ
समरे पथीनां[१२]। सं वरत्रा दधातन निराहावान्
कृणोतन। सिञ्चामहा अवटमुद्रिणं वयं विश्वाहादस्त-

ऊर्ध्वा अस्य समिधो भवन्त्यूर्ध्वा शुक्रा शोचीꣳष्यग्नेः। द्युमत्तमा सुप्रतीकस्य सूनोः(१)। तनूनपादसुरो विश्ववेदा देवो देवेषु देवः। पथ आनक्ति मध्वा घृतेन(२)। मध्वा यज्ञं नक्षसे प्रीणानो नराशꣳसो अग्ने। सुकृद्देवः सविता विश्ववारः(३)। अच्छायमेति शवसा घृतेनेडानो वह्निर्नमसा। अग्निꣳ स्रुचो अध्वरेषु प्रयत्सु(४)। स यक्षदस्य महिमानमग्नेः सः॥ ॥ १ ॥

ई मन्द्रासु प्रयसः। वसुश्चेतिष्ठो वसुधातमश्च(५)। द्वारो देवीरन्वस्य विश्वे व्रता ददन्ते अग्नेः। उरुव्यचसो धाम्ना पत्यमानाः(६)। ते अस्य योषणे दिव्ये न योनावुषासानक्ता। इमं यज्ञमवतामध्वरं नः(७)। दैव्या होतारावूर्ध्वमध्वरं नोऽग्नेर्जिह्वामभि गृणीतं। कृणुतं नः स्विष्टिं(८)। तिस्रो देवीर्बर्हिरेदꣳ सदन्त्विडा सरस्वती ॥ २ ॥

भारती मही गृणाना(९)। तन्नस्तुरीपमद्भुतं पुरुक्षु त्वष्टा सुवीरं रायस्पोषं विष्यतु नाभिमस्मे(१०)। वनस्पतेऽवसृजा रराणस्त्मना देवेषु। अग्निर्हव्यꣳ शमिता सूदयाति(११)। अग्ने स्वाहा कृणुहि जातवेद इन्द्राय हव्यं। विश्वे देवा हविरिदं जुषन्तां(१२)।

मक्षितं(१३)। निष्कृताहावमवटꣳ सुवरत्रꣳ सुषेचनं। उद्रिणꣳ सिञ्चे अक्षितं(१४)। सीरा युञ्जन्ति कवयो युगा वितन्वते पृथक्। धीरा देवेषु सुम्नया(१५)। युनक्त सीरा वि युगा तनोत कृते योनौ वपतेह ॥ ५ ॥

बीजं गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत्सृण्या पक्कमायत्(१६)। लाङ्गलं पवीरवꣳ सुशेवꣳ सुमतित्सरु। उदिल्कृषति गामविं प्रफर्व्यं च पीवरीं। प्रस्थावद्रथवाहनं(१७)। शुनं नः फाला वितुदन्तु भूमिꣳ शुनं कीनाशा अभियन्तु वाहान्। शुनं पर्जन्यो मधुना पयोभिः शुनासीरा शुनमस्मासु धत्त(१८)। कामं कामदुघे धुक्ष्व मित्राय, वरुणाय च। इन्द्रायाग्नये पूष्ण ओषधीभ्यः प्रजाभ्यः(१९)। घृतेन सीता मधुना समक्ता विश्वैर्देवैरनुमता मरुद्भिः। ऊर्जस्वती पयसा पिन्वमानास्मान् सीते पयसाभ्याववृत्स्व(२०) ॥ ६ ॥

समोकसा। विश्वरूपे। विदुर्निर्ऋतिः। अभिचष्टे। इह। मित्राय। द्वाविꣳशतिश्च ॥ ५ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे द्वितीयप्रपाठके पञ्चमोऽनुवाकः ॥ ० ॥

हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्। स दाधार पृथिवीं द्यां ॥ ३ ॥

उतेमां कस्मै देवाय हविषा विधेम[१३]। यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव। य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम[१४]। य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः। यस्य छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम[१५]। यस्येमे हिमवन्तो महित्वा यस्य समुद्रं रसया सह ॥ ४ ॥

आहुः। यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम[१६]। यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने। यत्राधि सूर उदितो व्येति कस्मै देवाय हविषा विधेम[१७]। येन द्यौरुग्रा पृथिवी च दृढे येन सुवः स्तभितं येन नाकः। यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम[१८]। आपो ह यन्महतीर्विश्वं ॥ ५ ॥

आयन् दक्षं दधाना जनयन्तीरग्निं। ततो देवानां निरवर्त्ततासुरेकः कस्मै देवाय हविषा विधेम[१९]। यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयन्तीरग्निं। यो देवेष्वधिदेव एक आसीत् कस्मै देवाय हविषा विधेम[२०] ॥ ६ ॥

चतुर्थेऽनुवाके गार्हपत्यचयनमुक्तम्। अथ पञ्चमेऽनुवाके आहवनीयचयनार्थं भुवः कर्षणमुच्यते। कल्पः, 'समितमिति तस्यां चतसृभिरुख्यꣳ सन्निवपति' इति। तत्र प्रथमामाह,—"समितꣳ सङ्कल्पेथाꣳ सम्प्रियौ रोचिष्णू सुमनस्यमानौ। इष-मूर्जमभिसंवसानौ सं वां मनाꣳसि सं व्रता समु चित्तान्याकरम्[1]" इति। येयं गार्हपत्यचितिः पूर्वानुवाकेऽभिहिता, तस्याम् उख्याग्निसंनिवपनवेलायां द्वावग्नी सम्पद्येते,—पूर्वसिद्धोऽग्निरेकः, द्वितीयसिद्धोऽग्निरपरः। तावुभौ सम्बोध्येदमुच्यते। हे अग्नी, युवामुभौ 'समितं' (सङ्गतौ) भवतं, सङ्गत्य च 'सङ्कल्पेथां' (सम्यग् यज्ञस्य कल्पनं निष्पादनं कुरुतं)। कीदृशावग्नी?—'सम्प्रियौ' (सम्यक् परस्परं प्रीतियुक्तौ), 'रोचिष्णू' (दीप्यमानौ), 'सुमनस्यमानौ' (परस्परं सौमनस्यं प्राप्तौ), 'इषम्' (अन्नम्). 'ऊर्जं' (रसं) च 'संवसानौ'* (सम्यक् सम्पादयन्तौ)। 'वां' (युवयोः) 'मनांसि' (मनोजन्यान् सङ्कल्पान्) 'सम्'-'आकरं' (सर्वतः सङ्गतानि करोमि)। तथा व्रतानि (कर्माणि) 'सम्'-'आकरं'। तथा 'चित्तानि' (कर्मविषयज्ञानानि) 'सम्'-'आकरम्'।

अथ द्वितीयामाह,—"अग्ने पुरीष्याधिपा भवा त्वं नः। इषमूर्जं यजमानाय धेहि[2]" इति। हे 'पुरीष्य' (पांसुयुक्त), 'अग्ने' (मिलितोभयाग्निस्वरूप), 'त्वं' 'नः' (अस्माकम्) 'अधिपा' 'भव' (अधिकं पालयिता भव)। तादृशस्त्वं यजमानायान्नं रसञ्च सम्पादय।

---

* अत्र 'अभिसंवसानौ' इति पाठो भवितुं युक्तः।

अग्नेः स । सरस्वती । द्यां । सह । विश्वं । चतु-
स्त्रिंꣳशच्च ॥ ८ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे प्रथमप्रपाठके
अष्टमोऽनुवाकः ॥ ० ॥

सप्तमेऽनुवाके अग्निचयनाङ्गभूते पशौ सामिधेन्योऽभिहिताः । अथाष्टमे प्रयाजयाज्या आप्री-नामका उच्यन्ते । कल्पः, 'ऊर्द्ध्वा अस्य समिधो भवन्तीति प्रयाजानामाप्रियो भवन्ति' इति । तत्र प्रथमामाह,—"ऊर्द्ध्वा अस्य समिधो भवन्त्यूर्द्ध्वा शुक्रा शोचीꣳष्यग्नेः । द्युमत्तमा सुप्रतीकस्य सूनोः[१]" इति । प्रयाजानां सर्वेषामग्निविशेषा एव देवताः । तत्र प्रथमप्रयाजदेवतामग्निविशेषरूपामयं समिच्छब्द आचष्टे, सम्यगिन्धे (प्रकाशते) इति व्युत्पत्तेः । बहुवचनं पूजार्थम् । 'अस्य' 'अग्नेः' स्वरूपविशेषभूताः 'समिधः' समिन्नामका देवाः 'ऊर्ध्वा' 'भवन्तु' (अस्मत्क्रियोऽर्थमुद्युक्ता भवन्तु) । तद्योगात् 'शोचींषि' (ज्वालास्वरूपाणि) 'ऊर्ध्वा' 'भवन्तु' (उन्नतानि भवन्तु) । कीदृशानि शोचींषि ?— 'शुक्रा' (भास्वराणि), 'द्युमत्तमा' (अतिशयेन दीप्तिमन्ति) । कीदृशस्याग्नेः ?—'सुप्रतीकस्य' (सुमुखस्य) । 'सूनोः' (पुत्रवत् हितकारिणः) ।

अथ द्वितीयामाह,—"तनूनपादसुरो विश्ववेदा देवो देवेषु देवः । पथ आनक्ति मध्वा घृतेन[२]" इति । 'तनूनपात्' (तनूं पातयति विनाशयतीति 'तनूनपात्', शरीरपालक इत्यर्थः ।

अथ तृतीयामाह,—"पुरीष्यस्त्वमग्ने रयिमान् पुष्टिमाꣳ असि। शिवाः कृत्वा दिशः सर्वाः स्वां योनिमिहासदः[३]" इति। हे 'अग्ने' शुष्मात्मक, त्वं 'पुरीष्यः' (पुरीषार्हः), 'रयिमान्' (धनवान्), 'पुष्टिमान्' अपि 'असि'। 'सर्वाः' 'दिशः' 'शिवाः' (शान्ताः) 'कृत्वा' 'इह' (चितौ) 'स्वां योनिं' (स्वकीयं स्थानम्) 'आसदः' (प्राप्नुहि)।

अथ चतुर्थीमाह,—"भवतं नः समनसौ समोकसावरेपसौ। मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः[४]" इति। योऽग्निः पुरातनः, यश्च उख्यः, तौ युवां 'नः' (अस्मान्) प्रति 'समनसौ' (समानमनस्कौ विप्रतिपत्तिरहितौ), 'समोकसौ' (समाननिवासस्थानौ), 'अरेपसौ' (पापचित्तरहितौ), यज्ञस्य यज्ञपतेश्च हिंसां 'मा' कुरुतम्। 'अद्य' (अस्मिन् कर्मणि) हे 'जातवेदसौ', 'नः' (अस्मान्) प्रति 'शिवौ' (शान्तौ) 'भवतम्'।

एतान् मन्त्रान् विनियुङ्क्ते,—"वि वा एतौ द्विषाते यश्च पुराग्निर्यश्चोखायाꣳ समितमिति चतसृभिः संनिवपति चत्वारि छन्दाꣳसि छन्दाꣳसि खलु वा अग्नेः प्रिया तनूः प्रिययैवैनौ तनुवा सꣳ शास्ति" (५।२।४ अ०) इति। अग्निं चिकीर्षतः पुरुषस्य 'यश्च' पूर्वसिद्ध आहितः 'अग्निः', 'यश्च' 'उखायां' वर्त्तमान इदानी-न्तनोऽग्निः, 'एतौ' उभौ परस्परं 'वि'-'द्विषाते' (अहमेवाहुत्या-धारो भूयासं, न त्वमित्येवंरूपो विद्वेषः। अतो विद्वेषपरिहाराय 'संनिवपति' (तावुभौ संयोजयेत्)। अभ्यादानादिषु गायत्र्यादि-

एतन्नामकः कश्चिदग्निविशेषो 'मध्वा' (मधुरेण) 'घृतेन' 'पथ' 'आनक्ति' (स्वर्गसाधनत्वेन तत्तन्मार्गभूतानि हवींषि घृतेन आक्तानि करोतु)। कीदृशः तनूनपात् ?—(असून् प्राणान् राति ददातीति) 'असुरः', अत एव शरीरपालक इति युक्तम्। (विश्वं वेत्तीति) 'विश्ववेदाः', 'देवः' (द्योतनात्मकः, मनुष्यैः पूजनीयो वा)। न केवलं मनुष्येष्वेव 'देवः', अपि तु 'देवेषु' अप्यधिको 'देवः'।

अथ तृतीयामाह,—"मध्वा यज्ञं नक्षसे प्रीणानो नराशंसो अग्ने। सुकृद्देवः सविता विश्ववारः(३)" इति। नरैः शंसनीयः 'नराशंसः'। एतन्नामकः कश्चिदग्निविशेषः। हे 'अग्ने', त्वं 'नराशंसो' भूत्वा 'मध्वा' (मधुरेण) घृतेन 'प्रीणानः', (तृप्यन्) इमं 'यज्ञं' 'नक्षसे' (प्राप्नोषि निर्वर्त्तयिष्यसीत्यर्थः)। कीदृशो नराशंसः ?—(सुष्ठु करोति, वैकल्यं परिहरतीति) 'सुकृत्','देवः' (द्योतनात्मकः), 'सविता' (कर्मण्यस्माकं प्रेरकः), (विश्वानि दुरितानि वारयतीति) 'विश्ववारः'।

अथ चतुर्थीमाह,—"अच्छायमेति शवसा घृतेनेडानो वह्निर्नमसा। अग्निꣳ स्रुचो अध्वरेषु प्रयक्षु(४)" इति। 'ईडानः' इत्यग्निविशेषस्य वाचकं नामधेयं, स्तुतिप्रियत्वात् ईडान इत्युच्यते। एतन्नामकः 'अयं' 'वह्निः' 'शवसा' (बलेन) युक्तः सन् 'अच्छ' (यज्ञं प्राप्तुम्) 'एति' (गच्छति)। तम् 'अग्निं' 'अध्वरेषु' 'प्रयक्षु' (यज्ञेषु प्रवर्त्तमानेषु) 'स्रुचः' 'घृतेन' (जुहूनिष्ठेनाज्येन) 'नमसा' (नमस्कारेण) च परिचरेमेति शेषः।

च्छन्दसां साधनत्वात् 'छन्दांसि' 'अग्नेः' 'प्रिया तनूः', तथा सत्यत्र मन्त्रगतया चतुःसङ्ख्यया चतुर्णां गायत्र्यादीनां छन्दसां बुद्धिस्थत्वात् 'प्रिययैव' 'तनुवा' सङ्गतौ यथा भवतस्तथा 'सं'-शासनं कृतवान् भवति ।

प्रथममन्त्रगतस्य समितमितिपदस्य तात्पर्यं दर्शयति,—"समितमित्याह तस्माद्ब्रह्मणा क्षत्रꣳ समेति" (५।२।४अ०) इति । यस्मादयं मन्त्रः सङ्गतौ भवतमिति ब्रूते, 'तस्मात्' लोकेऽपि पुरोहितरूपेण ब्राह्मणेन क्षत्रियरूपो राजा सङ्गच्छते । अत एवान्यत्र श्रुत्या उदाहृतं, 'तस्माद् ब्राह्मणो राजन्यवान् । तस्माद् राजन्यो ब्राह्मणवान्' इति ।

तमेवाग्न्योः सङ्गमं पुनः प्रशंसति,—"अत् मनुष्य विहरति तस्माद्ब्रह्मणा क्षत्रं व्येति" (५।२।४अ०) इति । यस्मादग्निद्वयं संयोज्य तस्मिन् संयुक्तेऽग्नौ विहरणम् (उत्तरकालीनं विविधमनुष्ठानं) करोति, 'तस्मात्' लोकेऽपि ब्राह्मणक्षत्रिययोः संयुक्तयोः सतोः पश्चाद् ब्राह्मणेन नियमितः क्षत्रियो विविधं शास्त्रीयं राज्यपरिपालनं प्राप्नोति ।

कल्पः, मातेव पुत्रमिति शिक्यादुखां निरूह्य' इति । पाठस्तु,—"मातेव पुत्रं पृथिवी पुरीष्यमग्निꣳ स्वे योनावभारुखा । तां विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्मा विमुञ्चतु(५)" इति । यथा लोके 'माता' 'पुत्रं' बिभर्त्ति, तथा पृथिवीरूपा इयम् 'उखा' 'स्वे योनौ' (स्वकीयगर्भस्थाने) 'पुरीष्यम्' एतम्

अथ पञ्चमीमाह,—"स यक्षदस्य महिमानमग्नेः सः। ई मन्द्रासु प्रयसः। वसुश्चेतिष्ठो वसुधातमश्च[५]" इति। बर्हिर्नामकः कश्चिदग्निविशेषः। प्रकृते, बर्हिरग्न आज्यस्य वेत्विति मन्त्रे प्रसिद्धत्वादिह प्रसिद्धनामकत्न* तच्छब्देन परामृश्यते। 'सः' (तादृशः) बर्हिर्नामकोऽग्निविशेषः, 'अस्य' सामान्यरूपस्याग्नेर्महिमानं 'यक्षत्' (यजतु, पूजयतु)। 'स ई' (स एव बर्हिर्नामको वह्निः) 'मन्द्रासु' (हर्षजनिकासु स्तुतिरूपासु ऋक्षु) 'प्रयसः' (प्रयासवान् अधिकपरिचर्यायुक्त इत्यर्थः)। किञ्च अयं बर्हिर्नामको वह्निः 'वसुः' (प्राणिनां वासयिता) 'चेतिष्ठः' (अतिशयेनाभिज्ञः), 'वसुधातमश्च' (यजमानार्थं धनस्य धारयिता)।

अथ षष्ठीमाह,—"द्वारो देवीरन्वस्य विश्वे व्रता ददन्ते अग्नेः। उरुव्यचसो धाम्ना पत्यमानाः[६]" इति। द्वारशब्देन स्त्रीमूर्त्तिधरः कश्चिदग्निविशेष उच्यते। पूजार्थं बहुवचनम्। या देव्यो द्वारशब्दाभिधेयाः प्रथममग्नेर्व्रतमाचरन्ति, तत् 'द्वारो देवीरनु' 'विश्वे' (सर्वे यजमानाः) 'अस्य' अग्नेः सम्बन्धीनि व्रतानि कर्माणि 'ददन्ते' (हविः प्रयच्छन्ति)। कीदृशीर्द्वारः?—'उरुव्यचसः' (विस्तीर्णगतोः), 'धाम्ना पत्यमानाः' (धाम्ना तेजसा पत्यमानाः, प्राप्यमाणाः) तेजस्विनीरित्यर्थः।

अथ सप्तमीमाह,—"ते अस्य योषणे दिव्ये न योनावुषासानक्ता। इमं यज्ञमवतामध्वरन्नः[७]" इति। 'उषासा' इत्युषःकालरूपा काचिदग्नेर्मूर्त्तिः; 'नक्ता' इति च रात्रिरूपा काचि-

---

* प्रसिद्धवाचकन इति पाठो भवितुं युक्तः।

'अग्निं' 'स्वे योनौ'* 'अभाः' (बिभर्त्ति)। 'ताम्' (उखां) 'प्रजापतिः' 'विमुञ्चतु' (शिक्यपाशान्मुक्तां करोतु)। कीदृशः प्रजापतिः?—'विश्वैर्देवैर्ऋतुभिः' च 'संविदानः' (ऐकमत्यङ्गतः), (विश्वं सृष्टिरूपं कर्म यस्यासौ) 'विश्वकर्मा'।

अस्मिन्मन्त्रे ऋतुभिरितिपदस्य तात्पर्यं दर्शयति,—"ऋतुभिर्वा एतं दीक्षयन्ति स ऋतुभिरेव विमुच्यो मातेव पुत्रं पृथिवी पुरीष्यमित्याह ऋतुभिरेवैनं दीक्षयित्वा ऋतुभिर्विमुञ्चति" (५।२४अ०) इति। 'एतं' (यजमानम्) 'ऋतुभिः' पुरा संस्कुर्वन्ति, 'षड्भिर्दीक्षयति षड्वा ऋतव ऋतुभिरेवैनं दीक्षयति' इत्युक्तत्वात्। अतस्तादृशयजमानसम्बन्धी† 'स' उख्योऽग्निरत्रापि 'ऋतुभिरेव' विमोचनीयो भवति। अतो विमोचनसाधनेऽस्मिन् मन्त्रे ऋतुप्रयोगाद्दीक्षाविमोकयोरेकसाधनत्वं सम्पद्यते। यद्यपि दीक्षा यजमानस्य, विमोकस्तूख्यस्य, तथाप्यभेदोपचारेण एकविषयत्वोपन्यासः।

कल्पः, 'यदस्य पारे रजस इति वैश्वानर्याग्निशिक्यमादत्ते' इति। पाठस्तु,—"यदस्य पारे रजसः शुक्रं ज्योतिरजायत। तन्नः पर्षदति द्विषोऽग्ने वैश्वानर स्वाहा(१)" इति। 'रजसः' (रजःसदृशस्य धूमस्य) 'पारे' (अवसाने) 'अस्य' (अग्नेः) 'शुक्रं' (निर्मलं) 'यत्' 'ज्योतिरजायत', 'तत्' (ज्योतिः) 'द्विषः' 'अति'

---

* अत्र "स्वे योनौ" इति पाठः पुनरुक्त इवाभाति।

† सम्बन्धि इति सर्वत्र पाठो न सम्यक्।

दग्नेर्मूर्त्तिः, उषामा च नक्ता च 'उषामानक्ता'। एतन्नामके ये 'अस्य' अग्नेर्मूर्त्तौ, ते 'नः' (अस्मदीयं) 'इमं यज्ञं' 'योनौ' (अस्मिन् स्थाने) 'अध्वरं' (हिंसारहितं) यथा भवति, तथा 'अवतां' (रक्षतां)। कीदृश्यौ ते?—'योषणे' (परस्परमिश्रिते)। तत्र दृष्टान्तः,—'दिव्ये न' (दिव्ये इव) यथा द्युलोकस्थे मूर्त्ती भासमाने भवतः, एवमेते मूर्त्ती।

अथाष्टमीमाह,—"दैव्या होताराऊर्द्ध्वमध्वरं नोऽग्नेर्जिह्वामभि गृणीतं। कृणुतं नः स्विष्टिम्(८)" इति। होतृशब्दाभिधेयौ द्वावग्निविशेषौ। होतृत्वञ्च द्विविधं, दैव्यं मानुषञ्च; तत्रैतौ होतारौ दैव्यौ। हे दैव्यौ 'होतारौ' 'अग्नेः' 'जिह्वां' (ज्वालाम्) 'अभि'-लक्ष्य प्रवृत्तं,'ऊर्द्ध्वं'(अत्युच्छ्रितं) 'नः' 'अध्वरं'(अस्मदीयमिमं यज्ञं) 'गृणीतं' (प्रख्यापयतं)। किञ्च 'नः' (अस्मदर्थं) 'स्विष्टिं' 'कृणुतं' (वैगुण्यं परिहृत्य एतामिष्टिं शोभनां* कुरुतम)।

अथ नवमीमाह,—"तिस्रो देवीर्बर्हिरेदᳩ सदन्त्विड़ा सरस्वती भारती। मही गृणाना(९)" इति। 'इड़ा-सरस्वती-भारती'-त्यादिशब्दवाच्यास्तिस्रो देव्योऽग्निमूर्त्तयो याः सन्ति, ता 'इदं' 'बर्हिः' (इमं यज्ञं) 'आ-''सदन्तु' (प्राप्नुवन्तु)। इड़ा-सरस्वती-भारतीत्यादीनां प्रत्येकं विशेषणमुच्यते, 'मही' (महती), 'गृणाना' (यज्ञं प्रख्यापयन्ती)।

अथ दशमीमाह,—"तन्नस्तुरीपमद्भुतं पुरुक्षु त्वष्टा सुवीर्यं। रायस्पोषं विष्यतु नाभिमस्मे(१०)" इति। 'त्वष्टा'—इति कश्चि-

* इष्टिशोभनामिति सर्व्वत्र पाठो न सम्यक्।

(द्वेष्टृनतिक्रम्य) 'नः' (अस्मान्) 'पर्षत्' (प्रीणयतु)। हे वैश्वानराख्य 'अग्ने', त्वदीयं शिक्यं 'स्वाहा' (सुष्ठु आहुतम्)।

तमेतं मन्त्रं विनियुङ्क्ते,—"वैश्वानर्या शिक्यमादत्ते स्वदयत्येवैनत्" (५।२।४ अ०) इति। वैश्वानरशब्दो यस्यामृच्यस्ति, सेयं 'वैश्वानरी', "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः" इति स्मृतेर्जाठराग्निरूपस्य वैश्वानरस्य स्वादुत्वकारित्वात् तदीयमन्त्रेण उपात्तं शिक्यं स्वादूकृतं भवति।

कल्पः, 'नैर्ऋतीरिष्टकाः कृष्णास्तिस्रस्तुषपक्वास्ताः शिक्यं रुक्मसूत्रमासन्दीञ्चादाय दक्षिणमपरमवान्तरदेशं गत्वा नमः सु ते निर्ऋत इति स्वकृत इरिणे प्रदरे वा शिक्यं निधाय' इति।

पाठस्तु,—"नमः सु ते निर्ऋते विश्वरूपेऽयस्मयं विचृता बन्धमेतं। यमेन त्वं यम्या संविदानोत्तमं नाकमधिरोहयेमम्(७)" इति।

हे 'निर्ऋते' (दक्षिण-पश्चिम-मध्यमस्थितावान्तरदिगभिमानिनो-* देवते), 'विश्वरूपे' (बहुविधरूपयुक्ते), 'ते' (तुभ्यं) 'नमः' अस्तु। 'अयस्मयं' (लोहनिर्मितं शृङ्खलावद्दृढम्) 'एतं' 'बन्धं' (स्वर्गप्राप्तिप्रतिबन्धकम्) 'इमं' (पाप्मानं) 'विचृत' (विनाशय)। ततः 'त्वं' 'यमेन' (अग्निना) 'यम्या' (पृथिव्या) च 'संविदाना' (ऐकमत्यं गता) सती इमं (यजमानम्) 'उत्तमं' 'नाकं', (सर्वसुखोपेतं दुःखमात्ररहितं स्वर्गम्) 'अधिरोहय' (प्रापय)।

अत्रोदाहृते सूत्रे या इष्टका अभिहितास्ता विधत्ते,—

---

* दिगभिमानिनि इति पाठो भवितुं युक्तः।

दग्निविशेषः। सोऽयम् 'अस्मे' (अस्मासु) 'तत्' ऐश्वर्य्यं 'विष्यतु' (विशेषेणावसितं करोतु) सम्पूर्णं करोत्वित्यर्थः। कीदृशमैश्वर्यं ?—'नः' (अस्मदर्थं), 'तुरीपं' (तूर्णमेव प्राप्यमाणं), 'अद्भुतं' (गवाश्वादिबाहुल्येनाश्चर्यरूपं), 'पुरुक्षु' (बहुभिर्मनुष्यैः क्षूयते शब्द्यते प्रशस्यते इति 'पुरुक्षु',) (शोभना वीराः पुत्रा यस्मिन्, तत्) 'सुवीरं', (रायो धनस्य, पोषः पुष्टिर्यस्मिन् तत्) 'रायस्पोषं'। 'नाभिं' (रथचक्रगतानामराणां नाभिमिव* सर्वेषां वस्तूनामाश्रयभूतम्)।

अथैकादशीमाह,—"वनस्पतेऽवसृजा रराणः त्मना देवेषु। अग्निर्हव्यꣳ शमिता सूदयाति(११)" इति। वनस्पतिनामकः कश्चिदग्निविशेषः। हे 'वनस्पते', त्वं 'रराणः' (दानशीलः सन्, रममाणो वा) 'देवेषु' (अस्माभिर्यष्टव्येषु) 'त्मना' 'अवसृज' (अस्मद्दत्तं हविः स्वयमेव स्थापय)। अस्माभिः प्रार्थितोऽयम् 'अग्निः' 'शमिता' (दुरितोपशमस्य कर्त्ता सन्) 'हव्यं' 'सूदयाति' (अस्मदीयं हविर्देवेषु सूदयतु)।

अथ द्वादशीमाह,—"अग्ने स्वाहा कृणुहि जातवेद इन्द्राय हव्यं। विश्वे देवा हविरिदं जुषन्ताम्(१२)" इति। स्वाहाकाराभिमानी कश्चिदग्निविशेषः। तादृश हे 'जातवेदः' 'अग्ने', इन्द्रार्थम् इदं 'हव्यं' 'स्वाहा कृणुहि' (स्वाहाकृतं कुरु)। 'विश्वे देवाः' (सर्वेऽपि देवाः), तदा-तदा मया दीयमानम् 'इदं' 'हविः' 'जुषन्ताम्'। यद्यप्येकादशैव प्रयाजाः, तथापि द्वितीयतृतीययो-

---

* नाभिरिव इति सर्व्वत्र पाठो न सम्यक्।

"नैर्ऋतीः कृष्णास्तिस्रस्तुषपक्वा भवन्ति निर्ऋत्यै वा एतद्भागधेयं यत्तुषा निर्ऋत्यै रूपं कृष्णꣳ रूपेणैव निर्ऋतिं निरवदयते" (५।२।४ अ०) इति। 'निर्ऋतिः' देवता यासामिष्टकानां ता 'नैर्ऋत्यः', 'तुषा' इति 'यत्' तत् 'एतत्' निर्ऋतेः (राक्षसदेवतायाः) भागधेयम्। अत एवेष्टिप्रकरणे 'रक्षसां भागोऽसि' इति तुषोपवापमन्त्र आम्नातः। 'रूपं' च निर्ऋतिदेवतायाः 'कृष्णं', अतस्तदानुकूल्याय इष्टकास्तुषपक्वाः कृष्णवर्णाश्च कुर्युः, तथा सति अनुरूपेणैव भागेन 'निर्ऋतिं'* 'निरवदयते' (निःसारितवान् भवति)।

दक्षिणपश्चिमावान्तरदिशमङ्गुल्या निर्दिश्य विधत्ते,—"इमां दिशं यन्त्येषा वै निर्ऋत्यै दिक् स्वायामेव दिशि निर्ऋतिं निरवदयते" (५।२।४ अ०) इति।

कल्पः, 'यत्ते देवी निर्ऋतिराबबन्धेति शिक्यजालेनैनाः प्रच्छाद्य' इति। 'एनाः' (वक्ष्यमाणमन्त्रैरुपधेया इष्टकाः)। अर्थक्रमेणायं मन्त्रो वक्ष्यमाणेभ्यस्त्रिभ्य उत्तरभावी, पाठक्रमेण तु पूर्वभावी। तत्पाठस्तु,—"यत्ते देवी निर्ऋतिराबबन्ध दाम ग्रीवास्वविचर्त्यं। इदं ते तद्विष्याम्यायुषो न मध्यादथा जीवः पितुमद्धि प्रमुक्तः[८]" इति। हे यजमान, 'ते' (तव) 'ग्रीवासु' (ग्रीवायाः सम्बन्धिषु प्रदेशविशेषेषु) 'निर्ऋतिः' 'देवी' 'यत्' 'दाम' (स्वकीयं पाशम्) 'अविचर्त्यं' (विनाशयितुमशक्यम्) 'आबबन्ध' (दृढं बबन्ध), 'तत्' 'इदं' 'ते' दाम (त्वदीयं

---

* [illegible] पुस्तके निर्ऋतिरिति पाठो न युक्तः।

मन्त्रयोः पुरुषभेदेन व्यवस्थितत्वान्मन्त्राणां द्वादशसङ्ख्या न विरुध्यते। सा च व्यवस्था सूत्रकारेण दर्शिता,—'नराशंसो द्वितीयः प्रयाजो वसिष्ठशुनकानां, तनूनपादितरेषां गोत्राणाम्' इति।

कल्पः, 'हिरण्यगर्भः समवर्त्तताग्र इति स्रुचामाघारयति' इति। पाठस्तु,—"हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्। स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम[११]" इति। हिरण्मये ब्रह्माण्डरूपे गर्भरूपेणावस्थितः प्रजापतिः 'हिरण्यगर्भः', स च 'भूतस्य' (प्राणिजातस्य) 'अग्रे' 'समवर्त्तत' (प्राणिजातोत्पत्तेः पुरा स्वयं शरीरधारी बभूव)। स च 'जातः' (उत्पन्नमात्रः) 'एक' एव उत्पत्स्यमानस्य सर्वस्य जगतः 'पतिः' 'आसीत्'। स एव 'पृथिवीं' 'द्यां' (विस्तीर्णां दिवं) 'दाधार' (धृतवान्)। 'उत' (अपि च) 'इमां' (भूमिं) 'दाधार', तादृशाय 'कस्मै' (प्रजापतये) 'देवाय' (आघाररूपेण) 'हविषा' 'विधेम' (परिचरेम)।

कल्पः, 'यः प्राणतो य आत्मदा इति प्राजापत्यस्य' इति। यः पशुः प्राजापत्यस्तस्यैते याज्यानुवाक्ये इत्यर्थः। तत्र वपायां द्वे ऋचौ, पुरोडाशे द्वे ऋचौ, हविषि द्वे ऋचाविति षड् ऋचो याज्यानुवाक्याः। तत्र प्रथमामाह,—"यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव। य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम[१४]" इति। 'यः' (प्रजापतिः) 'एक इत्' (एक एव) 'प्राणतः' (श्वासयुक्तस्य), 'निमिषतः' (चक्षुर्निमेषयुक्तस्य) सर्वस्य 'जगतः' 'महित्वा' (स्वमहिम्ना) 'राजा' 'बभूव'।

ग्रीवास्थं पाशं) 'विष्यामि' (विमुञ्चामि)। तच्च विमोचनं त्वदीयस्य 'आयुषः' 'मध्यात्' आरभ्य 'न' भवति, किन्तु कृत्स्नेऽप्यायुषि; 'अथ' (पाशविमोकानन्तरं) त्वं 'जीवः' (चिरञ्जीवी) सन् 'प्रमुक्तः' (सर्वैः प्रतिबन्धैर्विरहितः) 'पितुम्' (अन्नं) 'अद्धि' (भक्षय)।

कल्पः, 'तस्येष्टकाभिः पाशमभ्युपदधाति यस्यास्ते अस्याः क्रूर आसन् जुहोमीत्येताभिस्तिसृभिः पराचीरमःस्पृष्टा दक्षिणापवर्गं तया दैवतं करोति' इति। तस्य शिक्यस्य पाशमभिलक्ष्य कृष्णाभिरिष्टकाभिरुपधानं सम्पादयेदित्यर्थः। तिसृषु प्रथमामाह,—

"यस्यास्ते अस्याः क्रूर आसन् जुहोम्येषां बन्धानामवसर्जनाय। भूमिरिति त्वा जना विदुर्निर्ऋतिरिति त्वाहं परिवेद विश्वतः(९)।"

इति। हे निर्ऋते, 'यस्याः' 'ते' (तव) 'अस्याः' 'क्रूर आसन्' (उग्ररूपे आस्ये) 'जुहोमि' (आज्यंतवदिष्टकामुपदधामि)। किमर्थं?— 'एषां बन्धानाम्' 'अवसर्जनाय' (यजमानस्य परलोकप्राप्तिप्रातिबन्धकानाम् एषां पाप्मनां विनाशाय); 'यस्याः' 'ते' (तव) मुखे प्रदररूप दरिणरूपे वा 'अहम्' इष्टकामुपदधामि। 'त्वा' (तादृशीं त्वां) 'जनाः' (जन्तुमात्ररूपाः, शास्त्रसंस्काररहिताः) 'भूमिरिति' 'विदुः'। निर्ऋतिर्देवीति,*—'अहं' तु शास्त्राभिज्ञतया त्वां 'विश्वतः' (सर्वतः, सर्वथा) 'निर्ऋतिर्देवी'-इत्येव 'परिवेद' (सम्यक् जानामि)। तत्र तावन्निर्ऋतिरित्येतद्देवता-नामधेयम्।

* अत्र संहिताख्यपाठानुसारेण निर्ऋतिरितीति पाठो धर्तुं युक्तः।

अत एव 'यः' (प्रजापतिः) 'अस्य' 'द्विपदः' (मनुष्यादेः) 'चतुष्पदः' (पश्वादेः) च 'ईशे' (नियमनाय समर्थो भवति), तादृशाय 'कस्मै देवाय हविषा विधेम'।

अथ द्वितीयामाह,—"य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः। यस्य छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम[१५]" इति। 'यः' (प्रजापतिः) 'आत्मदाः' (शरीरेषु जीवरूपेणात्मप्रदः), 'बलदाः' (सामर्थ्यप्रदश्च)। 'यस्य' (प्रजापतेः) 'प्रशिषं' (आज्ञां) 'विश्वे' (सर्वे मनुष्याः) 'उपासते' (नातिवर्त्तन्ते)। किञ्च 'यस्य' 'प्रशिषं' 'देवाः' अप्युपासते। 'अमृतं' (मोक्षरूपं) 'यस्य छाया' (यस्य प्रजापतेः छायावत् स्वाधीनं), 'मृत्युः' (प्राणिनां मरणमपि) यस्य छायेव स्वाधीनः; तादृशाय 'कस्मै देवाय हविषा विधेम' इति।

अथ तृतीयामाह,—"यस्येमे हिमवन्तो महित्वा यस्य समुद्रꣳ रसया सह। आहुः यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम[१६]" इति। 'इमे हिमवन्तः' (हिमवत्प्रमुखाः पर्वताः) 'यस्य' 'महित्वा' (महिम्ना) वर्त्तन्ते। 'रसया' (भूम्या) 'सह' अवस्थितं 'समुद्रं' 'यस्य' स्वाधीनम् 'आहुः'। 'यस्येमाः प्रदिशः' (इमा दृश्यमानाः, प्रदिशः प्राच्यादिदिशः) यस्य अधीना 'आहुः'। 'यस्य' (प्रजापतेः) 'बाहू' धर्माधर्माविति शेषः। तादृशाय 'कस्मै' इत्यादि।

अथ चतुर्थीमाह,—"यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने। यत्राधि सूर उदितो व्येति कस्मै देवाय

अवयवार्थस्त्वेवं व्युत्पादनीयः,—सर्वदेवसाधारणाद्देवयजनान्निष्कृष्य स्वतन्त्रेण * प्रदरादौ ऋतिः प्राप्तिर्यस्याः सा 'निर्ऋतिः'। तदिदं प्रकारद्वयमभिप्रेत्य 'विश्वतः' इत्युक्तम्।

अथ द्वितीयामाह,—"असुन्वन्तम् यजमानमिच्छ स्तेनस्येत्यां तस्करस्यान्वेषि। अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु(१०)" इति। हे 'निर्ऋते', यः सोमयागं न करोति, यश्च हविर्यज्ञं न करोति, तादृशम् 'असुन्वन्तम्' 'यजमानं' च 'इच्छ' (ग्रहीतुमिच्छ)। किञ्च यः स्तेनः (प्रच्छन्नचोरः), यश्च तस्करः (प्रकटचोरः) तयोः 'इत्यां' (गतिम्) 'अन्वेषि' (अनुगच्छ); गत्वा तावपि गृहाणेत्यर्थः)। सर्वथापि सोमं सुन्वद्भ्यो हविर्यज्ञेश्च यद्भ्यः 'अस्मत्' 'अन्यम्' 'इच्छ' (नास्मानिच्छ)। 'सा' दुष्टशिक्षा तव 'इत्या' (गतिश्चर्या)। हे 'निर्ऋते', 'देवि', 'तुभ्यं' 'नमः' 'अस्तु'।

अथ तृतीयामाह,—"देवीमहं निर्ऋतिं वन्दमानः पितेव पुत्रं दसये वचोभिः। विश्वस्य या जायमानस्य वेद शिरः-शिरः प्रति सूरी विचष्टे(११)" इति। 'देवीं' 'निर्ऋतिं' 'वन्दमानः' 'अहं' 'वचोभिः' (स्तुतिरूपैर्वाक्यैः) 'दसये' (उपक्षीणां स्वाधीनां करोमि)। तत्र दृष्टान्तः,—यथा लोके 'पिता' 'पुत्रं' (दुःशीलं बालं), हे तात हे वत्स—इत्यादिभिरुपलालनवचनैः स्वाधीनं करोति तद्वत्। 'या' 'सूरी' (विदुषी) निर्ऋतिः 'जायमानस्य' 'विश्वस्य' (सर्वस्य स्तेनतस्करादेः) 'शिरः-शिरः' 'प्रति' (हस्तेनैकैकं शिरः प्रतिगृह्य)

---

* स्वक्षते इति J. पु० पाठः।

'वेद'-(त्वदीय त्वदीयमपराधं जानामि)-इति 'विचष्टे' (विशेषेण कथयति)। तादृशीं निर्ऋतिदेवीं वन्दमानः इति पूर्वत्रान्वयः।

एतैर्मन्त्रैः साध्यमिष्टकोपधानं विधत्ते,—"स्वकृत इरिण उपदधाति प्रदरे वैतद्वै निर्ऋत्या आयतनꣳ स्व एवायतने निर्ऋतिं निरवदयते" (५।२।४ अ०) इति। स्वकृतं (स्वयमेव निष्पन्नं), न तु देशान्तरादानीय चयनस्थान इव प्रक्षिप्तं, तादृशे 'इरिणे' (ऊषरे) वा, 'प्रदरे' (भूच्छिद्रे) वा, कृष्णास्तिस्र इष्टका उपदध्यात्। एतदुभयमेव निर्ऋत्या 'आयतनम्' (स्थानम्), अतिस्पष्टमिति, तस्मिन्निष्टकोपधानं यदि क्रियते, तदा 'स्व एव' स्थाने तां 'निर्ऋतिं' 'निरवदयते' (देवयजनान्निष्कृष्य इमामवस्थापयति)।

शिक्यस्योपरिजालमूलभागं परित्यज्य पाशरूपमग्रभागमभिलक्ष्यावस्थितो यो देशस्तं देशमिष्टकोपधानस्य विधत्ते,—"शिक्यमभ्युपदधाति नैर्ऋतो वै पाशः साक्षादेवैनं निर्ऋतिपाशात् मुञ्चति" (५।२।४ अ०) इति। 'शिक्यम्' 'अभि'-लक्ष्य (तत्पाशभागमभिलक्ष्य) अवस्थितो यो देशस्तत्रोपदध्यादित्यर्थः। 'साक्षात्' (विलम्बमन्तरेण)। 'एनं' (यजमानम्)।

इष्टकानां सङ्ख्यां विधत्ते,—"तिस्र उपदधाति त्रेधा विहितो वै पुरुषो यावानेव पुरुषस्तस्मान्निर्ऋतिमवयजते" (५।२।४ अ०) इति। शरीरस्य ऊर्द्धाधोमध्यमभागैः 'पुरुषः' 'त्रेधाविहितः', तादृशात् पुरुषादादाय त्रिसङ्ख्या 'निर्ऋतिम्' 'अवयजते' (विनाशयति)। यदुक्तं सूत्रकारेण, 'पराचीरसꣳस्पृष्टा दक्षिणापवर्गम्' इति।

तदिदं विधत्ते,—"पराचीरुपदधाति पराचीमेवास्मान्निर्ऋतिं प्रणुदते" (५।२।४ ब्रा०) इति। दक्षिणामुखः पुरुष एकामुपधाय ततो दक्षिणतो द्वितीयां, ततोऽपि दक्षिणतस्तृतीयाम् 'उपदधाति' इति यत्, तदिदं पराक्रम्। एवं सति 'अस्मात्' देवयजनाद् यजमानाद्वा पराङ्मुखं* कृत्वा 'निर्ऋतिं' निःसारयति।

उपधानादूर्ध्वं देवयजनं प्रति आगमनं विधत्ते,—"अप्रतीक्षमायन्ति निर्ऋत्या अन्तर्हित्यै" (५।२।४ ब्रा०) इति। 'अप्रतीक्षं' (पृष्ठतो दृष्टिमकृत्वेत्यर्थः)। तच्च 'निर्ऋत्या' अन्तर्द्धानाय (दर्शनाभावाय भवति)।

कल्पः, 'निवेशनः सङ्गमनो वसूनामित्याहवनीयं गार्हपत्यं चोपतिष्ठन्ते' इति। पाठस्तु,—"निवेशनः सङ्गमनो वसूनां विश्वा रूपाभिचष्टे शचीभिः। देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनाम्(११)" इति। अयमग्निः, 'निवेशनः' (यजमानानां स्वस्वगृहे निवेशयिता), 'वसूनां' 'सङ्गमनः' (प्रजापशुरूपाणां द्रव्याणां प्रापकः) सन् 'शचीभिः' (स्वकीयाभिः शक्तिभिः) 'विश्वा रूपा' (सर्वाणि रूपाणि) 'अभिचष्टे' (अभितः ख्यापयति)। तत्र दृष्टान्तः,—'सविता' 'देवः' 'इव' (यथा सूर्यः सर्वाणि रूपाणि प्रकाशयति तद्वत्); तादृशोऽग्निः 'सत्यधर्मा' ('सत्यो'ऽवश्यम्भावी-† फलोपेतो 'धर्मो'ऽग्निहोत्रादिलक्षणो यस्यासौ 'सत्यधर्मा'), 'इन्द्रः' परमैश्वर्यवान्; अत एव 'पथीनां' 'समरे' 'न तस्थौ' (परि-

---

* पराङ्मुखीमिति पाठो भवितुं युक्तः।

† अवश्यंभावि-इति पाठो भवितुं युक्तः।

पन्थिनां शत्रूणां समागमे पुरतः स्वयमागत्य न तिष्ठति, किन्तु स्वकीयनामग्रहणमात्रेण ते पलायन्त इत्यर्थः)।

अनेन मन्त्रेण साध्यमुपस्थानं विधत्ते,—"मार्जयित्वोपतिष्ठन्ते मेध्यत्वाय" (५।२।४अ०) इति। 'शन्नो देवीः' इतिमन्त्रेण मार्जनं कृत्वा पश्चात् 'निवेशनः' इति मन्त्रेण 'उपतिष्ठन्ते'। अनेनोपस्थानेन यजमानो मेध्यो भवति।

उपस्थेयं विधत्ते,—"गार्हपत्यमुपतिष्ठन्ते निर्ऋतिलोक एव चरित्वा पूता देवलोकमुपावर्त्तन्ते" (५।२।४अ०) इति। दक्षिणपश्चिमावान्तररूपे 'निर्ऋति'-स्थाने चयनार्थं 'चरित्वा' ततो मार्जनेन 'पूताः' सन्तो 'गार्हपत्य'-समीपरूपं 'देवलोकम्' आगच्छन्ति।

मन्त्रगतामेकत्वसङ्ख्यां प्रशंसति,—"एकयोपतिष्ठन्त एकधैव यजमाने वीर्यं दधति" (५।२।४अ०) इति। 'एकधा' (युगपदित्यर्थः)।

मन्त्रगतस्य वसुशब्दस्यार्थं दर्शयति,—"निवेशनः सङ्गमनो वसूनामित्याह प्रजा वै पशवो वसु प्रजायैवैनं पशुभिः समर्द्धयन्ति" (५।२।४अ०) इति।

अथाग्निचयनभूमेः परिमाणं विधत्ते,—"पुरुषमात्रेण विमिमीते यज्ञेन वै पुरुषः सम्मितो यज्ञपरुषैवैनं विमिमीते" (५।२।५अ०) इति। पुरुषः प्रमाणं यस्य दण्डस्य सोऽयं 'पुरुषमात्रः', तेन दण्डेन भूमेः प्रमाणं कुर्यात्। यज्ञाभिमानो*देवेन समान-

---

* यज्ञाभिमानि-इति पाठो भवितुं युक्तः।

प्रमाणे लौकिकः 'पुरुषः', 'पुरुषमात्रेण' विमिमीते सति यज्ञस्य 'परुषा' (पर्वणा) प्रमाणेन 'एव' 'एनम्' (अग्निं) विमीतवान् भवति।

पुरुषो हि द्विविधः, अवाग्बाहुरूर्द्धबाहुश्चेति, अतो विशेषं विधत्ते,—"यावान् पुरुष ऊर्द्धबाहुस्तावान् भवत्येतावद्वै पुरुषे वीर्यं वीर्येणैवैनं विमिमीते" (५।२।५ अ०) इति। पुरुषोऽप्यूर्द्ध्वं प्रसारितस्य बाहोरुपरिस्थितं वस्तु स्प्रष्टुं न शक्नोति, अतः पुरुषवीर्यस्य तावन्मात्रत्वाद् वीर्येणैव मानसिद्ध्यर्थम् ऊर्द्धपुरुषप्रमाणं कुर्यात्।

वामदक्षिणपार्श्वयोः पक्षस्थानं विधत्ते,—"पक्षी भवति न ह्यपक्षः पतितुमर्हति," (५।२।५ अ०) इति। पक्षभङ्गे सति अपक्षेण उत्पतितुमशक्यत्वात् पक्ष्याकारस्याग्नेरुत्पततः पक्षयुक्तत्वं कुर्यात्। यदुक्तं सूत्रकारेण, 'चतुर आत्मनि पुरुषान् विमिमीते पुरुषं दक्षिणे पक्षे पुरुषं पुच्छे पुरुषमुत्तरेऽरत्निना दक्षिणतो दक्षिणं पक्षं प्रवर्द्धयत्येवम् उत्तरत उत्तरम्' इति।

तयोः परिमाणाधिक्यं विधत्ते,—"अरत्निना पक्षौ द्राघीयाꣳसौ भवतस्तस्मात् पक्षप्रवयाꣳसि वयाꣳसि" (५।२।५ अ०) इति। चतुर्विंशत्यङ्गुलयोऽरत्निः, तेन 'अरत्निना' 'पक्षौ' पुरुषात् दीर्घतरौ कुर्यात्। यस्मादेवं, 'तस्मात्' लोके पक्षिणोऽपि पक्षयोरभिवृद्धियुक्ता दृश्यन्ते।

पक्षयोराधिक्यांशं विधाय स्वरूपपरिमाणं विधत्ते,—"व्याममात्रौ पक्षौ च पुच्छञ्च भवत्येतावद्वै पुरुषे वीर्यं वीर्यसम्मितः"

(५।२।५अ॰) इति। बाह्वोः प्रसारणं 'व्यामः', तत्परयाः पुच्छस्य च परिमाणं, पुरुषव्यवहारसामर्थ्यस्य च तावत्त्वादयमग्निर्वीर्येण सम्मितो भवति।

मानसाधनं विधत्ते,—"वेणुना विमिमीत आग्नेयो वै वेणुः सयोनित्वाय" (५।२।५अ॰) इति। अग्निना प्रविष्टत्वात् 'वेणुः' 'आग्नेयः'; तथा चाम्नातम्,—'अग्निर्देवेभ्योऽनिलायत स वेणुं प्राविशत्' इति। अतोऽग्नेः स्वकीयस्थानसहितत्वाय वेणुना विमानं कुर्यात्।

कल्पः,'सं वरत्रा दधातनेति संप्रेष्यति' इति। पाठस्तु,—"सं वरत्रा दधातन निराहावान् कृणोतन। सिञ्चामहा अवटमुद्रिणं वयं विश्वाहाऽदस्तमक्षितम्(१३)" इति। हे कर्षकाः पुरुषाः, 'वरत्रा' (चर्ममयी रज्जुः(?)) 'सं'-'दधातन' (सम्यक् स्थापयत)। तत्र 'आहावान्' (बलीवर्दानामुदकपानार्थं द्रोणीविशेषान्) 'निः'-'कृणोतन' (निष्पादयत)। 'अवटम्' (उदकोद्धरणाय सम्पादितं कूपं) 'उद्रिणं' (बहुलोदकयुक्तं यथा भवति तथा) 'सिञ्चामहै' (भूतलगतपङ्कोद्धरणेन सेकयुक्तं प्रस्रवणोपेतं अवटं कुर्मः)। कीदृशमवटं ?—'विश्वाहा' (सर्वेष्वप्यहःसु) 'अदस्तं' (कूलपात-राहित्येनाहिंसितम्), 'अक्षितं' (घर्मकालेऽपि शोषाभावलक्षणम्)।

कल्पः, 'निष्कृताहावमवटमित्यवटादुदकमाहावेषूत्सिञ्चति' इति। पाठस्तु,—"निष्कृताहावमवटꣳ सुवरत्रꣳ सुषेचनम्। उद्रिणꣳ सिञ्चे अक्षितम्(१४)" इति। काष्ठपाषाणनिर्मितानां द्रोणीनामन्तःस्थितावकाशरूपो योऽयमवटः, तस्य 'अवटम्' अहं

'सिञ्चे' (तत्रोदकं क्षारयामि)। कीदृशमवटं?—'निष्कृताहावं' (पार्श्वेषु सच्छिद्रत्वेन निष्कृता निष्पादिता आहावा द्रोण्यो यस्य अवटस्य सोऽयं निष्कृताहावः, तं); 'सुवरत्रं' (कूपादुदकमुद्धर्त्तुं शोभना दृढा वरत्राश्चर्ममयरज्जवो यस्यासौ सुवरत्रस्तं); 'सुषेचनं' (सुष्ठु सेक्तुं योग्यानि उदकोद्धरणसाधनानि पात्राणि यस्यासौ सुषेचनस्तं); 'उद्रिणं' (उदकवन्तम्); 'अक्षितम्' (उदकस्य अगलितत्वेन अपचयरहितम्)।

कल्पः, 'सीरा युञ्जन्तीति द्वाभ्याꣳ सीरं युनक्ति' इति। तत्र प्रथमामाह,—"सीरा युञ्जन्ति कवयो युगा वितन्वते पृथक्। धीरा देवेषु सुम्नया(१५)" इति। 'कवयः' (कृषिकर्माभिज्ञाः) 'सीरा' (सीरं लाङ्गलं) 'युञ्जन्ति' (सज्जीकुर्वन्तु)। तथा युगानि षिषु षट्सु वा कक्ष्याविशेषेषु अपेक्षितानि 'पृथक्' 'वितन्वते' (एकैकं विस्तारयन्तु)। कीदृशाः कवयः?—'धीराः' (धैर्ययुक्ताः) अनलसा इत्यर्थः; 'देवेषु' (देवताविशेषविषयेषु) 'सुम्नया' (सुम्नं सुखमिच्छन्तीति सुम्नया (?))।

अथ द्वितीयामाह,—"युनक्त सीरा वि युगा तनोत कृते योनौ वपतेह बीजं। गिरा च श्रुष्टिः सभरा असं नो नेदीय इत्सृण्या पक्वमायत्(१६)" इति। हे कर्षकाः, 'सीरा' 'युनक्त' (लाङ्गलं योजयत); 'युगा' 'वि'-'तनोत' (युगानि विस्तारयत); 'कृते'* (कर्षणेन योग्ये) 'इह' 'योनौ' (अस्मिन् स्थाने) 'बीजं' 'वपत'। किञ्च तद्बीजं 'गिरा' (आशीर्वादरूपेण मङ्गलवाक्येन) युक्तमिति

* कृतेन इति आदर्शपुस्तकपाठो न सम्यक्।

शेषः। 'सुष्टिः' (तत्र निष्पन्नः सस्यः) 'नः' (अस्मदर्थं) 'सभरा' (असत्फलभारयुक्तः) अस्तु। 'पक्वं' फलं 'नो' 'नेदीय इत्' (अन्तिकतममेव, (अल्पकालानिष्पाद्यमेव असत्*) 'सृण्या' (लवनसाधनेन दात्रेण) लूनं सत् 'नः' 'आयत्' (अस्मत्समीपमागच्छतु)।

कल्पः, 'लाङ्गलं पवीरवमितिद्वाभ्यां कृषति' इति। तत्र प्रथमामाह,—"लाङ्गलं पवीरव॰ सुशेव॰ सुमतित्सरु। उदित्कृषति गामविं प्रफर्व्यञ्च† पीवरीं। प्रस्थावद्रथवाहनम्(१०)" इति। इदं 'लाङ्गलं' 'उदित्कृषति', (उद्धृतानि प्रौढलोष्टानि यथा भवन्ति, तथैव कृषतु)। कीदृशं लाङ्गलं?—'पवीरवं' (वज्रवदतितीक्ष्णं), 'सुशेवं', (कर्षकैः सुष्ठु सेवितुं(?) शक्यं), अतितीक्ष्णत्वेन सहसा भूमिभेदात् कर्षकाणां नास्ति प्रयास इत्यर्थः। 'सुमतित्सरु' (कर्षकैः शोभनमिदमिति मन्यमानः 'सु' 'मतित्सरुः' भूमौ निम्नोन्नतत्वेन विच्छिद्यगमनविशेषः यस्य, तत् सुमतित्सरु)। अनेन कर्षणेन फलाधिक्ये सति गवादिकं यजमानः प्राप्नोतीति शेषः। तत्र गौः अविरित्युभयं प्रसिद्धं, 'प्रफर्व्या' (प्रथमवयस्का कन्या), 'पीवरी' (पुष्टा गौः), 'प्रस्थावत्' (प्रयाणसमर्थम्) 'रथवाहनं' (रथं वोढुं योग्यमश्वादिकं)। यदा हि कृषिः समृद्धा भवति, तदानीमेतत् सर्वं यजमानस्य सुलभम्।

अथ द्वितीयामाह,—"शुनं नः फाला वितुदन्तु भूमि॰ शुनं कीनाशा अभियन्तु वाहान्। शुनं पर्जन्यो मधुना पयोभिः

---

* 'अल्पकालानिष्पाद्यमेव असत्' इत्ययमंशः '(असत्फलभारयुक्तः) अस्तु' इत्यनन्तरं भवितुं युक्तः।

† प्रफर्व्यञ्च इति टीकानुसारी पाठः कल्पयितुं युक्तः।

शुनासीरा शुनमस्मासु धत्तम्(१८)" इति। 'नः' (अस्माकं) 'शुनं' (सुखं) यथा भवति, तथा 'फालाः' (लाङ्गलमुखानि) 'भूमिं' 'वितुदन्तु' (विशेषेण कृषन्तु)। 'कीनाशाः' (कर्षकाः) 'वाहान्' (बलीवर्दान्) 'शुनं' यथा भवति, तथा 'अभियन्तु' (अभितः प्रेरयन्तु, अभितः प्रेरयन्तो गच्छन्तु)। 'पर्जन्यः' (मेघः) 'शुनं' यथा भवति, तथा 'मधुना' (मधुररसेन) युक्तैः 'पयोभिः' (उदकैः) वृष्टिमतिसृजत्विति शेषः। 'शुनासीरा' (वाय्वादित्यौ), युवां 'शुनं' (सुखं) 'अस्मासु' 'धत्तम्'।

'सीरा युञ्जन्ति' इतिमन्त्रद्वयेन साध्यं लाङ्गलयोगं, 'लाङ्गलं पवीरवम्' इतिमन्त्रद्वयेन साध्यं कर्षणञ्च क्रमेण विधत्ते,—"यजुषा युनक्ति यजुषा कृषति व्यावृत्त्यै" (५।२।५अ०) इति। 'यजुषा' मन्त्रेण। लौकिकन्तु कर्षणममन्त्रकमिति व्यावृत्तिः।

बलीवर्दसङ्ख्यां विधत्ते,—"षड्गवेन कृषति षड्वा ऋतव ऋतुभिरेवैनं कृषति" (५।२।५अ०) इति। कच्छ्यात्रयरूपेणावस्थितेषु त्रिषु युगेषु वध्यमानाः षट्सङ्ख्याका गावो बलीवर्दा यस्य लाङ्गलस्य तत् 'षड्गवम्'।

पक्षान्तरं विधत्ते,—"यत् द्वादशगवेन संवत्सरेणैव" (५।२।५अ०) इति। कच्छ्याषड्गतेषु वध्यमाना द्वादशसङ्ख्याका गावो यस्य लाङ्गलस्य तत् 'द्वादशगवम्', तेन यदि कृषेत्, तदानीं द्वादशमासात्मकेन 'संवत्सरेणैव' कर्षणं कृतं भवति।

चयनस्थानस्य साकल्येन कर्षणप्राप्तौ तद्वारयितुं विधत्ते,— "इयं वा अग्नेरतिदाहादबिभेत्सैतद्द्विगुणमपश्यत् कृष्टञ्चाकृष्टञ्च

ततो वा इमां नात्यदहद्यत्कृष्टश्चाकृष्टश्च भवत्यस्या अनतिदाहाय" (५।२।५अ०) इति। साकल्येन कृष्टे स्थाने चीयमानोऽग्निर्भूमिमत्यन्तं दहति, तस्मात् 'अतिदाहात्' बिभेति; 'सा' (भूमिः) तमतिदाहं परिहर्त्तुमुपायं विचार्य कस्मिंश्चित्प्रदेशे 'कृष्टं' कस्मिंश्चित् 'अकृष्टं' इत्येवमेतत् 'द्विगुणम्' (उभयविधस्थानम्) उपायत्वेन 'अपश्यत्'। लोकेऽपि प्रहारेण छिन्नेऽवयवे अग्निसामीप्येन यावान् सन्तापः, न तावानितरस्मिन्नवयवे दृश्यते। तस्मात् कृष्टाकृष्टभेदेन द्वैगुण्ये सति अग्निश्चितो भूमिं नात्यन्तं दहति। तस्माद्भूमेः 'अनतिदाहाय' किञ्चित् 'कृष्टं', किञ्चित् 'अकृष्टम्' इत्येवं 'द्विगुणं' कुर्यात्।

तदेतद्द्वैगुण्यं प्रकारान्तरेण प्रशंसति,—"द्विगुणं त्वा अग्निमुद्यन्तुमर्हतीत्याहुर्यत्कृष्टश्चाकृष्टश्च भवत्यग्नेरुद्यत्यै" (५।२।५अ०) इति। गार्हपत्यादुत्तरवेदिं प्रत्यग्निप्रणयनकाले सिकताभिरेकं पात्रमापूर्य, तस्योपरि पात्रान्तरे 'अग्निं' प्रक्षिप्य द्विगुणेन पात्रेणाग्नेरुद्यमनं दृष्टं, तद्वदत्रापि कृष्टाकृष्टभेदेन 'द्विगुणं' स्थानम् अग्नेरुद्यमनयोग्यमित्यभिज्ञा आहुः। तस्मादुद्यमनाय 'द्विगुणं' कर्त्तव्यम्।

अथ कर्षणसमाप्तेरूर्द्ध्वं यदा बलीवर्दानुत्सृजति तदानीमुत्सर्जनाय दिग्विशेषं विधत्ते,—"एतावन्तो वै पशवो द्विपादश्च चतुष्पादश्च तान् यत् प्राच उत्सृजेद्रुद्रायापि दध्याद्यद्दक्षिणा पितृभ्यो निधुवेद् यत् प्रतीचो रक्षाꣳसि हन्युरुदीच उत्सृजत्येषा वै देवमनुष्याणाꣳ शान्ता दिक् तामेवैनाननूत्सृजत्यथो खल्विमां दिशमुत्सृजत्यसौ वा आदित्यः प्राणः प्राणमेवैनाननूत्सृजति"

(५।२।५ अ०) इति। बलीवर्दप्रेरकाः कर्षका 'द्विपादः', बलीवर्दाः 'चतुष्पादः', 'तान्' उदङ्मुखत्वेन निःसारयेत्। रुद्रः स्वदिक्सामीप्यात् प्राच्यां दिशि आगत्य निर्गच्छतो बलीवर्दान् ग्रहीष्यामीत्यवतिष्ठते, अतस्तत्र निर्गमने 'रुद्राय' दत्ता भवन्ति। दक्षिणस्यां दिशि पितरः स्वत एव तिष्ठन्ति, तत्र निर्गमने तेभ्यो 'निधुवेत्' (नितरामर्पयति)। प्रतीच्यां वरुणप्रेरितानि 'रक्षांसि' अवतिष्ठन्ते, तानि च पशून् 'हन्युः'। उदीची तु बाधकरहितत्वात् 'देवानां' 'मनुष्याणां' च 'शान्ता'। अतः 'तामेव' 'अनु' 'एनान्' (बलीवर्दान्) 'उत्सृजेत्'। 'अथो खलु' (अपि च) येयमुदीची, ताम् 'इमां' 'दिशं' प्रति यदा 'उत्सृजति', तदानीं प्राणरूपम् आदित्यमनूत्सर्जनं कृतं भवति। आदित्यस्य प्राणरूपत्वं प्राणस्वामित्वादवगन्तव्यम्। अत एवारण्यकाण्डे समाम्नायते,-"योऽसौ तपन्नुदेति, स सर्वेषां भूतानां प्राणानादायोदेति" इति। आथर्वणिकास्त्वामनन्ति, 'आदित्यो ह वै बाह्यः प्राण उदयत्येव ह्येनं चाक्षुषं प्राणमनुगृह्णानः' इति। तस्य चादित्यस्योत्तरदिग्वर्त्तित्वं पुरुषविशेषापेक्षया द्रष्टव्यं। मेरोः परितस्तत्तल्लोकेषु तत्तत्प्राणिनो वर्त्तन्ते; तथा सति मेरुं प्रदक्षिणीकुर्वन् 'आदित्यः' अस्मदपेक्षया या उदीची, तस्यामप्यागच्छति। तदानीं कस्मिंश्चिन्मेरुपार्श्वेऽवस्थितैरादित्यो विलोक्यते; सोऽयं तेषां प्रत्युदयः। एतत्सर्वमभिप्रेत्य तस्योत्तरदिगुदयमङ्गीकृत्य सा दिक् प्रशस्यते।

कर्षणादूर्द्ध्वमुत्सर्जनप्रकार उक्तः। अथ कर्षणकाले कश्चिद्विशेष उच्यते। कल्पः,-'पुच्छाच्छिरोऽधिकर्षति कामं कामदुघे धुक्ष्वेति

प्रदक्षिणमावर्त्तयंस्तिस्रस्तिस्रः सीताः सङ्ख्यिताः कृषति मध्ये संभिन्ना भवन्ति दक्षिणात्पश्चादुत्तरस्माद्दक्षिणायै श्रोणेरुत्तरम् अंसमुत्तरायै दक्षिणम्' इति। पाठस्तु,—"कामं कामदुघे धुक्ष्व मित्राय वरुणाय च। इन्द्रायाग्नये पूष्ण ओषधीभ्यः प्रजाभ्यः(१९)" इति। काम्यन्त इति कामाः भोगाः, तान् दोग्धि सम्पादयतीति कामदुघा लाङ्गलपद्धतिः। हे 'कामदुघे' (मित्रादीनां 'कामम्' (अपेक्षितं भोगं) 'धुक्ष्व' (सम्पादय)।

कर्षणकाले प्रादक्षिण्येनावृत्तिं विधत्ते,—"दक्षिणा पर्यावर्त्तन्ते स्वमेव वीर्यमनु पर्यावर्त्तन्ते तस्माद्दक्षिणोऽर्द्ध आत्मनो वीर्यावत्तरो ऽथो आदित्यस्यैवावृतमनु पर्यावर्त्तन्ते तस्मात् पराञ्चः पशवो वितिष्ठन्ते प्रत्यञ्च आवर्त्तन्त" (५।२।५अ०) इति। 'दक्षिणा' (प्रादक्षिण्येन) दक्षिणभागमवस्थाप्य वामभागस्य परिभ्रमणं प्रादक्षिण्यं; पुरुषस्य दक्षिणभागे सामर्थ्यसद्भावात् तदेवानुसृत्य पर्यावृत्तिः कृता भवति। यस्माद्दक्षिणभागे वीर्यं अत्यभिप्रेतं, 'तस्मात्' लोके सर्वव्यापारे दक्षिणहस्तस्यैव वीर्यातिशय उपलभ्यते। किञ्चादित्यो मेरुं प्रदक्षिणीकुरुते तदप्यत्रानुसृतं भवति। यस्मादत्रावृत्तिः कृता, 'तस्मात्' लोकेऽपि प्रातःकाले 'पशवः' 'पराञ्चः' अरण्ये गत्वा विविधं सञ्चरन्ति, पुनः सायंकाले गृहं प्रत्यभिमुखा 'आवर्त्तन्ते'।

कर्षणे प्रकारविशेषं विधत्ते,—"तिस्रस्तिस्रः सीताः कृषति त्रिवृतमेव यज्ञमुखे विपातयति" (५।२।५अ०) इति। लाङ्गलपद्धतिः 'सीता', पुच्छादारभ्य शिरःपर्यन्तं 'तिस्रः सीताः

कृषति'। तथा दक्षिणात्पक्षादारभ्य उत्तरपक्षपर्यन्तं तिस्रः सीताः कृषेत्। तथा दक्षिणस्याः श्रोणेरारभ्य उत्तरांसपर्यन्तं तिस्रः सीताः कृषेत्। तथोत्तरस्याः श्रोणेरारभ्य दक्षिणांसपर्यन्तं तिस्रः सीताः कृषेत्। एवं द्वादश 'सीताः' सम्पद्यन्ते। एवमावृतया त्रिसङ्ख्यया त्रिवृत्स्तोममेव यज्ञप्रारम्भे विस्तारयति।

कल्पः, 'घृतेन सीतेति सीतान्तरालान्यभिमृशति' इति। पाठस्तु,—"घृतेन सीता मधुना समक्ता विश्वैर्देवैरनुमता मरुद्भिः। ऊर्जस्वती पयसा पिन्वमानास्मान्त्सीते पयसाभ्यावृत्स्व(१०)" इति। इयं 'सीता' 'मधुना' (मधुरेण) 'घृतेन' 'समक्ता' (सम्यगार्द्रीकृता); अत एव 'विश्वैर्देवैः' 'मरुद्भिः' समीचीनेयमित्यङ्गीकृता। सा पुनः 'ऊर्जस्वती' 'पयसा पिन्वमाना' (जलेनाप्यायिता) वर्त्तसे। हे 'सीते', जलेनाप्यायिता त्वं 'अस्मान्' प्रति 'अभ्यावृत्स्व' (अभित आवृत्ता भव)।

अत्र विनियोगसंग्रहः,—

सं, गार्हपत्य उख्याग्निं चतुर्भिर्निवपेदमुम्।
माता, शिक्यादुखां मुञ्चेत्, यद, शिक्यपरिग्रहः॥
नमो, नैर्ऋतदेशे तच्छिक्यं त्यज्यं, यदित्यतः।
शिक्यजालेन याः कृष्णा इष्टकाश्छादयेदमूः॥
यस्यास्त्रिभिस्तिस्र एताः कृष्णा उपदधाति हि।
निवे,ऽग्निमुपतिष्ठेत, सं व, सम्प्रेष्यतीतरान्॥
निष्कृताहा, ऽवटे सिञ्चेत्सीरा,-द्वाभ्यां हलार्पणम्।
लाङ्ग,-द्वाभ्यां कृषेत्, काममावर्त्तेत प्रदक्षिणम्॥
घृते,ऽन्तराले संस्पर्श इति मन्त्रास्तु विंशतिः॥

अत्र मीमांसा,—तृतीयाध्यायस्य द्वितीयपादे चिन्तितम् । (अ०२)

"ऐन्द्र्या निवेशनेत्यग्निं गार्हपत्यं भजेदिति ।
प्रकाश्यो मुख्य इन्द्रो वा गौणो? मुख्यस्तु पूर्ववत् ॥
एकस्य गौणताप्रेप्स्ये मन्त्रस्यैवानुवादतः ।
गौणतातोऽम्युपस्थाने मन्त्रः श्रुत्या नियुज्यते ॥

अग्निचयने 'निवेशनः सङ्गमनः' इत्यादिका काचिदैन्द्री ऋक् समाम्नाता; तस्या उत्तरार्द्धे 'इन्द्रो न तस्थौ' इति विद्यमानत्वात् तन्मन्त्र इन्द्रविषयः । ब्राह्मणञ्चैवमाम्नायते,—'निवेशनः सङ्गमनो वसूनामित्यैन्द्र्या गार्हपत्यमुपतिष्ठते' इति ; एतेन ब्राह्मणेन गार्हपत्ये विनियुज्यमानोऽर्थं प्रकाशयन् मुख्यमिन्द्रं प्रकाशयति । मुख्यस्त्वेन्द्रः स्वर्गाधिपतिः सहस्राक्षः, तत्रैवेन्द्रशब्दस्य रूढत्वात् । गौणस्त्विन्द्रो गार्हपत्यः, तस्यैश्वर्यगुणयोगेन यज्ञसाधनत्वेन मुख्येन्द्रसदृशत्वात् । तत्र पूर्वन्यायेन शीघ्रप्रतिपत्त्या मुख्येन्द्रे मन्त्रेण प्रकाशिते सति मन्त्रब्राह्मणयोर्विसंवादं वारयितुं गार्हपत्यशब्देन मुख्येन्द्रो गार्हपत्यदेशो वा लक्षणीयः । इति प्राप्ते ब्रूमः,—इन्द्र-गार्हपत्ययोरन्यतरस्य गौणत्वेऽवश्यम्भाविनि सति ब्राह्मणवाक्यस्य विधायकत्वादप्राप्तार्थत्वेन, विधौ लक्षणाया अन्याय्यत्वात् प्राप्तार्थत्वेनानुवादको मन्त्र एव स्वघटकेन्द्रशब्देन वह्निं लक्षयति । ततो गार्हपत्यप्रकाशने समर्थं मन्त्रम् 'ऐन्द्र्या' इति तृतीयाश्रुतिर्वह्न्युपस्थाने विनियुङ्क्ते" इति ।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे द्वितीयप्रपाठके पञ्चमोऽनुवाकः ॥ ० ॥

या जाता ओषधयो देवेभ्यस्त्रियुगं पुरा। मन्दामि बभ्रूणामहꣳ शतं धामानि सप्त च[१]। शतं वो अम्ब धामानि सहस्रमुत वो रुहः। अथा शतक्रत्वो यूयमिमं मे अगदं कृत[२]। पुष्पावतीः प्रसूवतीः फलिनीरफला उत। अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः[३]। ओषधीरिति मातरस्तद्वो देवीरुपब्रुवे। रपाꣳसि विघ्नतीरित रपः ॥ १ ॥

चातयमानाः[४]। अश्वत्थे वो निषदनं पर्णे वो वसतिः कृता। गोभाज इत् किलासथ यत् सनवथ पूरुषं[५]। यदहं वाजयन्निमा ओषधीर्हस्त आदधे। आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा[६]। यदोषधयः सङ्गच्छन्ते राजानः समिताविव। विप्रः स उच्यते भिषग्रक्षोहामीवचातनः[७]। निष्कृतिर्नाम वो माताथा यूयꣳ स्थ संकृतीः। सराः पतत्रिणीः ॥ २ ॥

स्थन यदामयति निष्कृत[८]। अन्या वो अन्यामवत्वन्यान्यस्या उपावत। ताः सर्वा ओषधयः संविदाना इदं मे प्रावता वचः[९]। उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते। धनꣳ सनिष्यन्तीनामात्मानं तव पूरुष[१०]। अति विश्वाः परिष्ठा स्तेन इव

वज्रमक्रमुः। ओषधयः प्राचुच्यवुर्यत्किञ्च तनुवा रपः[११] याः॥३॥

त आतस्थुरात्मानं या आविविशुः परुः-परुः। तास्ते यक्ष्मं विबाधन्तामुग्रो मध्यमशीरिव[१२]। साकं यक्ष्म प्रपत श्येनेन किकिदीविना। साकं वातस्य ध्राज्या साकं नश्य निहाकया[१३] अश्वावतीं सोमवतीमूर्जयन्तीमुदोजसम्। आवित्सि सर्वा ओषधीरस्मा अरिष्टतातये[१४]। याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः। बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः[१५] याः॥४॥

ओषधयः सोमराज्ञीः प्रविष्टाः पृथिवीमनु। तासां त्वमस्युत्तमा प्रणो जीवातवे सुव[१६]। अवपतन्तीरवदं दिव ओषधयः परि। यं जीवमश्नवामहै न स रिष्याति पूरुषः[१७]। याश्चेदमुपशृण्वन्ति याश्च दूरं परागताः। इह सङ्गत्य ताः सर्वा अस्मै सन्दत्त भेषजं[१८]। मा वो रिषत् खनिता यस्मै चाहं खनामि वः। द्विपच्चतुष्पदस्माकं सर्वमस्त्वनातुरं[१९]। ओषधयः संवदन्ते सोमेन सह राज्ञा। यस्मै करोति ब्राह्मणस्तं राजन् पारयामसि[२०]॥५॥

रपः । पतत्रिणीः । याः । अ॒ꣳहसोयाः । खनामि वः । अष्टादश च ॥ ६ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे द्वितीय-प्रपाठके षष्ठोऽनुवाकः ॥ ० ॥

पञ्चमेऽनुवाके अग्निक्षेत्रकर्षणमुक्तम् । अथ षष्ठे ओषधिवापो विधीयते । कल्पः, 'या जाता ओषधय इति चतुर्दशभिरोषधीर्निवपति' इति । तत्र प्रथमामाह,—"या जाता ओषधयो देवेभ्यस्त्रियुगं पुरा । मन्दामि बभ्रूणामहꣳ शतं धामानि सप्त च(१)" इति। युगशब्दः कालवाची। 'त्रियुगम्'(वर्षाः, शरत्, वसन्तः-इति कालत्रयम्) उद्दिश्य 'पुरा' (सृष्ट्यादौ) 'देवेभ्यः' सकाशात् 'याः' 'ओषधयः' उत्पन्नाः । 'बभ्रूणां' (प्राणिभरणसमर्थानां, परिपाकेन पिङ्गलवर्णानां वा) तासाम् ओषधीनां 'शतं धामानि' (शतसङ्ख्याकान् जातिभेदान्) 'सप्त च' (विशेषाकारेण ग्राम्यान् आरण्यांश्च सप्तधाऽन्यभेदान्*) अवेक्ष्य 'मन्दामि' (हृष्यामि) ।

अथ द्वितीयामाह,—"शतं वो अम्ब धामानि सहस्रमुत वो रुहः । अधा शतक्रत्वो यूयमिमं मे अगदं कृत(२)" इति । हे 'अम्ब' (मातृस्थानीया ओषधयः), 'वः' (युष्माकं) 'धामानि' (जातिभेदाः स्थानानि वा) 'शतं' सन्ति, 'उत' (अपि च) 'वः' (युष्माकं) 'रुहः' (प्ररोहा अङ्कुराश्च) 'सहस्रं' सन्ति; 'शतं'-'सहस्रम्'-

* सप्त धान्यभेदान् इत्यपि क्वचित् ।

इत्याभ्याम्. अपरिमितत्वमुपलक्ष्यते। 'अथ' (एवंबहुविधोपेतत्वे सति) (शतसङ्ख्याकाखाः क्रतवो या (युष्माभिर्निष्पाद्यन्ते तादृश्यः) 'शतक्रत्वो' 'यूयं' 'मे' (मदीयम्) 'इमं' (यजमानम्) 'अगदं कृत' (क्षुत्पिपासादिरोगरहितं कुरुत)।

अथ तृतीयामाह,—"पुष्पावतीः प्रसूवतीः फलिनीरफला उत। अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः[३]" इति। अत्र ओषधयो नानाविधैर्विशेषणैः प्रशस्यन्ते। 'पुष्पावतीः' काश्चित् ओषधयः (पुष्पमात्रपर्यवसायिन्यो न तु फलन्ति); 'प्रसूवतीः' अन्या ओषधयः (पुष्पपूर्वकफलोत्पत्तिस्थायिन्यः); 'फलिनीः' पराः काश्चिदोषधयः (पुष्पं विना केवलेन फलेन युक्ताः); 'उत' अपि च) 'अफलाः' अन्याः काश्चिदोषधयः (फलेन तद्धेतुपुष्पेण च विरहिताः), तदेतत् सर्वं लोकसिद्धानुसारेणोदाहरणीयं; 'वीरुधः' काश्चिदोषधयो (लतारूपाः), 'पारयिष्णवः' (फलपाकान्तत्वं परित्यज्य पारं बहुसंवत्सरावसानं प्राप्तुं शीलं यासां, तास्तथाविधाः), तद्यथा नागवल्लीप्रभृतयः, 'अश्वा इव सजित्वरीः' (यथा अश्वा युद्धे बहवः सह शीघ्रं गत्वा जयशीला भवन्ति, एवमोषधयोऽपि बहवः सहोत्पन्नाः फलपर्यन्तलक्षणजयशीला भवन्ति)।

अथ चतुर्थीमाह,—"ओषधीरिति मातरस्तद्वो देवीरुपब्रुवे। रपांसि विघ्नतीरित रपश्चातयमानाः[४]" इति। हे 'मातरः' (मातृसमानाः), 'देवीः' (देव्यः), इतिशब्दोऽत्र हेत्वर्थे, यस्मात् 'ओषधीः' यूयम् (ओषध्यः), 'तत्' (तस्मात्) 'वः' (युष्मान्) 'उपब्रुवे'

(प्रार्थये)। 'ओषो' दाहः,—फलपाको धीयते स्थाप्यते यासु, ता ओषधयः, अतो युष्मान् प्रति प्रार्थनमुचितमित्यर्थः। कथं प्रार्थनमिति?—तदुच्यते—'रपांसि' 'विघ्नतीः' (पापानि विनाशयन्त्यः), 'रपश्चातयमानाः' (पापफलं दुःखमपि विनाशयन्त्यः), 'इत' (प्राप्नुत)।

अथ पञ्चमीमाह,—"अश्वत्थे वो निषदनं पर्णे वो वसतिः कृता। गोभाज इत् किलासथ यत् सनवथ पूरुषम्(५)" इति। हे ओषधिदेवताः, 'वः' (युष्माकम्) 'अश्वत्थे' 'निषदनं', 'पर्णे' (पलाशे वृक्षे) 'वः' (युष्माकं) 'वसतिः कृता' (निवासकारणं गृहं कृतम्)। देवताधिष्ठितत्वादेव लोकेऽश्वत्थवृक्षः प्रदक्षिणनमस्कारादिभिः* पूज्यते। पलाशवृक्षश्चेध्मादिरूपेण कर्मसाधनसम्पन्नः। ईदृश्योऽपि यूयं 'गोभाज इत्' (भवदीयस्थावररूपेण भूमिभाज इव) भूत्वा 'असथ' 'किल' (स्थिता इत्येतल्लोके प्रसिद्धम्)। तत्किमर्थमिति?—तदुच्यते—'यत्' (यस्मात् कारणात्) 'पूरुषं' (मनुष्यं) 'सनवथ' (अन्नदानेन पोषयथ); तस्मादेवं स्थावररूपावस्थानमित्यर्थः।

अथ षष्ठीमाह,—"यदहं वाजयन्निमा ओषधीर्हस्त आदधे। आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा(६)" इति। 'यत्' (यथा†) 'अहं' 'वाजयन्' (अन्नमिच्छन्) 'इमाः' 'ओषधीर्हस्ते' आदधामि। तदानीमेव 'यक्ष्मस्य' (क्षुधादिरोगस्य) 'आत्मा'

---

* प्रदक्षिणानमस्कारादिभिः इति आदर्शपुस्तकपाठः।

† यदेति भवितुं युक्तः।

(स्वरूपं) 'पुरा' 'नश्यति' (भोजनात्प्रागेव नष्टसदृशो भवति)।' तत्र दृष्टान्तः, 'यथा' लोके 'जीवगृभः' (धीवरैर्जीवस्य शशादेर्ग्रहणात् पुरा भीतः शशः कर्णाभ्यां नेत्रे पिधाय भूमिसंश्लिष्टो मृत इव तिष्ठति तद्वत्)।

अथ सप्तमीमाह,—"यदोषधयः सङ्गच्छन्ते राजानः समिताविव। विप्रः स उच्यते भिषग्रक्षोहाऽमीवचातनः(७)" इति। 'यत्' (यदा) 'ओषधयः' सर्वाः 'सङ्गच्छन्ते' (फलदानाय क्षेत्रसङ्गता भवन्ति); तत्र दृष्टान्तः, 'राजानः समिताविव' (यथा युद्धे प्रतिपक्षिणः सेनां जेतुं परस्परमनुकूला राजानः सङ्गच्छन्ते, तद्वत्); तदानीं सङ्गतासु ओषधीषु 'विप्रः' (मेधावी रसवीर्यभावनाभिज्ञो यः पुरुषः), 'स' 'भिषक्' 'उच्यते' (क्षुधादिरोगस्य चिकित्सक इत्यभिधीयते)। कथं भिषक्त्वमिति?—तदुच्यते—'रक्षोहा' (पक्वाभिः एताभिः पुरोडाशं रक्षोघ्नं कृत्वा रक्षसां हन्ता, तदुपद्रवरूपं रोगं निवारयति)। 'अमीवचातनः' (ओषधिजन्यपथ्यादिभिरमीवान् रोगांश्चातयति विनाशयतीति अमीवचातनः)।

अथाष्टमीमाह,—"निष्कृतिर्नाम वो माताथा यूयꣳ स्थ सङ्कृतीः। सराः पतत्रिणीः स्थन यदामयति निष्कृत(८)" इति। हे ओषधयः, 'वः' (युष्माकं) 'निष्कृतिर्नाम' (क्षुधादिविनाशनमेव) 'माता' (मातृवत् उत्पत्तिनिमित्तं क्षुधादिकं निवारयितुमेव भवतीनामुत्पत्तिः)।'अथ' (एवं सति) 'यूयं' 'सङ्कृतीः' 'स्थ' (सम्यक् स्वकार्ये क्षमा भवत)। 'सराः' (क्षुधादिविनाशयित्र्यः), 'पतत्रिणीः'

(पतत्रं पत्रं, तस्मात् प्रत्यागमनेनोपेताः) 'स्यन' (भवत)। 'यत्' (क्षुधादिकं) 'आमयति' (रोगवद्बाधेत) तत् 'निष्कृत' (विनाशयत)।

अथ नवमीमाह,—"अन्या वो अन्यामवत्वन्यान्यस्या उपावत। ताः सर्वा ओषधयः संविदाना इदं मे प्रावता वचः(९)" इति। हे ओषधयः, 'वः' (युष्माकं) मध्ये 'अन्या' काचिदोषधीव्यक्तिः 'अन्याम्' ओषधीव्यक्तिम् 'अवतु' (रक्षतु)। तथा रक्षिता सा 'अन्या' अपि 'अन्यस्या' रक्षिकाया 'उपावत' (समीपमागत्य तामपि 'अवतु'; सम्भूयकारित्वात् परस्पररक्षित्वमुचितं। तथाविधाः 'सर्वाः ओषधयः संविदानाः' (परस्परमेकमत्यं गताः) 'इदं' 'मे' (मदीयं) 'वचः' (वाक्यं) प्रार्थनारूपं 'प्रावत' (प्रकर्षेण रक्षत)।

अथ दशमीमाह,—"उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते। धनꣳ सनिष्यन्तीनामात्मानं तव पूरुष(१०)" इति। 'ओषधीनां' 'शुष्माः' (तदुपभोगजन्या बलविशेषाः) 'उत्'-'ईरते' (उद्गच्छन्ति)। तत्र दृष्टान्तः, 'गावो गोष्ठादिव' (यथा गावो निवासस्थानाद् गृहादरण्यदेशं प्रत्युद्गच्छन्ति तद्वत्)। कीदृशीनामोषधीनां?—'पूरुष' 'तव' 'आत्मानं' 'धनं' 'सनिष्यन्तीनां' (हे यजमान, त्वदीयं शरीरं धनमिव दातुमिच्छन्तीनां), यथा धनं दास्यन्ति, एवमोषधयोऽपि त्वदीयशरीराकारेण परिणताः शरीरं दास्यन्तीत्यर्थः।

अथैकादशीमाह,—"अति विश्वाः परिष्ठाः स्तेन इव व्रजमक्रमुः। ओषधयः प्राचुच्यवुर्यत्किञ्च तनुवाꣳ रपः(११)" इति। 'परिष्ठाः'

(शरीरस्योपरिस्था उदरमध्ये प्रविष्टाः) 'विश्वाः' सर्वाः 'ओषधयः' 'अति' (अजीर्णादिदोषमतिलङ्घ्य) 'अक्रमुः' (क्रान्ताः) देहे व्याप्ता इत्यर्थः। तत्र दृष्टान्तः,—'स्तेन इव व्रजं' (यथा रात्रौ गुप्तचोरो गोष्ठं प्रविश्य गामपहर्त्तुं सावधानो गोशालायां सर्वतो व्याप्नोति तद्वत्)। 'तनुवां' (शरीराणां सम्बन्धि) 'यत्किञ्च' 'रपः' (ज्वरगुल्मातीसारादिरूपं पापफलं यत्किञ्चित्) अस्ति, तत्सर्वम् 'ओषधयः' 'प्राचुच्यवुः*' (विनाशितवत्यः)।

अथ द्वादशीमाह,—"यास्त आतस्थुरात्मानं या आविविशुः परुः-परुः। तास्ते यक्ष्मं विबाधन्तामुग्रो मध्यमशीरिव(१२)" इति। हे यजमान, 'ते' (तव) 'आत्मानं' (शरीरं) 'याः' (ओषधयः) 'आतस्थुः' (आक्रम्य तिष्ठन्ति)। 'याः' (ओषधयः) 'परुः-परुः' 'आविविशुः' (रसरूपेण तत्तत्पर्व प्रविष्टवत्यः), 'ताः' सर्वाः 'ते' (तव) 'यक्ष्मं' (रोगं) 'विबाधन्तां' (विशेषेण नाशयन्तु)। तत्र दृष्टान्तः,—'मध्यम-शीरिव',—मध्यमेन स्वकीय-परकीय-पक्षपात-रहितेन शास्त्रीयमार्गेण शेते वर्त्तते, इति 'मध्यमशीः', तादृशो राजा दुष्टान् प्रति 'उग्रो' भूत्वा यथा विनाशयति तद्वत्।

अथ त्रयोदशीमाह,—"साकं यक्ष्म प्रपत श्येनेन किकिदीविना। साकं वातस्य ध्राज्या साकं नश्य निहाकया(१३)" इति। श्लेष्मा-वरुद्धकण्ठजन्यध्वनेः† अनुकरणार्थोऽयं 'किकि'-शब्दः, तेन किकिना ध्वनिविशेषेण दीव्यति व्यवहरतीति रोगविशेषः 'किकिदीविः',

---

* प्राचुच्युवुः इति J. पु॰ पाठः।

† श्लेष्मावरोधककण्ठजन्यध्वनेः इति आदर्शपुस्तकपाठः।

स च श्लेष्मजन्यः। श्येनवत् तीव्रतरत्वात् पित्तजन्यो रोगः 'श्येनः'। हे 'यक्ष्म'-राज (यक्ष्मादिरोग), त्वं पित्तजन्येन श्लेष्मजन्येन च रोगेण 'साकं' 'प्रपत' (प्रकर्षेण नष्टो भव)। तथा 'वातस्य' 'ध्राज्या' (वातरोगस्य गत्या व्याप्त्या) 'साकं' नष्टो भव। तथा यया पीड़या निहतोऽस्मि (हा कष्टमितिशब्दं करोमि), सा 'निहाका', तया सह नष्टो भव।

अथ चतुर्दशीमाह,—"अश्वावतीꣳ सोमवतीमूर्जयन्तीमुदोजसम्। आवित्सि सर्वा ओषधीरस्मा अरिष्टतातये(१४)" इति। काचिद् ओषधीजातिः 'अश्वावती',—अश्वा अस्यां सन्तीति 'अश्वावती', ओषधीसमृद्धौ* सत्यां धनद्वारेणाश्वा लभ्यन्त इत्यर्थः। अन्या काचिदोषधीजातिः 'सोमवती',—सोमयागोऽस्यामस्तीति 'सोमवती', धान्यसमृद्धौ सत्यां सोमयागः कर्त्तुं शक्यत इत्यर्थः। अपरा 'ऊर्जयन्ती',—ऊर्जं बलं प्राणचेष्टां वा करोतीत्यर्थः। अन्या जातिः 'उदोजाः',—उत्कृष्टमोजोऽष्टमधातुरस्मिन् यस्याः, सा 'उदोजाः', अन्नद्वारेण शरीरधातून् पोषयतीत्यर्थः। ताः 'सर्वाः' 'ओषधीः†' 'आवित्सि' (लब्धवानस्मि)। किमर्थम्?— 'अस्मा' 'अरिष्टतातये' (अरिष्टस्य तातिररिष्टतातिः), अस्य यजमानस्य अहिंसानार्त्तिलायेत्यर्थः‡। तदेवमोषधिवापार्थाः ऋचश्चतुर्दश आम्नाताः।

---

* ओषधीः समृद्धौ इति सर्व्वत्र पाठो न सम्यक्।

† ओषधीम् इति भाष्यस्थपाठो न संहितानुसारी।

‡ 'अहिंसाराहित्यायेत्यर्थः' इति आदर्शपुस्तकपाठो न सम्यक्। तत्पाठपक्षे हिंसाराहित्यायेति पठितुं युक्तः।

अथात्रैव विकल्पिताः षड़ृच आम्नायन्ते,—"याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः। बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहसः(१५)" इति। 'याः' ओषधयः फलयुक्ताः, 'याः' फलरहिताः, 'याश्च' पुष्परहिताः, 'याश्च' पुष्पयुक्ताः; 'ताः' सर्वा 'बृहस्पतिप्रसूताः' सत्यः 'नः' 'अंहसः' (पापात्) मोचयन्तु।

अथ द्वितीयामाह,—"या ओषधयः सोमराज्ञीः प्रविष्टाः पृथिवीमनु। तासां त्वमस्युत्तमा प्रणो जीवातवे सुव(१६)" इति। सोमो राजा यासां ताः 'सोमराज्ञीः(?)'। तादृश्यो 'या ओषधयः' 'पृथिवीमनु' 'प्रविष्टाः', 'तासां' मध्ये इदानीम् उच्यमाने हे ओषधे, 'त्वम्' 'उत्तमा' 'असि'। अतः 'नः' (अस्मान्) 'जीवातवे' (जीवनौषधाय) 'प्र'-'सुव' (प्रकर्षेण प्रेरय)।

अथ तृतीयामाह,—"अवपतन्तीरवदन् दिव ओषधयः परि। यं जीवमश्नवामहै न स रिष्याति पूरुषः(१७)" इति। द्युलोकात् पतन्तो वृष्टिबिन्दवः ओषधीरूपेणोत्पद्यन्ते। तथा चाग्निहोत्रब्राह्मणे समाम्नायते, 'यावन्तः स्तोका अवापद्यन्त। तावतीरोषधयो जायन्ते' इति। अत्रापि 'दिवः' 'परि' (स्वर्गस्योपरितनप्रदेशात्) 'अवपतन्तीः' (अधस्ताद्भूमौ पतन्त्यः) 'ओषधयः' 'अवदन्' (वचनमुक्तवत्यः)। कीदृशं वचनम्?—इति तदुच्यते,—'यं जीवम्' 'अश्नवामहै' (व्याप्नुमः), 'स' 'पूरुषः' 'न' 'रिष्याति' (नैव विनश्यति)।

अथ चतुर्थीमाह,—"याश्चेदमुपशृण्वन्ति याश्च दूरं परागताः। इह सङ्गत्य ताः सर्वा अस्मै संदत्त भेषजम्(१८)" इति।

'याश्च' ओषधीदेवताः 'इदं' (मदीयं प्रार्थनम्) 'उपशृण्वन्ति', 'याश्च' अन्या ओषधीदेवताः 'दूरं' यथा भवति, तथा 'परागताः' सत्यः ईषत् शृण्वन्ति, 'ताः' 'सर्वाः' ओषधीदेवताः 'इह' (कर्मणि) सङ्गता भूत्वा 'अस्मै' (यजमानाय) 'भेषजं' 'संदत्त' (क्षुधादिरोगचिकित्सां सम्यक् कुरुत)।

अथ पञ्चमीमाह,—"मा वो रिषत् खनिता यस्मै चाहं खनामि वः। द्विपच्चतुष्पदस्माकꣳ सर्वमस्त्वनातुरम्[१९]" इति। हे ओषधयः, 'वः' (युष्माकं) 'खनिता' (चिकित्सार्थं युष्मदीयं मूलं ग्रहीतुं खननस्य कर्त्ता) 'मा' 'रिषत्' (मा विनश्यतु)। 'अहं' 'च' 'यस्मै' (रुग्णाय) चिकित्सार्थं 'खनामि' (युष्मन्मूलं ग्रहीतुं खननं करोमि), सोऽपि मा विनश्यतु। किं बहुना अस्माकं सम्बन्धि यत् 'द्विपत् चतुष्पद्' वा प्राणिजातं युष्मदुपजीवति, तत् 'सर्वम्' 'अनातुरं' (रोगरहितम्) 'अस्तु'।

अथ षष्ठीमाह,—"ओषधयः संवदन्ते सोमेन सह राज्ञा। यस्मै करोति ब्राह्मणस्तꣳ राजन् पारयामसि[२०]" इति। 'ओषधयः' (ओषधिदेवताः) स्वकीयेन स्वामिना 'सोमेन' 'राज्ञा' 'सह' संवादं कुर्वन्ति। कथं संवादः?—इति तदुच्यते,—'यस्मै' (रुग्णाय) चिकित्साम् अस्मदीयमूलादिना 'ब्राह्मणः' 'करोति', हे 'राजन्', 'तम्' (आतुरं) वयं 'पारयामसि' (व्याधेरुत्तारयाम)।

एतैर्मन्त्रैः साध्यमोषधिवापं विधत्ते,—"ओषधीर्वपति ब्रह्मणा-न्नमवरुन्धेऽर्केऽर्कश्चीयते" (५।२।५ अ०) इति। 'ब्रह्मणा' (ओषधिवापहेतुभूतमन्त्रसामर्थ्येन) 'अन्नं' व्याप्नोति। किञ्चैवं सति

'अर्के' (अर्चनीये स्थाने) 'अर्कः' (अर्चनीयः) अग्निश्चितो भवति।

मन्त्रसङ्ख्यां विधत्ते,—"चतुर्दशभिर्वपति सप्त ग्राम्या ओषधयः सप्तारण्या उभयीषामवरुध्या अन्नस्यान्नस्य वपत्यन्नस्यान्नस्यावरुध्यै" (५।२।५अ०) इति। तिल-माष-व्रीहि-यवाः प्रियङ्गणवो गोधूमाश्चेति सप्त ग्राम्या ओषधयः। वेणु-श्यामाक-नीवार-जर्त्तिला-गवेधुका-मर्कटका-गार्मुताश्चेति सप्त आरण्या ओषधयः नानाविधस्य 'अन्नस्य' बीजवापेन नानाविधमन्नमाप्नोति। तदुक्तं सूत्रकारेण, 'सप्त ग्राम्याः कृष्टे सप्तारण्या अकृष्टे' इति।

तत्र ग्राम्याणां देशविशेषं विधत्ते,—"कृष्टे वपति कृष्टे ह्योषधयः प्रतितिष्ठन्ति" (५।२।५अ०) इति। 'कृष्टे' देशे 'वपति' ग्राम्या इति शेषः। मूलानां सर्वतः प्रसरणे दृढावस्थानं प्रतिष्ठा।

एकैकस्यां सीतायां मूलमारभ्याग्रपर्यन्तमनुगतं वपनं विधत्ते,—"अनुसीतं वपति प्रजात्यै" (५।२।५अ०) इति। प्रभूतत्वेनोत्पत्तिः 'प्रजातिः'।

सर्वास्वपि सीतासु बीजावापं विधत्ते,—"द्वादशसु सीतासु वपति द्वादश मासाः संवत्सरः संवत्सरेणैवास्मा अन्नं पचति" (५।२।५अ०) इति। यदुक्तं सूत्रकारेण, 'यामोषधिं नाधिगच्छेत तस्याः स्थाने यवान् मधुमिश्रान् वपेदसा सऽसीति वा मनसा ध्यायेदधिगताया यः प्रथम इध्म* आगच्छेत्, तस्मिन्नेनामुपसन्नह्य ये वनस्पतीनां फलग्रहयस्तानिध्म उपसन्नह्य प्रोक्षेत्' इति।

* इध्मा इति J. पु० पाठः।

तदिदं वनस्पतिप्रोक्षणं विधत्ते,—"यदग्निचिदनवरुद्धस्याश्नीयादवरुद्धेन व्यृध्येत ये वनस्पतीनां फलग्रहयस्तानिध्मेऽपि प्रोक्षेदनवरुद्धस्यावरुध्यै" (५।२।५अ०) इति। यद्ययम् 'अग्निचित्' पुरुषः 'अनवरुद्धस्य' सीतास्वनुप्तस्य द्रव्यस्यान्नम् 'अश्नीयात्', तदानीम् 'अवरुद्धेन' सीतासूप्तेन धान्येनापि वियुक्तो भवेत्। अतोऽत्रानुप्तस्याप्युप्तत्वसिद्धये 'वनस्पतीनां' मध्ये ये पुष्पमन्तरेण फलं गृह्णन्त्युदुम्बरादयः 'तान्' अप्यादाय दध्मेन सह सन्नह्य प्रोक्षणं कुर्यात्। ततः सर्वमपि भक्ष्यजातमस्यावरुद्धमेव भवति॥

अत्र विनियोगसंग्रहः,—

या जा, ग्राम्यास्तथारण्याः कृष्टाकृष्टभुवोर्वपेत्।
चतुर्दशभिरन्यास्तु षड्चैव विकल्पिताः॥

अथ मीमांसा, दशमाध्यायस्य पञ्चमपादे चिन्तितम्। (अ०५)

"धूनने वपने चाग्नौ सप्त चोक्तास्चतुर्दश।
किमाद्यारम्भनियमः किंवाऽऽरम्भो निजेच्छया?॥
कपालवत् क्रमः प्राप्तः, केचित् प्रकरणोदिताः।
व्यर्थाः स्युस्तेन मन्त्राणामारम्भोऽत्र विकल्पितः॥

अग्निचयने मन्त्रा आधूननार्था आवपनार्थाश्च बहवः पठिताः, प्रयोगे तु तदेकदेशसङ्ख्याऽभिहिता,-'सप्तभिराधूनोति चतुर्दशभिर्वपति' इति। तत्र प्रथमाधिकरणोक्तकपालसामिधेनीन्यायेन प्रथमपठितस्यैव मन्त्रस्योपक्रमः प्राप्नोति। तदयुक्तं; कुतः? यथोक्तसङ्ख्यातिरिक्तानां प्रकरणपठितानां मन्त्राणां वैयर्थ्य-

प्रसङ्गात्। तस्मात् प्रकरणेन क्रमं बाधित्वा निजेच्छयैव प्रथमतो मध्यमतोऽन्ततो वोपक्रम्य विहितमङ्ग्या पूरणीया ॥"

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे द्वितीयप्रपाठके षष्ठोऽनुवाकः ॥ ० ॥

---

मा नो हिंसीज्जनिता यः पृथिव्या यो वा दिवं सत्यधर्मा जजान। यश्चापश्चन्द्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम[१]। अभ्यावर्त्तस्व पृथिवि यज्ञेन पयसा सह। वपां ते अग्निरिषितोऽवसर्पतु[२]। अग्ने यत्ते शुक्रं यच्चन्द्रं यत् पूतं यद्यज्ञियं। तद्देवेभ्यो भरामसि[३]। इषमूर्जमहमित आ ॥ १ ॥

दद ऋतस्य धाम्नो अमृतस्य योनेः। आ नो गोषु विशत्वौषधीषु जहामि सेदिमनिराममीवां[४]। अग्ने तव श्रवो वयो महि भ्राजन्त्यर्चयो विभावसो। बृहद्भानो शवसा वाजमुक्थ्यं दधासि दाशुषे कवे[५]। इरज्यन्नग्ने प्रथयस्व जन्तुभिरस्मे रायो अमर्त्य। स दर्शतस्य वपुषो विराजसि पृणक्षि सानसिं रयिं[६]। ऊर्जोऽनपाज्जातवेदः सुशस्तिभिर्मन्दस्व ॥ २ ॥

धीतिभिर्हितः। त्वे इषः सन्दधुर्भूरिरेतसः चित्रो-
तयो वामजाताः[७]। पावकवर्चाः शुक्रवर्चा अनून-
वर्चा उदियर्षि भानुना। पुत्रः पितरा विचरन्नुपा-
वस्युभे पृणक्षि रोदसी[८]। ऋतावानं महिषं विश्व-
चर्षणिमग्निँ सुम्नाय दधिरे पुरो जनाः। श्रुत्कर्णँ
सप्रथस्तमं त्वा गिरा दैव्यं मानुषा युगा[९]। निष्कर्त्तार-
मध्वरस्य प्रचेतसं क्षयन्तँ राधसे महे। रातिं भृगू-
णामुशिजं कविक्रतुं पृणक्षि सानसिं॥ ३॥

रयिं[१०] चित स्थ परिचित ऊर्ध्वचित श्रयध्वं तया
देवतयाऽऽङ्गिरस्वद्ध्रुवाः सीदत[११]। आप्यायस्व समेतु
ते विश्वतः सोम वृष्णियं। भवा वाजस्य सङ्गथे[१२]।
सन्ते पयाँसि समुयन्तु वाजाः सं वृष्णियान्यभिमा-
तिषाहः। आप्यायमानो अमृताय सोम दिवि
श्रवाँस्युत्तमानि धिष्व[१३]॥ ४॥

आ। मन्दस्व। सानसिं। एकोनचत्वारिँशच्च॥ ७॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे द्वितीयप्रपाठके
सप्तमोऽनुवाकः॥ ७॥

षष्ठेऽनुवाके ओषधिवापोऽभिहितः। अथ सप्तमे लोष्टक्षेपादिकमभिधीयते। कल्पः, 'मा नो हिंसीज्जनिता यः पृथिव्या इति चतसृभिर्दिग्भ्यो लोष्टान् समस्यति येऽन्तर्विधाद्बहिर्विधमापन्ना भवन्ति' इति। कर्षणे ये लोष्टाः परिमितक्षेत्राद् बहिः पतन्ति, तान् पुनरन्तःपातयेदित्यर्थः। तत्र प्रथमामाह,—"मा नो हिंसीज्जनिता यः पृथिव्या यो वा दिवं सत्यधर्मा जजान। यश्चापश्चन्द्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम[१]" इति। 'यः' प्रजापतिः 'पृथिव्याः' 'जनिता' (उत्पादकः), 'यो वा' प्रजापतिः 'सत्यधर्मा' (अवितथधारणशक्तिः* सन्) 'दिवं' 'जजान' (उत्पादयामास)। पुनरपि 'यः' प्रजापतिः 'चन्द्राः' (आह्लादकारिणीः) 'बृहतीः' (बहुलाः) 'अपः' 'जजान' (उत्पादयामास); तादृशः प्रजापतिः 'नः' (अस्मान्) 'मा' 'हिंसीत्'; तादृशाय 'कस्मै' (प्रजापतये) 'हविषा' 'विधेम' (परिचरेम)।

अथ द्वितीयामाह,—"अभ्यावर्त्तस्व पृथिवि यज्ञेन पयसा सह। वपां ते अग्निरिषितोऽवसर्पतु[२]" इति। हे 'पृथिवि', 'यज्ञेन' अनुष्ठातव्येन, 'पयसा' च तत्फलभूतेन 'सह' 'अभ्यावर्त्तस्व' (अस्मदाभिमुख्येनागच्छ)। 'इषितः' (इच्छावान्) 'अग्निः' 'ते' 'वपां' (त्वदीयवपासदृशम्) इमं प्रदेशम् 'अवसर्पतु' (प्राप्नोतु)।

अथ तृतीयामाह,—"अग्ने यत्ते शुक्रं यच्चन्द्रं यत्पूतं यद्यज्ञियं। तद्देवेभ्यो भरामसि[३]" इति। हे 'अग्ने', 'ते' (त्वदीयं) 'यत्' अङ्गं 'शुक्रं' (दीप्तिमत्), 'यत्' चान्यदङ्गं 'चन्द्रम्' (आह्लादकरं),

* अवितथं धारणशक्तिः इति सर्व्वत्र पाठो न सम्यक्।

'यत्' अप्यन्यदङ्गं 'पूतं' (शुद्धं), 'यत्' अप्यन्यदङ्गं 'यज्ञियं' (यज्ञार्हं), 'तत्' सर्वं लोष्टरूपं 'देवेभ्यः' (देवानामर्थे) 'भरामसि' (सम्पादयामः)।

अथ चतुर्थीमाह,—"इषमूर्जमहमित आ ददे ऋतस्य धाम्नो अमृतस्य योनेः। आ नो गोषु विशत्वा ओषधीषु जहामि सेदिमनिराममीवाम्(४)" इति। 'ऋतस्य' (यज्ञस्य) 'धाम्नः' (स्थानभूतात्) 'अमृतस्य योनेः' (कारणभूतात्) 'इतः' (देशात्) 'इषम्' (अन्नरूपम्) 'ऊर्जं' (रसरूपं) लोष्टम् 'आददे' (स्वीकरोमि)। स लोष्टः 'नः' (अस्मदीयेषु) 'गोषु' 'आ'-'विशतु' (आगत्य प्रविशतु)। तथा 'ओषधीषु' 'आ'-'विशतु', सीदन्त्यनेति सेदिर्भूमिः। 'अनिरां' (सस्यरहिताम्) 'अमीवां' (रोगयुक्तां) 'सेदिं' (भूमिं) परित्यजामि।

एतैर्मन्त्रैः साध्यं लोष्टानां क्षेत्रमध्ये स्थापनं विधत्ते,—"दिग्भ्यो लोष्टान् समस्यति दिशामेव वीर्यमवरुध्य दिशां वीर्येऽग्निं चिनुते" (५।२।५ अ०) इति। कर्षणावसरे ये लोष्टा वेणुना विमितादग्निक्षेत्राद् बहिर्दिक्षु पतिताः, ताभ्यः 'दिग्भ्यः' तान् 'लोष्टान्' आनीय क्षेत्रे संयोजयेत्। तथा सति 'दिशां' सामर्थ्यम् अस्मिन् क्षेत्रे 'अवरुध्य' तस्मिन् सामर्थ्ये 'अग्निं' चितवान् भवति।

चतुर्थमन्त्रे कञ्चिद्विशेषं विधत्ते,—"यं द्विष्याद्यत्र सः स्यात् तस्यै दिशो लोष्टमाहरेदिषमूर्जमहमित आददे इतीषमेवोर्जं तस्यै दिशोऽवरुन्धे क्षोधुको भवति यस्तस्यां दिशि भवति"(५।२।५ अ०) इति। अयमग्निचित् 'यं' (पुरुषं) 'द्विष्यात्', 'सः' (पुरुषः) यस्यां

'दिशि' अवतिष्ठेत्, तस्या 'दिशो' 'लोष्टम्*' 'इषमूर्जम्'—इतिमन्त्रेण आहरेत्, तथा सति तदीयमन्नं रसञ्च स्वीकरोति। स्वीकृते सति 'तस्यां दिशि' 'यो' द्वेष्यः 'भवति' (वर्त्तते), स द्वेष्यः 'क्षोधुकः' (क्षुधां प्राप्तः) अन्नरहितो भवति।

यदुक्तं सूत्रकारेण, 'उत्तरवेदिम् उपवपति यावानग्निर्व्याघारणान्तां कृत्वा' इति। तदेतद्विधत्ते,—"उत्तरवेदिमुपवपत्युत्तरवेद्याᳪ ह्यग्निश्चीयतेऽथो पशवो वा उत्तरवेदिः पशूनेवाव-रुन्धेऽथो यज्ञपरुषोऽनन्तरित्यै" (५।२।५अ०) इति। प्राकृतेन प्रकारेण 'उत्तरवेदिं' कुर्यात्। तस्याम् 'उत्तरवेद्यां' पश्चात् 'अग्निश्चीयते'। अपि च उत्तरवेद्याः समोपगतेषु पशुबन्धात् 'पशवः' एव 'उत्तरवेदिः', उत्तरवेदिः पशूनां प्राप्तये भवति। 'अथो' (अपि च) प्रकृतावुत्तरवेदिरूपं यज्ञस्य 'परुः' (पर्व), तस्यान्तरायो मा भूदित्युत्तरवेदिः कर्त्तव्या।

कल्पः, 'अग्ने तव श्रवो वय इति षड्भिः सिकतान्युप्त्वा' इति। तत्र प्रथमामाह,—"अग्ने तव श्रवो वयो महि भ्राजन्त्यर्चयो विभावसो। बृहद्भानो शवसा वाजमुक्थ्यं दधासि दाशुषे कवे[५]" इति। वीयते प्राणिभिरश्यते इति वयोऽन्नं। हे 'अग्ने', 'तव श्रवः' (त्वदीयत्वेन श्रूयमाणं) 'वयः' (अन्नं) 'महि' 'महदस्ति'। 'विभा' (दीप्तिरेव) 'वसु' (धनं) यस्यासौ विभावसुः, हे 'विभावसो', 'अर्चयः' (तव दीप्तयः) 'भ्राजन्ति' (दीप्यन्ते)। बृहन्तो भानवो यस्यासौ बृहद्भानुः। कविः (विद्वान्) यजमानाभि-

* अत्र सर्व्वत्र लोष्टशब्दस्थाने लोष्ठ इति आदर्शपुस्तके एवं J. पुस्तके पाठः।

प्रायाभिज्ञः। तादृश हे 'अग्ने', 'दाशुषे' (हविर्दत्तवते) यजमानाय 'उक्थ्यं' (शस्त्राद्युपेतं) यज्ञयोग्यं 'वाजम्' (अन्नं) 'शवसा' (त्वदीयेन बलेन) 'दधासि'।

अथ द्वितीयामाह,—"इरज्यन्नग्ने प्रथयस्व जन्तुभिरस्मे रायो अमर्त्य। स दर्शतस्य वपुषो विराजसि पृणक्षि सानसिꣳ रयिम्[१]" इति। हे 'अमर्त्य' (मरणरहित) 'अग्ने', 'जन्तुभिः' (पुरोडाशादि-हविःप्रदैः प्राणिभिः) 'इरज्यन्' (दीप्यमानः) सन् 'अस्मे' (अस्मासु) 'रायः' (धनानि) 'प्रथयस्व' (विस्तारय)। 'स' 'दर्शतस्य' 'वपुषः' (दर्शनीयस्य चित्याग्निरूपस्य शरीरस्य) मध्ये 'विराजसि' (विशेषेण दीप्यसे), 'सानसिं' (बहुविधदानार्हं) 'रयिं' (धनं) 'पृणक्षि' (अस्मदर्थं पूरय)।

अथ तृतीयामाह,—"ऊर्जो नपाज्जातवेदः सुशस्तिभिर्मन्दस्व धीतिभिर्हितः। त्वे इषः सन्दधुर्भूरिरेतसश्चित्रोतयो वामजाताः[७]" इति। 'ऊर्जः' (अन्नस्य) 'नपात्' (अविनाशयिता), तादृश हे 'जातवेदः', 'धीतिभिर्हितः' (दीप्तिभिर्युक्तः) सन् 'सुशस्तिभिः' (शोभनाभिः स्तुतिभिः) 'मन्दस्व' (हृष्यस्व)। 'भूरिरेतसः' (प्रभूतसाराः) 'इषः' (अन्नरूपाः) आहुतीः 'त्वे' (त्वयि) 'सन्दधुः' (यजमानाः सम्पादितवन्तः)। कीदृशा यजमानाः?—'चित्रोतयः' (चित्रास्त्वया कृता ऊतयो रक्षा येषां ते चित्रोतयः), 'वामजाताः' (वननीये* सम्भजनीये देशे कुले चोत्पन्नाः)।

---

* वरणीये इति पाठो भवितुं युक्तः।

अथ चतुर्थीमाह,—"पावकवर्चाः शुक्रवर्चा अनूनवर्चा उदियर्षि भानुना। पुत्रः पितरा विचरन्नुपावस्युभे पृणक्षि रोदसी(८)" इति। 'पावकवर्चाः' (शोधकदीप्तिः) 'शुक्रवर्चाः' (निर्मलदीप्तिः), 'अनूनवर्चाः' (सम्पूर्णदीप्तिः); ईदृशस्त्वं 'भानुना' (भासा) 'उदियर्षि' (उत्कर्षं गच्छसि)। 'उभे' 'रोदसी' (द्यावा-पृथिव्यौ) 'विचरन्' 'उपावसि' (समीपमागत्य रक्षसि), 'पृणक्षि' च (तयोः सम्पूर्त्तिमपि करोषि)। परिचरणे दृष्टान्तः, 'पुत्रः पितरा',— यथा लोके शास्त्रीयमार्गेणानुशिष्टः पुत्रः पितरौ परिचरति तद्वत्।

अथ पञ्चमीमाह,—"ऋतावानं महिषं विश्वचर्षणिमग्निꣳ सुम्नाय दधिरे पुरो जनाः। श्रुत्कर्णꣳ सप्रथस्तमं त्वा गिरा दैव्यं मानुषा युगा(९)" इति। 'मानुषा' 'जनाः' (मनुष्यजातियुक्ताः जन्तवः) ऋत्विग्यजमाना 'पुरः' (पूर्वस्मिन् काले) 'युगा' 'गिरा' (योग्यया स्तुतिरूपया वाचा) 'सुम्नाय' (सुखार्थं) 'अग्निम्' अत्र 'दधिरे' (स्थापितवन्तः)। कीदृशमग्निम्?—'ऋतावानं' (सत्यवन्तं) 'महिषं' (महान्तं) विश्वचर्षणयो (मनुष्याः) परिचारकत्वेन यस्य सन्ति, सोऽयं 'विश्वचर्षणिः'। 'श्रुत्कर्णं' (शृण्वत्कर्णं),—यद्विज्ञाप्यते, तत्सर्वं एव कर्णेन श्रुत्वा सम्पादयतीत्यर्थः। 'सप्रथस्तमं' (अति-शयेन प्रथासहितं, कीर्त्तिमन्तं), तम् ईदृशं त्वां 'अग्निं' 'दैव्यं' (देवेभ्यो हितं) 'दधिरे' इत्यन्वयः।

अथ षष्ठीमाह,—"निष्कर्त्तारमध्वरस्य प्रचेतसं क्षयन्तꣳ राधसे महे। रातिं भृगूणामुशिजं कविक्रतुं पृणक्षि सानसिꣳ

रयिम्[१०]" इति । हे अग्ने, त्वं (यजमानं) 'रयिं' 'पृणक्षि' (सम्पृक्तं करोषि) प्रापयसीत्यर्थः । कीदृशं यजमानं ?—'अध्वरस्य' 'निष्कर्त्तारं' (यज्ञस्य निष्पादकं), 'प्रचेतसं' (प्रकृष्टचित्तयुक्तम्), श्रद्धालुमित्यर्थः ; 'महे' 'राधसे' (महते राधसे हविर्लक्षणाय अन्नाय) 'क्षयन्तं' (हविर्दातुमिह निवसन्तमित्यर्थः) ; 'रातिं' (दातारं), 'भृगूणां' (महर्षीणां तपस्विनां) मध्ये 'उशिजं' (कमनीयं) अत्यन्तं तपोयुक्तमित्यर्थः ; 'कविक्रतुं' (कवीनां विदुषामिव क्रतुः कर्मानुष्ठानं यस्यासौ कविक्रतुस्तं), सर्वमपि कर्त्तव्यं सम्यक् ज्ञात्वैवानुतिष्ठतीत्यर्थः । सानसिशब्दो यजमान-विशेषणं वा, यजमानपक्षे दानशीलमित्यर्थः । धनपक्षे सम्भज-नीयमित्यर्थः ।

एतान् मन्त्रान् विनियुङ्क्ते,—"अग्ने तव श्रवो वय इति सिकता निवपत्येतद्वा अग्नेर्वैश्वानरस्य सूक्तꣳ सूक्तेनैव वैश्वानरमवरुन्धे" (५।२।६ अ०) इति । एतत् षड़ृचात्मकं 'वैश्वानरस्य' (सर्वमनुष्य-प्रियस्य) अग्नेः सम्बन्धि सूक्तम्, अत एतेन सिकतावापे सति वैश्वानररूपमग्निं प्राप्नोति ।

सूक्तगतमन्त्रसङ्ख्यां विधत्ते,—"षड़्भिर्निवपति षड़्वा ऋतवः संवत्सरः संवत्सरोऽग्निर्वैश्वानरः साक्षादेव वैश्वानरमवरुन्धे" (५। २।६ अ०) इति । 'संवत्सरम् उख्यं भृत्वा' इत्यादौ संवत्सरधारण-सम्बन्धात् अग्नेः संवत्सररूपत्वम् । ऋतुसंवत्सराव्यवधानेन वैश्वानरं साक्षादेव सर्वथैव प्राप्नोति ।

सूक्तगतासु ऋक्षु परस्परविलक्षणं यच्छन्दस्तत् प्रशंसति,—"समुद्रं

वै गामैतच्छन्दः समुद्रमनु प्रजाः प्रजायन्ते यदेतेन सिकता निवपति प्रजानां प्रजननाय" (५।२।६ अ०) इति। यथा समुद्रो बहलस्तथा अचत्याच्छन्दोऽपि बहुविधत्वात् समुद्रमित्युच्यते। तथा हि प्रथमा विष्टारपङ्क्तिः, मध्यमयोः पादयोरेकादशाक्षरत्वात्; द्वितीया पदपङ्क्तिः, आद्योत्तमपादयोः* द्वादशाक्षरत्वात्। यथा द्वितीया तथा तृतीया, यथा प्रथमा तथा चतुर्थी। उपरिष्टाज्ज्योतिः पञ्चमी, चतुर्थपादस्याष्टाक्षरत्वात्, तथा षष्ठी†। एवं बहुविधत्वाच्छन्दसः समुद्रत्वं, लोके हि समुद्रमनुसृत्य प्रजा उत्पाद्यन्ते,-समुद्रो बहलः, तथा प्रजा अपि बहुविधाः। तथा सति समुद्रसदृशेन छन्दसा सिकतानिवापः प्रजानामुत्पत्त्यै सम्पद्यते।

कल्पः, 'चित स्थ परिचित इत्यपरिमिताभिः शर्कराभि-

---

* आद्यतृतीयपादयोः इति J. पु० पाठः।

† एष च सन्दर्भो न पिङ्गलसूत्रतद्वृत्त्योः संवादी, तत्र हि तृतीयाध्याये "विस्तारपङ्क्तिरन्तः। ४२।" "पदपाङ्क्तः पञ्च। ४६।" "उपरिष्टाज्ज्योतिरन्तेन। ५४।" इति सूत्रत्रयेण, "यदा जागतौ (१२अ०) पादौ मध्ये भवतः, आद्यन्तयोश्च गायत्रौ, (८अ०), तदा विस्तारपङ्क्तिर्नाम"। "पञ्चका इत्यनुवर्त्तते, यदा पञ्चाक्षरा पञ्च पादा भवन्ति, तदा पदपङ्क्तिर्नाम छन्दः।" "यदा चत्वारो गायत्राः पादा भवन्ति, अन्ते च त्रैष्टुभः(११अ०) तदा उपरिष्टाज्ज्योतिर्नाम त्रिष्टुब् भवति। तथा जगतीत्यनुवर्त्तनीयं, तेन, अन्तेन जागतेन शेषैश्च गायत्रैश्चतुर्भिः उपरिष्टाज्ज्योतिर्नाम जगती भवति।" इति तत्सूत्रत्रयेण तद्वृत्त्या च अन्यथैव लक्षणानि प्रदर्शितानि। एवं द्वितीया-तृतीययोः प्रथमा-चतुर्थ्योः पञ्चमी-षष्ठ्योश्च परस्परं विलक्षणाक्षरसङ्ख्याकतया तुल्यताभिधानमपि न सम्यगेव प्रतिभातीत्यवधेयम्।

राहवनीयचितेरायतनं परिश्रयति' इति। पाठस्तु,—"चित स्थ परिचित ऊर्द्ध्वचितः श्रयध्वं तया देवतयाङ्गिरस्वद् ध्रुवाः सीदत(११)" इति। चीयन्ते भूमौ प्रक्षिप्यन्त इति चितः शर्कराः। हे शर्कराः, यूयं 'चितः स्थ', (भूमौ प्रक्षिप्ताः स्थ); 'परिचितः' (परितः प्रक्षिप्ताः) स्थ। 'ऊर्द्ध्वचितः' (उपरिप्रक्षिप्ताः) स्थ। तादृश्यो यूयं 'श्रयध्वं' (इमां चितिं सेवध्वं)। युष्माकं मध्ये यस्याः शर्करायाः या देवता, 'तया' 'देवतया' सार्द्धं यूयं 'ध्रुवाः' (स्थिराः) सत्यः 'सीदत' (इह तिष्ठत)। तत्र दृष्टान्तः,—'अङ्गिरस्वत्' (यथा अङ्गिरसां चयने ध्रुवाः सीदन्ति तद्वत्)।

अनेन मन्त्रेण साध्यं शर्करास्थापनं विधत्ते,—"इन्द्रो वृत्राय वज्रं प्राहरत् स त्रेधा व्यभवत् स्फ्यस्तृतीयꣳ रथस्तृतीयं यूपस्तृतीयं येऽन्तःशर्करा अशीर्यन्त ताः शर्करा अभवन् तच्छर्कराणाꣳ शर्करत्वं वज्रो वै शर्कराः पशुरग्निर्यच्छर्कराभिरग्निं परिमिनोति वज्रेणैवास्मै पशून् परिगृह्णाति तस्माद् वज्रेण पशवः परिगृहीताः तस्मात् स्थेयानस्थेयसो नोपहरते" (५।२।६ अ०) इति। इन्द्रेण प्रहितो वज्रोऽत्यन्तकठिनं वृत्रशरीरं प्राप्य त्रिधा भग्नोऽभवत्। तेषु त्रिषु भागेषु 'स्फ्यः' एको भागः, 'रथः' अपरो भागः, 'यूपः' अन्यः। तदा वज्रस्यान्तःशीर्णा अवयवाः भूमौ पतिताः, 'ताः' भूमिगताः 'शर्कराः' (अत्यन्तं दृढाः) क्षुद्रपाषाणा 'अभवन्)। शरैः क्रियन्ते निष्पाद्यन्त इति व्युत्पत्त्या शर्करा इति नाम सम्पन्नम्; अतो 'वज्रः' एव 'शर्कराः', अग्निस्तु पशुसाधनत्वात् पशुस्वरूपः। अतोऽग्निप्रदेशे शर्कराभिः परिश्रयेत्।

तथा सति 'वज्रेणैव' साधनेन यजमानार्थं 'पशून्' 'परिगृह्णाति'। यस्मादेवं, 'तस्मात्' लोकेऽपि वज्रसमानेन करेण पाशादिना वा 'पशवः' 'परिगृहीता' भवन्ति। यस्मादत्र अग्नेर्दाढ्याय शर्करापेक्षा न तु 'शर्कराणां' अन्यपेक्षा, 'तस्मात्' लोकेऽपि 'स्थेयान्' (स्थिरतरोऽतिप्रबलपुरुषः) कश्चिदपि 'अस्थेयसः' (अत्यन्तम् अस्थिरान् दुर्बलान्) 'नोपहरते' (नैवाश्रयति)।

शर्करासु काम्यांशं विधत्ते,—"त्रिसप्ताभिः पशुकामस्य परिमिनुयात् सप्त वै शीर्षण्याः प्राणाः प्राणाः पशवः प्राणैरेवास्मै पशूनवरुन्धे" (५।२।६ अ०) इति। त्रीणि सप्तकानि यासां शर्कराणां तास्त्रिसप्ताः, ताभिरेकविंशतिसङ्ख्याकाभिरित्यर्थः, 'परिमिनुयात्' (परितः स्थापयेत्)। सप्तसङ्ख्यया व्यवस्थिताः शिरोगताः 'प्राणाः' स्मर्यन्ते, तैश्च 'प्राणैः' (तद्युक्ताः) 'प्राणाः' 'पशवः', तथा सति सप्तसङ्ख्यया 'प्राणैरेव' युक्तान् 'पशून्' प्राप्नोति।

अथान्यां काम्यां सङ्ख्यां विधत्ते,—"त्रिणवाभिर्भ्रातृव्यवतस्त्रिवृतमेव वज्रꣳ सम्भृत्य भ्रातृव्याय प्रहरति स्तृत्यै" (५।२।६ अ०) इति। त्रीणि नवकानि यासां तास्त्रिणवाः सप्तविंशतिसङ्ख्याका इत्यर्थः। त्रिणवसङ्ख्योपेतस्त्रिवृत्स्तोमः स्मर्यते। तमत्र त्रिवृत्स्तोमं वज्रत्वेन सम्पाद्य भ्रातृव्यहिंसां 'प्रहरति'।

पक्षान्तरं विधत्ते,—"अपरिमिताभिः परिमिनुयादपरिमितस्यावरुद्ध्यै" (५।२।६ अ०) इति।

अथान्वयव्यतिरेकाभ्यां परिश्रयणं दृढीकरोति,—"यं कामयेतापशुः स्यादित्यपरिमित्य तस्य शर्कराः सिकता व्यूहेत्

अपरिगृहीत एवास्य विषूचीनꣳ रेतः पराषिञ्चत्यपशुरेव भवति। यं कामयेत पशुमान्त्स्यादिति परिमित्य तस्य शर्कराः सिकता व्यूहेत् परिगृहीत एवास्मै समीचीनꣳ रेतः सिञ्चति पशुमानेव भवति" (५।२।६ अ०) इति। पूर्वन्युप्तायाः सिकताया व्यूहनं विधास्यति। यजमानस्य पशुराहित्यं कामयमानोऽध्वर्युः परितः शर्करास्थापनमकृत्वैव सिकताप्रसारणं कुर्यात्, तथा सति परिश्रयणाभावात् 'अपरिगृहीत एव' स्थाने यजमानस्य 'रेतः' विविधं यथा गच्छति, तथा विनाशयति, ततोऽयम् 'अपशुरेव 'भवति';—सोऽयं व्यतिरेकः; एतस्माद्विपरीतोऽन्वयः। तस्मात् पशुलाभाय शर्करापरिश्रयणपूर्वकमेव सिकताव्यूहनं कर्त्तव्यमिति तात्पर्यार्थः।

कल्पः, 'आप्यायस्व समेतु ते इति सिकता व्यूहत्युत्तरया त्रिष्टुभा राजन्यस्य' इति। तत्र प्रथममन्त्रमाह,—"आप्यायस्व समेतु ते विश्वतः सोम वृष्णियं। भवा वाजस्य सङ्गथे(११)" इति। हे 'सोम', त्वम् 'आप्यायस्व' (सर्वतो वर्द्धयस्व(?)), 'ते' (तव) 'वृष्णियं' (रेतः) 'विश्वतः' (सर्वस्मात् वृष्ण्यादाहारात्) 'समेतु' (सम्प्राप्नोतु)। 'वाजस्य' (अन्नस्य) 'सङ्गथे' (सङ्गमने) त्वं निमित्तं 'भव'।

अथोत्तरां त्रिष्टुभमाह,—"सं ते पयाꣳसि समु यन्तु वाजाः सं वृष्णियान्यभिमातिषाहः। आप्यायमानो अमृताय सोम दिवि श्रवाꣳस्युत्तमानि धिष्व(१२)" इति। हे 'सोम', 'ते' (तव) 'पयांसि' (पातव्यानि क्षीरादीनि) 'समु यन्तु*' (सम्प्राप्तानि भवन्तु)।

* अत्र 'सं'-'यन्तु' इति पाठो भवितुं युक्तः।

तथा 'वाजाः' (अन्नानि) अपि 'सं'-'यन्तु'। 'वृष्ण्यानि' (रेतांसि) अपि 'सं'-'यन्तु'। कीदृशस्य तव ?—'अभिमातिषाहः' ('अभिमाति' पाप्मानं सहते* तिरस्करोतीत्यभिमातिषाट्, तस्य)। चोरादिसम्पत्तौ सत्यां त्वम् 'आप्यायमानः' (वर्द्धमानः) 'अमृताय' (यजमानस्यामृतत्वाय, देवभावाय) 'दिवि' (द्युलोके) 'श्रवांसि' (श्रोतुं प्रियाणि) 'उत्तमानि' (चित्राणि) अन्नानि 'धिष्व' (धारय, सम्पादयेत्यर्थः)।

तदेतदृग्द्वयं सामान्याकारेण विनियुङ्क्ते, "सौम्या व्यूहति सोमो वै रेतोधा रेत एव तद्दधाति" (५।२।६ अ०) इति। सोमो देवता यस्यामृचि प्रतीयते सेयमृक् सौमी ; 'विश्वतः सोम' इत्याद्यायामृचि असौ प्रतीयते, 'अमृताय सोम' इत्युत्तरस्यामृचि प्रतीयते। तया 'सौम्या' पूर्वं न्युप्ताः सिकताः विविधं प्रसारयेत्। तथा सति सोमस्य रेतोधारकत्वात् तन्मन्त्रनिष्पाद्यव्यूहनेन यजमानो 'रेतो' धारयति।

मन्त्रद्वयस्य पुरुषभेदेन व्यवस्थां दर्शयति,—"गायत्रिया ब्राह्मणस्य गायत्रो हि ब्राह्मणस्त्रिष्टुभा राजन्यस्य त्रैष्टुभो हि राजन्यः" (५।२।६ अ०) इति। 'आप्यायस्व' इति गायत्री, 'सन्ते' इति त्रिष्टुप्।

अत्र विनियोगसङ्ग्रहः,—

मा-चतुर्भिः क्षिपेल्लोष्टान्, अग्ने-षट्केन वालुकाः।
चित, आहवनीयस्य परिश्रयति शर्कराः॥

---

* अत्र पाप्मानं सहते इति पाठो भवितुं युक्तः।

आप्या, विप्रस्य सिकता व्यूहेत्, सन्ते पयेत्यथ।
क्षत्रियस्य भवेद् व्यूह इति मन्त्रास्त्रयोदश॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्ण-यजुःसंहिताभाष्ये चतुर्थकाण्डे द्वितीयप्रपाठके सप्तमोऽनुवाकः॥ ७॥

---

अभ्यस्थाद्विश्वाः पृतना अरातीस्तदग्निराह तदु सोम आह। बृहस्पतिः सविता तन्म आह पूषा माऽधात् सुकृतस्य लोके[१]। यदक्रन्दः प्रथमं जायमान उद्यन्त्समुद्रादुत वा पुरीषात्। श्येनस्य पक्षा हरिणस्य बाहू उपस्तुतं जनिम तत्ते अर्वन्[२]। अपां पृष्ठमसि योनिरग्नेः समुद्रमभितः पिन्वमानं। वर्धमानं महः॥ १॥

आ च पुष्करं दिवो मात्रया वरिणा प्रथस्व[३]। ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः। सुबुध्निया उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः[४]। हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्। स दाधार पृथिवीं द्यामुतेमां

कस्मै देवाय हविषा विधेम[5]। द्रप्सश्चस्कन्द पृथिवीमनु ॥ २ ॥

यामिमञ्च योनिमनु यश्च पूर्वः। तृतीयं योनिमनु सञ्चरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः[6]। नमो अस्तु सर्पेभ्यो ये के च पृथिवीमनु। ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः[7]। येऽदो रोचने दिवो ये वा सूर्यस्य रश्मिषु। येषामप्सु सदः कृतं तेभ्यः सर्पेभ्यो नमः[8]। या इषवो यातुधानानां, ये वा वनस्पतीꣳरनु। ये वाऽवटेषु शेरते तेभ्यः सर्पेभ्यो नमः[9] ॥ ३ ॥

मह्यः। अनु। यातुधानानाम्। एकादश च ॥ ८ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे द्वितीयप्रपाठके अष्टमोऽनुवाकः ॥ ० ॥

सप्तमे लोष्टमसमादिकमुक्तम्। अथाष्टमे रुक्माद्युपधानं वक्तव्यम्, तत्रादौ तावदश्वाक्रमणमुच्यते। कल्पः, 'प्राञ्चमश्वमभ्यस्थाद्विश्वा* इत्यश्वस्य दक्षिणेन पदा दर्भस्तम्बमाक्रमय्य' इति। पाठस्तु,—"अभ्यस्थाद्विश्वाः पृतना अरातीस्तदग्निराह तदु सोम आह। बृहस्पतिः सविता तन्म आह पूषा मा धात् सुकृतस्य लोके(१)" इति। अयमर्थः, 'विश्वाः' (सर्वाः) 'पृतनाः' (प्रतिपक्ष-

---

* अभ्यमंस्थाद् विश्वा इति J. पु॰ पाठः।

सेनाः) 'अरातीः' (दातव्यस्यादातृरूपाः) 'अभ्यस्थात्' (पादेन अभिक्रम्य तिष्ठतु)। 'तत्' (अभिक्रमणम्) 'अग्निः' 'आह' (अनुमोदतां); 'सोमः' अपि 'तत्' 'आह' (तदनुमोदतां); 'बृहस्पतिः' 'मे' (मम) 'तत्' 'आह' (तदनुमोदतां); तथा 'सविता' अपि तदनुमोदतां; 'पूषा' 'सुकृतस्य' 'लोके' (फलभूते स्वर्गे) 'माऽधात्' (मां स्थापयतु)।

कल्पः, 'प्रदक्षिणमावर्त्तयित्वा यदक्रन्द इति पुनरेवाक्रमयति' इति। पाठस्तु,—"यदक्रन्दः प्रथमं जायमान उद्यन्त्समुद्रादुत वा पुरीषात्। श्येनस्य पक्षा हरिणस्य बाहू उपस्तुतं जनिम तत्ते अर्वन्[१]" इति। हे 'अर्वन्', 'यत्' (यस्मात् कारणात्) 'जायमानः' (उत्पद्यमानः) एव 'प्रथमम्' (आदौ) 'अक्रन्दः' (क्रन्दितवानसि), अहो अग्न्यादीनामहं साधनमिति महान्तं शब्दम् अकरोः; 'तत्' (तस्मात् कारणात्) 'जनिम' 'उपस्तुतं' 'ते' (तव जन्म समीचीनमिति सर्वैरपि स्तुतम्) आसीत्। जायमानत्वमेव विशदीक्रियते,—'समुद्रात्' 'उद्यन्' (समुद्रोपलक्षितादुदकात् समुत्पद्यमानः), 'अप्सुयोनिर्वा अश्वः' इति श्रुतेः। 'उत वा पुरीषात्' (पुंस्त्वशक्तिसम्पन्नात् महतोऽश्वादुत्पद्यमानः)। जन्मन उपस्तुतत्वे दृष्टान्तोऽयमुच्यते,—'श्येनस्य पक्षा हरिणस्य बाहू', उपस्तुतशब्दोऽत्राध्याहर्त्तव्यः; यथा श्येनाख्यस्य पक्षिणः पक्षा शीघ्रोत्पतनहेतुत्वात् सर्वैरुपस्तुतौ, यथा वा 'हरिणस्य' (मृगस्य) 'बाहू' (पादौ) शीघ्रगमनहेतुत्वादुपस्तुतौ, तद्वदित्यर्थः।

उक्तमन्त्रसाध्यमश्वाक्रमणं विधत्ते,—"अंशुं बार्हस्पत्यं मेधो

नोपानमत्सोऽग्निं प्राविशत् सोऽग्नेः कृष्णो रूपं कृत्वोदायत सोऽश्वं प्राविशत् सोऽश्वस्यावान्तरशफोऽभवद्यदश्वमाक्रमयति य एव मेधोऽश्वं प्राविशत् तमेवावरुन्धे" (५।२।६ अ०) इति। पुरा कदाचित् शंयुनामानं बृहस्पतिपुत्रं केनापि निमित्तेन 'मेधो' (यज्ञपुरुषः) 'नोपानमत्' (न प्राप्तवान्)। स पुनः शंयुना अन्विष्य-माणोऽन्तर्धानात् 'अग्निं' 'प्राविशत्'। तत्राप्यन्वेषणाय शंयावागते सति 'स' यज्ञः कृष्णमृगो भूत्वा तदीयं 'रूपं' साकल्येन 'कृत्वा' 'अग्नेः' सकाशात् 'उदायत' (उदगच्छत्); उद्गत्य च 'सोऽश्वं प्राविशत्', प्रविश्य चाश्वसम्बन्धिनः प्रौढ़शफस्य मध्ये योऽयम् 'अवान्तरशफः', तद्रूपः 'अभवत्'। ततः 'अश्वम्' आक्रमयेत्; तथा सति 'यः' यज्ञः 'अश्वं' 'प्राविशत्', 'तमेव' प्राप्नोति।

प्रकारान्तरेण प्रशंसति,—"प्रजापतिनाग्निश्चेतव्य इत्याहुः प्राजापत्योऽश्वो यदश्वमाक्रमयति प्रजापतिनैवाग्निं चिनुते" (५।२।६ अ०) इति। अयम् 'अग्निः' 'प्रजापतिना' चेतुं योग्यः— 'इति' अभिज्ञा 'आहुः'। अश्वस्य प्राजापत्यत्वात् तदाक्रमणे सति 'प्रजापतिनैव' चितो भवति।

कल्पः, 'अपां पृष्ठमसीत्यश्वस्य पदे पुष्करपर्णमुत्तानमुपदधाति' इति। पाठस्तु,—"अपां पृष्ठमसि योनिरग्नेः समुद्रमभितः पिन्वमानं। वर्द्धमानं महः आ च पुष्करं दिवो मात्रया वरिणा प्रथस्व(१)" इति। हे पुष्करपर्ण, त्वम् 'अपां पृष्ठमसि' (पृष्ठवत् उपरिभागवर्त्ती* असि)। तथा 'अग्नेः' 'योनिः' असि, 'त्वाम् अग्ने

---

* अत्र उपरिभागवर्त्ति इति पाठो भवितुं युक्तः।

पुष्करादध्यथर्वा निरमन्थत' इति मन्त्रवर्णात्। तथा 'समुद्रमभितः' 'पिन्वमानं' (समुद्रसमानस्य तटाकजलस्य प्रीतिकरं), 'वर्द्धमानं' (अपूत्पद्य दिने-दिने वृद्धियुक्तं), 'महः' (निर्लेपत्वादियुक्त्या पूजनीयं), 'पुष्करम्' (अग्निनिष्पादनद्वारा पुष्टिकरं)) तादृशस्त्वं* 'मात्रया' (परिमाणेन) 'दिवः' 'वरिणा' (आकाशादप्याधिक्येन) 'आ' (समन्तात्) 'प्रथस्व' (विस्तृतं भव)।

अनेन मन्त्रेण साध्यं पद्मपत्रोपधानं विधत्ते,—"पुष्करपर्ण-मुपदधाति योनिर्वा अग्नेः पुष्करपर्णꣳ सयोनिमेवाग्निं चिनुते" (५।२।६ अ०) इति।

तत्र मन्त्रं विनियुङ्क्ते,—"अपां पृष्ठमसीत्युपदधात्यपां वा एतत् पृष्ठं यत् पुष्करपर्णꣳ रूपेणैवैनदुपदधाति" (५।२।६ अ०) इति। 'रूपेणैव' विद्यमानार्थवाचित्वादनुरूपेणैव मन्त्रेण 'एनत्' पुष्करपर्णम् उपहितवान् भवति।

कल्पः, ब्रह्म जज्ञानमिति पुष्करपर्ण उपरिष्टान्निर्बाधꣳ रुक्म-मुपधाय' इति। पाठस्तु,—"ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः। स बुध्निया उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः(४)" इति। 'प्रथमं' 'जज्ञानं' (आदावुत्पन्नम्) इदं रुक्मस्वरूपं 'ब्रह्म' (परिवृढं अत्यन्तं महदित्यर्थः)। तस्य रुक्मस्य दृष्टान्तत्वेन सूर्यः प्रपञ्च्यते। 'पुरस्तात्' (पूर्वस्यां दिशि) अवस्थितः 'वेनः' (कमनीयः सूर्यः) 'सीमतः' (सर्वस्यां सीम्नि) 'सुरुचः' (शोभनरश्मिविशेषेण) 'आवः' (आवृणोत्)। 'अस्य' (रुक्मस्य) उप-

* तादृशं त्वमिति पाठो भवितुं युक्तः।

मानभूता:) 'विष्ठा:' (विशेषेणावस्थिता:) 'बुध्निया:' (बुध्ने मूले पृथिवीरूपे भवा: पदार्था:), तानपि स 'वेन:' 'विव:' (विवृतवान्, प्रकाशितवानित्यर्थ:)। 'सतश्च' (विद्यमानस्य घटपटादे:) 'योनिं' (कारणं मृदादिरूपं), 'असतश्च' (अविद्यमानस्य नरविषाणादे:) कारणं मनुष्यमूर्द्धादिकमपि विवृतवान्, तथाविधेन सूर्येण सदृशोऽयं रुक्म: प्रकाशत इति तात्पर्यार्थ:।

तमिमं मन्त्रं विनियुङ्क्ते,—"ब्रह्म जज्ञानमिति रुक्ममुपदधाति ब्रह्ममुखा वै प्रजापति: प्रजा असृजत ब्रह्ममुखा एव तत्प्रजा यजमान: सृजते" (५।२।७अ०) इति। 'ब्रह्म' (ब्राह्मणजाति:) 'मुखम्' (उपक्रमो) यासां, ता: 'ब्रह्ममुखा:'।

अस्मिन् मन्त्रे ब्रह्मपदाभिधेयस्य प्रथमोत्पत्तिवर्णने तात्पर्यं दर्शयति,—"ब्रह्म जज्ञानमित्याह तस्माद् ब्राह्मणो मुख्य:" (५।२।७अ०) इति। यस्मात् क्षत्रियादेर्जन्मप्राथम्यमनुपन्यस्य ब्रह्मशब्दार्थस्यैव प्रथमजन्म उपन्यस्यते, 'तस्मात्' लोकेऽपि ब्रह्मशब्दार्थो 'ब्राह्मण:' एव 'मुख्य:'।

एतद्वेदनं प्रशंसति,—"मुख्यो भवति य एवं वेद" (५।२।७अ०) इति।

रुक्मोपधानं प्रशंसति,—"ब्रह्मवादिनो वदन्ति न पृथिव्यां नान्तरिक्षे न दिव्यग्निश्चेतव्य इति यत् पृथिव्यां चिन्वीत पृथिवीꣳ शुचार्पयेन्नौषधयो न वनस्पतय: प्रजायेरन् यदन्तरिक्षे चिन्वीतान्तरिक्षꣳ शुचार्पयेन्न वयाꣳसि प्रजायेरन् यद्दिवि चिन्वीत दिवꣳ शुचार्पयेन्न पर्जन्यो वर्षेद्रुक्ममुपदधात्यमृतं वै हिरण्यममृत एवाग्निं

चिनुते प्रजात्यै" (५।२।७अ०) इति।· 'शुचार्पयेत्' (सन्तापेन योजयेत्), तस्मिन् सन्तापे सति लोकत्रये ये दोषास्तद्व्यावृत्तये वङ्केराधारत्वेन रुक्ममुपदध्यात्; हिरण्यस्याग्निसम्पर्केऽपि विनाशा-भावात् तस्मिन् 'अमृते' हिरण्ये 'अग्निं' चितवान् भवति। अयमेव रुक्मोपधानं विदधातीति यदि स्वीक्रियते,* तदानीमेतदनुवादेन पूर्वो मन्त्रमात्रविधिः; यदि तु स एव विशिष्टविधिः, तदानीम् अर्थवादसम्बन्धाय स एवानूद्यत इति द्रष्टव्यम्।

कल्पः, 'हिरण्यगर्भः समवर्त्तताग्रे इति तस्मिन् हिरण्मयं पुरुषं प्राचीनमुत्तानं दक्षिणेनाहवं प्राङ्मुख उपधाय' इति। पाठस्तु,— "हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्। स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम(५)" इति। 'हिरण्ये' ब्रह्माण्डरूपे गर्भरूपेणावस्थितः प्रजापतिः 'हिरण्यगर्भः', स च 'भूतस्य' (प्राणिजातस्य) 'अग्रे' 'समवर्त्तत',—प्राणिजातो-त्पत्तेः पूर्वं स्वयं शरीरधारी बभूव, स च 'जातः' (उत्पन्नमात्रः) 'एक' एवोत्पत्स्यमानस्य सर्वस्य जगतः 'पतिः' 'आसीत्'। अत एव 'पृथिवीं' 'द्यां' (विस्तीर्णां दिवं) 'दाधार' (धृतवान्)। 'उत' (अपि च) 'इमां' (भूमिं) 'दाधार'। तादृशाय 'कस्मै' (प्रजापति)-'देवाय' 'हविषा' 'विधेम' (परिचरेम)।

एतन्मन्त्रसाध्यं हिरण्मयपुरुषोपधानं विधत्ते,—"हिरण्मयं पुरुषमुपदधाति यजमानलोकस्य विधृत्यै" (५।२।७अ०) इति।

---

* स्वीक्रियेत इति J. पु० पाठः।

'यजमानलोकस्य' (लोकः स्थानं तस्य) धारणमनेनोपधानेन भवति ।

देशविशेषं विधत्ते,—"यदिष्टकाया आतृण्णमनूपदध्यात् पशूनाञ्च यजमानस्य च प्राणमपिदध्याद् दक्षिणतः प्राञ्चमुपदधाति दाधार यजमानलोकं न पशूनाञ्च यजमानस्य च प्राणमपिदधात्यथो खल्विष्टकाया आतृण्णमनूपदधाति प्राणानाम् उत्सृष्ट्यै" (५।२।७अ०) इति। इष्टका रुक्मरूपा, तस्या 'आतृण्णं' गलबन्धनसूत्रार्थं छिद्रं, यदि तच्छिद्रम् 'अनूपदध्यात्', अस्य छिद्रस्य पिधानेन 'पशूनां' 'यजमानस्य' 'च' प्राणः पिहितो भवेत्,—प्राणसञ्चारच्छिद्रस्य पिहितत्वेन श्वासो न निर्गच्छेदित्यर्थः। तस्मात् तद्दोषपरिहाराय पश्चिमदिग्भागे तच्छिद्रमुपेक्ष्य रुक्मरूपाया इष्टकाया दक्षिणस्यां दिशि प्राक्शिरसं पुरुषम् अवस्थापयेत् । एवञ्च सति आहवनीयस्य दक्षिणदेशरूपो यो यजमानस्य लोकः, स विधृतो भवति, तच्छिद्रस्यानावृतत्वात्, 'यजमानस्य' 'पशूनाञ्च' प्राणोऽप्यनावृतो भवति। 'अथो' 'खलु'-इति पक्षान्तरोपन्यासः,—रुक्मरूपाया 'इष्टकायाः' छिद्रमनुपलक्ष्यैव पुरुषमुपदध्यात्। सति हि छिद्रे 'प्राणानाम्' उत्सर्गः (सञ्चारो) भवति ।

कल्पः, 'द्रप्सश्चस्कन्देति पुरुषमभिमृश्य' इति । पाठस्तु,—द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमञ्च योनिमनु यश्च पूर्वः। तृतीयं योनिमनु सञ्चरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः(१)" इति । द्रव्यान्तरसङ्घट्टनेन स्फुटितो हिरण्मयपुरुषस्यावयवलेशः 'द्रप्सः',

स च 'पृथिवीमनु' 'चस्कन्द' (पृथिव्यां पतित इत्यर्थः)। स च 'द्रप्सः' हुतः सन् स्थानत्रये 'अनु'-'सञ्चरति',—द्युलोकेऽन्तरिक्ष-लोके भूलोके च। तदेतदभिप्रेत्य स्मर्यते,—

"अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठति।

आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः"॥ इति (मनु०)। सोऽयमर्थो 'द्याम्' इत्यादिनाऽभिधीयते,—'द्यामिमञ्च योनिमनु' (अन्तरिक्षरूपम् 'इमं' स्थानम् 'अनु'-सञ्चरति); 'यश्च पूर्वः' (यो हि 'पृथिवीमनु चस्कन्द' इति पूर्वोक्तः स्थानविशेषः), तमपि 'अनु'-सञ्चरति; 'तृतीयं योनिं' (द्युलोकमादित्यस्थानम्) 'अनु'-सञ्चरति, तम् इमं त्रिषु स्थानेषु 'अनु'-'सञ्चरन्तं' 'द्रप्सं जुहोमि' (मनसा हुतमिव भावयामि)। कुत्र होमः?—तदुच्यते,—'सप्त होत्राः' इति। यस्यां दिशि 'द्रप्सः' पतितः, तद्व्यतिरिक्ता होमयोग्याः याः सप्त दिशः सन्ति, तासामनुक्रमेण 'जुहोमि'। यथाऽयं द्रप्सः हुत आदित्यादिस्थानत्रयेषु सञ्चरन्नुपकरोति, तथा भावया-मीत्यर्थः।

तमिमं मन्त्रं विनियुङ्क्ते,—"द्रप्सश्चस्कन्देत्यभिमृशति होत्रा-स्वेवैनं प्रतिष्ठापयति" (५।२।७ अ०) इति। 'होत्रासु' (होतृ-मैत्रावरुणादिषु सप्तसु, अथवा द्रप्सस्कन्दनदिग्व्यतिरिक्तासु होमयोग्यासु सप्तसु दिक्षु)।

कल्पः, 'नमो अस्तु सर्पेभ्य इति तिसृभिरभिमन्त्रय' इति। तत्र प्रथमामाह,—"नमो अस्तु सर्पेभ्यो ये के च पृथिवीमनु। ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः(१)" इति। 'ये'

केचित् सर्पाः 'पृथिवीमनु'-गताः, 'तेभ्यः' 'सर्पेभ्यः' 'नमः' 'अस्तु'। 'अन्तरिक्षे' (यक्षगन्धर्वादिलोके) वर्त्तमाना 'ये' सर्पाः, 'ये' 'च' 'दिवि' (द्युलोके) वर्त्तमाना राहुप्रभृतयः, 'तेभ्यः' 'सर्पेभ्यः' 'नमः' 'अस्तु'।

अथ द्वितीयामाह,—"येऽदो रोचने दिवो ये वा सूर्यस्य रश्मिषु। येषामप्सु सदः कृतं तेभ्यः सर्पेभ्यो नमः(८)" इति। 'दिवः' (अन्तरिक्षस्य) 'रोचने' (भासके) 'अदः' (अमुष्मिन्) 'सूर्यस्य' मण्डले 'ये' सर्पा वसन्ति, 'ये' चान्ये 'सूर्यस्य रश्मिषु' (अस्माभिरदृश्यमाना वर्त्तन्ते), 'येषाम्' (अन्येषां सर्पाणाम्) 'अप्सु' (जलमध्ये) 'सदः' (स्थानं) 'कृतं', 'तेभ्यः सर्पेभ्यः' (कृत्स्नेभ्यः) 'नमः' अस्तु।

अथ तृतीयामाह,—"या इषवो यातुधानानां ये वा वनस्पतीꣳरनु। ये वाऽवटेषु शेरते तेभ्यः सर्पेभ्यो नमः(९)" इति। 'याः' सर्पजातयः 'यातुधानानां' (रक्षसाम्) 'इषवः' (वाणरूपाः) वर्त्तन्ते, 'ये वा' अन्ये 'वनस्पतीन्' (चन्दनादिवृक्षान्) 'अनु'-वेश्य अवस्थिताः, 'ये' चान्ये 'अवटेषु' (बिलेषु) 'शेरते', 'तेभ्यः' 'सर्पेभ्यः' 'नमः' अस्तु। एते मन्त्राः स्पष्टार्थत्वात् ब्राह्मणे उपेक्षिताः।

यथा पुष्करपर्णरुक्महिरण्मयपुरुषोखानामम्नमयेष्टकानामुपधानं विहितं, तथैव स्रुचोरमृन्मयेष्टकयोरुपधानं विधत्ते,—"स्रुचावुपदधाति" (५।२।७अ०) इति।

तयोः स्रुचयोर्विशेषणं दर्शयति,—"आज्यस्य पूर्णां कार्ष्मर्य-

मयीं दध्नः पूर्णामौदुम्बरीम्" (५।२।७अ०) इति। श्रीपर्णाख्यो वृक्षविशेषः कार्ष्मर्यः, तेन निर्मिता काचित् स्रुक् 'कार्ष्मर्यमयी'। सा चाज्येन पूर्णा; उदुम्बरेण निर्मिता काचित्, सा च दध्ना* पूर्णा। एतद्गुणविशिष्टयोः स्रुचोरुपधानस्य विधानान्न वाक्यभेदः शङ्कनीयः।

ते च विशिष्टे स्रुचौ लोकद्वयरूपेण प्रशंसति,—"इयं वै कार्ष्मर्यमय्यसावौदुम्बरीमे एवोपधत्ते" (५।२।७अ०) इति।

इष्टकान्तरोपधानवत्समन्त्रत्वस्य शङ्कां† लौकिकवाक्यं निवारयितुं विधत्ते,—"तूष्णीमुपदधाति न हीमे यजुषाप्नुमर्हति" (५।२।७अ०) इति। यस्मादाम्नातो मन्त्रो नास्ति, तस्माद् 'यजुषा' (मन्त्रेण) एते उपधातुं 'न' 'अर्हति'।

तयोर्दिग्विशेषं विधत्ते,—"दक्षिणां कार्ष्मर्यमयीमुत्तरामौदुम्बरीं तस्मादस्या असावुत्तरा" (५।२।७अ०) इति। यस्माद् द्युलोकरूपा उदुम्बरी स्रुगुत्तरस्यां दिश्युपहिता, 'तस्मात्' लोकेऽपि 'असौ' (द्यौः) 'अस्याः' (पृथिव्याः) 'उत्तरा' (ऊर्द्ध्वभाविनी)।

स च दिग्विशेषः सूत्रकारेण स्पष्टमभिहितः, 'आज्यस्य पूर्णां कार्ष्मर्यमयीं दक्षिणेन पुरुषमुपदधाति दध्नः पूर्णामौदुम्बरीमुत्तरेण पुरुषम्' इति।

प्रकारान्तरेण स्रुग्विशेषं प्रशंसति,—"आज्यस्य पूर्णां कार्ष्मर्यमयीं वज्रो वा आज्यं वज्रः कार्ष्मर्यो वज्रेणैव यज्ञस्य दक्षिणतो

---

* दध्नः इति आदर्शपुस्तकपाठः।

† एवमेव सर्व्वत्र पाठः। शङ्कया इति तु भवितुं युक्तः।

रक्षाᳲस्यपहन्ति दध्नः पूर्णामौदुम्बरीं पशवो वै दधि ऊर्गुदुम्बरः पशुष्वेवोर्जं दधाति" (४।२।७अ०) इति।

आज्यस्य वज्रत्वं तानूनप्त्रब्राह्मणे समाम्नातम्, 'घृतं खलु वै देवा वज्रं कृत्वा सोममघ्नन्' इति।

कार्ष्मर्यस्य रक्षोपघाते(?) हेतुत्वादज्रत्वं, तदप्यातिथ्यब्राह्मणे समाम्नातम्. 'ते कार्ष्मर्यमयान् परिधीनकुर्वत तैर्वै ते रक्षाᳲस्यपाघ्नन्त' इति।

स्रुचोर्दध्याज्यपूर्णत्वं प्रशंसति,—"पूर्णे उपदधाति पूर्ण एवैनम् अमुष्मिंल्लोक उपतिष्ठेते" (५।२।७अ०) इति।

स्रुगुपधानं प्रशंसति,—"विराज्यग्निश्चेतव्य इत्याहुः स्रुग्वै विराट् यत् स्रुचावुपदधाति विराज्येवाग्निं चिनुते"(५।२।७अ०) इति। विविधे राजमाने प्रदेशे चेतव्योऽग्निरित्यभिज्ञा 'आहुः'। 'स्रुक्' चाज्यादिपूर्णत्वात्* विशेषेण राजते, तस्मात् तत्र चयनाय 'स्रुचौ' उपदध्यात्।

पाशुकोत्तरवेदिवद्रुक्मस्योपरि व्याघारणं विधत्ते,—"यज्ञमुखे यज्ञमुखे वै क्रियमाणे यज्ञᳲ रक्षाᳲसि जिघाᳲसन्ति यज्ञमुखᳲ रुक्मो यद्रुक्मं व्याघारयति यज्ञमुखादेव रक्षाᳲस्यपहन्ति" (५। २।७अ०) इति। यज्ञसम्बन्धिन एकैकस्याङ्गस्यानुष्ठानं 'यज्ञमुखम्' अतो रुक्मोपधानस्यापि यज्ञमुखत्वात् तत्र प्राप्तानां रक्षसाम् उपघाताय व्याघारयेत्।

---

* पूरणात् इति आदर्शपुस्तकपाठो न सम्यक्।

'कृणुष्वपाज(?) इति पञ्चभिः' इति सूत्रकारेण ये मन्त्रा उदाहृतास्तानत्र विनियुङ्क्ते,—"पञ्चभिर्व्याघारयति पाङ्क्तो यज्ञो यावानेव यज्ञस्तस्माद्रक्षाꣳस्यपहन्ति" (५।२।७अ०) इति । 'धानाः करम्भः' इत्यादिभिर्हविर्भिर्यः(?) 'पञ्चभिः' यज्ञस्य पाङ्क्तत्वम् ।

सूत्रकारेण, 'दक्षिणमꣳसमुत्तराꣳ श्रोणिं दक्षिणां श्रोणिम् उत्तरमंसं मध्यमिति' इति पाशुकोत्तरवेदिव्याघारणे येयं वक्ररीतिरुक्ता, तामत्र विधत्ते,—"अक्ष्णया व्याघारयति तस्मादक्ष्णया पशवोऽङ्गानि प्रहरन्ति प्रतिष्ठित्यै" (५।२।७अ०) इति । 'अक्ष्णया' (वक्ररीत्या) । अत एवाघारस्य विविधत्वात् व्याघारणमित्युच्यते, यस्माद्व्याघारणे वक्रक्रमः, 'तस्मात्' 'पशवः' गमनकाले स्वकीययागाङ्गानि वक्ररीत्या-'प्रहरन्ति' (प्रवर्त्तयन्ति),—पुरोवर्त्तिनं दक्षिणं पादं पुरतः प्रक्षिप्य पाश्चात्यं वामपादं पुरतः प्रवर्त्तयन्ति । तस्मात् प्रतिष्ठायै तदिदं वक्रत्वं सम्पद्यते* ।

अत्र विनियोगसंग्रहः,—

अभ्यस्थं क्रमयेद्दर्भं, यदावृत्तिः प्रदक्षिणम् ।
अपां, दध्यात् पद्मपत्रं, ब्रह्म, रुक्मोपधानकम् ॥
हिर, स्वर्णमयं दध्यात्, द्रप्स,-स्तस्याभिमर्शनम् ।
नम,-स्त्रिभिर्मन्त्रयेत मन्त्रा अत्र नवेरिताः ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे द्वितीयप्रपाठके अष्टमोऽनुवाकः ॥ ८ ॥

---

* संपाद्यते इति आदर्शपुस्तकपाठः ।

ध्रुवासि धरुणास्तृता विश्वकर्मणा सुकृता । मा त्वा समुद्र उद्वधीन्मा सुपर्णो व्यथमाना पृथिवीं दृꣳह[1] । प्रजापतिस्त्वा सादयतु पृथिव्याः पृष्ठे व्यचस्वतीं प्रथस्वतीं प्रथोऽसि पृथिव्यसि भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री पृथिवीं यच्छ पृथिवीं दृꣳह पृथिवीं मा हिꣳसीर्विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै ॥ १ ॥

चरित्रायाग्निस्त्वाभिपातु मह्या स्वस्त्या छर्दिषा शन्तमेन तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद[2] । काण्डात् काण्डात् प्ररोहन्ती परुषः परुषः परि । एवा नो दूर्वे प्रतनु सहस्रेण शतेन च[3] । या शतेन प्रतनोषि सहस्रेण विरोहसि । तस्यास्ते देवीष्टके विधेम हविषा वयम्[4] । अषाढासि सहमाना सहस्वारातीः सहस्वारातीयतः[5] । सहस्व पृतनाः सहस्व पृतन्यतः । सहस्रवीर्या ॥ २ ॥

असि सा मा जिन्व[6] । मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः[7] । मधु नक्तमुतोषसि मधुमत् पार्थिवꣳ रजः । मधु द्यौरस्तु नः पिता[8] । मधुमान्नो वनस्पतिर्मधुमाꣳ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः[9] । मही द्यौः पृथिवी च न

इमं यज्ञं मिमिक्षतां। पिपृतां नो भरीमभिः[१०]।
तद्विष्णोः परमं ॥ ३ ॥

पदꣳ सदा पश्यन्ति सूरयः दिवीव चक्षुराततं[११]।
ध्रुवाऽसि पृथिवि सहस्व पृतन्यतः। स्यूता देवेभि-
रमृतेनाऽऽगाः[१२]। यास्ते अग्ने सूर्ये रुच उद्यतो दिव-
मातन्वति रश्मिभिः। ताभिः सर्वाभीरुचे जनाय नः
कृधि[१३]। या वो देवाः सूर्ये रुचो गोष्वश्वेषु या रुचः।
इन्द्राग्नी ताभिः सर्वाभीरुचं नो धत्त बृहस्पते[१४]।
विराट् ॥ ४ ॥

ज्योतिरधारयत् सम्राट् ज्योतिरधारयत् स्वराट्
ज्योतिरधारयत्[१५]। अग्ने युक्ष्वा हि ये तवाश्वासो
देव साधवः। अरं वहन्त्याशवः[१६]। युक्ष्वा हि देव
हूतमाꣳ अश्वाꣳ अग्ने रथीरिव। नि होता पूर्व्यः
सदः[१७]। द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमञ्च योनि-
मनु यश्च पूर्वः। तृतीयं योनिमनु सञ्चरन्तं द्रप्सं
जुहोम्यनु सप्त ॥ ५ ॥

होत्राः[१८]। अभूदिदं विश्वस्य भुवनस्य वाजिन-
मग्नेर्वैश्वानरस्य च। अग्निर्ज्योतिषा ज्योतिष्मान्
रुक्मो वर्चसा वर्चस्वान्[१९]। ऋचे त्वा रुचे त्वा[२०]
समित्स्रवन्ति सरितो न धेनाः। अन्तर्हृदा मनसा

पूयमानाः। घृतस्य धारा अभि चाकशीमि हिरण्ययो वेतसो मध्य आसाम्(२१)। तस्मिन् सुपर्णो मधुकृत् कुलायी भजन्नास्ते मधु देवताभ्यः। तस्यासते हरयः सप्त तीरे, स्वधां दुहाना अमृतस्य धाराम्(२२) ॥

॥ ९ ॥

प्रतिष्ठायै। सहस्रवीर्या। परमं। विराट्। सप्त। तीरे। चत्वारि च ॥ ९ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे द्वितीयप्रपाठके नवमोऽनुवाकः॥ ० ॥

अष्टमेऽनुवाके पुष्करपर्णाद्यमृतण्मयेष्टकोपधानमुक्तम्। अथ नवमे स्वयमातृण्णादीष्टकोपधानमुच्यते। कल्पः, 'ध्रुवासि धरुणास्तृतेति स्वयमातृण्णामभिमृश्याश्वेनोपघ्राप्य प्रजापतिस्त्वा सादयतु पृथिव्याः पृष्ठ इत्यविदुषा ब्राह्मणेन सह मध्येऽग्नेरुपदधाति' इति। तत्राभिमर्शनमन्त्रपाठस्तु,—"ध्रुवासि धरुणाऽस्तृता विश्वकर्मणा सुकृता। मा त्वा समुद्र उद्वधीन्मा सुपर्णोऽव्यथमाना पृथिवीं दृंह(१)" इति। हे स्वयमातृण्णे, त्वं 'ध्रुवा' (स्थिरा) 'असि'। कीदृशी?—'धरुणा' (भूमिरूपेण विश्वस्य धारयित्री), अत एव 'अस्तृता' (केनाप्यहिंसिता), 'विश्वकर्मणा' (जगत्कर्त्रा) 'सुकृता' (सुष्ठु निर्मिता); 'समुद्रः' त्वां 'मा' 'उद्वधीत्' (स्वोदरमध्ये

भञ्जनलक्षणं बन्धं मा कार्षीत्); 'सुपर्णः' (पक्षिराजः) अपि सर्पोद्धरणवेलायां त्वामादाय 'मा' 'उद्वधीत्' (दूरे परित्याग-लक्षणं बन्धं मा कार्षीत्); एवं सति 'अव्यथमाना' (भयरहिता) त्वं 'पृथिवीम्' इमां 'दृँह' (दृढीकुरु)।

उपधानमन्त्रपाठस्तु,—"प्रजापतिस्त्वा सादयतु पृथिव्याः पृष्ठे व्यचस्वतीं प्रथस्वतीं प्रथोऽसि पृथिव्यसि भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री पृथिवीं यच्छ पृथिवीं दृꣳह पृथिवीं मा हिꣳसीर्विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै । चरित्रायाग्निस्त्वाभिपातु मह्या स्वस्त्या छर्दिषा शन्तमेन तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद[१]" इति । हे स्वयमातृण्णे, 'प्रजापतिः' त्वाम् अस्मिन् प्रदेशे 'पृथिव्याः' उपरि 'सादयतु'। कीदृशीं त्वां ?—'व्यचस्वतीं' (विस्तारयुक्तां), 'प्रथस्वतीं' (पृथुलां), 'प्रथोऽसि' अस्याश्चितेः (प्रथनं विस्ताररूपमसि), त्वया हि चितेर्विस्तारो भवति ; पृथिव्यामुत्पन्नत्वात् 'पृथिव्यसि'। 'भूरसि' सुखानां (भावयित्र्यसि), 'भूमिरसि' (मृण्मयपृथिव्यभिमानी*-भूमिदेवताऽसि), 'अदितिरसि' (अखण्डनीयाऽसि)। 'विश्वधायाः' (विश्वस्य पोषयित्र्यसि), तथा 'विश्वस्य' 'भुवनस्य' (सर्वलोकस्य) 'धर्त्री' (धारयित्री) असि। तादृशी त्वं 'पृथिवीं' 'यच्छ' (नियतां कुरु); 'पृथिवीं' 'दृँह' (दृढीकुरु), 'पृथिवीं मा हिंसीः'

---

* मृण्मयपृथिव्यभिमानीमि इति J. पु० पाठः। मृण्मयपृथिव्यभि-मानि-इति पाठो भवितुं युक्तः।

(पृथिव्या हिंसां मा कुरु)। 'विश्वस्मै' (सर्वस्मै) प्राणापानव्यानो-दानाख्यवायुवृत्तिलाभाय, 'प्रतिष्ठायै' (स्वगृहस्थितिलाभाय), 'चरित्राय' (शास्त्रीयाचरणलाभाय)। प्राणिनामेतस्य सर्वस्य सिद्ध्यर्थम् अयम् 'अग्निः' त्वामभितः 'पातु'। केन रक्षणम् इति?— तदुच्यते,—'मह्या स्वस्त्या' (महत्या योगक्षेमसम्पत्त्या) 'शन्तमेन' 'छर्दिषा' (अत्यन्तसुखकारिणा दीप्तिविशेषेण) तव स्वामिभूता या देवता, 'तया' अनुगृहीता त्वं 'ध्रुवा' (स्थिरा) सती 'सीद' (इहोपविश), 'अङ्गिरस्वत्' (अङ्गिरसां चयनानुष्ठाने यथा त्वं ध्रुवा (स्थिरा), तद्वत्)।

एतन्मन्त्रसाध्यमुपधानं विधत्ते,—"स्वयमातृण्णामुपदधातीयं वै स्वयमातृण्णेमामेवोपधत्ते" (५।२।७अ०) इति। शर्करा-ख्यानां क्षुद्रपाषाणानां मध्ये पुरुषप्रयत्नमन्तरेण या स्वत एव छिद्रयुक्ता, सेयं शर्करा 'स्वयमातृण्णा', तामत्रोपदध्यात्। सा च स्वयमातृण्णा पृथिवीजन्यत्वात् पृथिव्येव, अतः पृथिवीमेवोपधत्ते।

तस्याः स्वयमातृण्णाया अश्वेनोपघ्रापणं विधत्ते,—"अश्वम् उपघ्रापयति प्राणमेवास्यां दधात्यथो प्राजापत्यो वा अश्वः प्रजापतिनैवाग्निं चिनुते" (५।२।७अ०) इति।

अन्तरस्या इष्टकायाः स्वतःसिद्धच्छिद्रं प्रशंसति,—"प्रथमे-ष्टकोपधीयमाना पशूनाञ्च यजमानस्य च प्राणमपिदधाति स्वयमातृण्णा भवति प्राणानामुत्सृष्ट्या अथो सुवर्गस्य लोकस्या-नुख्यात्यै" (५।२।७अ०) इति। पुष्करपर्णादिषूपधेयत्वसाम्येन इष्टकात्वमुपचरितं। 'स्वयमातृण्णा' तु यद्यपि पुरुषैरनिर्मिता,

तथापि तस्या इष्टकात्वं मुख्यमित्यभिप्रेत्य मुख्यास्विष्टकाखस्याः प्राधान्यमुच्यते । प्रथमा इष्टका उपधीयमाना सती पशूनां यजमानस्य च श्वासं निरुध्यात्, अतः श्वासस्य निर्गमनाय स्वतःसिद्धच्छिद्रयुक्ता कार्या । 'अथो' (अपि च) सच्छिद्रत्वे सति आवरणाभावात् स्वर्गलोकोऽपि प्रकाशितो भवति ।

यदुक्तं सूत्रकारेण, 'अविदुषा ब्राह्मणेन सह मध्येऽग्नेरुपदधाति' इति । तदेतद्विधत्ते,—"अग्नावग्निश्चेतव्य इत्याहुरेष वै अग्निर्वैश्वानरो यद्ब्राह्मणस्तस्मै प्रथमामिष्टकां यजुष्कृतां प्रयच्छेत्तां ब्राह्मणश्चो-पदध्यात् तामग्नावेव तदग्निं चिनुते" (५।२।७अ०) इति । अग्निमेवाधारं कृत्वा तस्मिन् 'अग्नौ' एवायम् 'अग्निश्चेतव्य इति' अभिज्ञा 'आहुः' । 'तस्य क उपायः इति ?—तदुच्यते,—योऽयं ब्राह्मणः, स एवाधारभूतो वैश्वानरनामकोऽग्निः, अग्नेर्ब्राह्मणाभि-मानिदेवत्वाद् ब्राह्मणस्याग्नित्वम् । अतोऽग्निरूपस्य ब्राह्मणस्य हस्ते मन्त्रसंस्कृतां स्वयमातृण्णां दद्यात् । ततः स ब्राह्मणो-ऽध्वर्युश्च मिलित्वा 'ताम्' उपदध्यातां, तावता अग्निश्चितो भवति ।

यदुक्तं सूत्रकारेण, 'अविद्वान् ब्राह्मणो वरं ददात्येकं द्वौ त्रीन् वा' इति । तदेतद्विधत्ते,—"ईश्वरो वा एष आर्त्तिमार्त्तो योऽविद्वानिष्टकामुपदधाति त्रीन् वरान् दद्यात् त्रयो वै प्राणाः प्राणानाꣳ स्तृत्यै द्वावेव देयौ द्वौ हि प्राणावेक एव देय एको हि प्राणः" (५।२।७अ०) इति । 'यः' स्वयम् 'अविद्वान्' सन् स्वयमातृण्णाम् 'इष्टकामुपदधाति', स 'एषः' 'आर्त्तिम्'

आप्तुं समर्था भवति। अतस्तत्परिहारायाध्वर्यवे वरदानं कुर्यात्। वरशब्देन श्रेष्ठत्वाद् गौरुच्यते। त्रीन्, द्वौ, एकः-इति पक्षा विकल्पिताः। प्राणोऽपानो व्यान इति त्रित्वं; व्यानमन्तर्भाव्य प्राणापानाविति द्वित्वम्; अपानमन्तर्भाव्य प्राण इत्येकत्वम्।

कल्पः, 'काण्डात् काण्डात् प्ररोहन्तीति द्वाभ्यां दूर्वेष्टकाम्' इति। 'उपदध्यात्' इत्यनुवर्त्तते' इति। तत्र प्रथमामाह,—"काण्डात् काण्डात् प्ररोहन्ती परुषः परुषः परि। एवा नो दूर्वे प्रतनु सहस्रेण शतेन च(१)" इति। 'काण्ड'-शब्दः स्तम्बवाची। 'परुः'-शब्दः (पर्ववाची)। यावन्तः काण्डाः (स्तम्बाः) सन्ति, तत्रैकैकस्मात् स्तम्बात् प्रकर्षेण दूर्वा उत्पद्यते; एकस्मिन्नपि स्तम्बे यावन्ति परूंषि (पर्वाणि) सन्ति, तेष्वेकैकस्य पर्वणः परितः प्रकर्षेण दूर्वा उत्पद्यते। हे 'दूर्वे', त्वं तत्तत्काण्डोत्थत्वात् तत्तत्पर्वणि प्रकर्षेणोत्पद्यमाना वर्त्तसे। 'एव' (एवमनेन) प्रकारेण 'नः' (अस्मदर्थं) शतसङ्ख्याकेन सहस्रसङ्ख्याकेन च त्वदीयभेदेन त्वत्स्वरूपं 'प्रतनु' (प्रकर्षेण विस्तृतं कुरु)।

अथ द्वितीयामाह,—"या शतेन प्रतनोषि सहस्रेण विरोहसि। तस्यास्ते देवीष्टके विधेम हविषा वयम्(४)" इति। हे दूर्वे, 'या' त्वं शतसङ्ख्याकेन स्वरूपेण 'प्रतनोषि' (अत्यन्तं विस्तारयसि)। तथा सहस्रसङ्ख्याकेन आकारेण 'विरोहसि' (विविधमुत्पद्यते)*। हे 'इष्टके' 'देवि' 'तस्यास्ते' 'वयं' 'हविषा' 'विधेम' (परिचरेम)।

---

* विविधमुत्पद्यसे इति भवितुं युक्तः।

एतन्मन्त्रद्वयसाध्यमुपधानं विधत्ते,—"पशुर्वा एष यदग्निर्न खलु वै पशव आ-यवसे रमन्ते दूर्वेष्टकामुपदधाति पशूनां धृत्यै" (५।२।७अ०) इति । पशुप्राप्तिहेतुत्वादग्नेः पशुत्वम् । ईषदर्थवाची आङ् । यवशब्दो घासवाची । अल्पघासे प्रदेशे पशवो नैव 'रमन्ते'; अतः पशूनां धारणाय घासरूपां दूर्वेष्टकामुपदध्यात् ।

तस्याश्च स्वरूपं सूत्रकारेणोक्तं, 'सलोष्टꣳ हरितं दूर्वास्तम्बम् अप्रच्छिन्नाग्रम्' इति ।

मन्त्रद्वयं प्रशंसति,—"द्वाभ्यां प्रतिष्ठित्यै" (५।२।७अ०) इति ।

प्रथममन्त्रस्य प्रथमपादार्थः प्रसिद्ध इति दर्शयति,—"काण्डात् काण्डात् प्ररोहन्तीत्याह काण्डेन काण्डेन ह्येषा प्रतितिष्ठति" (५।२।७अ०) इति ।

द्वितीयेऽर्द्धे सहस्रशब्दतात्पर्यं दर्शयति,—"एवा नो दूर्वे प्रतनु सहस्रेण शतेन चेत्याह साहस्रः प्रजापतिः प्रजापतेराप्त्यै" (५।२।७अ०) इति । सहस्रसङ्ख्याकप्राण्युत्पादकत्वात् प्रजापतेः साहस्रत्वम् ।

कल्पः, 'अषाढासीति द्वाभ्यामषाढामुपरिष्टाल्लक्षणाम्' इति । उपदध्यादिति शेषः । तत्र प्रथमामाह,—"अषाढाऽसि सहमाना सहस्वारातीः सहस्वारातीयतः[५]" इति । उखानिर्माणकाल एव येयमिष्टका निर्मिता, सेयम् 'अषाढा'; तथा च सूत्रकारेणोक्तं, 'य उखां करोति सोऽषाढामेतस्या एव मृदस्त्र्यालिखितामिष्टकाम्' इति । हे इष्टके, त्वम् 'अषाढा' (केनापि अपरिभूता), 'सहमाना' (विरोधिनः परिभवन्ती) 'असि' ।

ये अस्मभ्यं दातव्यं न प्रयच्छन्ति, तथाविधान् अरातीन् (शत्रून्) 'सहस्व' (परिभव)। ये तु पूर्वमरातयो न भवन्ति, इतः परम् अरातित्वमिच्छन्ति, तानपि अरातीन् (शत्रून्) 'सहस्व' (परिभव)।

अथ द्वितीयामाह,—"सहस्व पृतनाः सहस्व पृतन्यतः। सहस्रवीर्यासि सा मा जिन्व(१)" इति। हे इष्टके, 'पृतनाः' (वैरिसेनाः) 'सहस्व' (परिभव)। ये तु पूर्वं सेनारहिता अपि वैरिण इतः परं सेनामिच्छन्ति, तानपि 'पृतन्यतः' वैरिणः 'सहस्व' (परिभव)। (सहस्रसङ्ख्याकं वीर्यं यस्याः सा) 'सहस्रवीर्याऽसि'; 'सा' (तादृशी) त्वं मां 'जिन्व' (प्रीणय)।

अन्वयव्यतिरेकाभ्यामषाढायाः स्थापनप्रकारविशेषं विधत्ते,—"देवलक्ष्मं वै त्र्यालिखिता तमुत्तरलक्ष्माणं देवा उपादधताधरलक्ष्माणमसुरा यं कामयेत वसीयान्त्स्यादित्युत्तरलक्ष्माणं तस्योपदध्याद्वसीयानेव भवति यं कामयेत पापीयान्त्स्यादित्यधरलक्ष्माणं तस्योपदध्यादसुरयोनिमेवैनमनु पराभावयति पापीयान् भवति" (५।२।८अ०) इति। यस्याम् आर्द्रायाम् इष्टकायां त्रिपुण्ड्रवद्रेखात्रयं, सेयं 'त्र्यालिखिता', तत् त्र्यालिखितत्वं देवानां चिह्नं। ततो देवास्तामषाढाम् ऊर्द्धदेशवर्त्तिचिह्नयुक्ताम् 'उपादधत'। 'असुराः' तु अधोदेशवर्त्तिचिह्नयुक्ताम् 'उपादधत'। तस्माद् देववत् धनसमृद्ध्यर्थमूर्द्ध्वभाविचिह्नयुक्तामेव 'उपदध्यात्'; सोऽयमन्वयः। असुरवत् अधोमुखचिह्नत्वे सति 'एनं' (यजमानम्) असुरजात्यनुसारिणं कृत्वा पराभूतं करोति।

अथ देवचिह्नं विधत्ते,—"आलिखिता भवतीमे वै लोका-स्त्यालिखितेभ्य एव लोकेभ्यो भ्रातृव्यमन्तरेति" (५।२।८अ०) इति। तिसृभिरङ्गुलिभिर्लिखिता 'आलिखिता', तथाविधां कुर्यात्; तथा सति त्रित्वसाम्याल्लोकत्रयरूपा भवति। तेन लोकत्रयाद् भ्रातृव्यः निःसारितो भवति।

कल्पः, 'मधु वाता ऋतायते इति तिसृभिर्दध्ना मधुमिश्रेण कूर्ममभ्यज्य' इति। तत्र प्रथमामाह,—"मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः[७]" इति। ऋतं (यज्ञं) आत्मन इच्छतीति 'ऋतायत्', तस्मै (यजमानाय) 'वाताः' (वायवः) 'मधु क्षरन्ति' (मधुरं रसं स्रावयन्ति)। 'सिन्धवः' (समुद्राः) च मधुरं रसं स्रावयन्ति। 'ओषधीः' (ओषधयः) अपि 'नः' (अस्मदर्थं) 'माध्वीः' (मधुररसोपेताः) 'सन्तु'।

अथ द्वितीयामाह,—"मधु नक्तमुतोषसि मधुमत् पार्थिवꣳ रजः। मधु द्यौरस्तु नः पिता[८]" इति। 'नक्तं' (रात्रौ) 'मधु' अस्माकम् 'अस्तु'। 'उत' (अपि च) 'उषसि' (प्रभाते) 'मधु' 'अस्तु'। तथा यत् 'पार्थिवं रजः', तत्सर्वं 'मधुमत्' (माधुर्य-रसोपेतम्) 'अस्तु'। 'नः' (अस्माकं) 'पिता' (पितृस्थानीया) 'द्यौः' 'मध्वस्तु' (मधुररसोपेतोऽस्तु)।

अथ तृतीयामाह,—"मधुमान्नो वनस्पतिर्मधुमाꣳ अस्तु सूर्यः। माध्वीर्गावो भवन्तु नः[९]" इति। 'वनस्पतिः' (अश्व-त्थादिः) 'नः' (अस्मदर्थं) 'मधुमान्' 'अस्तु' (माधुर्यरसोपेतोऽस्तु)। 'सूर्यः' अपि 'मधुमान्' (सन्तापराहित्यलक्षणमाधुर्यरसोपेतो-

ऽस्तु)। तथा 'गावः' 'नः' (अस्मदर्थं) 'माध्वीः'(मधुरक्षीरोपेताः) 'भवन्तु'।

कल्पः, 'मही द्यौः पृथिवी च न इति पुरस्तात् स्वयमातृण्णायाः प्रत्यञ्चं जीवन्तं कूर्मं प्राङ्मुख उपदधाति' इति। पाठस्तु,—"मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षतां। पिपृतां नो भरीमभिः(१०)" इति। 'मही द्यौः' येयं (महती द्यौः) 'पृथिवी' 'च' (द्यावापृथिवी), ते उभे 'नः' (अस्मदीयम्) 'इमं' 'यज्ञं' 'मिमिक्षतां' (फलवृष्ट्यादि (?) सेक्तुमिच्छतां); ततः 'भरीमभिः' (भरणशक्तिभिः) 'नः' (अस्मान्) 'पिपृतां' (पूरयन्ताम्)।

एतन्मन्त्रसाध्यमुपधानं विधत्ते,—"अङ्गिरसः सुवर्गं लोकं यतः पुरोडाशः कूर्मो भूत्वाऽनु प्रासर्पद् यत् कूर्ममुपदधाति यथा क्षेत्रविदञ्जसा नयत्येवमेवैनं कूर्मः सुवर्गं लोकमञ्जसा नयति" (५।२।८अ०) इति। 'अङ्गिरसः' महर्षयो यदा स्वर्गं 'लोकं' गताः, तदा तान् 'अनु' 'कूर्मः' अपि अन्वगच्छत्। अतः स्वर्गमार्गाभिज्ञः 'कूर्मः' क्षेत्रज्ञ इव सम्यक् नेतुं शक्त इति तमत्रोपदध्यात्।

प्रकारान्तरेण कूर्मोपधानं प्रशंसति,—"मेधो वा एष पशूनां यत् कूर्मो यत् कूर्ममुपदधाति स्वमेव मेधं पश्यन्तः पशव उपतिष्ठन्ते" (५।२।८अ०) इति। योऽयं 'कूर्मः', स एव 'पशूनां' 'मेधः' (यज्ञत्वप्राप्तिहेतुः), अतः कूर्मोपधानेन 'पशवः' तं 'कूर्मं' स्वहेतुभूतयज्ञत्वेन 'पश्यन्तः' यजमानगृहे प्राप्ता भवन्ति।

उपधेयस्य कूर्मस्य जीवनोपेतत्वगुणं विधत्ते,—"श्मशानं वा एतत् क्रियते यन्मृतानां पशूनाꣳ शीर्षाण्युपधीयन्ते यज्जीवन्तं

कूर्ममुपदधाति तेनाश्मशानचिद्वास्तव्यो वा एष यत् कूर्मः" (५। २।८अ०) इति। 'मृतानां' 'पशूनां' (अश्वर्षभवृष्णिवस्तानां) शिरांसि उपधेयानीत्युपरिष्टाद्वक्ष्यति, ततः 'एतत्' स्थानं 'श्मशानं' एव कृतं भवति। जीवत्कूर्मोपधानेनायं यजमानः 'श्मशानचित्' न भवति। किञ्च यः कूर्मोऽस्ति, स एव 'वास्तव्यः' (निवासयोग्यः), कूर्मपृष्ठे भूमेरवस्थितत्वात्, ततोऽपि कूर्मोपधानमित्यर्थः।

उपधानात् पूर्वमभ्यञ्जनं विधत्ते,—"मधु वाता ऋतायत इति दध्ना मधुमिश्रेणाभ्यनक्ति स्वदयत्येवैनम्" (५।२।८अ०) इति। अभ्यञ्जनेनैनं कूर्मं स्वादूकरोति।

अभ्यञ्जनसाधनद्रव्यद्वयं प्रशंसति,—"ग्राम्यं वा एतदन्नं यद् दध्यारण्यं मधु यद्दध्ना मधुमिश्रेणाभ्यनक्त्युभयस्यावरुध्यै" (५।२। ८अ०) इति। 'उभयस्य' ग्राम्यस्यारण्यस्य च भोग्यजातस्य।

कूर्मोपधानमन्त्रे द्यौः पृथिवी चेति शब्दद्वयस्य तात्पर्यं दर्शयति,—"मही द्यौः पृथिवी च न इत्याहाभ्यामेवैनमुभयतः परिगृह्णाति" (५।२।८अ०) इति।

स्वयमातृण्णायाः पूर्वदेशं कूर्मस्य विधत्ते,—"प्राञ्चमुपदधाति सुवर्गस्य लोकस्य समष्ट्यै" (५।२।८अ०) इति। 'प्राञ्चं' प्राग्देश-वर्त्तिनं; स्वर्गलोकोऽपि प्राग्देशवर्त्ती।

तस्मिन् प्राग्देशे कूर्मस्य प्रत्यङ्मुखत्वं विधत्ते,—"पुरस्तात्प्रत्यञ्च-मुपदधाति तस्मात् पुरस्तात् प्रत्यञ्चः पशवो मेधमुपतिष्ठन्ते" (५।२।८अ०) इति। स्वयमातृण्णायाः पुरस्तात् उपधेयः कूर्मः, तं कूर्मं प्रत्यङ्मुखमुपदध्यात्; यस्मादेवं, 'तस्मात्' आहवनीयस्य

'पुरस्तात्' यूपे बद्धाः 'पशवः' प्रत्यङ्मुखा यज्ञं सेवन्ते। यदुक्तं सूत्रकारेण, 'प्रादेशमात्रं चतुस्र-(?)-मौदुम्बरमुलूखलमुत्तरेऽग्रे प्रयुनक्ति सर्वौषधस्य पूरयित्वावहत्य परा यूपेदं विष्णुर्विचक्रम इति मध्येऽग्नेरुपदधाति' इति।

तदेतद्विधत्ते,—"यो वा अपनाभिमग्निं चिनुते यजमानस्य नाभिमनुप्रविशति स एनमीश्वरो हिꣳसितोरुलूखलमुपदधात्येषा वा अग्नेर्नाभिः स नाभिमेवाग्निं चिनुते हिꣳसायाः" (५।२।८अ०) इति। नाभिरहितत्वेन चीयमानोऽग्निः 'यजमानस्य' 'नाभिं' प्रविश्य हिंसितुं प्रभवति, अतो नाभिस्थानीयम् 'उलूखलम्' उपदध्यात्। तथा सति सनाभित्वेनास्य हिंसा न भवति।

उलूखलस्य प्रकृतिद्रव्यं विधत्ते,—"औदुम्बरं भवत्यूर्ग्वा उदुम्बर ऊर्जमेवावरुन्धे" (५।२।८अ०) इति।

देशविशेषं विधत्ते,—"मध्यत उपदधाति मध्यत एवास्मा ऊर्जं दधाति तस्मान्मध्यत ऊर्जा भुञ्जते" (५।२।८अ०) इति।

हस्तेनाभिनीय उलूखलस्य प्रादेशपरिमाणं विधत्ते,— "इयद्भवति प्रजापतिना यज्ञमुखेन सम्मितम्" (५।२।८अ०) इति।

उपधानात् पूर्वभाविनं सर्वौषधावघातं विधत्ते,—"अव-हन्त्यन्नमेवाकरोत्" (५।२।८अ०) इति।

अन्यत्राम्नातम् 'इदं विष्णुः' इति मन्त्रमुलूखलोपधाने विनियुङ्क्ते,—"वैष्णव्या ऋचा उपदधाति विष्णुर्वै यज्ञो वैष्णवा वनस्पतयो यज्ञ एव यज्ञं प्रतिष्ठापयति" (५।२।८अ०) इति।

कल्पः, 'तद्विष्णोः परमं पदमिति मुसलम्' इति। पाठस्तु,—

"तद्विष्णोः परमं पदᳪ सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्[११]" इति। 'सूरयः' (विद्वांसः, वेदान्तपारंगताः); 'विष्णोः' 'तत्' 'परमं पदं सदा पश्यन्ति'। कीदृशं?—'दिवि' (आकाशे, निरावरणे) 'चक्षुः' 'इव' 'आततं' (व्याप्तं)। तादृशस्य विष्णोरनुग्रहाद्वैष्णववनस्पतिकार्यं मुसलमुपदधातीत्यर्थः। एतन्मन्त्रसाध्यमुसलोपधानविधित्वेनापि पूर्वोदाहृतं 'वैष्णव्या ऋचा' इत्यादि ब्राह्मणं योजनीयम्।

कल्पः, 'ध्रुवासि पृथिवीति मध्येऽग्नेरुपदधाति' इति। तत्र प्रकृतत्वात् उखामित्यनुवर्त्तते। पाठस्तु,—"ध्रुवासि पृथिवि सहस्व पृतन्यतः। स्यूता देवेभिरमृतेनागाः[१२]" इति। हे 'पृथिवि' (कार्यतया तत्स्वरूपे), हे उखे, त्वं 'ध्रुवासि', 'पृतन्यतः' (सङ्ग्रामं कर्त्तुमिच्छतः) शत्रून् 'सहस्व' (अभिभव)। 'देवेभिः' (देवैः) 'अमृतेन' 'स्यूता' (अमृतसमानेन घृतेन पूरिता) सती 'आगाः' (आगच्छ)।

एतन्मन्त्रसाध्यम् उखोपधानं विधत्ते,—"एषां वा एतल्लोकानां ज्योतिः सम्भृतं यदुखा यदुखामुपदधात्येभ्य एव लोकेभ्यो ज्योतिरवरुन्धे" (५।२।९ अ०) इति। उखारूपं 'यत्' वस्तु, तदिदम् 'एषां' (पृथिव्यादीनां) 'लोकानां' ज्योतिःसम्पादनाय* 'उखाम्' उपदध्यात्।

देशविशेषं विधत्ते,—"मध्यत उपदधाति मध्यत एवास्मै ज्योतिर्दधाति तस्मान्मध्यतो ज्योतिरुपास्महे" (५।२।९ अ०) इति।

* अत्र 'ज्योतिः', ज्योतिःसम्पादनाय इति पाठो भवितुं युक्तः।

'मध्यतः' (उदरमध्ये) जठराग्निरूपं 'ज्योतिः' 'उपास्महे' (प्रतिदिनमनुभवामः)।

उपधेयायाः उखायाः सिकतापूरणं विधत्ते,—"सिकताभिः पूरयत्येतद्वा अग्नेर्वैश्वानरस्य रूपꣳ रूपेणैव वैश्वानरमवरुन्धे" (५।२।९अ०) इति।

अन्वयव्यतिरेकाभ्यां पूरणं प्रशंसति,—"यं कामयेत क्षोधुकः स्यादित्यूनां तस्योपदध्यात् क्षोधुक एव भवति यं कामयेतानुपदस्यदन्नमद्यादिति पूर्णां तस्योपदध्यादनुपदस्यदेवान्नमत्ति" (५।२।९अ०) इति। सिकताभिः पूरिताया ईषन्न्यूनाया उखाया उपधाने सति 'क्षोधुकः' (अन्नरहितः क्षुधालीनः) भवेत्; सोऽयं व्यतिरेकः। सिकतापूर्णाया उपधाने तु 'अनुपदस्यदेव' (अक्षीयमाणम् एव) 'अन्नमत्ति'; सोऽयमन्वयः।

कल्पः,—'प्रवाङ्गिष्टकायाꣳ हिरण्यशकलावध्यूह्य यास्ते अग्ने या वो देवाः सूर्ये रुच इति द्वाभ्यां वामभृतम्' इति। तत्र प्रथमामाह,—"यास्ते अग्ने सूर्ये रुच उद्यतो दिवमातन्वन्ति रश्मिभिः। ताभिः सर्वाभी रुचे जनाय नः कृधि[१२]" इति। हे 'अग्ने', 'सूर्ये' (सूर्यमण्डले) 'उद्यतः' (उदयं गच्छतः) 'ते' (तव) 'रुचः' (दीप्तयः) 'रश्मिभिः' (रश्मिस्वरूपेण) 'दिवमातन्वन्ति' (सर्वतो व्याप्नुवन्ति), रात्रौ या अग्नेर्दीप्तयः ता एव सूर्योदयकाले सूर्यरश्मयो भवन्ति। एतच्च अग्निहोत्रब्राह्मणे समाम्नातम्, 'उद्यन्तं वावादित्यमग्निरनु समारोहति' इति। 'ताभिः' 'सर्वाभिः' दीप्तिभिः 'नः' (अस्मदीयाय) 'जनाय' (यजमानाय) प्रकाशं कुरु।

अथ द्वितीयामाह,—या वो देवाः सूर्ये रुचो गोष्वश्वेषु या रुचः। इन्द्राग्नी ताभिः सर्वाभीरुचन्नो धत्त बृहस्पते[१४] इति। हे 'देवाः', 'वः' (युष्माकं) सम्बन्धिन्यः सूर्यमण्डले वर्त्तमाना या 'रुचः' (दीप्तयः) सन्ति, तथा 'गोषु अश्वेषु' च या दीप्तयः सन्ति। हे 'इन्द्राग्नी', हे 'बृहस्पते', त्रयोऽपि यूयं, 'नः' (अस्मदर्थं) 'रुचं' 'धत्त' (प्रकाशं सम्पादयत)। एतन्मन्त्रभाष्यं वामभृदाख्याया इष्टकाया उपधानसोपानुवाक्यकाण्डे द्रष्टव्यम्।

कल्पः, 'विराड्ज्योतिरिति तिस्रो रेतःसिचः' इति। पाठस्तु,—"विराड्ज्योतिरधारयत् सम्राड्ज्योतिरधारयत् स्वराड्ज्योतिरधारयत्[१५,१६,१७]" इति। विशेषेण राजत इति 'विराट्',—एवंविधा रेतःसिगाख्या प्रथमेष्टका अस्मदनुग्रहार्थं 'ज्योतिरधारयत्'। सम्यक् राजत इति 'सम्राट्', तादृशी द्वितीया रेतःसिगिष्टका। स्वयमेव राजत इति 'स्वराट्', तादृशी तृतीया रेतःसिगिष्टका।

कल्पः, 'अग्ने युक्ष्वा हि ये तव युक्ष्वा हि देवहूतमानिति द्वाभ्यामुखायाᳬ हुत्वा' इति। तत्र प्रथमामाह,—"अग्ने युक्ष्वा हि ये तवाश्वासो देव साधवः। अरं वहन्त्याशवः[१८]" इति। हे 'अग्ने', देवसम्बधिनः 'अश्वासो' ये केचिद् (अश्वाः) 'साधवः' (दान्ताः) सन्तः 'आशवः' (शीघ्रगामिनो) भूत्वा 'अरं' (अलं) 'वहन्ति', सुष्ठु वहन्तीत्यर्थः; तान् अश्वान् 'युक्ष्व' (योजय)।

अथ द्वितीयामाह,—"युक्ष्वा हि देवहूतमाᳬ अश्वाᳬ अग्ने रथीरिव। नि होता पूर्व्यः सदः[१९]" इति। हे 'अग्ने', त्वं 'देवहूतमान्' (देवानामतिशयेन आह्वातॄन्) 'युक्ष्व' (योजय)।

'हि'-शब्दः प्रसिद्धवाची। प्रसिद्धेऽस्मिन् कर्मणीत्यर्थः। योजने दृष्टान्तः,—'रथी' 'अश्वान्' 'इव' इति, (रथी स्वामी यथा अश्वान् योजयति तद्वत्)। किञ्च त्वं 'पूर्व्यः' (पुरातनः); 'होता' (होमोत्पादकः) भूत्वा 'नि'-'षदः' (अस्मिन् यागस्थाने निषीद)। वामभृन्मन्त्रयोरिव रेतःसिङ्मन्त्राणां होत्रमन्त्रयोश्च ब्राह्मणमौपानुवाक्यकाण्डे द्रष्टव्यम्।

कल्पः, 'पुरुषशिरसि हिरण्यशकलान् प्रत्यस्यति द्रप्सश्चस्कन्देत्यास्येऽभूदिदं विश्वस्य भुवनस्येति वर्चं त्वेति दक्षिणाक्षिगोलके रुचे त्वेति सव्ये श्रुते त्वेति कर्णयोर्भासे त्वेति दक्षिणस्यां नासिकायां ज्योतिषे त्वेत्युत्तरस्याम्' इति। उदाहृतेषु मन्त्रेषु प्रथमामृचमाह,—"द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमञ्च योनिमनु यश्च पूर्वः। तृतीयं योनिमनु सञ्चरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः(१०)" इति। द्रव्यान्तरसङ्घट्टनेन स्फुटितो हिरण्यशकलो 'द्रप्सः', 'पृथिवीं' 'अनु' 'चस्कन्द', पृथिव्यां पतित इत्यर्थः। स च द्रप्सो हुतः सन् स्थानत्रये ऽनु'-सञ्चरति (द्युलोके अन्तरिक्षलोके भूलोके च)। तदेतदभिप्रेत्य स्मर्यते,

"अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" इति (मनु०)।

सोऽयमर्थो द्यामित्यादिनाऽभिधीयते। 'द्यामिमञ्च योनिमनु' (अन्तरिक्षरूपमिदं स्थानमनु सञ्चरति)। 'यश्च पूर्वः' (योऽपि पृथिवीमनु चस्कन्देति पूर्वोक्तस्थानविशेषः), तमप्यनुसञ्चरति। 'तृतीयं योनिं' (द्युलोकरूपमादित्यस्थानम्) अनु-

सहस्रमन्ये पशवो मध्ये पुरुषशीर्षमुपदधाति सवीर्यत्वाय" (५।२।९अ०) इति। अत्र हि पुरुषशीर्षाश्वर्षभवृष्ण्यावस्तानां शिरांस्युपधेयानि। तेषां 'मध्ये' यः 'पुरुषः' स एक एव 'पशूनां' 'सहस्रं' यजमानाय 'प्रयच्छति'। 'अन्ये' तु अश्वर्षभवृष्ण्यावस्तास्त्वारः 'पशवः' मिलित्वा 'पशूनां' 'सहस्रं' प्रयच्छन्ति। तथा सति अश्वादिभ्यः पुरुषस्यातिप्रशस्तत्वात् तदीयं शिरो मध्ये उपदध्यात्। तच्चोपधानं वीर्यमाहित्याय सम्पद्यते।

तस्य पुरुषशीर्षस्योखासमीपदेशं विधत्ते,—"उखायामपिदधाति प्रतिष्ठामेवैनद्गमयति" (५।२।९अ०) इति। 'उखायां' उखासमीपे।

तस्य पुरुषशीर्षस्य आस्यादिच्छिद्रेषु हिरण्यशकलप्रक्षेपं विधत्ते,—"व्यृद्धं वा एतत् प्राणैरमेध्यं यत् पुरुषशीर्षम् अमृतं खलु वै प्राणा अमृतꣳ हिरण्यं प्राणेषु हिरण्यशकलान् प्रत्यस्यति प्रतिष्ठामेवैनद्गमयित्वा प्राणैः समर्द्धयति" (५।२।९अ०) इति। तदेतत् पुरुषस्य शिरः 'प्राणैः' वियुक्तत्वाद्यज्ञानर्हं; प्राणास्तु मरणहीनत्वात् 'अमृतम्' इत्युच्यन्ते; लोके हि, प्राणवियोगे सति शरीरस्यैव मरणं, न तु प्राणानां। 'हिरण्यं' चाग्निसंयोगे सति विनाशाभावात् 'अमृतम्'; अतः प्राणसञ्चारस्थानेषु आस्यादिषु हिरण्यशकलान् प्रक्षिपेत्, तथा सति उखायां प्रतिष्ठापितं शिरः 'प्राणैः' समृद्धं भवति।

कल्पः, 'समितस्रवन्तीति घृतातक्तेन दध्ना मधुमिश्रेण पुरुषशिरः पूरयति' इति। पाठस्तु,—"समित्स्रवन्ति सरितो न धेनाः। अन्तर्हृदा मनसा पूयमानाः। घृतस्य धारा अभि-

चाकशीमि। हिरण्ययो वेतसो मध्य आसाम्[२४]" इति।
'धेनाः' (पानयोग्याः) दधिमध्ववयवाः 'समितस्रवन्ति' (सम्यक् प्रवहन्त्येव)। तत्र दृष्टान्तः,—'सरितो न' (सरित इव), यथा नद्यः प्रवहन्ति, तद्वत्। ते च 'अन्तः' (शरीरस्याभ्यन्तरे) 'हृदा' 'मनसा' (हृदयपुण्डरीकवर्त्तिनाऽन्तःकरणेन) 'पूयमानाः' (शोध्यमानाः) दधिमध्ववयवाः 'घृतस्य धाराः' सम्पद्यन्ते। तास्य 'धाराः' 'अभिचाकशीमि' (अभितः प्रकाशयामि) अनुभवामीत्यर्थः। 'आसां' घृतधाराणां 'मध्ये' 'हिरण्ययः' (सुवर्णमय इव तेजोरूपः) पुरुषस्य मूर्द्धा 'वेतसः' (जलप्रवाहमध्यगतवेतसवृक्ष इव) अवभासते।

एतन्मन्त्रसाध्यं पूरणं विधत्ते,—"दध्ना मधुमिश्रेण पूरयति मधव्योऽसानीति" (५।२।९ अ०) इति। अहं 'मधव्योऽसानि'-(मधुररसभोगयोग्यो भवानि)-इत्यभिप्रायेण तत्पुरुषशिरो मधुसम्पृक्तेन 'दध्ना' पूरयेत्।

तस्य दध्नो गुणविशेषं विधत्ते,—"शृतातङ्क्येन मेध्यत्वाय" (५।२।९ अ०) इति। द्विविधं दधि तत्रैकं रजतप्रक्षेपादिना स्वयमेव घनीभवति, अन्यत्तु पक्वक्षीराद्यातञ्चनेन निष्पद्यते; तत्र पक्वक्षीरातञ्चनाभ्यां निष्पन्नं यागयोग्यं, तस्मात् तादृशेनैव पूरयेत्।

तदिदं दधिमधुद्वयं प्रशंसति,—"ग्राम्यं वा एतदन्नं यत् दधि आरण्यं मधु यद्दध्ना मधुमिश्रेण पुरयत्युभयस्यावरुध्यै" (५।२।९ अ०) इति।

कल्पः, 'तस्मिन् सुपर्णे मधुकृत् कुलायीति पुरुषशिर आदाय'

इति । पाठस्तु,—"तस्मिन्त्सुपर्णो मधुकृत् कुलायी भजन्नास्ते मधु देवताभ्यः । तस्यासते हरयः सप्त तीरे स्वधां दुहाना अमृतस्य धाराम्(१५)" इति । 'तस्मिन्' (चितमध्यस्थानीये) पुरुषशिरसि 'मधुकृत्' कश्चित् (मधुकरः) 'आस्ते'। कीदृशः?—'सुपर्णः' (शोभन-पक्षोपेतः) ; 'कुलायी' (कुलायो मधुकराणां निवासस्थानं, सो-ऽस्यास्तीति कुलायी) । किं कुर्वन्?—'देवताभ्यः' (देवतार्थं) 'मधु' 'भजन्' (सम्पादयन्), 'तस्य' (पुरुषशिरसः) 'तीरे' (समीपे) 'हरयः' (मधुहरणशीलाः) सप्तच्छिद्रवर्त्तित्वेन सप्तसङ्ख्याका मधु-करा 'आसते' । किं कुर्वन्तः ?—'स्वधा' (स्वधाकारोपलक्षित-भोग्यवस्तुरूपम्*) 'अमृतस्य' (मधुनः) 'धारां' 'दुहानाः' (स्राव-यन्तः) ते । पुरुषशिरसि प्राणसमृद्धिसम्पादनाय हिरण्यशकलप्रक्षेपः पूर्वमभिहितः, प्राणेषु समृद्धेषु सत्सु चेतनं जीवात्मानमासाद्य मधुकररूपत्वं सम्पाद्य तेन पुरुषशिरः प्रशस्यते । यथा लोके, मधुकरः कस्मिंश्चिद् वृक्षे स्वनिवासाय कुलायं कृत्वा मधु स-म्पादयति, तत्र मध्वर्थं यदपूर्वं कुलायं कृतं, तस्य छिद्ररूपासु नाड़ीषु क्षुद्रा मधुकराः स्वस्वशक्त्यनुसारेण मधु सम्पादयन्तो वर्त्तन्ते, तद्वत् । तदेतत्सर्वमत्र रूपककल्पनया सम्पादितम्, इत्थं प्रशस्तमिदं पुरुषशिरोऽनेन मन्त्रेण स्वीकुर्यात् । यत् पूर्वं विहितं पुरुषशीर्षमुपदधातीति, तदेतदुपधानं कर्तुमिदं पुरुषशीर्षादानं द्रष्टव्यम् ।

---

* रूपामिति पाठो भवितुं युक्तः ।

अत्र विनियोगसंग्रहः,—

ध्रुवेति स्वयमातृण्णां स्पृशेत्, प्रेति दधाति तां।
काण्डाद्, दूर्व्वेष्टकां, द्वाभ्यामषाढां, मधुमत्त्रिभिः॥
अनक्ति मधुमिश्रेण दध्ना कूर्मं, महीति च।
कूर्मं दधीत, तद्विष्णोर्मुमलं हि, ध्रुवेत्युखाम्॥
यास्ते त्वाममृतं द्वाभ्यां, विराड्, रेतःसिचस्त्रिभिः।
अग्ने-द्वाभ्यामुखाद्धोमो द्रप्सः पुरुषशीर्षके॥
आस्ये स्वर्णं क्षिपेत्तत्र, मन्त्रोऽभूदिति वा भवेत्।
रुचे रुचे द्वयोरक्ष्णोः सुवर्णशकले क्षिपेत्॥
समिद्ध्या च मधुना पूरयेन्नरशीर्षकम्।
तस्मिन्, तच्छिर आदत्ते, पञ्चविंशतिरीरिताः॥

अथ मीमांसा,—तृतीयाध्यायस्याष्टमे पादे द्वितीयाधिकरणे चिन्तितम्,—

"इष्टका वरदानं किं स्वामिनः स्यादुतर्त्विजः।
स्वामिनः पूर्ववन्नैवमध्वर्योर्वचनादिति॥

'य एतामिष्टकामुपदध्यात् स त्रीन् वरान् दद्यात्' इत्याम्नाणादध्वर्योर्गो-त्रयदानं वाचनिकं, न ह्यस्ति वचनस्यातिभारः॥"

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्ण-यजुःसंहिताभाष्ये चतुर्थकाण्डे द्वितीयप्रपाठके नवमोऽनुवाकः॥ ९॥

---

आदित्यं गर्भं पयसा समङ्ग्धि सहस्रस्य प्रतिमां विश्वरूपं। परिवृङ्धि हरसा माभिमृक्षः शतायुषं कृणुहि चीयमानः[१]। इमं मा हिꣳसीर्द्विपादं पशूनाꣳ सहस्राक्ष मेध आचीयमानः। मयुमारण्यमनु ते दिशामि तेन चिन्वानस्तनुवो निषीद[२]। वातस्य ध्राजिं वरुणस्य नाभिमश्वं जज्ञानꣳ सरिरस्य मध्ये। शिशुं नदीनाꣳ हरिमद्रिबुध्नमग्ने मा हिꣳसीः॥ १॥

परमे व्योमन्[३]। इमं मा हिꣳसीरेकशफं पशूनां कनिक्रदं वाजिनं वाजिनेषु। गौरमारण्यमनु ते दिशामि तेन चिन्वानस्तनुवो निषीद[४]। अजस्रमिन्दुमरुषं भुरण्युमग्निमीडे पूर्वचित्तौ नमोभिः। स पर्वभिर्ऋतुशः कल्पमानो गां मा हिꣳसीरदितिं विराजं[५]। इमꣳ समुद्रꣳ शतधारमुत्सं व्यच्यमानं भुवनस्य मध्ये। घृतं दुहानामदितिं जनायाग्ने मा॥ ॥ २॥

हिꣳसीः परमे व्योमन्। गवयमारण्यमनु ते दिशामि तेन चिन्वानस्तनुवो निषीद[६]। वरूत्रिं त्वष्टुर्वरुणस्य नाभिमविं जज्ञानाꣳ रजसः परस्मात्। महीꣳ साहस्रीमसुरस्य मायामग्ने मा हिꣳसीः परमे व्योमन्[७]। इमामूर्णायुं वरुणस्य मायां त्वचं पशूनां

द्विपदां चतुष्पदां। त्वष्टुः प्रजानां प्रथमं जनित्रमग्ने मा हिꣳसीः परमे व्योमन्। उष्ट्रमारण्यमनु ॥ ३ ॥

ते दिशामि तेन चिन्वानस्तनुवो निषीद(८)। यो अग्निरग्नेस्तपसोऽधिजातः शोचात् पृथिव्या उत वा दिवस्परि येन प्रजा विश्वकर्मा व्यानट् तमग्ने हेडः परि ते वृणक्तु(९)। अजा ह्यग्नेरजनिष्ट गर्भात् सा वा अपश्यज्जनितारमग्रे। तया रोहमायन्नुप मेध्यासस्तया देवा देवतामग्र आयन्। शरभ,-मारण्यमनु ते दिशामि तेन चिन्वानस्तनुवो निषीद(१०) ॥ ४ ॥

अग्ने मा हिꣳसीः। अग्ने मा। उष्ट्रमारण्यमनु। शरभं। नव च ॥ १० ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे द्वितीयप्रपाठके दशमोऽनुवाकः ॥ ० ॥

नवमेऽनुवाके स्वयमातृण्णाद्युपधानमुक्तम्। दशमे पशुशीर्षोपधानं वक्तव्यम्। कल्पः, 'आदित्यं गर्भमित्युखायां पुरस्तात्पुरुषशिरः प्राचीनमुत्तानं प्राङ्मुख उपधाय' इति। पुरुषशिर इत्यनुवर्त्तते। पाठस्तु,—"आदित्यं गर्भं पयसा समञ्जन्त्सहस्रस्य प्रतिमां विश्वरूपं। परिवृंधि हरसा माभिमृक्षः शतायुषं कृणुहि चीयमानः(१)" इति। हे अग्ने, त्वं 'चीयमानः' सन् 'आदित्यं'

'गर्भम्' (अदितिदेवतायाः सम्बन्धि तत्कार्यरूपं गर्भसदृशम्) इदं पुरुषशीर्षं 'परिवृंधि' (परितो वर्जितं कुरु)। 'हरसा' (तेजसा) त्वदीयज्वालारूपेण 'माऽभिमृक्षः' (अभिमर्शनं स्पर्शं मा कुरु), ज्वालया सर्वं दहन्नप्येतत्पुरुषशीर्षं मा दहेत्यर्थः। अनेन दाहा-भावेन तं गर्भं यजमानं वा 'शतायुषं' 'कृणुहि' (कुरु)। कीदृशं गर्भं?—'सहस्रस्य' 'प्रतिमां' (पशुसहस्रेण तुल्यं, सदृशम्); अत एव ब्राह्मणेऽभिहितम्, 'सहस्रं वै प्रतिपुरुषः पशूनां यच्छति सहस्रमन्ये पशवो मध्ये पुरुषशीर्षमुपदधाति सवीर्यत्वाय' इति।

कल्पः, 'पशुशीर्षाण्युपदधाति यं कामयेतापशुः स्यादिति विषूचीनानि तस्येत्युक्तं, वातस्य ध्राजिमिति पुरस्तात् प्रतीचीनम् अश्वस्य, अजस्रमिन्दुमिति पश्चात् प्राचीनमृषभस्य, वरुत्रिं त्वष्टुरिति दक्षिणत उदीचीनं वृष्णेः, यो अग्निरग्नेरित्युत्तरतो दक्षिणं बस्तस्य तान्यव्यवायेनोत्सर्गैरुपतिष्ठते इमं मा हिꣳसीर्द्विपादमिति पुरुषस्य इमं मा हिꣳसीरेकशफमित्यश्वस्य, इमꣳ समुद्रमित्यृषभस्य, इमामूर्णायुमिति वृष्णेः, अजा ह्यग्न इति बस्तस्य' इति। तत्तच्छीर्षोपधान-मन्त्रेभ्योऽनन्तरमेवाम्नातास्तदुपस्थानमन्त्राः, 'अनु ते दिशामि' इत्युत्सर्गलिङ्गत्वादुत्सर्गा इत्युच्यन्ते। तैस्तैर्मन्त्रैस्तत्तच्छिरस उप-स्थानं कुर्यात्।

तत्र पुरुषशीर्षस्योपस्थानमन्त्रमाह,—"इमं मा हिꣳसीर्द्विपादं पशुꣳ सहस्राक्ष मेध आचीयमानः। मयुमारण्यमनु ते दिशामि तेन चिन्वानस्तनुवा निषीद(१)" इति। हे 'सहस्राक्ष' (सहस्र-सङ्ख्याकज्वालारूपचक्षुर्युक्त); हे 'मेध' (यज्ञनिष्पादक), 'आ-

चीयमानः' (सर्व्वतः पशुमूर्द्धाभिरुपचयं प्राप्नुवानः), 'पशूनां' (ग्राम्याणामारण्यानाञ्च) मध्ये 'इमं' (पुरुषशीर्ष-मूर्द्धरूपं) 'द्विपादं' (ग्राम्यपशुं) 'मा हिंसीः' (दाहरूपां हिंसां मा कार्षीः)। यदि तव भक्ष्यापेक्षा, तर्हि 'ते' (तव) भक्षणाय 'इमं' 'आरण्यं' 'मयुं' (कृष्णमृगं) 'अनु'-'दिशामि' (पुरुषशीर्षमनु लक्ष्यत्वेनानुसृजामि)। 'तेन' (मयुभक्षणेन) ज्वालारूपाः 'तनुवः' (त्वदीयतनूः) 'चिन्वानः' (पोषयन्) 'निषीद'।

अथाश्वशिरस उपधानमन्त्रमाह,—"वातस्य ध्राजिं वरुणस्य नाभिमश्वं जज्ञानꣳ सरिरस्य मध्ये। शिशुं नदीनाꣳ हरिमद्रिबुद्धमग्ने मा हिꣳसीः परमे व्योमन्(१)" इति। हे 'अग्ने', 'अश्वं' 'मा हिंसीः' (ज्वालया मा दह), (विविधरोगरक्षणमदाहः), सहस्रमश्वस्य रोगाः सन्ति, तेभ्यः सर्वेभ्यः पालनमित्यर्थः। तच्च परमम् (उत्कृष्टं), रक्षितस्याश्वस्य पुनरुपद्रवकदा* यथा न जायते तथा रक्षणं, रक्षणस्य परमत्वं; तादृशस्यां† परमे व्योमन्' एनम् अश्वं स्थापयेति शेषः। कीदृशमश्वं ?—'वातस्य' 'ध्राजिं' (वायोर्गतिस्वरूपं) वायुवच्छीघ्रगतिमित्यर्थः। तथा 'वरुणस्य' 'नाभिं' (अपामधिपतेर्वरुणस्य नाभिस्थानीयं), यथा स्वोदरमध्यवर्त्तिनी नाभिर्वस्त्रप्रावरणादिना पाल्यते, तद्वदत्यन्तप्रियत्वाद् वरुणेन पालनीयमित्यर्थः। अत एव प्रियत्वमभिप्रेत्य, 'प्रजापतिर्वरुणायाश्वमनयत्' इत्याम्नायते। अश्वमेधकाण्डेऽपि, 'वारुणो वा अश्वः'

---

* पुनरुपद्रवः कदापि इति पाठो भवितुं युक्तः।
† तादृशे इति पाठो भवितुं युक्तः।

इत्युत्पन्नम्। 'सरिरस्य' 'मध्ये' 'जज्ञानं' (समुद्रजलस्य मध्ये वड़वारूपेणोत्पन्नम्), अत एव 'अप्सुयोनिर्वा अश्वः' इत्यन्यत्र श्रुतं। 'नदीनां' 'शिशुं' (यथा नदीनां पतिः समुद्रः पूर्वोक्तन्यायेन पिता, तथा नदीनां मातृत्वादयं तच्छिशुः); 'हरिं' (उपर्य्यारूढस्य पुरुषस्य हर्त्तारं नेतारम्); 'अद्रिबुध्नं' (मार्गमध्ये खुरैस्सूर्णीकृता ये अद्रयः क्षुद्रपाषाणाः, तैर्बुद्धं तादृशान् पाषाणान् दृष्ट्वा मार्गेऽस्मिन् अश्वो गत इति बोद्धुं शक्यते)।

अथाश्वशिरस उपस्थानमन्त्रमाह,—"इमं मा हिꣳसीरेकशफं पशूनां कनिक्रदं वाजिनं वाजिनेषु। गौरमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद(४)" इति। 'पशूनां' (चतुष्पदां) मध्ये 'एकशफं' 'इमम्' अश्वं 'मा हिंसीः'। कीदृशमश्वं?—'कनिक्रदं' (हेषारवरूपेणात्यन्तक्रन्दनेनोपेतं)। 'वाजिनेषु' 'वाजिनं' (शीघ्र-गतियुक्तेषु प्राणिषु अत्यन्तशीघ्रगतियुक्तं)। 'गौरः' सिंहः। शेषं पूर्ववत्।

अथ ऋषभशिरस उपधानमन्त्रमाह,—"अजस्रमिन्दुमरुषं भुरण्युमग्निमीड़े पूर्वचित्तौ नमोभिः। स पर्वभिर्ऋतुशः कल्पमानो गां मा हिꣳसीरदितिं विराजम्(५)" इति। पूर्वेषां महर्षीणां चितिर्बुद्धिः, 'पूर्वचितिः'; पूज्यमानमिति शेषः; तैर्ध्येयम् एतम् 'अग्निं' 'नमोभिः' (नमस्कारैः) युक्तः अहं 'ईड़े' (स्तौमि)। कीदृशमग्निं?—'अजस्रमिन्दुं' (निरन्तरं परमैश्वर्य्योपेतम्)। 'अरुः'-शब्दो मर्मवाची, मर्मसङ्घातं* 'भुरण्युं' (भुरन्तं पोषयन्तं),—

* मर्मसंधातमिति J. पु॰ पाठः।

यथा यजमानस्य मर्माणि वैरिणो नोद्घाटयन्ति तथा कुर्वन्त-मित्यर्थः। 'सः' (अग्निः) आदित्यरूपेण स्थित्वा 'पर्वभिः' (अमावास्यादिभिस्तिथिभिः) 'ऋतुशः' (तस्मिन् तस्मिन् ऋतौ) 'कल्पमानः' (कर्माणि सम्पादयन् वर्त्तते); तादृश हे अग्ने, 'गां' (ऋषभ-मूर्द्धानम्) एतं 'मा हिंसीः'। कीदृशमग्निं?—'अदितिं' (अखण्ड-नीयं) 'विराजं' (विशेषेण राजमानम्)।

अथ ऋषभशिरस उपस्थानमन्त्रमाह,—"इमꣳ समुद्रꣳ शतधारमुत्सं व्यच्यमानं भुवनस्य मध्ये। घृतं दुहानामदितिं जनायाग्ने मा हिꣳसीः परमे व्योमन्। गवयमारण्यमनु ते दिशामि तेन चिन्वानस्तनुवो निषीद(१)" इति। 'जनाय' (यजमानार्थम्) 'इमं' (गाम् ऋषभमूर्द्धानं) 'मा हिंसीः', किन्तु 'परमे व्योमन्' (उत्तमे विविधरक्षणे) स्थितं कुरु। कीदृशं?—'इमं' 'समुद्रं' (सम्यगुन्नतं) 'शतधारं' च (स्वजातीयधेनुद्वारा शतसङ्ख्याकक्षीरधारोपेतं); अत एव 'उत्सं' (जलप्रवाहसदृशं)। 'भुवनस्य मध्ये' 'व्यच्यमानं' (विद्यमानं*, सेव्यमानं वा); 'घृतं दुहानां' (स्वजातीयधेनुक्षीरादिद्वारा घृतदोहनयुक्तां), 'अदितिं' (अखण्डनीयां?)। 'गवयो' गोसदृश आरण्यमृगविशेषः। शेषं पूर्ववत्।

अथ उष्ट्रशिरस उपधानमन्त्रमाह,—"वरुत्रिं त्वष्टुर्वरुणस्य नाभिमविं जज्ञानाꣳ रजसः परस्मात्। महीꣳ साहस्रीमसुरस्य मायामग्ने मा हिꣳसीः परमे व्योमन्(२)" इति। हे 'अग्ने', 'अविं'

* वाच्यमानं इति J. पु० पाठः।

(वृष्णिशिरः) 'मा हिंसीः'। कीदृशीमवि?—'त्वष्टुः' 'वरुचिं' (रूपाणां निर्माता यस्त्वष्टा, तस्यानुग्रहाद्गरणीयरूपयुक्तां)।'वरुणस्य नाभिं' (अनिष्टनिवारकस्याग्नेर्नाभिस्थानीयां), 'परस्मात्' 'रजसः' 'जन्मानां' (उत्कृष्टाज्जगद्रूपनात् प्रजापत्युरसः 'जन्मानाम्' उत्पन्नां)। सप्तमकाण्ड, 'उरसो बाहुभ्याम्' इत्यादिवाक्ये 'अविः पशूनाम्' इति श्रुतं। 'महीं' (महतीं) सहस्रमूल्यां 'असुरस्य मायां' (सुवर्भानोरसुरस्य सम्बन्धित्वेन निर्मितां)। अत एव द्वितीयकाण्डे 'सुवर्भानुः' इत्यादिवाक्येनाभिहिता।

वृष्णिशिरस उपस्थानमन्त्रमाह,—"इमामूर्णायुं वरुणस्य मायां त्वचं पशूनां द्विपदां चतुष्पदां। त्वष्टुः प्रजानां प्रथमं जनित्र-मग्ने मा हिंसीः परमे व्योमन्। उष्ट्रमारण्यमनु ते दिशामि तेन चिन्वानस्तनुवो निषीद(५)" इति। हे 'अग्ने', 'इमामूर्णायुम्', (अविं) वृष्णिशिरोरूपाम् 'मा हिंसीः'। कीदृशीं?—'वरुणस्य' 'मायां' (अनिष्टनिवारकस्याग्नेः सम्बन्धित्वेन निर्मितां); 'द्विपदां' (मनुष्याणां) 'चतुष्पदां' (गवादीनां) च 'त्वचं' (त्वक्सदृशीं), यथा त्वचा शरीरमावृतं, तथा द्विपादो मनुष्याः शीतनिवारणार्थं आविजन्येन कम्बलेनाच्छादिता भवन्ति; चतुष्पादोऽप्यश्वा बलीवर्दाश्च भारवाहने मार्दवाय पृष्ठे कम्बलेनाच्छादिता भवन्ति। तथा 'त्वष्टुः' (प्रजापतेः) सकाशादुत्पद्यमानानां 'प्रजानां' मध्ये 'प्रथमं' 'जनित्रं' (प्रधानत्वेनोत्पन्नं), प्राधान्यञ्च वीर्यवत्त्वात्; वीर्यवत्त्वञ्च बाहुजन्यानां सर्वेषामाम्नातं, 'तस्मात् ते वीर्यावन्तो वीर्याध्यसृज्यन्त' इति। 'उष्ट्रः' प्रसिद्धः।

अथ बस्तशिरस उपधानमन्त्रमाह,—"यो अग्निरग्नेस्तपसोऽधिजातः शोचात् पृथिव्या उत वा दिवस्परि। येन प्रजा विश्वकर्मा व्यानट् तमग्ने हेड़ः परि ते वृणक्तु(९)" इति। अत्र पञ्चम्यन्तोऽग्निशब्दोऽयणीत्वयोगेन प्रजापतिवाची। तस्य च सृष्टिसङ्कल्परूपं यत् तपः, तस्मात् 'तपसः' 'यः' अयम् 'अग्निः' व्यवहारहेतुर्जातः, तपोयुक्तादग्निर्जातः—इत्येतद्वोहत्राह्मणे समाम्नातं,—'तद्भूयोऽतप्यत, तस्मात् तेऽपानादग्निरजायत' इति। प्रजापतेः 'तपसः' 'अधिजातः' 'यः' 'अग्निः' 'पृथिव्याः' 'परि' (भूमेरुपरि) 'शोचात्' (शोचति, तपतीत्यर्थः)। 'उत वा दिवस्परि' (अपि च स्वर्गस्योपरि) शोचति। किञ्च 'येन' (बस्तरूपेण) 'विश्वकर्मा' (जगत्स्रष्टा प्रजापतिः) 'व्यानट्' (विविधाः प्रजाः, पशून् व्याप्तवान्)। बस्तस्य प्रजापशुसृष्टिसाधनत्वं काम्यपशुकाण्डे समाम्नातं,—'ततोऽजस्तूपरः समभवत्ँ* स्वायै देवतायै आलभत ततो वै स प्रजाः पशूनसृजत' इति। हे 'अग्ने', तपसा यः अधिजातः तथाविधे,† 'हेड़ः' (कोपः), 'येन' (बस्तेन) 'विश्वकर्मा' ससर्ज, 'तं' बस्तं 'परि'-'वृणक्तु' (परिवर्जितं करोतु), मा विनाशयत्वित्यर्थः।

तस्यैव बस्तशिरस उपस्थानमन्त्रमाह,—"अजा ह्यग्नेरजनिष्ट गर्भात् सा वा अपश्यज्जनितारमग्रे। तया रोहमायन्नुप मेध्यासस्तया देवा देवतामग्र आयन्। शरभमारण्यमनु ते दिशामि

---

* समभवत्तुः J. पु॰ पाठः।

† तथाविध, इति पाठो भवितुं युक्तः।

तेन चिन्वानस्तनुवो निषीद(१०)" इति । 'हि' (यस्मात्) इयम् 'अजा' 'अग्नेः' 'गर्भात्' (उदरात्) 'अजनिष्ट' । अत एव आम्नातं, 'स आत्मनो वपामुदक्खिदत् तामग्नौ प्रागृह्णात् ततोऽजस्तूपरः समभवत्' इति । 'सा' एव अग्नेः प्रजापतेश्चोत्पन्न (?)—'जनितारं' (स्वोत्पादकं) प्रजापतिम् 'अपश्यत्' (उत्पत्त्यनन्तरमेव दृष्टवती); यस्मादेवम् अजा प्रशस्ता, तस्मात् 'तया' (अजया) 'मेध्यासः' (यागयोग्याः) यजमाना 'रोहं' (स्वर्गम्) 'उपायन्' (सामीप्येनैव प्राप्ताः) विलम्बमन्तरेण प्राप्ता इत्यर्थः । किञ्च इदानीं वर्त्तमाना 'देवाः' अग्नेः पूर्व्वस्मिन् जन्मनि 'तया' एव (अजया( कर्माण्यनुष्ठाय 'देवताम' 'आयन्' (देवत्वं प्राप्ताः) । ईदृशस्य वस्तशिरसो महिमेति तात्पर्यार्थः । 'शरभः' सिंहघाती क्रूरमृगः ।

उक्तैर्मन्त्रैः साध्यं शीर्षोपधानं विधत्ते,—"पशुशीर्षाणामुपदधाति पशवो वै पशुशीर्षाणि पशूनेवावरुन्धे" (४।२।८अ०) इति ।

अन्वयव्यतिरेकाभ्यां पशुशीर्षाणां पुरुषशीर्षाभिमुख्यं विधत्ते,—"यं कामयेतापशुः स्यादिति विषूचीनानि तस्योपदध्याद्विषूची एवास्मात् पशून् दधात्यपशुरेव भवति यं कामयेत पशुमान्स्यादिति समीचीनानि तस्योपदध्यात् समीच एवास्मै पशून् दधाति पशुमानेव भवति" (५।२।८अ०) इत । 'विषूचीनानि' (बहुमुखानि, पुरुषशिरः प्रति विमुखानीत्यर्थः), सोऽयं व्यतिरेकः । 'समीचीनानि' (पुरुषशिरः प्रत्यभिमुखानीत्यर्थः), सोऽयमन्वयः।

सामान्येन विहितं पुनर्विशेषाकारेण विधत्ते,—पुरस्तात्

प्रतीचीनमृषभस्योपदधाति पश्चात् प्राचीनमृषभस्यापशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वानेवास्मै समीचो दधाति" (५।२।९अ०) इति। अश्वशिरः पूर्वस्यां दिशि प्रत्यङ्मुख उपदध्यात्, ऋषभशिरः प्रतीच्यां दिशि प्राङ्मुख उपदध्यात्। 'गोअश्वेभ्यः' च ये 'पशवः', ते जातितः पशुत्वे तु अप्रशस्तत्वात् 'अपशवः' एव; तस्मात् प्रशस्तयोर्गवाश्वशिरसोराभिमुख्योपधानेन यजमानार्थं सर्वान् 'पशून्' अभिमुखान् 'एव' करोति।

अथोपस्थानमन्त्रेष्वारण्यानामनुदेशनस्य तात्पर्यं दर्शयति,—"एतावन्तो वै पशवो द्विपादश्चतुष्पादश्च तान् वा एतदग्नौ प्रदधाति यत् पशुशीर्षाण्युपदधात्यमुमारण्यमनु ते दिशामीत्याह ग्राम्येभ्य एव पशुभ्य आरण्यान् पशूञ्छुचमनूत्सृजति तस्मात् समावत् पशूनां प्रजायमानानामारण्याः पशवः कनीयाꣳसः शुचा ह्यृताः" (५।२।८अ०) इति। ये 'द्विपादः' (मनुष्यादयः), येऽपि 'चतुष्पादः' (गवादयः), 'एतावन्तः' एव लोके विद्यमानाः 'पशवः', एवं सति पुरुषशीर्षस्य पशुशीर्षाणाञ्चोपधानेन 'तान्' सर्वान् 'अग्नौ' प्रक्षिपति। अतस्तत्परिहारायारण्यपशूनामनुदेशनं। तेन चानुदेशनेन 'ग्राम्येभ्यः' 'पशुभ्यः' अपकृष्य 'आरण्यान्' 'पशून्' प्रति 'शुचं' (वह्नितापं) प्रेरयति। 'हि' (यस्मात्) 'आरण्याः' 'शुचा' (वह्नितापेन) 'ऋताः' (प्राप्ताः), 'तस्मात् ग्राम्यैः पशुभिस्तुल्यत्वेऽपि ते 'कनीयांसः' (मूल्यान्यूनाः)। यदुक्तं सूत्रकारेण, 'नमो अस्तु सर्पेभ्य इति दक्षिणेऽꣳसे सर्पशिर उपदध्याद्विषूचीनं पशुशीर्षैरपि वा यजुरेव वदेनोपदध्यात्' इति।

तत्रोपधानं विधत्ते,—"सर्पशीर्षमुपदधाति येव सर्पे त्विषि-स्तामेवावरुन्धे" (५।२।९ अ०) इति। त्विषिर्दीप्तिः।

मन्त्रपाठमात्रं विधत्ते,—"यत् समीचीनं पशुशीर्षैरुपदध्याद् ग्राम्यान् पशून् दंष्ट्रुकाः स्युर्यद्विषूचीनमारण्यान् यजुरेव वदेदवतां त्विषिꣳ रुन्धे या सर्पेन ग्राम्यान् पशून् हिनस्ति नारण्यान्" (५।२।९ अ०) इति। सर्पशीर्षस्य सम्मुखविमुखत्वे च बाधकसद्भावात् प्रकारान्तरसम्भवाच्च तदुपधानं परित्यज्य मन्त्रमेव पठेत्, तदा मन्त्रपाठेन सर्पत्विषिरपि प्राप्यते; सम्मुखविमुखत्वयो-रभावात् दोषद्वयमपि नास्ति।

तमिमं केवलमन्त्रपक्षमुपेक्ष्य उपधानपक्षस्यैव प्राप्तिप्रतिप्रसवं विधत्ते,—"अथो खल्पूधेयमेव यदुपदधाति तेन तां त्विषि-मवरुन्धे या सर्पे यद्यजुर्वदति तेन शान्तम्" (५।२।९ अ०) इति। 'सर्पे' 'या' 'त्विषिः' 'ताम्' उपधानेन लभते; मन्त्रपाठेन सर्पशिरसः शान्तत्वात् दंशनमपि न भवति।

अत्र विनियोगसंग्रहः,—

आयुषायां शिरो धत्ते, इममित्युपतिष्ठते।
वाताश्वस्य शिरः प्राच्यां दध्यादिमं, जपेत्तथा॥
अज,-र्षभशिरः पश्चादिममित्यभिमन्त्रणम्।
वरु, दक्षिणतो वृष्णिशिरस्तन्मन्त्रणं त्विमां॥
यो, उदीच्यां बस्तशिरस्तन्मन्त्रणमजेत्यतः।
दशमे त्वनुवाकेऽस्मिन् दश मन्त्रा उदीरिताः॥

अथ मीमांसा,—प्रथमाध्यायस्य चतुर्थपादे षोड़शाधिकरणे चिन्तितम्।

"पशवोऽन्ये गवाश्वेभ्योऽपशवो वा इति श्रुतम्।
अजादिष्वपशुत्वं हि गुणवादोऽथ वा श्रुतिः?॥
स्तुत्यभावाद्गुणस्तेषु पशुकार्यनिषेधनम्।
अशक्यत्वान्निषेधस्य घटाद्यर्थाभिधायिना॥
पशवोऽपशुशब्देन प्राशस्त्याभावसाम्यतः।
लक्ष्यास्तत्र निमित्तन्तु प्रशंसैव गवाश्वयोः॥

इदमाम्नायते, 'अपशवो वा अन्ये गोअश्वेभ्यः पशवः' इति। तत्राजादिषु श्रूयमाणं यदपशुत्वं, तस्यार्थवादत्वं न सम्भवति; पशुत्वमात्रनिषधेन स्तुतेरप्रतिभानात्; ततः पशुकार्यनिषेधरूपो गुणोऽभिधीयते इति चेत्। मैवं; अजादिपशुविधिवैयर्थ्यप्रसङ्गेन निषेद्धुमशक्यत्वात्। अपशुशब्दः पशुव्यतिरिक्तं घटादिपदार्थम् अभिदधाति, तस्मिन् घटादौ गवाश्ववत् प्राशस्त्यं नास्ति, सोऽयं प्राशस्त्याभावोऽजादिषु पशुष्वस्तीति,-अनेनाभिप्रायेण पशव एव सन्तोऽप्यजादयो घटादिसाम्यादपशुशब्देन लक्ष्यन्ते। पूर्वत्र यजमानकार्यसिद्धिराग्नेये मुखजत्वमादित्यतेजस्त्वञ्च यजमानादिशब्दानां प्रस्तराद्यर्थेषु प्रवृत्तिनिमित्तं, तत्प्रवृत्तिफलं प्रस्तरादिप्रशंसा; इह तु अपशुशब्दस्याजादिषु प्रवृत्तौ गवाश्वयोः प्रशंसैव निमित्तं फलञ्च। द्विप्रकारा हि प्रशंसा,-वस्तुनि विद्यमानगुणोत्कर्ष एकः प्रकारः, स्तावकेन शब्देन सम्पादितो गुणोत्कर्षोऽपरः प्रकारः। गवाश्वयोरजादिभ्यः उत्कर्षो लोकसिद्धो यः

मोऽत्र निमित्तं। अजादयः पशवोऽपि सन्तो गवाश्वेभ्यः पशवः* सम्पन्नाः, ईदृशो गवाश्वयोर्महिमेति स्तुतिः फलं। तस्मात् 'अ-पशवो वा अन्ये' इत्ययमर्थवादः। अयमेव न्याय उदाहरणान्तरे योजनीयः;—'अयज्ञो वा एष योऽसामा' इत्येकमुदाहरणम् 'असत्रं वा एतद्यदच्छन्दोमम्' इत्यपरमुदाहरणम्। अग्निहोत्रदर्शपूर्णमासादिर्यज्ञोऽपि सामहीनत्वादयज्ञो भवति, ईदृशः साम्नो महिमा। छन्दोमशब्देन चतुर्विंशश्चतुश्चत्वारिंशोऽष्टाचत्वारिंश इत्येते त्रयस्तोमा उच्यन्ते, अक्षरसङ्ख्यासाम्येन गायत्री-त्रिष्टुप्-जगतीच्छन्दोभिर्मीयमानत्वात्। तेषाञ्च विवृतिः सामब्राह्मणे द्रष्टव्या। स्वतःसत्रमपि चतुर्दशरात्रादिकं छन्दोमरहितत्वादसत्रं भवतीत्येवं स्तावकत्वादर्थवादत्वम्॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे द्वितीयप्रपाठके दशमोऽनुवाकः॥ १०॥

---

इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः। तद्वां चेति प्र वीर्यं[१]। श्नथद्वृत्रमुत सनोति वाजमिन्द्रा यो अग्नी सहुरी सपर्यात्। इरज्यन्ता वसव्यस्य भूरेः

---

* अपशवः इति पाठो भवितुं युक्तः।

सहस्तमा सहसा वाजयन्ता[२]। प्र चर्षणिभ्यः पृतना-हवेषु प्र पृथिव्या रिरिचाथे दिवश्च। प्र सिन्धुभ्यः प्र गिरिभ्यो महित्वा प्रेन्द्राग्नी विश्वा भुवनात्यन्या[३]। मरुतो यस्य हि ॥ १ ॥

क्षये पाथा दिवो विमहसः। स सुगोपातमो जनः[४]। यज्ञैर्वा यज्ञवाहसो विप्रस्य वा मतीनां। मरुतः शृणुता हवं[५]। श्रियसे कं भानुभिः संमिमिक्षिरे ते रश्मिभिस्त ऋक्वभिः सुखादयः। ते वाशीमन्त इष्मिणो अभीरवो विद्रे प्रियस्य मारुतस्य धाम्नः[६]। अव ते हेड उदुत्तमं[७,८] कया नश्चित्र आभुवदूती सदा वृधः सखा। कया शचिष्ठया वृता[९] ॥ २ ॥

को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून् आसन्निषून् हृत्स्वसो मयोभून्य एषां भृत्यामृणधत्स जीवात्[१०]। अग्ने नयाऽऽ देवानाꣳ[११,१२]शन्नो भवन्तु वाजे वाजे[१३,१४]। अप्स्वग्ने सधिष्टव सौषधीरनुरुध्यसे। गर्भे सञ्जायसे पुनः[१५]। वृषा सोम द्युमाꣳ असि वृषा देव वृषव्रतः। वृषा धर्माणि दधिषे[१६]। इमं मे, वरुण तत्त्वा यामि[१७,१८] त्वन्नो अग्ने स त्वन्नो अग्ने[१९,२०] ॥ ३ ॥

हि। वृता। मे। एकादश च ॥ ११ ॥

विष्णोः क्रमोऽसि। दिवस्परि। अन्नपते। अपेत। समितं। या जाता। मा नो हिꣳसीत्। अभ्यस्थात्। ध्रुवासि धरुणा। आदित्यं गर्भम्। इन्द्राग्नी रोचना। एकादश॥ ११॥

विष्णोः (१अ०)। अस्मिन् हव्या ३अ०)। इति त्वाहं (५अ०)। धीतिभिः (७)। होता (९अ०)। अष्टाचत्वारिꣳशत्॥ ४८॥

॥ * ॥ हरिः ओम्॥ * ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे द्वितीयप्रपाठके एकादशोऽनुवाकः॥ ०॥

॥ ०॥ समाप्तश्च द्वितीयः प्रपाठकः॥ ०॥

दशमेऽनुवाके पशुशिरसामुपधानमुक्तम्। अथैकादशे याज्यानुवाक्या उच्यन्ते। चातुर्मास्येषु वरुणप्रघासाख्यं यद्द्वितीयं पर्व, तस्मिन् हवींषि चत्वार्याम्नातानि। 'ऐन्द्राग्नमेकादशकपालं, मारुतीमामिक्षां, वारुणीमामिक्षां कायमेककपालम्' इति। तत्रैन्द्राग्नस्य पुरोऽनुवाक्यामाह,—"इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः। तद्वां चेति प्र वीर्यम्[1]" इति। 'दिवः' (द्युलोकस्य) 'रोचना' (भासकौ) हे 'इन्द्राग्नी', 'वाजेषु' (हविर्लक्षणेष्वन्नेषु)

'परि'-'भूषथः' (परितः प्राप्नुतः) भागमिति शेषः। 'तत्' (तस्मात् कारणात्) 'वां' (युवयोः) 'वीर्यं' (सामर्थ्यं, 'प्र'-'चेति' (प्रकर्षेण ज्ञायि) लोके सर्वैर्ज्ञातमित्यर्थः।

तत्रैव याज्यामाह,—"अयद्वृत्रमुत सनोति वाजमिन्द्रा यो अग्नी सहुरी सपर्यात्। इरज्यन्ता वसव्यस्य भूरेः सहस्तमा सहसा वाजयन्ता(१)" इति। 'यः' (यजमानः) 'इन्द्रा'-'अग्नी' 'सपर्यात्' (परिचरति)। कीदृशाविन्द्राग्नी?—'सहुरी' (समानाक्रान्तौ)। स यजमानः 'वृत्रं' (वैरिणं) 'अयत्' (विनाशयति)। 'उत' (अपि च) 'वाजम्' (अन्नं) 'सनोति' (सर्वेभ्यः प्रयच्छति)। पुनरपि 'भूरेः' (बहुलस्य) 'वसव्यस्य' 'इरज्यन्ता' (ईश्वरत्वं प्राप्नुवन्तौ)। 'सहसा' (स्वकीयेन बलेन) 'सहस्तमा' (अतिशयेन सोढारौ) परबलस्य अभिभवितारावित्यर्थः। 'वाजयन्ता' (वाजमन्नमात्मन इच्छन्तौ)।

तत्रैव विकल्पितां याज्यामाह,—"प्र चर्षणिभ्यः पृतनाहवेषु प्र पृथिव्या रिरिचाथे दिवश्च। प्र सिन्धुभ्यः प्र गिरिभ्यो महित्वा प्रेन्द्राग्नी विश्वा भुवनात्यन्या(२)" इति। हे 'इन्द्राग्नी', 'पृतना' (सङ्ग्रामेषु) 'आहवेषु' (हविःस्वीकारार्थेषु आह्वानेषु) च 'चर्षणिभ्यः' (मनुष्येभ्यः) 'प्र'-'रिरिचाथे' (प्ररिक्तौ अतिरिक्तौ भवथः) सर्वानपि मनुष्यानतिरिच्य वर्त्तेथे इत्यर्थः। तथा 'पृथिव्या' 'दिवश्च' 'प्र'-'रिरिचाथे' (तदुभयमतिरिच्य वर्त्तेथे)। तथा 'सिन्धुभ्यः' 'प्र'-'रिरिचाथे'। तथा 'गिरिभ्यः' (पर्वतेभ्यः) 'प्र'-'रिरिचाथे'। किमनुना?—'अत्यन्या' (अत्यन्तमितराणि) 'विश्वा' 'भुवना'

(सर्वाणि भुवनानि) 'महित्वा' (स्वकीयेन महिम्ना) युवां अति*-'प्र''रिरिचाथे' (अतिरिच्य वर्त्तेथे)।

अथ मारुत्या आमिक्षायाः पुरोऽनुवाक्यामाह,—"मरुतो यस्य हि क्षये पाथा दिवो विमहसः। स सुगोपातमो जनः(४)" इति। हे 'मरुतः', 'दिवः' (द्युलोकात्) आगता यूयं 'यस्य' (यजमानस्य) 'क्षये' (गृहे) 'पाथ' (रक्षां कुरुथ)। कीदृशा मरुतः?—'विमहसः' (विशिष्टं महस्तेजो येषां ते) 'विमहसः'। 'स' 'जनः' (तादृशो यजमानः) 'सुगोपातमः' (अतिशयेन रक्षको भवति।

तत्रैव विकल्पितामनुवाक्यामाह,—"यज्ञैर्वा यज्ञवाहसो विप्रस्य वा मतीनां। मरुतः शृणुता हवम्(५)" इति। 'यज्ञ-वाहसः' (यज्ञस्य वोढारः) हे 'मरुतः', 'यज्ञैर्वा' निमित्तभूतैः 'हवं' (मदीयाह्वानं) 'शृणुत'। अथ वा 'विप्रस्य' (यजमानस्य) 'मतीनां' (चित्तवृत्तीनां) अनुग्रहाय 'हवं' (मदीयाह्वानं) 'शृणुत'।

तत्रैव याज्यामाह,—"श्रियसे कं भानुभिः सम्मिमिक्षिरे ते रश्मिभिस्त ऋक्वभिः सुखादयः। ते वाशीमन्त इष्मिणो अभी-रवो विद्रे प्रियस्य मारुतस्य धाम्नः(६)" इति। हे मरुतः,† पुरोवातस्वरूपाः मन्तः 'कं' 'श्रियसे' (प्राणिभिराश्रयितुं) 'भानुभिः'. (भासुरैः) 'रश्मिभिः' (सूर्यरश्मिभिः) सहिताः

---

* अयम् 'अति'शब्दोऽधिक इव प्रतिभाति।

† अत्र 'त' (मरुतः) इति पाठो भवितुं युक्तः।

'मधिमिच्चिरे' (मेघवृष्ट्या भूमिं सम्यक् सेक्तुमिच्छन्ति)। 'ते' (मरुतः) 'ऋक्वभिः' (याज्यापुरोऽनुवाक्यारूपाभिः ऋग्भिः) स्तुताः सन्तः 'सुखादयः' (शोभनं हविः खादितवन्तः)। ततः 'ते' मरुतः, 'वाशीमन्तः' (उत्साहप्रयुक्तघोषरूपवक्तृविधशब्दवन्तः), 'इष्मिणः' (स्वगन्तव्यस्थानान्प्रति गमितवन्तः), 'अभीरवः' (स्वकार्यस्य निष्पन्नत्वेन विघ्नकारिभ्यः असुरेभ्यो भयरहिताः), 'प्रियस्य' 'मारुतस्य' 'धाम्नः' (मरुतां सम्बन्धि यत् प्रियं स्थानं तत्) 'विद्रे' (लब्धवन्तः)।

अथ वारुणीमाभिचामित्यस्य याज्यानुवाक्ययोः प्रतीके दर्शयति,—"अवते हेडो, उदुत्तमम्(७-८)" इति। 'अवते हेडः' इति पुरोऽनुवाक्या; 'उदुत्तमम्' इति याज्या। एतच्चोभयं "वैश्वानरो न ऊत्या" इत्यस्मिन्ननुवाके (१।५।११ अ०) व्याख्यातम्।

अथ कायमेककपालमित्यस्य पुरोऽनुवाक्यामाह,—"कया नश्चित्र आभुवदूती सदा वृधः सखा। कया शचिष्ठया वृता(९)" इति। कस्य (प्रजापतेः) सम्बन्धिनीत्यस्मिन्नर्थे स्त्रीलिङ्गः केतिशब्दो वर्त्तते। 'ऊति'-शब्दो रक्षणवाची। 'कया' ऊत्या (प्रजापति-सम्बन्धिना रक्षणेन) 'चित्र' 'आभुवत्' (विचित्रोऽयं यज्ञः) 'नः' (अस्मान् प्रति) आगतः। कीदृशो यज्ञः?—'सदा वृधः' (सदा वर्द्धमानः); 'सखा' (सखिवत् प्रियतमः)। स च यज्ञः 'कया' (प्रजापतिसम्बन्धिन्या) 'शचिष्ठया' (अतिशयितया प्रज्ञया) 'वृता' (युक्त इत्यर्थः)।

अत्रैव याज्यामाह,—"को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून्। आसन्निषून् हृत्स्वसो मयोभून् य एषां भृत्यामृणधत् स जीवात्(१०)" इति। 'कः' (प्रजापतिः) 'अद्य' (अस्मिन् दिने) 'ऋतस्य' 'धुरि' (यज्ञस्य भारे) यज्ञप्रवृत्तिवेलायामित्यर्थः। 'गाः' (वाग्विशेषान् अस्मदीयस्तुतिरूपान्) 'युङ्क्ते' (स्वचित्ते योजयति)। कीदृशान् वाग्विशेषान्?— 'शिमीवतः' (शर्मयुक्तान्) एतत्कर्मयोग्यानित्यर्थः। 'भामिनः' (स्वार्थावभासकान्) 'दुर्हृणायून्' (दुःखहरणशीलान्) 'आसन्निषून्' (अस्मदीयमास्यं मुखम् इष्यन्ति गच्छन्तीत्यासन्निषवः तान्); 'हृत्स्वसः' (हृत्सु स्तुत्यानां हृदयेषु तिष्ठन्तीति हृत्स्वसः तान्) हृदयङ्गमान् अतिप्रियानित्यर्थः। 'मयोभून्' (सुखस्य भावयितॄन्)। 'यः' (यजमानः) 'एषां' (वाग्विशेषाणां) 'भृत्यां' (भरणक्रियां) 'ऋणधत्' (वर्द्धयति) पुनःपुनः स्तौतीत्यर्थः। 'स' (यजमानः) 'जीवात्' (चिरं जीवति)।

अथ स्विष्टकृतो याज्यानुवाक्ययोः प्रतीके दर्शयति,—"अग्ने नयाऽऽ देवानाम्(११-१२)" इति। 'अग्ने नय सुपथा' इति पुरोऽनुवाक्या। 'आ देवानामपि पन्था' इति याज्या। एतच्चोभयम् "उभा वामिन्द्राग्नी" इत्यनुवाके (१।१।१४ अ०) व्याख्यातम्।

आमिक्षानुनिष्पादिनो वाजिनहविषो याज्यानुवाक्ययोः प्रतीके दर्शयति,—"शन्नो भवन्तु वाजे वाजे(१३-१४)" इति। 'शन्नो भवन्तु वाजिनो हवेषु' इति पुरोऽनुवाक्या। 'वाजे वाजे

ऽव्रत वाजिनः' इति याज्या। एतच्चोभयं 'देवस्याहꣳ सवितुः प्रसवे' इत्यनुवाके (१।७।८अ०) व्याख्यातम्।

अथावभृथे प्रथमाज्यभागस्य पुरोऽनुवाक्यामाह,—"अप्स्वग्ने सधिष्टव सौषधीरनुरुध्यसे। गर्भे सञ्जायसे पुनः(१५)" इति। हे 'अग्ने', ते (तव) 'सधिः' (सहो बलम्) 'अप्सु' वर्त्तते। 'स' त्वम् 'ओषधीरनुरुध्यसे' (व्रीहियवाद्योषधीरनुसरति*), जाठराग्निरूपेण तत्स्वीकारात्। अरण्योः 'गर्भे' स्थितः सन् 'पुनः'-पुनर्जायसे।

अथ द्वितीयाज्यभागस्य पुरोऽनुवाक्यामाह,—"वृषा सोम द्युमाꣳ असि वृषा देव वृषव्रतः। वृषा धर्माणि दधिषे(१६)" इति। हे 'सोम', त्वं 'वृषा' (कामानां वर्षयिता) 'असि'। 'द्युमान्' (दीप्तिमान्) च 'असि'। हे 'देव', यस्मात् त्वं 'वृषा' (वर्षयिता) तस्मात् त्वं 'वृषव्रतः' (वर्षणनिमित्तं व्रतं कर्म यस्य असौ वृषव्रतः)। किञ्च यस्मात् त्वं 'वृषा' (वर्षयिता), तस्मात् 'धर्माणि' (पुण्यानि) 'दधिषे' हे सोम (धारयिता असि)।

अथ वारुणस्य याज्यानुवाक्ययोः प्रतीके दर्शयति,—"इमं मे वरुण तत्त्वा यामि(१७-१८)" इति। 'इमं मे वरुण श्रुधि' इति पुरोऽनुवाक्या, 'तत्त्वा यामि ब्रह्मणा वन्दमानः' इति याज्या। एतच्चोभयम् "इन्द्रं वो विश्वतस्परीन्द्रं नरः" इत्यनुवाके (२।१।११अ०) व्याख्यातम्।

---

* सरसि इति पाठो भवितुं युक्तः।

अथाग्निवारुणस्विष्टकृतः संयाज्ययोः प्रतीके दर्शयति,—"त्वन्नो अग्ने स त्वन्नो अग्ने(१९-२०)" इति। 'त्वन्नो अग्ने वरुणस्य विद्वान्' इति पुरोऽनुवाक्या, स त्वन्नो अग्नेऽवमो भवति' इति याज्या। एतच्चोभयम् "आयुष्ट आयुर्दा अग्ने" इत्यस्मिन्ननुवाके (२।५।१२अ०) व्याख्यातम्॥

अत्र विनियोगसंग्रहः,—

वारुणाख्यप्रघासेषु याज्या अन्त्यानुवाकगाः।
इन्द्राग्नी तिस्र ऐन्द्राग्नेर्मारुते तु मरु·द्वयम्* ॥
अवोद्, वारुणे यागे; कया, कायाख्ययागके†।
अग्न, आ देव, संयाज्य; शन्नो वाजेति वाजिने॥
अप्सु, इदं चावभृथेऽनुवाक्ये आज्यभागयोः।
इमं, तत्त्वा, प्रधानस्य प्राक्के, त्वं स त्वमित्यमू॥
संयाज्ये इति मन्त्रास्तु विंशतिः समुदीरिताः॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे द्वितीयप्रपाठके एकादशोऽनुवाकः॥ ० ॥

---

* अत्र 'त्रयम्' इति पाठो भवितुं युक्तः।
† अत्र 'कया को काययागके' इति पाठो भवितुं युक्तः।

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्क-भूपालसाम्राज्यधुरन्धरेण सायनाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामकतैत्तिरीययजुःसंहिताभाष्ये चतुर्थकाण्डे द्वितीयः प्रपाठकः सम्पूर्णः ॥०॥

॥०॥ ॐ तत्सत् ॥०॥

---

श्रीगणेशाय नमः ।

# अथ तैत्तिरीयसंहिताभाष्ये

## चतुर्थकाण्डे तृतीयप्रपाठके

### प्रथमोऽनुवाकः ।

अपां त्वेमन्त्सादयाम्यपां त्वोद्मन्त्सादयाम्यपां त्वा भस्मन्त्सादयाम्यपां त्वा ज्योतिषि सादयाम्यपां त्वाऽयने सादयामि(१-५) अर्णवे सदने सीद समुद्रे सदने सीद सलिले सदने सीदापां क्षये सीदापाᳪं सधिषि सीद(६-१०) अपां त्वा सदने सादयाम्यपां त्वा सधस्थे सादयाम्यपां त्वा पुरीषे सादयाम्यपां त्वा योनौ, सादयाम्यपां त्वा पाथसि सादयामि(११-१५) गायत्रीछन्दस्त्रिष्टुप्छन्दो जगतीछन्दोऽनुष्टुप्छन्दः पङ्क्तिश्छन्दः (१६-२०) ॥ १ ॥

योनौ । पञ्चदश च ॥ १ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे तृतीयप्रपाठके प्रथमोऽनुवाकः ॥ ० ॥

श्रीगणेशाय नमः।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥
प्रपाठके द्वितीये हि चितिचैत्रं निरूपितम्।
वाच्यास्तृतीयके पञ्च चितयोऽत्र त्रयोदश॥
अनुवाकास्त्रिभिर्द्वाभ्यां तथा द्वाभ्यां चतुष्टयात्।
एकेन चितयो वाच्या इत्यर्था अनुवाकगाः॥

तत्र प्रथमानुवाके प्रथमचितिगता अपस्याभिधाना इष्टका उच्यन्ते। कल्पः, 'अपस्या उपदधात्यपां त्वेमन्त्सादयामीति पञ्च पुरस्तात् प्रतीचीरर्णवे सदने सीदेति पञ्च दक्षिणत उदीचीरपां त्वा सदने सादयामीति पञ्च पश्चात् प्राचीर्गायत्रीच्छन्द इति पञ्चोत्तरतो दक्षिणा' इति। तत्र प्रथमपञ्चकमन्त्रानाह,—"अपां त्वेमन्त्सादयाम्यपां त्वोद्मन्त्सादयाम्यपां त्वा भस्मन्त्सादयाम्यपां त्वा ज्योतिषि सादयाम्यपां त्वाऽयने सादयामि(१-५)"। हे इष्टक, त्वाम् 'अपाम्' 'इमन्' (जलसम्बन्धिप्रवाहादिगमनप्रकारे) 'सादयामि' (स्थापयामि)। एवमुत्तरत्रापि योज्यम्। 'ओद्मन्' (वीचीतरङ्गादिरूपे उदके), 'भस्मन्' (भासके शुक्लरूपे), 'ज्योतिषि' (प्रकाशनेमत्स्ये इत्यर्थः)। 'अयने' (नदीकूपाद्याधारे)।

अथ द्वितीयेष्टकापञ्चकमन्त्रानाह,—"अर्णवे सदने सीद समुद्रे सदने सीद सलिले सदने सीदापां क्षये सीदापाꣳ सधिषि

सीद(१-१०)" इति। अर्णवशब्देन सादृश्यात् प्रौढतटाकाद्युपलक्ष्यते। तत्र 'अपां' सदनं। तस्मिन् स्थाने हे इष्टके, 'सीद' (उपविश)। 'समुद्रः' प्रसिद्धः। सलिलशब्देन अनिर्द्धारितविशेषो जलमात्राधारो लक्षितः। चीयन्ते शुष्यन्त्यापोऽत्रेति शुष्कतटाकादिः क्षयः। जलेन सह संघे धीयते स्थाप्यत इति सधो र्र्षोपलादिः।

अथ तृतीयपञ्चकमन्त्रानाह,—"अपां त्वा सदने सादयाम्यपां त्वा सधस्थे सादयाम्यपां त्वा पुरीषे सादयाम्यपां त्वा योनौ सादयाम्यपां त्वा पाथसि सादयामि(११-१५)"। हे इष्टके, त्वाम् 'अपां' 'सदने' (नद्यादौ) 'सादयामि' (स्थापयामि)। अद्भिः सह विद्युदादयो यत्र मेघे तिष्ठन्ति, सोऽयं मेघः 'सधस्थः'। पुरीषशब्देन नद्यादिगताः सिकता उच्यन्ते। योनिशब्देन जलकारणभूतोऽग्निरुच्यते। 'अग्नेरापः' इति श्रुतेः। पीयते जलं मेघैरत्रेति पाथः समुद्रः।

अथ चतुर्थपञ्चकमन्त्रानाह,—"गायत्रीछन्दस्त्रिष्टुप्छन्दो जगतीछन्दोऽनुष्टुप्छन्दः पङ्क्तिश्छन्दः(१६-२०)" इति। हे इष्टके, त्वं गायत्र्याख्यच्छन्दोरूपासि। एवमितरत्रापि।

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते,—"पशुर्वा एष यदग्निर्योनिः खलु वा एषा पशोर्विक्रियते यत् प्राचीनमैष्टकाद्यजुः क्रियते रेतोऽपस्या अपस्या उपदधाति योनावेव रेतो दधाति" (५।२।१०अ०) इति। योऽयम् 'अग्निः', स 'एष' पशुप्राप्तिहेतुत्वात् 'पशुः' एव। इष्टकोपधानात् पूर्वं यदङ्गजातमनुष्ठीयते, तेन पशोरेषा योनिरेव विकृता भवति। यथा लोके ऋतुकाले विकृता योनिः रेतो-

धारणमपेक्षते' तद्वदित्यर्थः। अब्लिङ्गकैर्*मन्त्रैरुपधेया इष्टका 'अपस्याः' तास्तु रेतस्थानीयाः, अतस्ता उपदध्यात्। तदुपधानेन 'योनावेव' 'रेतो' धारितं भवति।

सामान्येन विहितं विशेषाकारेण पुनर्विधत्ते,—"पञ्चोपदधाति पाङ्क्ताः पशवः पशूनामेवास्मै प्रजनयति" (५।२।१०अ०) इति। अत्र पुरस्तादित्यध्याहर्त्तव्यं। पूर्वस्यां दिशि पञ्चेष्टका उपदध्यात्। सपुच्छैः पादैः पञ्चभिर्योगात् 'पशवः' 'पाङ्क्ताः'।

अथ द्वितीयपञ्चकस्य देशं विधत्ते,—"पञ्च दक्षिणतो वज्रो वा अपस्या वज्रेणैव यज्ञस्य दक्षिणतो रक्षाᳬंस्यपहन्ति" (५।२।१०अ०) इति। वज्रवद्वैरिनिवारणसमर्थत्वादपस्यानां वज्रत्वम्।

अथ तृतीयपञ्चकस्य देशं विधत्ते,—"पञ्च पश्चात् प्राचीरुपदधाति पश्चाद्वै प्राचीनᳬं रेतो धीयते पश्चादेवास्मै प्राचीनᳬं रेतो दधाति" (५।२।१०अ०) इति। 'प्राचीः' (प्राङ्मुखाः)। लोके पश्चिमस्यां दिशि अवस्थितेन प्राङ्मुखेन पुरुषेण 'रेतः' 'प्राचीनं' सम्मुखमेव गर्भाशये स्थाप्यते। अतो यजमानार्थमपि तथा कृतं भवति।

पूर्वपश्चिमयोरिष्टकाः सह प्रशंसति,—"पञ्च पुरस्तात् प्राचीरुपदधाति पञ्च पश्चात् प्राचीस्तस्मात् प्राचीनᳬं रेतो धीयते प्रतीचीः प्रजा जायन्ते" (५।२।१०अ०) इति। 'प्रतीचीः' प्रत्यगपवर्गाः। प्राच्यां प्रथमामाधाय ततः पश्चिमायां द्वितीयां

---

* अब्लिङ्गकैः इति क्वचित् पाठः साधुरिव प्रतिभाति।

ततोऽपि पश्चिमायां तृतीयेति* एषा रीतिः। प्राचीरित्यत्र तद्विपरीता रीतिः; लोकेऽपि पुरोऽभिमुखत्वेन रेतःस्थापनं, तद्विपर्ययेण प्रजननम्।

चतुर्थपञ्चकस्य देशं विधत्ते,—"पश्चोत्तरतश्छन्दस्याः पशवो वै छन्दस्याः पशूनेव प्रजातान्त्स्वमायतनमभिपर्यूहते" (५।२।१०अ०) इति। पूर्वोपधानेन 'प्रजातान्' 'पशून्' अनेनोपधानेन स्वस्थानं प्रापयति।

देशविशेषान् विधाय समुदायाकारेण प्रशंसति,—"इयं वै अग्नेरतिदाहादबिभेत् सैता अपस्या अपश्यत्ता उपाधत्त ततो वा इमां नात्यदहद्यदपस्या उपदधात्यस्या अनतिदाहाय" (५।२।१०अ०) इति। अपां शान्तत्वादपस्याभिरतिदाहस्य परिहारः।

पुनः प्रकारान्तरेण प्रशंसति,—"उवाच हेयमददित्स ब्रह्मणाऽन्नं यस्यैता उपधीयान्तै य उ चैना एवं वेददिति"(५।२।१०अ०) इति। 'यस्य' (यजमानस्य) 'एताः' अपस्या उपधीयन्ते, 'यः' 'उच' विद्वान् एता अपस्या उक्तप्रकारेण जानाति, 'स' (यजमानः) स च वेदिता 'ब्रह्मणा' (मुख्यया वृत्त्या) 'अन्नम्' 'अददित्' (अन्नमत्ति), 'एवं' इदं वाक्यम् 'इयं' पृथिवी 'उवाच ह'। तस्मात् अपस्याः प्रशस्ता इति तात्पर्यार्थः॥

---

* तृतीयामिति इति पाठो भवितुं युक्तः।

अत्र विनियोगसंग्रहः,—

अपामपस्या दिक्वेता उपधेयास्तु विंशतिः।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे तृतीयप्रपाठके प्रथमोऽनुवाकः ॥ ० ॥

---

अयं पुरो भुवस्तस्य प्राणो भौवायनो वसन्तः प्राणायनो गायत्री वासन्ती गायत्रियै गायत्रं गायत्रादुपांशुरुपांशोस्त्रिवृत् त्रिवृतो रथन्तरꣳ रथन्तराद्वसिष्ठ ऋषिः प्रजापतिगृहीतया त्वया प्राणं गृह्णामि प्रजाभ्यः[१] अयं दक्षिणा विश्वकर्मा तस्य मनो वैश्वकर्मणं ग्रीष्मो मानसस्त्रिष्टुग्ग्रैष्मी त्रिष्टुभ ऐडमैडादन्तर्यामोऽन्तर्यामात् पञ्चदशः पञ्चदशाद् बृहद् बृहतो भरद्वाज ऋषिः प्रजापतिगृहीतया त्वया मनः॥ ॥ १ ॥

गृह्णामि प्रजाभ्यः[२] अयं पश्चाद्विश्वव्यचास्तस्य चक्षुर्वैश्वव्यचसं वर्षाणि चाक्षुषाणि जगती वार्षी

जगत्या ऋक्षममृक्षमाच्छुक्रः शुक्रात् सप्तदशः सप्तदशाद्वैरूपं वैरूपाद्विश्वामित्र ऋषिः प्रजापतिगृहीतया त्वया चक्षुर्गृह्णामि प्रजाभ्यः[१] इदमुत्तरात् सुवस्तस्य श्रोत्रꣳ सौवꣳ शरच्छ्रौत्र्यनुष्टुप्शारद्यनुष्टुभः स्वारꣳ स्वारान्मन्थी मन्थिन एकविꣳश एकविꣳशाद्वैराजं वैराजाज्जमदग्निर्ऋषिः प्रजापतिगृहीतया ॥ २ ॥

त्वया श्रोत्रं गृह्णामि प्रजाभ्यः[४] इयमुपरि मतिः । तस्यै वाङ्माती हेमन्तो वाच्यायनः पंक्तिर्हैमन्ती पंक्त्यै निधनवन्निधनवत आग्रयण आग्रयणात्त्रिणवत्रयस्त्रिꣳशौ त्रिणवत्रयस्त्रिꣳशाभ्याꣳ शाक्वररैवते शाक्वररैवताभ्यां विश्वकर्मर्षिः । प्रजापतिगृहीतया त्वया वाचं गृह्णामि प्रजाभ्यः[५] ॥ ३ ॥

त्वया मनः । जमदग्निर्ऋषिः प्रजापतिगृहीतया । त्रिꣳशच्च ॥ २ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे तृतीयप्रपाठके द्वितीयोऽनुवाकः ॥ ० ॥

प्रथमेऽनुवाके अपस्या उक्ताः । अथ द्वितीये प्राणभृत उच्यन्ते । कल्पः, 'अयं पुरो भुव इति पञ्चाग्नत प्राणभृतो दक्ष

दश प्रतिदिशमंसत्यया दश मध्येऽन्तरामुपधाय' इति। तत्र पूर्वस्यां दिश्युपधेयानां दशेष्टकानां मन्त्रमाह,—"अयं पुरो भुवस्तस्य प्राणो भौवायनो वसन्तः प्राणायनो गायत्री वासन्ती गायत्रियै गायत्रं गायत्रादुपाꣳशुरुपाꣳशोस्त्रिवृत् त्रिवृतो रथन्तरꣳ रथन्तराद् वसिष्ठ ऋषिः प्रजापतिगृहीतया प्राणं गृह्णामि प्रजाभ्यः(१)" इति। भवत्यस्माज्जगदिति 'भुवः', भुवःशब्दः* प्रजापतिमाचष्टे। 'पुरः' (पूर्वस्यां) दिशि 'अयं' 'भुवः' वर्त्तते इति शेषः; हे इष्टके, तद्रूपाऽसीत्यभिप्रायः। एवम् उत्तरेष्वपि वाक्येषु योज्यं। 'तस्य' (भुवःशब्दाभिधेयस्य) प्रजापतेः सम्बन्धी 'प्राणः', अत एवापत्यत्वमुपचर्य 'भौवायनः' इत्युच्यते। तस्य च प्राणस्य स्वामवृत्तिरूपस्यापत्यत्वेनोपचरितः 'प्राणायनो' वसन्तर्त्तुः। तस्य च सम्बन्धिनी 'वासन्ती' 'गायत्री'। तस्या-श्छन्दोरूपाया गायत्र्याः सम्बन्धि 'गायत्रं' साम। तस्माच्च गायत्रसाम्न उत्पन्न इव 'उपांशु'-ग्रहः। तस्माच्चोपांशुग्रहादुत्पन्न इव 'त्रिवृत्' स्तोमः। तस्मात् त्रिवृत्स्तोमादुत्पन्नमिव 'रथन्तरं' साम। तस्माद्रथन्तरसाम्न उत्पन्न इव वसिष्ठाख्य 'ऋषिः'। हे इष्टके, यथोक्तप्रकारेण प्रजापति-प्राण-वसन्तादिरूपोपचारेण 'प्रजापतिगृहीतया' 'त्वया' 'प्रजाभ्यः' (सर्वासां प्रजानां) 'प्राणं' 'गृह्णामि' (प्रजानां प्राणसिद्धये त्वाम् उपदधामीत्यर्थः)। यद्यप्ययमेकवाक्यत्वादेक एव मन्त्रः, तथापि प्रतीष्टकावृत्त्या दश मन्त्राः सम्पद्यन्ते।

* भुवशब्द इति पाठो भवितुं युक्तः।

अथ दक्षिणस्यां दिश्युपधेयानामिष्टकानां मन्त्रमाह,—"अयं दक्षिणा विश्वकर्मा तस्य मनो वैश्वकर्मणं ग्रीष्मो मानसस्त्रिष्टुग्ग्रैष्मी त्रिष्टुभ ऐडमैडादन्तर्यामोऽन्तर्यामात् पञ्चदशः पञ्चदशाद् बृहद्बृहतो भरद्वाज ऋषिः प्रजापतिगृहीतया त्वया मनो गृह्णामि प्रजाभ्यः(२)" इति। विश्वानि कर्म्माणि जगद्व्यापाररूपाणि यस्य, असौ 'विश्वकर्मा' (प्रजापतिः)। 'दक्षिणा' (दक्षिणस्यां) दिशि यः 'अयं' विश्वकर्मा, हे इष्टके, तद्रूपा त्वमसि। प्राग्वसन्तादिपरम्परेव मनोग्रीष्मादिपरम्परा व्याख्येया। 'ऐडम्'-इति सामविशेषः।

अथ पश्चिमायां दिश्युपधेयानामिष्टकानां मन्त्रमाह,—"अयं पश्चाद्विश्वव्यचास्तस्य चक्षुर्वैश्वव्यचसं वर्षाणि चाक्षुषाणि जगती वार्षी जगत्या ऋक्षममृक्षमाच्छुक्रः शुक्रात् सप्तदशः सप्तदशाद् वैरूपं वैरूपाद्विश्वामित्र ऋषिः प्रजापतिगृहीतया त्वया चक्षुर्गृह्णामि प्रजाभ्यः(३)" इति। विश्वं (सर्वं जगत्) व्यचति व्याप्नोति इति 'विश्वव्यचाः' प्रजापतिः। शेषं पूर्ववद्योजनीयम्। 'वर्षाणि' वर्षर्त्तुः। 'ऋक्षमम्' इति सामविशेषः।

अथोत्तरस्यां दिश्युपधेयानामिष्टकानां मन्त्रमाह,—"इदम् उत्तरात्सुवस्तस्य श्रोत्रं सौवं शरत् श्रौती अनुष्टुप् शारदी अनुष्टुभः स्वारं स्वारान्मन्थी मन्थिन एकविंश एकविंशाद्वैराजं वैराजाज्जमदग्निर्ऋषिः प्रजापतिगृहीतया त्वया श्रोत्रं गृह्णामि प्रजाभ्यः(४)" इति। सौति सर्वं जगत् प्रेरयतीति सुवशब्दः प्रजापतिवाची। उत्तरस्यां दिशि यदिदं 'सुवः' (प्रजापतिशरीरं),

हे इष्टके, त्वं तद्रूपाऽसीति योज्यम्। स्वारमिति सामविशेषः। शेषं पूर्ववद्व्याख्येयम्।

अथ मध्यमदेशे उपधेयानामिष्टकानां मन्त्रमाह,—"इयम् उपरि मतिः तस्यै वाङ्माती हेमन्तो वाच्यायनः पङ्क्तिर्हैमन्ती पङ्क्त्यै निधनवन्निधनवत आग्रयण आग्रयणात्त्रिणवत्रयस्त्रिंशौ त्रिणवत्रयस्त्रिंशाभ्यां शाक्वररैवते शाक्वररैवताभ्यां विश्वकर्मर्षिः प्रजापतिगृहीतया त्वया वाचं गृह्णामि प्रजाभ्यः(५)" इति। मन्यते ज्ञानं जगज्जानातीति 'मतिः' प्रजापतिः। ऊर्द्धायां दिशि येयं 'मतिः' (प्रजापतिर्मतिः), हे इष्टके, तद्रूपा त्वमसि। मतिनाम्नः प्रजापतेस्त्वपत्यरूपा या इयं 'वाक् माती'। वाचोऽपत्यं 'वाच्यायनः'। 'निधनवत्' इति सामविशेषः। तत्रैकैकस्मिन् मन्त्रे प्रजापतिः इन्द्रियम् ऋतुः छन्दः सामविशेषयज्ञः स्तोमः पृष्ठस्तोत्रं साम ऋषिरिति नवानामेतेषां पदार्थानां यद्यपि लोकप्रसिद्धो जन्यजनकभावो नास्ति, तथापि मन्त्रार्थत्वेन मनसा भावयितुमिदमुक्तमित्यविरोधः।

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते,—"प्राणभृत उपदधाति रेतस्येव प्राणान् दधाति तस्माद्वदन् प्राणं पश्यञ्छृण्वन् पशुर्जायते" (५।२।१०अ०)इति। पूर्वं रेतोरूपा अपस्या उपहिताः, तत ऊर्द्ध्वं प्राणभृतामुपधानेन 'रेतसि' प्राणं स्थापयति। यस्मात् एवं गर्भाशये सिक्ते 'रेतसि' प्राणाः स्थाप्यन्ते, तस्मात् रेतःकार्यपशुर्वदनादिभिर्वागादिव्यापारैर्युक्तो जायते।

सामान्येन विहितं पुनर्विशेषाकारेण विधत्ते,—"अयं पुरो

भुव इति पुरस्तादुपदधाति प्राणमेवैताभिर्दाधार, अयं दक्षिणा विश्वकर्मेति दक्षिणतो मन एवैताभिर्दाधार, अयं पश्चाद्विश्वव्यचा इति पश्चाच्चक्षुरेवैताभिर्दाधार, इदमुत्तरात् सुवरित्युत्तरतः श्रोत्रमेवैताभिर्दाधार इयमुपरि मतिरित्युपरिष्टाद् वाचमेवैताभिर्दाधार" (५।२।१०अ०) इति। तत्तदिष्टकोपधानेन चित्यस्याग्नेर्यजमानस्य वा प्राणादयो धृता भवन्ति।

एकैकस्यां दिश्युपधेयानामिष्टकानां सङ्ख्यां विधत्ते,—"दशदशोपदधाति सवीर्यत्वाय" (५।२।१०अ०) इति। एकैकं मन्त्रं दशकृत्व आवर्त्य दशेष्टका उपदध्यात्। तथा सति चितेः सवीर्यत्वदार्ढ्यं भवति।

तत्रोपधाने वक्रत्वं विधत्ते,—"अक्ष्णयोपदधाति तस्मादक्ष्णया पशवोऽङ्गानि प्रहरन्ति प्रतिष्ठित्यै" (५।२।१०अ०) इति। प्रतीच्यामुपक्रम्य प्राच्यामवसाने सति आर्जवं भवति। नैर्ऋत्यामुपक्रम्य ऐशान्यां समापनं वक्रत्वम्; एवमितरत्रापि; तदिदम् 'अक्ष्णया' इत्यनेनोच्यते। पशवोऽपि दक्षिणं पुरोवर्त्तिपादं प्रचाल्य वामाग्रवर्त्तिपादं प्रचालयन्ति, एवं पशूनां पादचालने वक्रत्वम्।

तत्तद्दिग्विशिष्टा इष्टकास्तत्सम्बन्धगतान् वसिष्ठादीनृषींश्च प्रशंसति,—"याः प्राचीस्ताभिर्वसिष्ठ* आर्भ्नोत्, या दक्षिणा ताभिर्भरद्वाजो, याः प्रतीचीस्ताभिर्विश्वामित्रो, या उदीचीस्ताभि-

---

* वसिष्ठ इति आदर्शसंहितापुस्तके पाठः।

जमदग्निर्या ऊर्द्धास्ताभिर्विश्वकर्मा" (५।२।१०अ०) इति। स्पष्टम्।

एतद्वेदनं प्रशंसति,—"य एवमेतामामृद्धिं वेद ऋध्नोत्येव, य आसामेवं बन्धुतां वेद बन्धुमान् भवति, य आसामेवं क्लृप्तिं वेद कल्पते अस्मै, य आसामेवमायतनं वेद आयतनवान् भवति, य आसामेवं प्रतिष्ठां वेद प्रत्येव तिष्ठति" (५।२।१०अ०) इति। 'ऋद्धिः' (समृद्धिहेतुत्वम्)। बन्धूनां समूहो 'बन्धुता', दशानां समूहाकार इत्यर्थः। 'क्लृप्तिः' वक्रकल्पना। 'आयतनं' प्रागादि-देशविशेषः। 'प्रतिष्ठा' तत्र स्थापनम्॥

अत्र विनियोगसंग्रहः,—

अयं प्राणभृतो दध्यात् पञ्चाशत् पञ्चमन्त्रकैः।

अथ मीमांसा, प्रथमाध्यायस्य चतुर्थपादे अष्टादशाधिकरणे चिन्तितम्।

"स्तुष्टिवत् प्राणभृत् तत्र सादृश्यं लिङ्गभूमतः।
अनेकमन्त्रगो लिङ्गसमुदायो विशेष्यते।

'प्राणभृत उपदधाति' इत्यत्रापि स्तुष्टिन्यायेन मन्त्रविधिरिति पूर्वः पक्षः। लिङ्गप्रकरणप्राप्तमन्त्रानुवादेन इष्टकोपधाने विधिः। 'रेतस्येव प्राणान् दधाति' इत्यस्य वक्ष्यमाणस्यार्थवादस्योपपत्तये प्राणभृच्छब्देन मन्त्रानुवादः। पूर्वत्र द्वितीयादिमन्त्रेषु स्तुष्टिलिङ्गानां बाहुल्यम्, इह तु प्रथममन्त्र एव प्राणभृल्लिङ्गमाम्नायते,—'अयं पुरो भुवस्तस्य प्राणो भौवायनः' इति। एकस्यैव मन्त्रस्य प्राण-

मन्त्रेऽपि 'कृत्तिणो गच्छन्ति' इतिवत् तत्सहचरिताः सर्वेऽपि मन्त्राः प्राणभृच्छब्देन लक्ष्यन्ते ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे तृतीयप्रपाठके द्वितीयोऽनुवाकः ॥०॥

प्राची॑ दि॒शां व॑स॒न्त ऋ॑तू॒नाम॒ग्निर्दे॒वता॒ ब्रह्म॒ द्रवि॑णं त्रि॒वृत्स्तोमः॒ स उ॑ पञ्चदश॒वर्त॑निस्त्र्यवि॒र्वयः॑ कृ॒तम॒याना॑म्पुरोवा॒तो वातः॒ सान॑ग ऋ॒षिः[१] दक्षि॒णा दि॒शां ग्री॒ष्म ऋ॑तू॒नामिन्द्रो॑ दे॒वता॑ क्ष॒त्रं द्रवि॑णं पञ्चद॒शः स्तोमः॒ स उ॑ सप्तद॒शवर्त॑निर्दित्य॒वाड्वय॒स्त्रेताऽया॑नां दक्षिणा॒द्वा॒तो वातः॑ सना॒तन॒ ऋ॒षिः[२] प्र॒तीची॑ दि॒शां व॒र्षा ऋ॑तू॒नां विश्वे॑ दे॒वा दे॒वता॒ विट्॥ १ ॥

द्रवि॑णꣳ सप्तद॒शः स्तोमः॒ स उ॑ वेकवि॒ꣳशव॒र्तनि॑-स्त्रिव॒त्सो वयो॑ द्वाप॒रोऽया॑नां पश्चा॒द्वा॒तो वातो॑ऽहभू॒न ऋ॒षिः[३] उदी॑ची दि॒शाꣳ श॒रदृ॑तू॒नां मि॒त्रावरु॑णौ दे॒वता॑ पु॒ष्टं द्रवि॑णमेकवि॒ꣳशः स्तोमः॒ स उ॑ त्रिण॒व-व॒र्तनि॑स्तुर्य॒वाड्वय॑ आस्क॒न्दोऽया॑नामुत्त॒राद्वा॒तो वातः॑ प्र॒त्न ऋ॒षिः[४] ऊ॒र्ध्वा दि॒शाꣳ हे॑मन्तशिशि॒रावृ॑तू॒नां बृह॒स्पति॑र्दे॒वता॒ वर्चो॒ द्रवि॑णं त्रिण॒वः स्तोमः॒ स उ॑

त्रयस्त्रिꣳशवर्त्तनिः पष्टवाड्गयो, ऽभिभूरयानां विष्वग्वातो वातः सुपर्ण ऋषिः(५) पितरः पितामहाः परेऽवरे ते नः पान्तु ते नोऽवन्त्वस्मिन् ब्रह्मन्नस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मन्नस्यां देवहूत्याम्(६) ॥ ॥ २ ॥

विट्। पष्टवाड्गयो। अष्टाविꣳशतिश्च ॥ ३ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे तृतीयप्रपाठके तृतीयोऽनुवाकः ॥०॥

द्वितीयेऽनुवाके प्राणभृत इष्टका उक्ताः। अथ तृतीये अपानभृत उच्यन्ते। कल्पः, 'वाच्यां प्राची दिशामिति पञ्चाशतमपानभृतो यथा प्राणभृतः' इति। प्राच्यां दिश्युपधेयानामिष्टकानां मन्त्रमाह,—"प्राची दिशां वसन्त ऋतूनामग्निर्देवता ब्रह्म द्रविणं त्रिवृत्स्तोमः स उ पञ्चदशवर्त्तनिस्त्र्यविर्वयः कृतमयानां पुरोवातो वातः सानग ऋषिः(१)" इति। हे इष्टके, 'दिशां' मध्ये या 'प्राची', सा त्वमसि। 'ऋतूनां' मध्ये यो 'वसन्तः', तद्रूपाऽसि। देवतानां मध्ये यः 'अग्निः', तद्रूपाऽसि। स्वकीयत्वेन सम्पादनीयानां द्रविणानां मध्ये विशिष्टत्राह्मणरूपं यद्धनं, तद्रूपा त्वमसि। स्तोमानां मध्ये त्रिवृन्नामको यः 'स्तोमः', तद्रूपा त्वमसि। 'स उ' (सोऽपि, त्रिवृत्स्तोमः) 'पञ्चदशवर्त्तनिः' (पञ्चदशस्तोमस्य

प्रवर्त्तकः), बहिष्पवमानस्तोत्रे त्रिवृत्स्तोमप्रवृत्तौ सत्यां तत ऊर्द्धभाविषु आज्यस्तोत्रेषु पञ्चदश स्तोमाः प्रवर्त्तन्ते, तत्प्रवर्त्तनशक्तिरूपा त्वमसि। वयसां मध्ये सार्द्धसंवत्सररूपं यद् 'वयः', तद्रूपा त्वमसि। 'त्र्यविः'-शब्दः सार्द्धसंवत्सरमुपलक्षयति ; तथाहि अविजातौ प्रायेण गर्भधारणमारभ्य षष्ठे मास्येव शिशुर्जायते ; त्रिसङ्ख्याका अविजन्मकाला यस्य वयसः, तत् वयः त्र्यविशब्देनोच्यते। 'अयानां' मध्ये यत् कृतयुगं, तद्रूपा त्वमसि। वायूनां मध्ये पुरोवाताख्यो यो वायुः, तद्रूपा त्वमसि। ऋषीणां मध्ये यः सानगाख्य 'ऋषिः', तद्रूपा त्वमसि।

अथ दक्षिणस्यां दिश्युपधेयानां मन्त्रमाह,—"दक्षिणा दिशां ग्रीष्म ऋतूनामिन्द्रो देवता क्षत्रं द्रविणं पञ्चदशः स्तोमः स उ सप्तदशवर्त्तनिर्दित्यवाड्वयस्त्रेताऽयानां दक्षिणाद्वातो वातः सनातन ऋषिः(२)" इति। माध्यन्दिनसवने पञ्चदशस्तोममनुष्ठाय तत ऊर्ध्वभाविषु पृष्ठस्तोत्रेषु सप्तदशस्तोमोऽनुष्ठातव्यः, तथा च स एव पञ्चदशस्तोमः सप्तदशस्तोमं प्रवर्त्तयति ; तत्र या प्रवर्त्तनशक्तिः, सा त्वमसि। वयसां मध्ये द्विसंवत्सरवयोरूपाऽसि ; 'दित्यवाट्'-शब्देन संवत्सरद्वयमुपलक्ष्यते, तथाहि 'दित्यं' (पुरुषं बालं*) वहतीति 'दित्यवाट्', अजादिभेदेषु कश्चिदवान्तरजातिरङ्कः, स च संवत्सरद्वयेन बालं वहतीति दित्यवाट्शब्दः संवत्सरद्वयोपलक्षकः। दितिः खण्डनं भाण्डभङ्गादिचापलं, तदर्हतीति 'दित्यः' पुंबाल

* बालमित्येतन्मात्रो का० ह० पु० पाठः। एवं परत्र।

इत्यर्थः। दक्षिणादित्यव्ययं, तत् दक्षिणस्यां दिशीत्यमुमर्थं ब्रूते। यो वायुर्दक्षिणस्यां वाति, स 'दक्षिणाद्वातः', तेन वातविशेषणेन विशेष्यो यो वायुः, तद्रूपा त्वमसि। शेषं पूर्ववत्।

प्रतीच्यां दिश्युपधेयानामिष्टकानां मन्त्रमाह,—"प्रतीची दिशां वर्षा ऋतूनां विश्वे देवा देवता विड्द्रविणꣳ सप्तदशः स्तोमः स उ वेकविꣳशवर्त्तनिस्त्रिवत्सो वयो द्वापरोऽयानां पश्चाद्वातो वातोऽहभून ऋषिः(३)" इति। त्रयो वत्साः वत्सरा यस्यासौ त्रिवत्सः, वर्षत्रयं, तत्परिमितं यद्वयः, तद्रूपा त्वमसि। अयन्ति गच्छन्ति तत्तत्कालानुसारेण वर्त्तन्ते प्राणिनोऽत्रेति, अयाः* युगविशेषः। तेषां मध्ये यः 'द्वापरः', तद्रूपा त्वमसि। पश्चिमायां दिशि यो वायुर्वाति, तस्य 'पश्चाद्वातः' इति सञ्ज्ञा, एतत्सञ्ज्ञको यो वातविशेषः, तद्रूपा त्वमसि। 'अहभून' इति कस्यचिदृषेर्नामधेयम्।

उदीच्यां दिश्युपधेयानामिष्टकानां मन्त्रमाह,—"उदीची दिशाꣳ शरदृतूनां मित्रावरुणौ देवता पुष्टं द्रविणमेकविꣳशः स्तोमः स उ त्रिणववर्त्तनिस्तुर्यवाड्वय आस्कन्दोऽयानामुत्तराद्वातो वातः सनत्र ऋषिः(४)" इति। पुष्टशब्दः परिचर्यया वर्णत्रयपोषकत्वाच्छूद्रजातिमाचष्टे। अत एव वाजसनेयिनः समामनन्ति, 'स शौद्रं† वर्णमसृजत् पूषणम्' इति। तुर्यं चतुर्थं

---

* एवमेव सर्व्वत्र पाठः, किन्तु 'अयः' इति पाठो भवितुं युक्तः।
† रौद्रमिति का० ख० पु० पाठः।

चतुर्थसंवत्सरोपक्रमं वहतीति 'तुर्यवाट्', सार्द्धत्रिसंवत्सररूपं यत् 'वयः', तद्रूपा त्वमसि। 'आ, (समन्तात्) स्कन्दनं (धर्मस्य शोषणं) यस्मिन् कलौ*, सोऽयम् 'आस्कन्दः'। 'प्रत्न' इति कस्यचिदृषेर्नाम।

मध्यदेश उपधेयानामिष्टकानां मन्त्रमाह,—"ऊर्ध्वा दिशाꣳ हेमन्तशिशिरावृतूनां बृहस्पतिर्देवता वर्चो द्रविणं त्रिणवः स्तोमः स उ त्रयस्त्रिꣳशवर्त्तनिः पष्ठवाद्वयोऽभिभूरयानां विष्वग्वातो वातः सुपर्ण ऋषिः[५]" इति। 'वर्चः' वर्चस्वान् चतुर्ष्वपि वर्णेषु यो बलवान्, तद्रूपं धनं त्वमसि। 'पष्ठ' (पृष्ठ) भारं वहतीति 'पष्ठवाट्' स एवो† दकारान्तशब्देनोच्यते। चतुर्थवर्षे सम्पूर्णे सति प्रायेण बलीवर्दो भारं वहति, अतो वर्षचतुष्टयरूपं यद् 'वयः', तद्रूपा त्वमसि। कृत्स्नं धर्ममभिभवतीति 'अभिभूः',-कलियुगावसानकालः, तद्रूपा त्वमसि। नानादिक्षु साङ्कर्येण सञ्चरन् वायुः विष्वग्वातसञ्ज्ञकः, तथाविधो यो वायुः, तद्रूपा त्वमसि। 'सुपर्ण' इति कस्यचिदृषेर्नामधेयम्।

सर्वेष्वेतेषु पञ्चसु मन्त्रेषु अनुषञ्जनीयशेषमन्त्रमाह,—"पितरः पितामहाः परेऽवरे ते नः पान्तु ते नोऽवन्त्वस्मिन् ब्रह्मन्नस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मन्नस्यां देवहूत्याम्[६]" इति। हे 'पितरः', हे 'पितामहाः', हे 'परे' (प्रपितामहादयः),

---

* कालो इति सर्व्वत्र पाठो न सम्यक्। काले इत्यपि भवितुमर्हति।

† एवमेव सर्व्वत्र पाठः, एव इति पाठो भवितुं युक्तः।

हे 'अवरे' (भ्रातृपुत्रादयः)। ईदृशा ये भवन्तः सन्ति, 'ते' (भवन्तः) 'नः' (अस्मान्) कर्मानुष्ठानाय 'पान्तु' (पालयन्तु)। किञ्च 'ते' (भवन्तः) 'नः' (अस्मान्) पालनसिद्ध्यर्थं 'अवन्तु'। 'अस्मिन्' 'ब्रह्मन्' (अस्यां ब्राह्मणजातौ) 'अस्मिन्' 'क्षत्रे' (अस्यां क्षत्रियजातौ) 'अस्याम् आशिषि' (एतस्यां कामनायाम्) 'अस्यां' 'पुरोधायाम्' (एतस्यां राजपौरहित्यवृत्त्यौ) 'अस्मिन् कर्मन्' (अस्मिंश्चयनरूपे कर्मणि) 'अस्यां देवहूत्याम्' (एतस्यां देवताह्वानरूपायां) क्रियायाञ्च निमित्तभूतायां सत्यां हे इष्टके त्वामुपदधामीति शेषः।

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते,—"प्राणभृत उपधाय संयत उपदधाति प्राणानेवास्मिन् धित्वा संयद्भिः संयच्छति तत् संयतां संयत्त्वमथो प्राणे एवापानं दधाति तस्मात् प्राणापानौ सञ्चरतः" (५।२।१०अ०) इति। अन्तर्देशे प्राणभृदाख्याः पूर्वोक्ता इष्टका 'उपधाय' बहिर्देशे संयदाख्या इमा अपानभृत उपदध्यात्। तथा सति अग्नौ प्राणान् स्थापयित्वा संयदाख्याभिरिष्टकाभिः 'संयच्छति' (दृढीकरोति)। अतः संयच्छत्येताभिरिति व्युत्पत्त्या संयन्नाम सम्पन्नम्। अपि च बहिःसञ्चाररूपे 'प्राणे' पुनरन्तःसञ्चाररूपम् 'अपानं' स्थापयति। तस्माल्लोकेऽपि 'प्राणापानौ' सम्भूय 'सञ्चरतः'।

प्राणभृद्भ्यो विपरीतप्रकारं विधत्ते,—"विषूचीरुपदधाति तस्माद्विष्वञ्चौ प्राणापानौ" (५।२।१०अ०) इति। यस्मात् प्राणभृतामपानभृताञ्च अन्योन्यविपर्ययक्रमः, तस्माल्लोकेऽपि प्राण-

पानौ अन्योन्यविपरीतस्वरूपौ। बहिर्गतिः प्राणः, अन्तर्गतिरपान इति विपर्ययः।

संयतामासामुपधानं प्रशंसति,—"यद्वा अग्नेरसंयत-मसुवर्ग्य-मस्य तत् सुवर्ग्योऽग्निर्यत् संयत उपदधाति समेवैनं यच्छति सुवर्ग्यमेवाकरः" (५।२।१०अ०) इति। अग्नेः सम्बन्धि यदङ्गं सम्यङ्नियमितं न भवति, तदङ्गं स्वर्गहितं न भवति, अग्निस्तु स्वर्गहितोऽस्माकमपेक्षितः, तस्मादग्निं स्वर्ग्यं कर्त्तुं संयत उपदध्यात्।

प्रथममन्त्रे कस्यचिदंशस्य तात्पर्यमाह,—"ऋतवो वै वयः क्षत-मयानामित्याह वयोभिरेवायानवरुन्धे यैर्वयाऽऽसि" (५।२।१०अ०) इति। सार्द्धसंवत्सरादिरूपैर्वयोविशेषैरयाभिधेयानि कृतादियुगानि प्राप्नोति, तैश्च युगैस्तान् वयोविशेषान् प्राप्नोति;—न हि वयोविशेषमन्तरेण जन्महीनस्य कृतादियुगैः सम्बन्धोऽस्ति, नापि कृतादियुगरूपस्य कालस्याभावे कश्चिद्वयोविशेषः सम्भवति। महाप्रलये युगराहित्येन जन्मरहितानां वयोविशेषाद्यदर्शनात्। तस्मादन्योन्यसापेक्षयोर्वयोयुगयोरुभयोरप्यत्रोपादानम्।

पञ्चस्वपि मन्त्रेषु पुरोवातो दक्षिणाद्वात इत्यादीन् वायु-विशेषान् प्रशंसति,—"सर्वतो वायुमतीर्भवन्ति तस्मादयꣳ सर्वतः पवते" (५।२।१०अ०) इति। यस्मादेता इष्टकाः सर्वा अपि वायुशब्दोपेतमन्त्रैरुपधेयाः, 'तस्मादयं' लोकेऽपि वायुः सर्वासु दिक्षु सञ्चरति।

अत्र विनियोगसंग्रहः,—

प्राचीत्यपानमृत्त्संयदिति-नामद्वयान्विताः ।
पञ्चाशत् पूर्ववद्दिक्षु मध्ये चोपदधाति ताः ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्ण-यजुःसंहिताभाष्ये चतुर्थकाण्डे तृतीयप्रपाठके तृतीयोऽनुवाकः॥ ०॥

---

ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवासि ध्रुवां योनिमासीद साध्या । उख्यस्य केतुं प्रथमं पुरस्तादश्विनाध्वर्यू सादयतामिह त्वा(१) । स्वे दक्षे दक्षपितेह सीद देवत्रा पृथिवी बृहती रराणा । स्वासस्था तनुवा सं विशस्व पितेवैधि सूनव आ सुशेवाश्विनाध्वर्यू सादयतामिह त्वा(२) । कुलायिनी वसुमती वयोधा रयिन्नो वर्द्ध बहुलꣳ सुवीरं ॥ १ ॥

अपामतिं दुर्मतिं बाधमाना रायस्पोषे यज्ञपतिमाभजन्ती सुवर्धेहि यजमानाय पोषमश्विनाध्वर्यू सादयतामिह त्वा(३) । अग्नेः पुरीषमसि देवयानी तां त्वा विश्वे अभिगृणन्तु देवाः । स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणाऽऽयजस्वाश्विनाध्वर्यू सादयता-

मिह त्वा(४)। दिवो मूर्द्धासि पृथिव्या नाभिर्विष्टम्भनी दिशामधिपत्नी भुवनानां ॥ २ ॥

ऊर्मिर्द्रप्सो अपामसि विश्वकर्मा त ऋषिरश्विनाध्वर्यू सादयतामिह त्वा(५)। सजूरृतुभिः सजूर्विधाभिः सजूर्वसुभिः सजूरुद्रैः सजूरादित्यैः सजूर्विश्वैर्देवैः सजूर्देवैः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिह त्वा(६-१०)। प्राणं मे पाह्यपानं मे पाहि व्यानं मे पाहि चक्षुर्म उर्व्या, वि भाहि श्रोत्रं मे श्लोकय(११-१५) अपस्पिन्वौषधीर्जिन्व द्विपात् पाहि चतुष्पादव दिवो वृष्टिमेरय(१६-२०) ॥ ३॥

सुवीरं । भुवनानाम् । उर्व्या । सप्तदश च ॥ ४ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे तृतीयप्रपाठके चतुर्थोऽनुवाकः ॥०॥

तृतीयेऽनुवाके अपानभृदाख्या इष्टका उक्ताः। तावता प्रथमा चितिः समाप्ता। अथ चतुर्थेऽनुवाके द्वितीयस्यां चितौ आश्विन्याख्या इष्टका अभिधीयन्ते। कल्पः—'श्वोभूते पौर्वाह्णिकीभ्यां प्रचर्य द्वितीयां चितिं चिनोति ध्रुवक्षितिर्ध्रुवयोनिरिति पञ्चाश्विनीरुप-

दधाति' इति। तत्र प्रथमामाह,—"ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवासि ध्रुवां योनिमासीद साध्या। उख्यस्य केतुं प्रथमं पुरस्तादश्विनाध्वर्यू सादयतामिह त्वा(१)" इति। 'ध्रुवा' (स्थिरा) 'क्षितिः' (निवासभूमिः) यस्या इष्टकायाः, सा 'ध्रुवक्षितिः'; यस्यां भूमाविष्टका निवसन्ति तस्या भूमेश्चाञ्चल्याभावात् स्थैर्यं द्रष्टव्यम्। 'ध्रुवा' (नाशरहिता) 'योनिः' (उत्पत्तिहेतुर्मृद्रूपा) यस्या इष्टकायाः, सा 'ध्रुवयोनिः'। हे इष्टके तादृशे, त्वं स्वरूपतोऽपि 'ध्रुवासि,' अश्मकपालादिभिः संयोज्य निर्मितत्वात् ध्रुवत्वं। 'साध्या' अस्माभिः (साधनीया, उपधातव्या) त्वं 'ध्रुवां योनिं' (ध्रुवं अग्निक्षेत्ररूपं स्थानं), आसीद, (आगत्योपविश)। तदेव स्थानं विशिष्यते,—'उख्यस्य' (उखायां स्थितस्य) 'अग्नेः' 'केतुं' (ज्ञापकं) 'प्रथमं' (इष्टकोपधानात् पूर्वमेव निष्पन्नं), अतो हे इष्टके, 'इह' (अस्मिन्) अग्निक्षेत्रे 'पुरस्तात्' (पूर्वस्यां) दिशि देवताम् 'अध्वर्यू' उभौ अश्विनौ त्वां 'सादयतां इह' (अस्मिन् स्थाने स्थापयतम्)।

अथ द्वितीयामाह,—"स्वे दक्षे दक्षपितेह सीद देवत्रा पृथिवी बृहती रराणा। स्वासस्था तनुवा संविशस्व पितेवैधि सूनव आ-सुशेवाश्विनाध्वर्यू सादयतामिह त्वा(२)" इति। हे इष्टके, स्वस्थाने निषीद। तत्र दृष्टान्तः,—'दक्षपिता' इति, लुप्तोपमा,— यथा 'दक्षपिता', दक्षाणां व्यवहारकुशलानां पुत्राणां गृहे पिता निषीदति तद्वत्। 'देवत्रा' (देवेषु मध्ये) 'तनुवा' (स्वकीयेन शरीरेण) 'संविशस्व' (सम्यगवस्थिता भव)। कीदृशी?—'पृथिवी,' (तत्कार्यत्वेन भूमिस्वरूपा) 'बृहती' (प्रौढ़ा); 'रराणा' (निरुपद्रव-

मातृममाणा); 'स्योनखा' (सुखकरेऽस्मिन् स्थाने स्थिता) हे इष्टके, 'आ सुशेवा' (सर्वतः सुखेन सेवितुं शक्या) 'एधि' (भव); क इव, 'सूनवे' 'पितेव' (यथा पुत्रार्थं पिता सुखेन सेव्यो भवति, तद्वत्)। अश्विनेत्यादि पूर्ववत्।

अथ तृतीयामाह,—"कुलायिनी वसुमती वयोधा रयिन्नो वर्द्ध बहुलꣳ सुवीरं। अपामतिं दुर्मतिं बाधमाना रायस्पोषे यज्ञपतिमाभजन्ती सुवर्धेहि यजमानाय पोषमश्विनाध्वर्यू सादयतामिह त्वा(३)" इति। हे इष्टके, त्वं 'कुलायिनी' (निवासस्थानवती); 'वसुमती' (धनवती) धनप्रदेत्यर्थः। 'वयोधाः' (दीर्घायुष्यस्य सम्पादिका) सती 'नः' (अस्मदर्थं) 'बहुलं' 'रयिं' (प्रभूतं धनं) 'सुवीरं' (शोभनपुत्रत्वं) च 'वर्ध' (सम्पादय)। 'अमतिं' (प्रज्ञामान्द्यं) 'दुर्मतिं' (पापबुद्धिं) 'अप'-'बाधमाना' (निःशेषेण विनाशयन्ती) 'रायस्पोषे' (धनपुष्टौ) 'यज्ञपतिं' 'आभजन्ती' (सर्वतः प्रापयन्ती) 'सुवः' (स्वर्गलोके) 'यजमानाय' (यजमानार्थं) 'पोषं' (पुष्टिं) 'धेहि' (सम्पादय)। अश्विनेत्यादि पूर्ववत्।

अथ चतुर्थीमाह,—"अग्नेः पुरीषमसि देवयानी तां त्वा विश्वे अभिगृणन्तु देवाः। स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणाऽऽयजस्वाश्विनाध्वर्यू सादयतामिह त्वा(४)" इति। हे इष्टके, 'देवयानी' (देवान् प्राप्नुवती) त्वम् 'अग्नेः पुरीषमसि' (चित्यस्याग्नेः पूरकं वस्त्वसि); 'तां' (तादृशीं) त्वां 'विश्वे' 'देवाः' (सर्वेऽपि देवाः) 'अभिगृणन्तु' (सर्वतः कीर्त्तयन्तु)। 'स्तोमपृष्ठा' (सर्वे स्तोमैर्युक्तानि पृष्ठस्तोत्राणि यस्याः सा स्तोमपृष्ठा), 'पृष्ठेष्वपतिष्ठते'

इति वक्ष्यति। 'घृतवती' (होष्यमाणघृतसंयुक्ता) सती 'इह' (अस्मिन्) सधस्थे 'सीद' (तिष्ठ)। 'अस्मे' (अस्मभ्यं) 'प्रजावत्' (पुत्रपौत्रादियुक्तं) 'द्रविणा' (धनम्) 'आयजस्व' (सर्वतो देहि)। अश्विनेत्यादि पूर्ववत्।

अथ पञ्चमीमाह,—"दिवो मूर्धासि पृथिव्या नाभिर्विष्टम्भनी दिशामधिपत्नी भुवनानां। ऊर्मिर्द्रप्सो अपामसि विश्वकर्मा ते ऋषिरश्विनाध्वर्यू सादयतामिह त्वा(५)" इति। हे इष्टके, त्वं सर्वात्मिका असि, कथम्?—इति, तदुच्यते,—'दिवो मूर्धासि' (द्युलोकस्य शिरस्थानीय आदित्योऽसि); 'पृथिव्या नाभिः' (भूमेर्नाभिस्थानीया, भूमेश्शिरसि)*। 'दिशां' 'विष्टम्भनी' (प्राच्यादीनां दिशां विविधसाकर्येण संस्तम्भयन्ती व्यवस्थापयन्ती); तथा 'भुवनानां' सर्वेषाम् 'अधिपत्नी' (आधिक्येन पालयित्री)। 'अपां' च 'ऊर्मिः' 'द्रप्सः' च तदुभयरूपाऽसि; 'विश्वकर्मा' (प्रजापतिः) एव तव 'ऋषिः' (द्रष्टा)। अश्विनेत्यादि पूर्ववत्।

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते,—"उत्सन्नयज्ञो वा एष यदग्निः किं वाहैतस्य क्रियते किं वा न यद्वै यज्ञस्य क्रियमाणस्यान्तर्यन्ति पूयति वा अस्य तदाश्विनीरुपदधाति अश्विनौ वै देवानां भिषजौ ताभ्यामेवास्मै भेषजं करोति (५।१।९अ०)" इति। योऽयं चीयमानोऽग्निः, स 'एष' 'उत्सन्नयज्ञः' एव—अस्मिन्नग्नावनुष्ठेयानां अतिबहुलत्वात् सर्वथापि प्रमादादिना क्वचित् किञ्चिदङ्गम् उत्सन्नं भवत्येव, एतस्याग्नेः सम्बन्धि किं नाम अङ्गमनुष्ठितमिति को

---

* एवमेव सर्वत्र पाठः। भूमेश्शिरासि इति पाठो भवितुं युक्तः।

ज्ञातुं शक्नोति, (अहशब्दो निषेधार्थः) सर्वथा ज्ञातुं न शक्नोत्येव; तथा सत्यनुष्ठीयमानस्य 'यज्ञस्य' 'यत्' अङ्गम् 'अन्तर्यन्ति' (अन्तरितं कुर्वन्ति) 'अस्य' (यज्ञस्य) एतत् अङ्गं 'पूयति' एव (नश्यत्येव)। 'तत्' (तस्मात्) अन्तरायदोषपरिहारार्थम् 'आश्विनीः' इष्टका उपदध्यात्। अश्विदेवयुक्तैर्मन्त्रैरुपधेया इष्टका आश्विन्यः। तदुपधानेन देवभिषग्भ्याम् 'अस्मै' (यज्ञाय) औषधं 'करोति'।

सङ्ख्यां विधत्ते,—"पञ्चोपदधाति पाङ्क्तो यज्ञो यावानेव यज्ञस्तस्मै भेषजं करोति" (५।२।९ अ०) इति।

कल्पः, 'सजूर्ऋतुभिरिति पञ्चतव्या आश्विनीरनूपधाय' इति। पाठस्तु,—"सजूर्ऋतुभिः सजूर्विधाभिः सजूर्वसुभिः सजूरुद्रैः सजूरादित्यैः सजूर्विश्वैर्देवैः सजूर्देवैः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिह त्वा(१ १०)" इति। हे इष्टके, त्वं 'ऋतुभिः' (वसन्तादिभिः) 'सजूः' (समानप्रीतिः) असि; वसन्तादीनां यादृशी प्रीतिः, तादृशी तवेत्यर्थः। एवमुत्तरत्रापि सजूःशब्दो योज्यः। (त्रिविधं जगद्दधति पोषयन्ति इति) अब्बादयो 'विधाः'; एतैः 'विधाभिः'; वसवो, रुद्राः, आदित्याः, विश्वे देवा; देवाश्च प्रसिद्धाः। तैरेतैः पञ्चविधैः पञ्चधा मन्त्रभेदः। पूर्वोत्तरभागौ सर्वत्रानुषज्येते। 'विधाभिः' इत्यन्तः पूर्वो भागः; 'सजूर्देवैर्वयोनाधैः' इत्याद्युत्तरो भागः। एतस्मिन् भागे पूर्वोक्ताः सर्वेऽपि समानदेवशब्दाभिधेयाः; ते च सर्वे 'वयोनाधाः,' आयुःप्रदा इत्यर्थः। तादृशैः 'देवैः' समानप्रीतिस्त्वं 'वैश्वानराय' 'अग्नये' (सर्वपुरुषाणां हितकारि-वह्न्यर्थं) त्वामुपदधामि इति

शेषः। मयोपहितां त्वां देवानाम् 'अध्वर्यू' आश्विनौ* 'इह' लोके स्थापयताम्।

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते,—"ऋतव्या उपदधाति ऋतूनां क्लृप्त्यै" (५।३।१अ०) इति। वसन्तादीनाम् ऋतूनां स्वस्वव्यापारसामर्थ्याय एतदुपधानम्।

इष्टकासङ्ख्यां विधत्ते,—"पञ्चोपदधाति पञ्च वा ऋतवो यावन्त एवर्त्तवस्तान् कल्पयति" (५।३।१अ०) इति। हेमन्तशिशिरयोः समासेन ऋतूनां पञ्चत्वं। 'कल्पयति' (स्वस्वोचितव्यवहारक्षमान् करोति)।

मन्त्राणामाद्यन्तानुषङ्गौ विधत्ते,—"समानप्रभृतयो भवन्ति समानोदर्कास्तस्मात् समाना ऋतवः" (५।३।१अ०) इति। 'सजूर्ऋतुभिः सजूर्विधाभिः' इत्ययमुपक्रमो भागः 'प्रभृतिः'। समानप्रभृतयस्तु समानधर्माः, नोपक्रमाः सर्वे मन्त्रा इत्यर्थः। 'सजूर्देवैर्वयोनाधैः' इत्याद्यवसानम् 'उदर्कः'; सोऽपि सर्वेषां मन्त्राणां समानः। यस्मात् मन्त्राः समानाः, 'तस्मात्' लोकेऽपि मास-द्वयात्मकत्वेन सर्वेऽपि ऋतवः समानाः।

मन्त्रेषु समानमंशमुक्त्वा भेदकमंशं दर्शयति,—"एकेन पदेन व्यावर्त्तन्ते तस्मादृतवो व्यावर्त्तन्ते" (५।३।१अ०) इति। 'वसुभिः' इत्येकं पदं, तेनेतरेभ्यो मन्त्रेभ्य आद्यमन्त्रो व्यावर्त्तते। एवं रुद्रादित्यादिभिर्व्यावृत्तिर्योजनीया। यस्मादेकोपक्रमाव-

---

* 'अश्विनौ' इति पाठो भवितुं युक्तः।

नामधाम्ने पदमात्रेण व्यावृत्तिः, तस्माल्लोके मासदयात्मकत्वसाम्येऽपि वसन्तग्रीष्मादिपदभेदेन ऋतूनां परस्परं व्यावृत्तिः।

कल्पः,—'प्राणं मे पाहीति पञ्च प्राणभृत ऋतव्या अनूपधाय' इति। पाठस्तु,—"प्राणं मे पाह्यपानं मे पाहि व्यानं मे पाहि चक्षुर्म उर्व्या विभाहि श्रोत्रं मे श्लोकय (११-१५)" इति। हे इष्टके, 'मे' (मदीयं) 'प्राणं' 'पाहि*' (पालय), एवमुत्तरत्रापि; 'उर्व्या' (विशालया दृष्ट्या) 'वि-''भाहि' (विशेषेण प्रकाशय) दर्शनसमर्थं कुर्वित्यर्थः; 'श्लोकय' (शब्दसङ्घाते शक्तं कुरु) बहुवेदशास्त्रश्रवणसमर्थं कुर्वित्यर्थः।

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते,—"प्राणभृत उपदधाति ऋतुष्वेव प्राणान् दधाति तस्मात् समानाः सन्त ऋतवो न जीर्यन्ति अथो प्रजनयति एवैनान्" (५।३।१अ०) इति। ऋतव्योपधानादूर्द्ध्वं प्राणभृत उपधाने सति 'ऋतुष्वेव प्राणान्' स्थापयति। यस्मादेषु स्थापिताः प्राणाः, 'तस्मात्' पुनःपुनरावृत्तावपि 'ऋतवः' 'समाना' एव दृश्यन्ते, न तु जीर्णा भवन्ति। अपिच प्राणस्थापनादेतानृतून् पुनरुत्पादयत्येव।

---

* अत्र "भं दें नं क्षं तुं नां पं रं स्यं रं हिं" इत्यधिकः पाठः सर्वत्रैवास्ति अतः सम्भाव्यते,—यत्, एकस्मिन् पुस्तके प्रथमं, वर्त्तनचिह्नेन प्रत्यक्षरमर्पितेनानुस्वारेण अयं पाठोऽधरीकृतः, ततश्च, यथादृष्टं तथा लिखितमिति न्यायेन सर्वैरेव प्रतिलिपिकृद्भिस्तथैवालेखीति अस्माभिरधिगतानां पुस्तकानामेकमेव मूलपुस्तकमासीदिति।

ऋतव्याभ्य उत्तरभाविनीः प्राणभृतः प्रकारान्तरेण प्रशंसति,—"एष वै वायुः यत् प्राणो यत् ऋतव्या उपधाय प्राणभृत उपदधाति तस्मात् सर्वानृतूननु वायुरावरीवर्त्ति" (५।३।९ ब्रा०) इति। योऽयं 'प्राणः', स 'एष' 'वायुः' एव। तथा सति ऋतव्यानामूर्द्धं प्राणभृतामुपधानेन 'सर्वान्' अपि 'ऋतून्' 'अनु'-सृत्य वायुः पुनरावर्त्तते।

कल्पः, 'अपस्पिन्वेति पञ्चापस्या अनुपरिहारम्' इति। पाठस्तु,—"अपस्पिन्वौषधीर्जिन्व द्विपात्पाहि चतुष्पादव दिवो वृष्टिमेरय(११·१०)" इति। हे इष्टके, त्वं 'अपो' (जलानि) 'पिन्व' (प्रीणय); 'ओषधीः अपि 'जिन्व' (प्रीणय); 'द्विपात्' (मनुष्यशरीरं) 'पाहि' (पालय); 'चतुष्पात्' (पशुशरीरम्) 'अव' (रक्ष); 'दिवः' सकाशात् 'वृष्टिम्' 'आ-ईरय' (आ समन्तात् प्रवर्त्तय)।

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते,—"वृष्टिसनीरुपदधाति वृष्टिमेवावरुन्धे" (५।३।९ ब्रा०) इति। 'वृष्टिसनीः' वृष्टिप्रदानेन एतन्नामका इष्टकाः।

तत्र प्रकारविशेषं विधत्ते,—"यदेकधोपदध्यादेकमृतुं वर्षेदनुपरिहारꣳ सादयति तस्मात् सर्वानृतून् वर्षति" (५।३।९ ब्रा०) इति। पञ्चानामेकप्रयत्नोपधाने सति एकस्मिन् एव ऋतौ वृष्टिर्भवेत्, नेतरेष्वप्यृतुषु, अतस्तत्परिहाराय अनुक्रमेण परितो कृत्वा स्थापयेत्,—प्राचीमुपधाय प्रदक्षिणमिष्टकामावर्त्य दक्षिणामुपदध्यात्; पुनरपि इष्टकाहस्तः प्रदक्षिणीकृत्य पश्चिमामुप-

इध्यादित्येवं योजनीयं। तथा सति सर्वानप्यृतून् प्रति वृष्टि-र्भवति।

प्राणभृतां वृष्टिसन्योर्श्च पूर्वोत्तरभावं प्रशंसति,—"यत् प्राणभृत उपधाय वृष्टिसनीरुपदधाति तस्माद् वायुप्रच्युता दिवो वृष्टिरीर्त्ते" (५।३।९ब्र०) इति। यस्मात् प्राणभृतः पूर्वभाविन्यः, वृष्टिसनयः पश्चाद्भाविन्यः, 'तस्मात्' लोकेऽपि 'दिवः' सकाशात् पूर्वं वायुना प्रेरिता 'वृष्टिः' पश्चात् प्रवर्त्तते॥

अत्र विनियोगसंग्रहः,—

द्वितीयस्यां चितौ पञ्च ध्रुवेत्याद्याश्विनीस्तया* ।
पञ्चर्तव्याः सजूर्मन्त्रैराद्यन्तावनुषङ्गको ॥
वसुरुद्रादित्यविश्वैर्देवैर्मन्त्रभिदा भवेत् ।
प्राणं, प्राणभृतः पञ्च ह्यपोऽपस्यास्र पञ्च च ॥
ता एव वृष्टिसन्याख्याः प्रोक्ता मन्त्रास्तु विंशतिः ।

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे तृतीयप्रपाठके चतुर्थोऽनुवाकः ॥०॥

---

* तया इति सर्व्वत्र पाठो न सम्यक्। तथा इति तु भवितुं युक्तः। एवं 'आश्विनीः' इति द्वितीयान्तः पाठोऽपि न समीचीनः।

त्र्यविर्वय॑स्त्रि॒ष्टुप्छन्दो॑ दित्य॒वाड्वयो॑ वि॒राट्-
छ॑न्दः॒ पञ्चा॑वि॒र्वयो॑ गाय॒त्री छन्द॑स्त्रिव॒त्सो वय॑ उ॒ष्णिहा॒
छन्द॑स्तुर्य॒वाड्वयो॑ऽनु॒ष्टुप्छन्दः॑ पष्ठ॒वाड्वयो॑ बृह॒ती
छन्द॑ उ॒क्षा वयः॑ स॒तोबृ॑हती॒ छन्द॑ ऋष॒भो वयः॑ क॒कु-
च्छन्दो॑ धे॒नुर्वयो॒ जग॑ती॒ छन्दो॑ऽन॒ड्वान् वयः॑ प॒ङ्क्ति-
श्छन्दो॑ ब॒स्तो वयो॑, विव॒लं छन्दो॑ वृ॒ष्णिर्वयो॑ वि॒शा॒लं
छन्दः॒ पुरु॑षो॒ वयः॑, त॒न्द्रं छन्दो॑ व्या॒घ्रो वयो॑ऽना॒धृष्टं॒
छन्दः॑ सि॒ꣳहो वय॑श्छ॒दिश्छन्दो॑ विष्ट॒म्भो वयो॑ऽधि॒पति॒-
श्छन्दः॑। क्ष॒त्रं वयो॒ मय॑न्दं॒ छन्दो॑ वि॒श्वक॑र्मा॒ वयः॑
प॒रमे॒ष्ठी छन्दो॑ मू॒र्द्धा वयः॑ प्र॒जाप॑तिश्छन्दः॑[११९] ॥ १ ॥

पुरु॑षो॒ वयः॑। षड्वि॒ꣳश॒तिश्च ॥ ५ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे तृतीय-
प्रपाठके पञ्चमोऽनुवाकः ॥ ० ॥

चतुर्थानुवाके आश्विन्यादीष्टका उक्ताः। अथ पञ्चमे वयस्या-
ख्या इष्टका उच्यन्ते। कल्पः, 'त्र्यविर्वय इति पञ्च दक्षिणस्याꣳ
श्रोण्यां, पष्ठवाद्वय इति पञ्चोत्तरस्याꣳ, बस्तो वय इति दक्षिणेऽꣳसे,
वृष्णिर्वय इत्युत्तरेऽꣳसे, व्याघ्रो वय इति दक्षिणे पक्षे, सिꣳहो
वय इत्युत्तरे, एतद्वा विपरीतं; पुरुषो वय इति मध्ये, विष्टम्भो
वय इति चतस्रो वयस्याः पुरस्तात् प्रतीचीः' इति। पाठस्तु,—
"त्र्यविर्वयस्त्रिष्टुप्छन्दो[१]दित्यवाड्वयो विराट्छन्दः[२] पञ्चा-

विर्वयो गायत्री छन्दः(३) त्रिवत्सो वय उष्णिहा छन्दः(४) तुर्यवाड्वयोऽनुष्टुप्छन्दः(५) पष्ठवाड्वयो बृहती छन्दः(६) उक्षा वयः सतोबृहती छन्दः(७) ऋषभो वयः ककुप्छन्दः(८) धेनुर्वयो जगती छन्दः(९) अनड्वान् वयः पङ्क्तिश्छन्दः(१०) बस्तो वयो विवलं छन्दः(११) वृष्णिर्वयो विशालं छन्दः(१२) पुरुषो वयः तन्द्रं छन्दः(१३) व्याघ्रो वयोऽनाधृष्टं छन्दः(१४) सिंहो वयः छदिश्छन्दः(१५) विष्टम्भो वयोऽधिपतिश्छन्दः(१६) क्षत्रं वयो मयन्दं छन्दः(१७) विश्वकर्मा वयः परमेष्ठी छन्दः(१८) मूर्धा वयः प्रजापतिश्छन्दः(१९)" इति। 'अवि'-शब्दः पूर्वोक्तरीत्या मासषट्कमुपलक्षयति। ततः सार्द्धसंवत्सरपरिमितः कालः 'त्र्यविः' इत्युच्यते। हे इष्टके, तथाविधं यत् 'वयः' तद्रूपाऽसि। 'त्रिष्टुप्' चतुश्चत्वारिंशदक्षरा, तादृशं 'छन्दः' त्वमसि। एवं सर्वत्र योज्यं। 'दित्यवाट्' (द्विसंवत्सरपरिमितं)। 'पञ्चाविः' (सार्द्धद्विसंवत्सरपरिमितं)। 'त्रिवत्सः' (संवत्सरत्रयपरिमितं)। 'तुर्यवाट्' (सार्द्धसंवत्सरत्रयपरिमितं)। 'पष्ठवात् (संवत्सरचतुष्टयपरिमितं)। 'उक्षा' (सार्द्धसंवत्सरचतुष्टयपरिमितं)। तावति हि काले गौः सेक्ता भवति*। एवम् ऋषभादिशब्दाः तत्र तत्र प्रसिद्धार्थद्वारेण तत्तदर्थसम्बन्धिवयोविशेषलक्षकाः। विवलविशालादिशब्दा लोकप्रसिद्धच्छन्दांसि अनभिदधाना अपि शतपथब्राह्मणादिप्रसिद्धच्छन्दोविशेषवाचका इति द्रष्टव्यं। 'विश्वकर्म'-शब्दः प्रजापतिवाची; तत्सान्निध्याद् 'विष्टम्भ-क्षत्र-

---

* सेक्ता भवति इति पाठो भवितुं युक्तः।

मूर्द्ध'-शब्दाश्च तदीयमेकदेशविशेषमाचक्षते। तत्र विश्वकर्म-शब्देन प्राजापत्यायुःपरिमितः काल उपलक्ष्यते; 'विष्टम्भ'-शब्देन जगद्धारणवाचिना एकस्याः सृष्टेः स्थितिकाल उपलक्ष्यते। 'क्षत्र'शब्दो बलवाची, ततः यावता कालेनोत्पन्नं प्राणिजातं प्रबलं भवति, तावान् कालः क्षत्रशब्देनोपलक्ष्यते, 'मूर्द्ध'शब्दो द्युलोक-रूपं विराजो मूर्द्धानमाचष्टे, तेन द्युलोकस्य यावान् कालः, तावान् कालो लक्ष्यते। नानाविधवयोरूपा, नानाविधच्छन्दो-रूपा च त्वमसीति तात्पर्य्यार्थः।

एतैर्मन्त्रैरुपधेया वयस्याख्या इष्टकाः; तासां पूर्वानुवाकावसाने पठिताभिरपस्याभिः सह पौर्वापर्यं निश्चेतुं प्रस्तौति,—"पशवो वै वयस्या नानामनसः खलु वै पशवो नानाव्रतास्तेऽप एवाभि समनसः" (५।४।१ अ०) इति। वयस्यानां पशुप्राप्तिहेतुत्वात् तद्रूपत्वं, पशवश्च नानाविधरुचियुक्ताः,—यस्मै* पशवे यादृशं तृणादिकं रोचते, तादृशमेवान्यस्यापि रोचते इति नास्ति नियमः; एकेनाघ्राय परित्यक्तस्यापि तृणस्यान्येन भक्षणदर्शनात्; अतो नानामनस्कत्वं। ततो 'नानाव्रताः' (भिन्नकर्म्माणः),—एकः पशुर्लाङ्गलं वहति, अपरः शकटं, अन्यस्तु पृष्ठभारम्,—एवं विविधरुचयो विविधव्यापारा अपि पशवः 'अपः' अभिलक्ष्य सर्वेऽपि समानमनस्का एव, मध्याह्नकाले युगपदुदकपानदर्श-नात्।

---

* अत्र यस्मै इत्यस्य स्थाने एकस्मै इति पाठो भवितुं युक्तः, अन्यथा साकाङ्क्षता स्यात्।

तत्रान्वयव्यतिरेकाभ्यां वयस्यानामुत्तरभावित्वं विधत्ते,—यं कामयेतापशुः स्यादिति वयस्यास्तस्योपधायापस्या उपदध्यादसञ्ज्ञानमेवास्मै पशुभिः करोत्यपशुरेव भवति; यं कामयेत पशुमान्त्स्यादित्यपस्यास्तस्योपधाय वयस्या उपदध्यात् सञ्ज्ञानमेवास्मै पशुभिः करोति पशुमानेव भवति" (५।३।१ अ०) इति। वयःशब्दोपेतैः "अविर्वयस्त्रिष्टुप्छन्दः" इत्यादिभिर्मन्त्रैरुपधेया इष्टका वयस्याः*। अपशब्दोपेतैः "अपस्पिन्व" इत्यादिभिर्मन्त्रैरुपधेया इष्टका अपस्याः; तत्रापस्यानामुत्तरभावित्वे ताभिरितरासां पशुरूपाणामभिभूतत्वात् अस्य यजमानस्य 'पशुभिः' 'असञ्ज्ञानं' 'करोति',—पशुनिमित्तकं सञ्ज्ञानमकृतं भवति†; अतः पशूनामवज्ञातत्वात् पशुरहितो भवति। पशुरूपाणां वयस्यानामुत्तरभावित्वे पुनः अभिभूतत्वात्‡ अस्य यजमानस्य 'पशुभिः' 'सञ्ज्ञानं' 'करोति',—पशुनिमित्तकं 'सञ्ज्ञानं' कृतं भवति§। अवज्ञाविपरीत आदरः सञ्ज्ञानं। तेनायं 'पशुमान्' भवति 'एव'। तस्मादपस्याः पूर्वभाविन्यः, वयस्या उत्तरभाविन्य इत्यर्थः।

'विष्टम्भो वयः' इत्यादिभिर्मन्त्रैरुपधेयानां प्रदेशं विधत्ते,—

---

* 'वस्याः' इति सर्व्वत्र पाठो न सम्यक्।

† असंज्ञानमकृतं भवति इति आदर्शपुस्तके का० ह० पुस्तके च पाठो न सम्यक्। असंज्ञानं कृतं भवति इति का० सं० पुस्तकपाठः संज्ञानमकृतं भवति इति पुस्तकान्तरपाठो वा साधुः।

‡ गुणानभिभूतत्वादिति पुस्तकान्तरपाठः।

§ असंज्ञानमकृतं भवति इति आदर्शपुस्तके पाठः।

"चतस्रः पुरस्तादुपदधाति तस्माच्चत्वारि चक्षुषो रूपाणि द्वे शुक्ले द्वे कृष्णे" (५।३।१ ब्रा०) इति।

चक्षुरिन्द्रियसम्बन्धिनोर्द्वयोर्गोलकयोर्मध्ये प्रौढे द्वे शुक्लमण्डले, तयोर्मध्ये द्वे कृष्णमण्डले,—इत्येवं रूपचतुष्टयं। तेषु चतुर्षु मन्त्रेषु अन्तिममन्त्रे यो मूर्द्धशब्दस्तं प्रशंसति,—"मूर्द्धन्वतीर्भवन्ति तस्मात् पुरस्तान्मूर्द्धा" (५।३।१ ब्रा०) इति। मूर्द्धनशब्दोपेतैर्मन्त्रैरुपधेया इष्टका मूर्द्धन्वत्यः। यस्मात् पूर्वस्यां दिश्युपधेया मूर्द्धंच्छब्दोपेतमन्त्रसाध्याः, 'तस्मात्' प्रकृत्याकारेण चीयमानस्याग्नेरपि 'मूर्द्धा' पूर्वस्यां दिशि भवति।

'अविर्वयः' इत्यादिमन्त्रपञ्चकेन, 'पष्ठवाड्वयः' इत्यादिमन्त्रपञ्चकेन च उपधेयानामिष्टकानां देशविशेषं विधत्ते,—"पञ्च दक्षिणायाः श्रोण्यामुपदधाति पञ्चोत्तरस्यां, तस्मात् पश्चाद्वर्षीयान् पुरस्तात् प्रवणः पशुः" (५।३।१ ब्रा०) इति। यस्माच्च श्रोण्योर्बह्व्य इष्टकाः। 'तस्मात्' पशोरपि श्रोणीतः पूर्वभागो निम्नः।

अथ मन्त्रद्वयेनोपधेययोर्देशविशेषौ विधत्ते,—"वस्तो वय इति दक्षिणेऽंस उपदधाति वृष्णिर्वय इत्युत्तरेऽंसावेव प्रतिदधाति" इति। 'उत्तरे' 'अंसे उपदधाति' इत्यनुवर्त्तते। तेनोपधानद्वयेनाग्नेरंसावेव सम्पादयति।

अन्येन मन्त्रद्वयेनोपधेययोर्देशविशेषौ विधत्ते,—"व्याघ्रो वय इति दक्षिणे पक्ष उपदधाति सिंहो वय इत्युत्तरे पक्षयोरेव वीर्यं दधाति" (५।३।१ ब्रा०) इति। 'उत्तरे' 'पक्ष उपदधाति'

इत्यनुवर्त्तते । व्याघ्रसिंहयोरधिकवीर्योपेतत्वादेतेनोपधानद्वयेन पशयोर्वीर्यं स्थापयत्येव ।

अन्येन मन्त्रेणोपधेयाया स्थानं विधत्ते,—"पुरुषो वय इति मध्ये तस्मात् पुरुषः पशूनामधिपतिः" (५।२।९ अ०) इति । यस्मान्मध्यदेश उपधानमन्त्रे पुरुषशब्दोऽस्ति, 'तस्मात्' लोके 'पुरुषः' 'पशूनां' स्वामी भवति; इतरास्तु वयस्याः पशव इति युक्तम् ।

अत्र विनियोगसंग्रहः,—

तं* ध्रुविस्तु वयस्यास्तु इष्यादेकोनविंशतिः ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे तृतीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

इन्द्राग्नी अव्यथमानामिष्टकां दृंहतं युवं । पृष्ठेन द्यावापृथिवी अन्तरिक्षञ्च विबाधतां[1] । विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे व्यचस्वतीं प्रथस्वतीं भास्वतीꣳ सूरिमतीमा या द्यां भास्या पृथिवीमो-र्वन्तरिक्षमन्तरिक्षं यच्छान्तरिक्षं दृꣳहान्तरिक्षं मा हिꣳसीर्विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय वायुस्त्वाऽभिपातु मह्या स्वस्त्या छर्दिषा ॥ १ ॥

* तमिति पदं आदर्शपुस्तके नास्ति ।

शन्तमेन तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद(१) राज्ञ्यसि प्राची दिग्(२) विराडसि दक्षिणा दिक्(४) सम्राडसि प्रतीची दिक(५) स्वराडस्युदीची दिग्(६) अधिपत्यसि बृहती दिक्(७) आयुर्मे पाहि(८) प्राणं मे पाहि(९) अपानं मे पाहि(१०) व्यानं मे पाहि(११) चक्षुर्मे पाहि(१२) श्रोत्रं मे पाहि(१३) मनो मे जिन्व(१४) वाचं मे पिन्व,(१५) आत्मानं मे पाहि(१६) ज्योतिर्मे यच्छ(१७) ॥ २ ॥

छर्दिषा। पिन्व। षट् च ॥ ६ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे तृतीयप्रपाठके षष्ठोऽनुवाकः ॥ ० ॥

पञ्चमेऽनुवाके वयस्याख्या इष्टका उक्ताः। तावता द्वितीया चितिः समाप्ता। अथ षष्ठे तृतीयस्यां चितौ स्वयमातृण्णाद्या उच्यन्ते। कल्पः,—'श्वोभूते पौर्वाह्णिकीभ्यां प्रचर्य तृतीयां चितिं चिनोतीन्द्राग्नी अव्यथमानामिति स्वयमातृण्णामभिमृश्याश्वेनोपघ्राप्य' इति। पाठस्तु,—"इन्द्राग्नी अव्यथमानामिष्टकां दृꣳहतं युवं। पृष्ठेन द्यावापृथिवी अन्तरिक्षञ्च विबाधताम्(१)" इति। हे 'इन्द्राग्नी', 'युवं' (युवां) 'अव्यथमानां' (भङ्गरहितां) स्वयमातृण्णाख्याम् 'इष्टकां' 'दृंहतं' (दृढीकुरुतं)। इयञ्चेष्टका

स्वकीयेनोपरिभागेन लोकत्रयं 'विबाधता' (बाधमानेव) व्याप्नोत्वित्यर्थः।

कल्पः, 'विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठ इत्यविदुषा ब्राह्मणेन सह मध्येऽग्नेरुपदधाति' इति। पाठस्तु,—"विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे व्यचस्वतीं प्रथस्वतीं भास्वतीᳬ सूरिमतीम् आ या द्यां भास्या पृथिवीम् आ उर्व् अन्तरिक्षमन्तरिक्षं यच्छान्तरिक्षं दृᳬहान्तरिक्षं मा हिᳬसीर्विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय वायुस्त्वाऽभिपातु मह्या स्वस्त्या छर्दिषा शन्तमेन तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद[२]" इति। (विश्वानि कर्माणि यस्यासौ 'विश्वकर्मा' प्रजापतिः) हे स्वयमातृण्णे, प्रजापतिः, त्वाम् 'अन्तरिक्षस्य' 'पृष्ठे' (उपरि) 'सादयतु'। कीदृशीं?—'व्यचस्वतीं' (व्याप्तियुक्तां), 'प्रथस्वतीं' (विस्तारयुक्तां), 'भास्वतीं' (भायुक्तां), 'सूरिमतीं' (विद्वद्भिर्ऋत्विग्भिर्युक्तां), तां; 'या' इयं स्वयमातृण्णा, सा त्वं द्युलोकम् 'आ'-'भासि' (सर्वतः प्रकाशयसि)। तथा 'पृथिवीम्' 'आ'-'भासि'। 'उरु' (विस्तीर्णम्) 'अन्तरिक्षं' त्वम् 'आ'-'भासि'। तादृशी त्वम् 'अन्तरिक्षं' इदं 'यच्छ' (गन्धर्वाप्सरोगणादिधारकतया नियमय)। तथा 'अन्तरिक्षं' 'दृंह' (परोपद्रवराहित्येन दृढीकुरु)। त्वमपि तत् 'अन्तरिक्षं' 'मा हिंसीः'। 'विश्वस्मै' (सर्वस्मै) प्राणापानव्यानोदानाख्यवायुवृत्तिलाभाय, 'प्रतिष्ठायै' (स्वस्थाने प्रतिष्ठालाभाय), 'चरित्राय' (आत्मीयाचरणाय), प्राणिनामेतस्य सर्वस्य सिद्ध्यर्थं अयं 'वायुः' त्वाम् 'अभितः' 'पातु'।

केन रक्षणमिति? तदुच्यते,—'मह्या स्वस्त्या' (महत्या योगक्षेमसम्पत्त्या) 'शन्तमेन' 'छर्दिषा' (सुखकारिणा दीप्तिविशेषेण) तव स्वामिभूता या देवता, 'तया' अनुग्टहीता, 'तया' 'ध्रुवा' (स्थिरा) सती 'सीद' (इहोपविश)। 'अङ्गिरस्वत्' अङ्गिरसां चयनानुष्ठाने यथा ध्रुवा (स्थिरा) तद्वत्।

एतन्मन्त्रद्वयमाध्यमभिमर्शनपूर्वकमुपधानं विधत्ते,—"इन्द्राग्नी अव्यथमानामिति स्वयमातृण्णामुपदधातीन्द्राग्निभ्यां वा इमौ लोकौ विधृतावनयोर्लोकयोर्विधृत्यै" (५।३।२अ०) इति। यस्मादिन्द्राग्निभ्यां लोकद्वयं विधृतं, तस्मादत्रापि लोकद्वयधारणाय 'इन्द्राग्नी' इति मन्त्रः प्रयुज्यते।

प्रकारान्तरेणेन्द्राग्नी मन्त्रगतौ प्रशंसति,—"अधृतेव वा एषा यन्मध्यमा चितिरन्तरिक्षमिव वा एषेन्द्राग्नी इत्याहेन्द्राग्नी वै देवानामोजोभृतावोजसैवैनामन्तरिक्षे चिनुते धृत्यै" (५।३।२अ०) इति। अधस्तात्चितिद्वयं पूर्वमुक्तं, उपरितनन्तु चितिद्वयं वक्ष्यते, तस्मात् इयं तृतीया चितिर्मध्यमा। सा च भूमिस्पर्शाभावात् केनापि 'अधृता' वर्त्तते, अतोऽन्तरिक्षमदृशी, अतस्तस्याश्चितर्धृतिसिध्यर्थमिन्द्राग्नी इति मन्त्रं पठेत्। देवानां मध्ये ताविन्द्राग्नी बलधारिणौ, तद्बलेनैवैनामन्तरिक्षे भूमिस्पर्शमन्तरेण 'चिनुते'। भूमिस्पर्शाभावेऽपि तद्बलेन चितत्वात् धृता भवति।

पूर्वं विहितां स्वयमातृण्णामनूद्य प्रशंसति,—"स्वयमातृण्णामुपदधात्यन्तरिक्षं वै स्वयमातृण्णाऽन्तरिक्षमेवोपधत्ते" (५।३।२अ०)

इति। भूमिस्वर्गाभावादन्तरिक्षसादृश्यं। यदा तु अयम् उपधान-विधिः, तदानीमेव तदनुवादेन पूर्वोक्तो मन्त्रविनियोगो द्रष्टव्यः।

उपधानात् प्राचीनमश्वोपघ्रापणं विधत्ते,—"अश्वमुपघ्रापयति प्राणमेवास्यां दधात्यथो प्राजापत्यो वा अश्वः प्रजापतिनैवाग्निं चिनुते" (५।३।१ अ०) इति।

इष्टकागतच्छिद्रं प्रशंसति,—"स्वयमातृण्णा भवति प्राणानाम् उत्सृष्ट्या अथो सुवर्गस्य लोकस्यानुख्यात्यै" (५।३।२अ०) इति। सति हि छिद्रे श्वासोऽनुपरुद्धः सन् निर्गच्छति, आवरणाभावात्, स्वर्गोऽपि द्रष्टुं शक्यते।

कल्पः,—'राज्ञ्यसि प्राची दिगिति पञ्च दिश्याः प्रतिदिशमेकां मध्ये' इति। पाठस्तु,—"राज्ञ्यसि प्राची दिक्(३) विराडसि दक्षिणा दिक्(४) सम्राडसि प्रतीची दिक्(५) स्वराडस्युदीची दिक्(६) अधिपत्न्यसि बृहती दिक्(७)" इति। हे इष्टके, त्वं राजमाना दीप्यमाना सती 'प्राची दिक्' 'असि' (पूर्वदिग्रूपाऽसि)। 'विराट्' (विविधं राजमाना) 'दक्षिणा' 'दिक्' 'असि'। 'सम्राट्' (सम्यक् राजमाना) 'प्रतीची' 'दिक्' 'असि' 'स्वराट्' (स्वयमेव राजमाना) 'उदीची' 'दिक्' 'असि'। (अधिकं पातीति) 'अधिपत्नी', तादृशी त्वं, 'बृहती' (प्रौढा) 'ऊर्द्धा' 'दिक्' 'असि'।

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते,—"देवानां वै सुवर्गं लोकं यतां दिशः समलीयन्त त एता दिश्या अपश्यन् ता उपादधत ताभिर्वै ते दिशो दृंहन् यद्दिश्या उपदधाति दिशां विधृत्यै" (५।३।२अ०) इति। देवाः पुरा भूमौ स्थिताः, कदाचित्

स्वर्गं 'लोकं' गताः, तत्र गच्छतां 'देवानां' सम्बन्धिन्यो या भूयिष्ठा 'दिशः', 'ताः' 'समलीयन्त' (रक्षकाभावात् सम्यक् विशीर्णाः)। दिग्वर्त्तिनां प्राणिनां अस्वास्थ्यमेव दिशां विशरणम्। 'ते' तदा विचार्य, दिशां धारणसमर्था 'एता दिश्या' नामेष्टका 'अपश्यन्' । 'दिक्'-शब्दोपेतैर्मन्त्रैरुपधेया इष्टका 'दिश्याः' । तदुपधानात् 'देवानां' इव यजमानस्यापि दिशो दृढा भवन्ति।

कल्पः, 'आयुर्मे पाहीति दश प्राणभृतः पुरस्तादुपधाय' इति। पाठस्तु,—"आयुर्मे पाहि(८) प्राणं मे पाहि(९) अपानं मे पाहि(१०) व्यानं मे पाहि(११) चक्षुर्मे पाहि(१२) श्रोत्रं मे पाहि(१३) मनो मे जिन्व(१४) वाचं मे पिन्व(१५) आत्मानं मे पाहि(१६) ज्योतिर्मे यच्छ(१७)" इति। हे इष्टके, मदीयम् 'आयुः' 'पाहि' (रक्ष)। एवमुत्तरत्रापि योज्यं। 'जिन्व' (प्रीणय)। 'आत्मानं' (जीवस्वरूपं)। 'ज्योतिः' आभिः 'यच्छ' (देहि)।

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते,—"दश प्राणभृतः पुरस्ताद् उपदधाति नव वै पुरुषे प्राणा नाभिर्दशमी प्राणानेव पुरस्ताद्धत्ते तस्मात् पुरस्तात् प्राणाः" (५।३।२ अ०) इति। प्राणशब्दोपेतान् मन्त्रान् उपधानकाले बिभ्रतीति 'प्राणभृतः' । शिरसि सप्त च्छिद्राणि, अधस्ताद्द्वे, तेषु छिद्रेषु सञ्चरन्तः 'प्राणा' 'नव'-सङ्ख्याकाः, 'नाभिर्दशमी' (छिद्ररूपा), अतस्तत्रत्यप्राणेन सह 'दश' प्राणान् पूर्वस्यां दिश्युपहिताः, 'तस्मात्' लोके प्राङ्मुखस्य पुरुषस्य श्वासदृष्टिप्रसारादयः पूर्वस्यामेव दिशि भवन्ति।

चरममन्त्रे ज्योतिःशब्दं प्रशंसति,—"ज्योतिष्मतीमुत्तमामुप-

दधाति तस्मात् प्राणानां वा ज्योतिरुत्तमा" (५।३।२ब्रा०) इति। ज्योतिःशब्दयुक्तेन मन्त्रेणोपधातव्या इष्टका 'ज्योतिष्मती'। यस्मात् सा चरमा, 'तस्मात्' लोकेऽपि स्वार्थप्रकाशकत्वेन ज्योतीरूपा वाक् सर्वेषामिन्द्रियाणाम् 'उत्तमा' भवति।

सप्तमीं प्रशंसति,—"दशोपदधाति दशाक्षरा विराट् विराट् छन्दसां ज्योतिर्ज्योतिरेव पुरस्ताद्धत्ते तस्मात् पुरस्ताज्ज्योतिरुपास्महे" (५।३।२ब्रा०) इति। दीप्तिवाचिना राजतिधातुजन्येन निर्दिश्यमानत्वादियं 'विराट्' छन्दसां मध्ये 'ज्योतिः'। तथा सति तादृग्दशानां पूर्वदिश्युपधानेन ज्योतिरेव तत्र धारितं भवति। यस्मात् पूर्वस्यां दिशि ज्योतिर्धृतं, 'तस्मात्' वयं प्रातः-सन्ध्याकाले पूर्वस्यां दिशि ज्योतिर्मण्डलम् 'उपास्महे'।

अत्र विनियोगसंग्रहः,—

तृतीयस्यां चिताविन्द्रा, स्वयमातृण्णकां स्पृशेत्।
विश्वेत्युपदधात्येनां, राज्ञि* दिश्यासु पञ्चभिः।
आयुर्दश प्राणभृतो मन्त्राः सप्तदशेरिताः॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे तृतीयप्रपाठके षष्ठोऽनुवाकः॥ ०॥

---

* एवमेव सर्व्वत्र पाठः, 'राज्ञी' इति पाठो भवितुं युक्तः।

मा छन्दः प्रमा छन्दः प्रतिमा छन्दोऽस्रीविश्छन्दः पङ्क्तिश्छन्द उष्णिहा छन्दो बृहती छन्दोऽनुष्टुप्छन्दो विराट्छन्दो गायत्री छन्दस्त्रिष्टुप्छन्दो जगती छन्दः पृथिवी छन्दोऽन्तरिक्षं छन्दो द्यौश्छन्दः समाश्छन्दो नक्षत्राणि छन्दो मनश्छन्दो वाक् छन्दः कृषिश्छन्दो हिरण्यं छन्दो गौश्छन्दोऽजा छन्दोऽश्वश्छन्दः। अग्नि-र्देवता ॥१॥

वातो देवता सूर्यो देवता चन्द्रमा देवता वसवो देवता रुद्रा देवताऽऽदित्या देवता विश्वे देवा देवता मरुतो देवता बृहस्पतिर्देवतेन्द्रो देवता वरुणो देवता[१—३९] मूर्द्धासि राट् ध्रुवासि धरुणा यन्त्र्यसि यमित्रीषे त्वोर्जे त्वा कृष्यै त्वा क्षेमाय त्वा[३७—४३] यन्त्री राट् ध्रुवासि धरणी धर्त्र्यसि धरित्र्याऽऽयुषे त्वा, वर्चसे त्वौजसे त्वा बलाय त्वा[४४—५०] ॥२॥

देवता। आयुषे त्वा। षट् च ॥७॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे तृतीयप्रपाठके सप्तमोऽनुवाकः ॥७॥

षष्ठेऽनुवाके स्वयमातृणाद्या इष्टका उक्ताः। अथ सप्तमे बृहत्याख्या इष्टका उच्यन्ते। कल्पः, 'षट्त्रिंशतं बृहतीर्मा छन्द

इति द्वादश दक्षिणतः पृथिवी छन्द इति द्वादश पश्चादग्निर्देवतेति द्वादशोत्तरतः' इति। पाठस्तु,—"मा छन्दः(१) प्रमा छन्दः(२) प्रतिमा छन्दः(३) अस्रीविश्छन्दः(४) पङ्क्तिश्छन्दः(५) उष्णिहा छन्दः(६) बृहती छन्दः(७) अनुष्टुप्छन्दः(८) विराट्छन्दः(९) गायत्री छन्दः(१०) त्रिष्टुप्छन्दः(११) जगती छन्दः(१२) पृथिवी छन्दः(१३) अन्तरिक्षं छन्दः(१४) द्यौश्छन्दः(१५) समाश्छन्दः(१६) नक्षत्राणि छन्दः(१७) मनश्छन्दः(१८) वाक्छन्दः(१९) कृषिश्छन्दः(२०) हिरण्यं छन्दः(२१) गौश्छन्दः(२२) अजा छन्दः(२३) अश्वश्छन्दः(२४)। अग्निर्देवता(२५) वातो देवता(२६) सूर्यो देवता(२७) चन्द्रमा देवता(२८) वसवो देवता(२९) रुद्रा देवता(३०) आदित्या देवता(३१) विश्वे-देवा देवता(३२) मरुतो देवता(३३) बृहस्पतिर्देवता(३४) इन्द्रो देवता(३५) वरुणो देवता(३६)" इति। अत्र 'मा'-'प्रमा'-'प्रतिमा'-'ऽस्रीवि'-शब्दादयश्छन्दोविशेषाः, केचिद् वेदे प्रसिद्धाः, केचि-ल्लोकेष्वपि प्रसिद्धाः। हे इष्टके, त्वं 'मा'-नामच्छन्दोरूपाऽसि। एवं सर्वत्र योज्यम्। अग्न्यादीनां देवतात्वं तु प्रसिद्धं। हे इष्टके, त्वम् अग्निदेवतारूपासि। एवमुत्तरत्रापि योज्यम्।

एतैर्मन्त्रैरिष्टकोपधानं विधातुं प्रस्तौति,—"छन्दाꣳसि पशुष्वाजिमयुस्तान् बृहत्युदजयत्. तस्मादार्हताः पशव उच्यन्ते" (५।३।२अ०) इति। पुरा कदाचित् गायत्र्यादिच्छन्दोदेवताः परस्परं मात्सर्येण कश्चित् 'आजिं' (मर्यादां) प्राप्ताः। अहमेव पशून् स्वीकरिष्यामीति प्रतिज्ञा मर्यादा। तदानीं बृहत्याख्या छन्दोदेवता देवतान्तराणि उल्लङ्घ्य स्वयमेव 'अजयत्'। अतःसदीय-

नाम्ना 'पशवः' 'बार्हताः' इत्येवं प्रसिद्धिं गताः। यथा बृहती छन्दसां मध्ये प्रशस्ता, एवं बृहत्याख्या इष्टका अपि प्रशस्ता इति तात्पर्यार्थः।

तत एता इष्टका देशविशेषेषु विधत्ते—"मा छन्द इति दक्षिणत उपदधाति तस्माद्दक्षिणावृतो मासाः, पृथिवी छन्द इति पश्चात् प्रतिष्ठित्यै, अग्निर्देवतेत्युत्तरत ओजो वा अग्निरोज एवोत्तरतो धत्ते तस्मादुत्तरतोऽभिप्रयायी जयति" (५।३।२अ०) इति। 'मा'-शब्देन 'मासाः' उच्यन्ते। दक्षिणदिग्-विधानेन दक्षिणादिवृत्तिः, सूर्यस्य गोलकप्रदक्षिणावृत्त्या निष्पाद्य-मानत्वाच्चैत्रादिमासा 'दक्षिणावृतः'। पश्चिमदिग्युपधेयानाम् इष्टकानां मन्त्रेष्वादौ 'पृथिवी'-शब्दः पठितः, पृथिवी च सर्वस्य जगतः प्रतिष्ठा; तस्मात् तदुपधानं 'प्रतिष्ठित्यै' भवति। उदीच्यां दिशि उपधेयानामिष्टकानां मन्त्रादौ 'अग्नि'-शब्दः पठितः, अग्निश्च दाहकशक्तियुक्तत्वात् 'ओजः' इत्युच्यते, तस्मात् 'ओजः' 'एव' उदीच्यामुपहितं भवति। यस्मात् उदीच्यामग्न्यादि-देवताशक्तिरूपं 'ओजः' तिष्ठति, 'तस्मात्' उत्तराभिमुखत्वेन प्रयाणं कुर्वन् तीर्थयात्रादिजन्यपुण्योपेतत्वात् परलोकं 'जयति'।

मन्त्रपाठप्राप्तामिष्टकां प्रशंसति—"षट्त्रिꣳशत् सम्पद्यन्ते षट्-त्रिꣳशदक्षरा बृहती बार्हताः पशवो बृहत्यैवास्मै पशूनवरुन्धे बृहती छन्दसाꣳ स्वाराज्यं परीयाय यस्यैता उपधीयन्ते गच्छति स्वाराज्यम्" (५।३।२अ०) इति। बृहत्या जितत्वात् पशूनां बार्हतत्वं। ज्येष्ठत्वादेव बृहत्याः स्वाराज्यमपि।

कल्पः, 'मूर्द्धासि राड़िति सप्त बालखिल्याः पुरस्तात् प्रतीचीर्यन्त्री राड़िति सप्त पश्चात् प्राचीः' इति। पाठस्तु,—"मूर्द्धासि राट्(३७) ध्रुवासि धरुणा(३८) यन्त्र्यसि यमित्री(३९) इषे त्वा(४०) ऊर्जे त्वा(४१) रय्यै त्वा(४२) चेमाय त्वा(४३) यन्त्री राट्(४४) ध्रुवासि धरणी(४५) धर्त्र्यसि धरित्री(४६) आयुषे त्वा(४७) वर्चसे त्वा(४८) ओजसे त्वा(४९) बलाय त्वा(५०)" इति। हे इष्टके, त्वं मूर्द्धवदुत्तमा 'राट्' (राजमाना) च 'असि'। हे इष्टके, त्वं 'ध्रुवा' (स्थिरा) 'धरुणा' (धारणहेतुः) च 'असि'। हे इष्टके, त्वं 'यन्त्री' (स्वयमपि नियता), 'यमित्री' (सर्वेषां नियमनकारिणी) च 'असि'। हे इष्टके, 'इषे' (अन्नाय) त्वां उपदधामीति शेषः। 'ऊर्जे' (बलाय) त्वां उपदधामि, 'रय्यै' (सस्यनिष्पत्तये) त्वां उपदधामि, 'चेमाय' (सम्पादितस्य धनस्य रचणाय) त्वां उपदधामि। एतैः सप्तभिर्मन्त्रैः पुरस्तादुपधेयाः। हे इष्टके, त्वं 'यन्त्री' (नियमोपेता) 'राट्' (राजमाना) च 'असि'; तथा 'ध्रुवा' (स्थिरा), 'धरणी' (धारणहेतुः) च 'असि'। 'धर्त्री'* (धारणं कुर्वन्ती), 'धरित्री' (भूमिरूपा) च 'असि'। 'आयुषे' (आयुर्वृद्ध्यर्थं), 'वर्चसे' (कान्त्यर्थं), 'ओजसे' (अष्टमधातुवृद्ध्यर्थं), 'बलाय' इति प्रत्येकमन्वयि; (कार्यार्थं) त्वां उपदधामि। एतैर्मन्त्रैः पश्चिमायां दिश्युपधानम्।

तेरेतैस्त्रयविधैर्मन्त्रैः साध्यमुपधानं विधत्ते,—"सप्त बालखिल्याः

---

* अत्र धरित्री इति वर्त्मन पाठो न सम्यक्।

पुरस्तादुपदधाति सप्त पश्चात् सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चौ प्राणानाᳪ सवीर्यत्वाय" (५।२।२ ब्रा०) इति। बालखिल्यनामकैर्मुनिभिरादौ दृष्टत्वात् इष्टका अपि बालखिल्याख्याः। इष्टकागतया सप्तसङ्ख्यया शीर्षण्यच्छिद्रसाम्यं; पुरस्तात् एकं सप्तकं, पश्चात् एकं सप्तकमिति सप्तकयोर्द्वित्वादधोदेशवर्त्तिच्छिद्रद्वयसाम्यम्, अतः सर्वेषां 'प्राणानां' 'सवीर्यत्वाय' इदमुपधानम्।

सप्तकद्वये मन्त्रविभागं विधत्ते,—"मूर्द्धासि राडिति पुरस्ताद् उपदधाति, यन्त्री राडिति पश्चात्, प्राणानेवास्मै समीचो दधाति" (५।२।२ ब्रा०) इति। सप्तकद्वयस्थानां प्राणानां परस्पराभिमुख्ये सम्यक्त्वं सम्पद्यते। सम्यक्त्वं नाम स्वस्वव्यापारक्षमत्वम्॥

अत्र विनियोगसंग्रहः,—

मा, दक्षिणस्यां बृहतीः, पृथि, पश्चादथोत्तरा।
अग्निरित्यादिकाः सर्वा द्वादश द्वादशोदिताः॥
मूर्द्धा, यन्त्री, बालखिल्याः पुरः पश्चाच्च सप्तभिः।
सप्तमे त्वनुवाकेऽस्मिन् मन्त्राः पञ्चाशदीरिताः॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये चतुर्थकाण्डे द्वितीयप्रपाठके सप्तमोऽनुवाकः॥ ७॥

आयुः, त्रिवृद्भ्रान्तः पञ्चदशो व्योम सप्तदशः प्रतूर्तिरष्टादशस्तपो नवदशोऽभिवर्त्तः सविꣳशो धरुण एकविꣳशो वर्चो द्वाविꣳशः सम्भरणस्त्रयोविꣳशो योनिश्चतुर्विꣳशो गर्भाः पञ्चविꣳश ओजस्त्रिणवः क्रतुरेकत्रिꣳशः प्रतिष्ठा त्रयस्त्रिꣳशो ब्रध्नस्य विष्टपं चतुस्त्रिꣳशो नाकः षट्त्रिꣳशो विवर्त्तोऽष्टाचत्वारिꣳशो धर्त्रश्चतुष्टोमः(१—१८) ॥ १ ॥

आयुः । सप्तत्रिꣳशत् ॥ ८ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे तृतीयप्रपाठके अष्टमोऽनुवाकः ॥ ० ॥

सप्तमेऽनुवाके वृहत्याद्या इष्टका अभिहिताः । तावता तृतीया चितिः समाप्ता । अथाष्टमे चतुर्थ्यां चितौ अक्षणयास्तोमीयाख्येष्टकासु काश्चिदुच्यन्ते । कल्पः, 'आभूते पौर्वाह्णिकीभ्यां प्रचर्य चतुर्थीं चितिं चिनोत्याशुस्त्रिवृदग्नेर्भागोऽसीत्येताभ्यामनुवाकाभ्यां यथा ब्राह्मणमुपधाय' इति । तत्राद्यनुवाकपाठस्तु,—"आशुस्त्रिवृत्(१) भान्तः पञ्चदशो(२) व्योम सप्तदशः(३) प्रतूर्त्तिरष्टादशः(४) तपो नवदशः(५) अभिवर्त्तः सविꣳशो(६) धरुण एकविꣳशो(७) वर्चो द्वाविꣳशः(८) सम्भरणस्त्रयोविꣳशः(९) योनिश्चतुर्विꣳशः(१०)

गर्भाः पञ्चविꣳशः(११) ओजस्त्रिणवः(१२) क्रतुरेकत्रिꣳशः(१३) प्रतिष्ठा त्रयस्त्रिꣳशः(१४) ब्रध्नस्य विष्टपं चतुस्त्रिꣳशः(१५) नाकः षट्त्रिꣳशः(१६) विवर्तोऽष्टाचत्वारिꣳशः(१७) धर्त्रश्चतुष्टोमः(१८)" इति।

अत्र त्रिवृत्पञ्चदशसप्तदशाष्टादशनवदशादिशब्दाः स्तोमविशेषवाचिनः। स्तोमाश्च हृचनिष्ठस्य साम्न आवृत्तिभेदान्निष्पद्यन्ते। आवृत्तिप्रकारस्तु त्रिवृत्पञ्चदशसप्तदशानां 'समिधमातिष्ठति' इत्यस्मिन्ननुवाके सामब्राह्मणोदाहरणेनास्माभिर्व्याख्यातः; एकविꣳश-त्रिणव-त्रयस्त्रिꣳशाख्या अपि स्तोमाः सामब्राह्मणे निरूपिताः; अष्टादश-नवदशादयस्तु न्यायेनोन्नेयाः उपस्तोमाः, ते तु ब्राह्मणे आम्नाताः, तदुन्नयनार्थस्तावृत्तिप्रकारः सामसूत्रादवगन्तव्यः; अत्र त्रिवृदादयश्चतुष्टोमान्ता अष्टादशसङ्ख्याकाः स्तोमविशेषा आम्नाताः। 'आशुः' 'भान्तः'—इत्यादीनि स्तोमविशेषणानि, तत्र कानिचिद्गुणवाचीनि कानिचिद्द्रव्यवाचीनि, तथा सति गुणसम्बन्धद्रव्यतादात्म्यं स्तोमेषूपचर्य तत्तत्स्तोमरूपत्वं तत्तदिष्टकायाः प्रशंसार्थमुपन्यस्यते। तत्रैवमक्षरयोजना,—'आशुः' (शीघ्रगुणोपेतः) 'त्रिवृत्'-स्तोमः; हे इष्टके, तद्रूपा त्वमसि। एवमुत्तरत्रापि योज्यं। 'भान्तः' (भासमानः), 'व्योम' (प्रसिद्धं व्योम)। (प्रकृष्टा तूर्त्तिः [त्वरा] यस्यासौ) 'प्रतूर्त्तिः' शीघ्रकारिणीत्यर्थः। 'तपः' प्रसिद्धं, 'अभिवर्त्तः' सामविशेषः। (सह विंशत्या सङ्ख्या वर्त्तते इति) 'सविंशः' स्तोमविशेषः। 'धरुणः' धारकः। 'वर्चः' बलहेतुः। 'सम्भरणः' सम्यक् पोषकः। 'योनिः' प्रशोत्पादकः। 'गर्भाः' प्रसिद्धाः। 'ओजः' अष्टमो धातुः।

'क्रतुः' ज्योतिष्टोमादिः। 'प्रतिष्ठा' स्थितिहेतुः। 'ब्रध्नस्य' आदित्यस्य; 'विष्टपं' निवासस्थानं 'असौ वा आदित्यो ब्रध्नः' इति श्रुत्यन्तरात्। 'नाकः' स्वर्गाख्या भोगभूमिः। विपरीतत्वेन वर्त्तनं यस्यासौ 'विवर्त्तः'। त्रिवृत्पञ्चदश-सप्तदशैकविंश-त्रिणव-त्रयस्त्रिंशा अनेनैवाम्नातक्रमेण क्वचिदनुष्ठीयन्ते, क्वचित्तु विपरीतक्रमेण; अत एव सूत्रकारेण क्वचिदुक्तं,—'त्रयस्त्रिंशारम्भणास्त्रिवृदुत्तमाः' इति। 'धर्त्रः' धारकः। 'चतुष्टोमः' त्रिवृत्पञ्चदशसप्तदशैकविंशानां समूहः। एतैः स्तोमवाचिभिरष्टादशभिर्मन्त्रैः स्तोमरूपत्वमापादिता अष्टादशेष्टका उपदध्यात्।

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते,—"देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एता अक्ष्णयास्तोमीया अपश्यन् ता अन्यथाऽनूच्यान्यथोपादधत तदसुरा नान्ववायन् ततो देवा अभवन् परासुरा यदक्ष्णयास्तोमीया अन्यथाऽनूच्यान्यथोपदधाति भ्रातृव्याभिभूत्यै भवत्यात्मना परास्य भ्रातृव्यो भवति" (५।३।३अ०) इति। पुरा कदाचित् देवसाम्यं प्राप्तुं 'असुरा' देवसमीपे गूढचारिणं पुरुषमवस्थाप्य तन्मुखेनावगत्य 'देवा' 'यज्ञे' 'यत्' (यत् अङ्गम्) अकुर्वन्, 'तत्' सर्वं स्वयमपि तथैवानुष्ठितवन्तः। ततोऽसुरान् वञ्चयितुं 'देवा' 'अक्ष्णयास्तोमीयाख्या' 'एता' इष्टका 'अपश्यन्'। स्तोमवाचिशब्दोपेतैर्मन्त्रैरुपधेयत्वात् 'स्तोमीयाः', तथापि मन्त्रपाठक्रममुल्लङ्घ्य वक्रत्वेनानुष्ठेयत्वात् 'अक्ष्णयास्तोमीयाः'। कथं वक्रत्वमिति ?—तदुच्यते,—'अन्यथा' मन्त्रानुवचनम्, 'अन्यथा' इष्टकोपधानमिति वक्रत्वं। 'भ्रातृ;

पञ्चदशः' इत्ययम् अनुवचने द्वितीयो मन्त्रः; उपधाने तुरीयः। 'व्योम सप्तदशः' इत्यनुवचने तृतीयो मन्त्रः, उपधाने तु द्वितीयः। एवं सर्वत्र वक्रत्वं द्रष्टव्यं। तदानीं गूढचारी विभ्रान्तः, तन्मुखादनवगतशब्दा 'असुरा' अपि देवान् अनुगन्तुं नाशक्नुवन्। ततोऽसुराणां पराभवो देवानां जयश्चाभोत्। तस्मात् यजमानोऽपि तथैव उपदध्यात्, तदुपधानं भ्रातृव्यस्याभिभूत्यै स्वस्य जयाय च सम्पद्यते।

तदेवं सामान्याकारेण विधाय विशेषाकारेण प्रथमं मन्त्रं विनियुङ्क्ते,—"आशुस्त्रिवृदिति पुरस्तादुपदधाति यज्ञमुखं वै त्रिवृद् यज्ञमुखमेव पुरस्ताद्वियातयति" (५।३।२अ०) इति। स्तोमानां मध्ये प्रथमभावित्वात् त्रिवृतो यज्ञमुखत्वं। तन्मन्त्रेणोपधानेन पूर्वस्यां दिशि यज्ञमुखं प्रसारयति।

अथानुवचने तृतीयं मन्त्रं विनियुङ्क्ते,—"व्योम सप्तदश इति दक्षिणतोऽन्नं वै व्योमान्नꣳ सप्तदशोऽन्नमेव दक्षिणतो धत्ते तस्माद् दक्षिणेनान्नमद्यते" (५।३।२अ०) इति। व्योमवदाकाशवद्बहुले क्षेत्रे बहुधान्यनिष्पत्तेर्व्योम्नोऽन्नत्वं। सप्तदशस्तोमस्यान्नसम्पादकैर्वैश्यैः सह प्रजापतेर्मध्यदेशादुत्पन्नत्वादन्नत्वं। यस्मादीदृशेन मन्त्रेण दक्षिणस्यां दिश्युपधानं तद्दिशि अन्नोपधानतुल्यं, 'तस्मात्' लोकेऽपि दक्षिणेन हस्तेनान्नं भुज्यते।

अथ सप्तमं मन्त्रं विनियुङ्क्ते,—"धरुण एकविꣳश इति पश्चात् प्रतिष्ठा वा एकविꣳशः प्रतिष्ठित्यै" (५।३।२अ०) इति। सामिधेनीप्रकरणे एकविंशस्तोमानां प्रतिष्ठेत्याम्नातत्वादस्य प्रतिष्ठात्वम्।

अथ द्वितीयं मन्त्रं विनियुङ्क्ते,—"भान्तः पञ्चदश इत्युत्तरत ओजो वै भान्त ओजः पञ्चदश ओज एवोत्तरतो धत्ते तस्मात् उत्तरतोऽभिप्रयायी जयति" (५।३।३अ०) इति । भासमस्य ओजःकार्यत्वादोजस्त्वम् । अन्यत्र 'पञ्चदशो वज्रः' इत्याम्नातत्वात् ओजोवद्बलहेतुत्वादोजस्त्वं ।

अथ चतुर्थं मन्त्रं विनियुङ्क्ते,—"प्रतूर्त्तिरष्टादश इति पुरस्तादुपदधाति द्वौ त्रिवृतावभिपूर्वं यज्ञमुखे वियातयति" (५। ३।३अ०) इति । अष्टादशस्तोमस्य पूर्वोत्तरभागयोर्नवसङ्ख्योपेतत्वात् द्वौ त्रिवृतौ सम्पद्येते । तौ च 'अभिपूर्वम्' (अनुक्रमेण) 'यज्ञमुखे' प्रसारयति ।

अथ षष्ठं मन्त्रं विनियुङ्क्ते,—"अभिवर्त्तः सविंꣳश इति दक्षिणतोऽन्नं वा अभिवर्त्तोऽन्नं सविंꣳशोऽन्नमेव दक्षिणतो धत्ते तस्मात् दक्षिणेनान्नमद्यते" (५।३।३अ०) इति । अभिवर्त्तमानोऽन्नसाधनत्वादन्नत्वं । विंꣳशस्तोमस्य दशसङ्ख्याकद्वयोपेतस्य विराड्द्वारा अन्नत्वम् ।

अथाष्टमं मन्त्रं विनियुङ्क्ते,—"वर्चो द्वाविंꣳश इति पश्चाद् यद्विंꣳशतिर्द्वे तेन विराजौ यद् द्वे प्रतिष्ठा तेन विराजोरेवाभिपूर्वमन्नाद्ये प्रतितिष्ठति" (५।३।३अ०) इति । द्वाविंशतिसङ्ख्यामध्ये या 'विंशतिः', 'तेन' (विंशतिसङ्ख्याविशेषेण) दशसङ्ख्योपेते 'द्वे' 'विराजौ' सम्पद्येते । विंशतेरुपरि 'यत्' 'द्वे' (या द्विसङ्ख्याविशेषेण) पादयोरिव प्रतिष्ठाहेतुत्वात्, 'प्रतिष्ठा', 'तेन' (तादृशद्विसङ्ख्याविशेषेण) तथा सति 'विराजोः' सम्बन्धिन्येव अन्नाद्ये क्रमेण प्रतिष्ठितो भवति ।

अथ नवमं मन्त्रं विनियुङ्क्ते,—"तपो नवदश इत्युत्तरतस्तस्मात् सव्यो हस्तयोस्तपस्वितरः" (५।२।१अ०) इति। यस्मात् उदीच्यां दिशि 'तपः' इति मन्त्रः प्रवर्त्तते,* 'तस्मात्' उत्तरदिग्वर्त्ती वामहस्तो द्वयोर्हस्तयोर्मध्ये अतिशयेन तपस्वी, दक्षिणहस्तवद्भोजनग्रासभावात्, अनशनस्य तपोरूपत्वात्।

अथ दशमं मन्त्रं विनियुङ्क्ते,—"योनिश्चतुर्विꣳश इति पुरस्तादुपदधाति चतुर्विꣳशत्यक्षरा गायत्री गायत्री यज्ञमुखं यज्ञमुखमेव पुरस्ताद्वियातयति" (५।२।१अ०) इति। प्रातःसवने प्रवृत्ते यद्गायत्र्या यज्ञमुखत्वम्।

अथैकादशं मन्त्रं विनियुङ्क्ते,—"गर्भाः पञ्चविꣳश इति दक्षिणतोऽन्नं वै गर्भा अन्नं पञ्चविꣳशोऽन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनान्नमद्यते" (५।३।१अ०) इति। गर्भाणामन्नकार्यत्वादन्नं, पञ्चविꣳशस्यान्नहेतुत्वादन्नम्।

अथ द्वादशं मन्त्रं विनियुङ्क्ते,—"ओजस्त्रिणव इति पश्चादिमे वै लोकास्त्रिणव एष्वेव लोकेषु प्रतितिष्ठति" (५।३।१अ०) इति। त्रिणवे त्रिसङ्ख्याया विद्यमानत्वात् लोकत्रयरूपत्वम्।

अथ नवमं मन्त्रं विनियुङ्क्ते,—"सम्भरणस्त्रयोविꣳश इत्युत्तरतस्तस्मात् सव्यो हस्तयोः सम्भार्यतरः" (५।३।१अ०) इति। सम्यग्भरणीयं भिक्षापात्रादिकं येन वामहस्तेन, सोऽयं 'सम्भार्यतरः', स च अतिशयेन हस्तयोरुभयोर्मध्ये धार्यं धारयति।

अथ त्रयोदशं मन्त्रं विनियुङ्क्ते,—"क्रतुरेकत्रिꣳश इति

---

* प्रवर्त्तके इति सर्व्वत्र पाठो न सम्यक्।

पुरस्तादुपदधाति वाग् वै क्रतुर्यज्ञमुखं वाक् यज्ञमुखमेव पुरस्ताद् वियातयति" (५।३।२ब्रा०) इति। मन्त्रनिष्पाद्यत्वात् क्रतोर्वाग्-रूपत्वं, सा च 'वाक्' यज्ञस्य 'मुखं', प्रथमं मन्त्रमुच्चार्य पश्चा-दनुष्ठेयत्वात्।

अथ पञ्चदशं मन्त्रं विनियुङ्क्ते,—"ब्रध्नस्य विष्टपं चतुस्त्रिꣳश इति दक्षिणतोऽसौ वा आदित्यो ब्रध्नस्य विष्टपं ब्रह्मवर्चसमेव दक्षिणतो धत्ते तस्माद्दक्षिणोऽर्द्धो ब्रह्मवर्चसितरः" (५।३।२ब्रा०) इति। यद्यप्यादित्य एव 'ब्रध्नः', 'विष्टपं' तु तस्य निवासस्थानं, तथाप्यत्राभेद उपचर्यते। दक्षिणस्याम् आदित्यमन्त्रेणोपधानात् दक्षिणहस्तो ब्रह्मवर्चसाधिकः। यद्वैदिकहोमपूजादिकं धारयति, 'तस्मात्' दक्षिणभाग एवातिशयेन ब्रह्मवर्चसयुक्तः; अत एव आशीर्वादादौ स एव प्रसक्तः।

अथ चतुर्दशं मन्त्रं विनियुङ्क्ते,—"प्रतिष्ठा त्रयस्त्रिꣳश इति पश्चात् प्रतिष्ठित्यै" (५।३।२ब्रा०) इति। मन्त्रगतेनैव प्रतिष्ठा-शब्देन प्रतिष्ठा सूचिता।

अथ षोडशं मन्त्रं विनियुङ्क्ते,—"नाकः षट्त्रिꣳश इत्युत्तरतः सुवर्गो वै लोको नाकः सुवर्गस्य लोकस्य समष्ट्यै" (५।३।२ब्रा०) इति। नाकशब्दार्थः प्रसिद्ध एव।

अत्र विनियोगसंग्रहः,—

आशुरष्टादशाद्ध्याद्दक्षिणयास्तोमसंयुता इति।

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्ण-यजुःसंहिताभाष्ये चतुर्थकाण्डे तृतीयप्रपाठके अष्टमोऽनुवाकः॥८॥

अग्नेर्भागोऽसि दीक्षाया आधिपत्यं ब्रह्म स्पृतं त्रिवृत्स्तोमः[१] इन्द्रस्य भागोऽसि विष्णोराधिपत्यं क्षत्रꣳ स्पृतं पञ्चदशः स्तोमः[२] नृचक्षसां भागोऽसि धातुराधिपत्यं जनित्रꣳ स्पृतꣳ सप्तदशः स्तोमः[३] मित्रस्य भागोऽसि वरुणस्याधिपत्यं दिवो वृष्टिर्वाता स्पृता एकविꣳशः स्तोमः[४] अदित्यै भागोऽसि पूष्ण आधिपत्यमोजः स्पृतं त्रिणवः स्तोमः[५] वसूनां भागोऽसि ॥

॥ १ ॥

रुद्राणामाधिपत्यं चतुष्पात्स्पृतं चतुर्विꣳशः स्तोमः[६] आदित्यानां भागोऽसि मरुतामाधिपत्यं गर्भाः स्पृताः पञ्चविꣳशः स्तोमः[७] देवस्य सवितुर्भागोऽसि बृहस्पतेराधिपत्यꣳ समीचीर्दिशः स्पृताश्चतुष्टोमः स्तोमः[८] यावानां भागोऽस्ययावानामाधिपत्यं प्रजा स्पृताश्चतुश्चत्वारिꣳशः स्तोमः[९] ऋभूणां भागोऽसि विश्वेषां देवानामाधिपत्यं भूतं निशान्तꣳ स्पृतं त्रयस्त्रिꣳशः स्तोमः[१०] ॥ २ ॥

वसूनां भागोऽसि । षट्चत्वारिꣳशच्च ॥ ९ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे तृतीयप्रपाठके नवमोऽनुवाकः ॥०॥

अष्टमेऽनुवाके काश्चिदक्ष्णयास्तोमीयाख्या इष्टका उक्ताः। अथ नवमेऽवशिष्टास्ता उच्यन्ते। तासामवशिष्टानामिष्टकानां मन्त्रेषु प्रथमं मन्त्रमाह,—"अग्नेर्भागोऽसि दीक्षाया आधिपत्यं ब्रह्म स्पृतं त्रिवृत्स्तोमः(१)" इति। हे इष्टके, योऽयम् 'अग्नेर्भागः' (हविर्लक्षणः), यच्च 'दीक्षाया' 'आधिपत्यं' (स्वामित्वं), 'स्पृतं' 'ब्रह्म' (देवानां प्रीतिकरं मन्त्रजातं ब्राह्मणजातिर्वा), योऽपि त्रिवृदाख्यः स्तोमविशेषः; तत्सर्वं त्वम् 'असि'।

अथ द्वितीयं मन्त्रमाह,—"इन्द्रस्य भागोऽसि विष्णोराधिपत्यं क्षत्रꣳ स्पृतं पञ्चदशः स्तोमः(२)" इति। हे इष्टके, योऽयम् 'इन्द्रस्य भागः' (हविर्विशेषः), यच्च 'विष्णोः' (परमेश्वरस्य) 'आधिपत्यं', यदपि 'स्पृतं' (प्रीतिहेतुं) 'क्षत्रं' (बलं क्षत्रियजातिर्वा), योऽपि पञ्चदशाख्यः 'स्तोमः'; तत्सर्वं त्वम् 'असि'।

अथ तृतीयं मन्त्रमाह,—"नृचक्षसां भागोऽसि धातुराधिपत्यं जनित्रꣳ स्पृतꣳ सप्तदशः स्तोमः(३)" इति। ये मनुष्याः सन्तः चक्षते (वेदं व्यक्तमुच्चारयन्ति), ते 'नृचक्षसः' (ऋत्विगादयः); तेषां 'भागः' दक्षिणारूपो गवादिः, 'धातुः' प्रजापतेर्यत् 'आधिपत्यं', यच्च 'स्पृतं' (प्रीतिकरं) 'जनित्रं' (जननशीलम् अन्नं) यो हि सप्तदशाख्यः स्तोमविशेषः; तत् सर्वं त्वम् 'असि'।

अथ चतुर्थं मन्त्रमाह,—"मित्रस्य भागोऽसि वरुणस्याधिपत्यं दिवो वृष्टिर्वाताः स्पृता एकविꣳशः स्तोमः(४)" इति। प्रीतिहेतवः 'वाताः' (वायुविशेषाः) 'दिवः' सकाशादागताः; 'वृष्टिः' च।

अथ पञ्चमं मन्त्रमाह,—"अदित्यै भागोऽसि पूष्ण आधिपत्यमोजः स्पृतं त्रिणवः स्तोमः(५)" इति। 'ओजः' (बलम् अष्टमधातुर्वा)।

अथ षष्ठं मन्त्रमाह,—"वसूनां भागोऽसि रुद्राणामाधिपत्यं चतुष्पात् स्पृतं चतुर्विंशः स्तोमः(६)" इति। 'चतुष्पात्' (गवाश्वादिः)।

अथ सप्तमं मन्त्रमाह,—"आदित्यानां भागोऽसि मरुतामाधिपत्यं गर्भा स्पृताः पञ्चविꣳशः स्तोमः(७)" इति। 'गर्भाः' द्विपदां चतुष्पदां चोदरगताः।

अथाष्टमं मन्त्रमाह,—"देवस्य सवितुर्भागोऽसि बृहस्पतेराधिपत्यꣳ समीचीर्दिशः स्पृताश्चतुष्टोमः स्तोमः(८)" इति। यासु दिक्ष्ववस्थिताः प्राणिनोऽनुकूलाः ता 'दिशः' समीच्यः ता एव 'स्पृताः'।

अथ नवमं मन्त्रमाह,—"यावानां भागोऽस्ययावानामाधिपत्यं प्रजाः स्पृताश्चतुश्चत्वारिꣳशः स्तोमः(९)" इति। युतौ (मिश्रीभवतः) शुक्लकृष्णपक्षौ अत्रेति 'यावाः' मासाः। अतथाविधत्वात् 'अयावाः' अर्द्धमासाः।

अथ दशमं मन्त्रमाह,—"ऋभूणां भागोऽसि विश्वेषां देवानामाधिपत्यं भूतं निशान्तꣳ स्पृतं त्रयस्त्रिꣳशः स्तोमः(१०)" इति। ऋभुशब्दो देवसामान्यवाची। गणविशेषो विश्वे-देवाः। 'भूतं' निष्पन्नं। 'निशान्तं' गृहं।

एतैर्मन्त्रैरुपधेयासु अक्ष्णयास्तोमीयासु इष्टकासु मन्त्रविशेषेषु देशविशेषेषु च सहोपधानं विधीयते।

तत्र प्रथममन्त्रं विनियुङ्क्ते,—"अग्नेर्भागोऽसीति पुरस्तादुप-दधाति यज्ञमुखं वा अग्निर्यज्ञमुखं दीक्षा यज्ञमुखं ब्रह्म यज्ञ-मुखं त्रिवृद् यज्ञमुखमेव पुरस्ताद्विधातयति" (५।३।३ ब्रा०) इति। प्रथमम् आहितेऽग्नौ पश्चाद्यज्ञस्य प्रवृत्तेरग्निः 'यज्ञमुखं'। सोमयागस्य दीक्षोपक्रमत्वाद् दीक्षाया यज्ञमुखत्वं। यज्ञस्य ऋत्विग्वरणपूर्वकत्वात् आर्त्विज्यस्य च ब्राह्मणधर्मत्वात् ब्राह्मण-जातिः 'यज्ञमुखं'। स्तोत्राणां मध्ये प्रथमस्तोत्रस्य बहिष्पवमानस्य त्रिवृत्स्तोमेन निष्पाद्यमानत्वात् त्रिवृतो यज्ञमुखत्वं। अनेन मन्त्रेणोपधाने 'यज्ञमुखं' सर्वं 'पुरस्तात्' प्रसारयति।

अथ द्वितीयं मन्त्रं विनियुङ्क्ते,—"नृचक्षसां भागोऽसीति दक्षिणतः शुश्रुवांसो वै नृचक्षसोऽन्न धाता जातायैवास्मै अन्नमपि दधाति तस्माज्जातोऽन्नमत्ति जनित्रꣳ स्पृतꣳ सप्तदशः स्तोम इत्याहान्नं वै जनित्रमन्नꣳ सप्तदशोऽन्नमेव दक्षिणतो धत्ते तस्मात् दक्षिणेनान्नमद्यते" (५।३।३ ब्रा०) इति। वेदशास्त्रपारं-गताः 'शुश्रुवांसः' एव 'नृचक्षाः'-शब्देनाभिधीयन्ते, चष्टे व्यक्तं ब्रूते इति 'चक्षसः', नरस्य ते चक्षस इति 'नृचक्षसः'; यस्मा-न्नृषु मनुष्येषु मध्ये चक्षसो (व्यक्तं वक्तारः)। धातुरन्नोत्पादकत्वा-दन्नत्वं, अतो मन्त्रे धातृशब्दपाठेनोत्पन्नाय यजमानाय 'अन्नं' सम्पादयति। तस्मिन् मन्त्रे 'जनित्रम्' इत्याद्युत्तरभागमपि ब्रूयात्। जायत इति व्युत्पत्त्या जनित्रशब्दोऽन्नवाची। सप्तदश-स्तोमस्य अन्नकारणत्वादन्नत्वं। एवं सति कृत्स्नमपि 'अन्नं' दक्षिणस्यां

दिशि सम्पादयति। यस्मात् दक्षिणदिशोऽन्नभागित्वं, 'तस्मात्' दक्षिणहस्तेनान्नं भुङ्क्ते।

अथ चतुर्थं मन्त्रं विनियुङ्क्ते,—"मित्रस्य भागोऽसीति पश्चात् प्राणो वै मित्रोऽपानो वरुणः प्राणापानावेवास्मिन् दधाति दिवो वृष्टिर्वाताः स्पृता एकविंशस्तोम इत्याह प्रतिष्ठा वा एकविंशः प्रतिष्ठित्यै" (५।२।३अ०) इति। मित्रावरुणयोः प्राणापानाभिमानित्वात् तद्रूपत्वं। तस्य मन्त्रस्योत्तरभागे सर्वस्तोमप्रतिष्ठारूपस्य एकविंशस्याभिधानं 'प्रतिष्ठित्यै' सम्पद्यते।

अथ द्वितीयं मन्त्रं विनियुङ्क्ते,—"इन्द्रस्य भागोऽसीत्युत्तरत ओजो वा इन्द्र ओजो विष्णुरोजः क्षत्रमोजः पञ्चदश ओज एवोत्तरतो धत्ते तस्मादुत्तरतोऽभिप्रयायी यजति" (५।२।३अ०) इति। इन्द्रादीनां बलवत्त्वात् ओजोरूपत्वं। ततः सर्वमपि 'ओजः' उदीच्यां दिशि स्थापितं भवति। ओजोयुक्तत्वादेव उत्तरदिग्गामी तीर्थयात्रादिपुण्येन स्वर्गं 'जयति'।

अथ षष्ठं मन्त्रं विनियुङ्क्ते,—"वसूनां भागोऽसीति पुरस्तादुपदधाति यज्ञमुखं वै वसवो यज्ञमुखꣳ रुद्रा यज्ञमुखं चतुर्विꣳशो यज्ञमुखमेव पुरस्ताद्वियातयति" (५।२।३अ०) इति। 'वसूनां' प्रातःसवनाभिमानित्वात् यज्ञमुखत्वं। प्रातःसवनाभिमानित्वञ्च छन्दोगा आमनन्ति, 'ब्रह्मवादिनो वदन्ति यद् वसूनां प्रातःसवनम्' इति। 'रुतं' (शब्दं मन्त्ररूपं) द्रवयन्ति'*

---

* द्रावयन्ति इति का० ह० पु० पाठः।

इति 'रुद्राः', तथा सति रुद्रप्रवर्त्तितमन्त्रपूर्वकत्वात् यज्ञस्येति रुद्राणां यज्ञमुखत्वोपचारः। 'चतुर्विंशः'* चतुश्चत्वारिंशाष्टाचत्वारिंशद्रूपेषु स्तोमेषु प्रथमत्वाच्चतुर्विंशस्य यज्ञस्य यज्ञमुखत्वम्।

अथ सप्तमं मन्त्रं विनियुङ्क्ते,—"आदित्यानां भागोऽसीति दक्षिणतोऽन्नं वा आदित्या अन्नं मरुतोऽन्नं गर्भा अन्नं पञ्चविंशोऽन्नमेव दक्षिणतो धत्ते तस्मात् दक्षिणेनान्नमद्यते" (५।३।३अ०) इति।

"आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः"। (मनु०) इत्यन्नहेतुत्वादादित्यानामन्नत्वं। मरुतां वैश्यरूपत्वेनान्नसम्पादकत्वादन्नत्वं। गर्भाणामन्नकार्यत्वादन्नत्वं। पञ्चविंशस्तोमस्य शास्त्रसिद्धान्नहेतुत्वादन्नत्वम्।

अथ पञ्चमं मन्त्रं विनियुङ्क्ते,—"अदित्यै भागोऽसीति पश्चात् प्रतिष्ठा वा अदितिः प्रतिष्ठा पूषा प्रतिष्ठा त्रिणवः प्रतिष्ठित्यै" (५।३।३अ०) इति। 'अदितिः' भूमिः, सा च निवासहेतुत्वात् 'प्रतिष्ठा'। पूष्णः पोषकत्वेन प्रतिष्ठात्वं। त्रिणवस्तोमस्य शास्त्रसिद्धं प्रतिष्ठात्वम्।

अथाष्टमं मन्त्रं विनियुङ्क्ते,—"देवस्य सवितुर्भागोऽसीत्युत्तरतो ब्रह्म वै देवः सविता ब्रह्म बृहस्पतिर्ब्रह्म चतुष्टोमो ब्रह्मवर्चसमेवोत्तरतो धत्ते तस्मादुत्तरोऽर्द्धो ब्रह्मवर्चसितरः सावित्रवती भवति प्रसूत्यै तस्माद् ब्राह्मणानामुदीचो सनिः प्रसूता" (५।३।

* एवमेव सर्व्वत्र पाठः। चतुर्विंश-इति पाठो भवितुं युक्तः।

४ अ०) इति। प्रातःसन्ध्यादौ ब्राह्मणैरुपास्यत्वात् सवितुः ब्रह्मत्वं। वृहस्पतेर्ब्राह्मणजात्यभिमानित्वाद् ब्रह्मत्वं। तच्च, 'ब्रह्म वै देवानां वृहस्पतिः' इति श्रुत्यन्तरादवगम्यते। चतुष्टोमस्य शास्त्रसिद्धं ब्रह्मत्वं। सवितृप्रतिपादको मन्त्रः सावित्रः, तेन मन्त्रेणोपहितेष्टका 'सावित्रवती', अतः सा प्रसवाय सम्पद्यते। यस्माद् ब्रह्मरूपसवितृप्रतिपादकमन्त्रेण साध्या इष्टका उत्तरस्यां दिशि उपहिता, 'तस्मात्' 'ब्राह्मणानां' 'उदीची' 'सनिः' 'प्रसूता' (उत्तरस्यां दिशि यज्ञभिक्षादिरूपा याच्ञा शास्त्रेणाभ्यनुज्ञाता)। विन्ध्यस्योत्तरभागे हि पुण्यभूमौ शुद्धा ब्राह्मणा वर्त्तन्ते, तस्मात् तत्र प्रतिग्रहः प्रशस्तः।

पूर्वानुवाकाम्नातौ सप्तदशाष्टादशमन्त्रावितः पूर्वं न विनियुक्तौ। तत्राष्टादशं मन्त्रं विनियुङ्क्ते,—"धर्त्रश्चतुष्टोम इति पुरस्तादुपदधाति यज्ञमुखं वै धर्त्रो यज्ञमुखं चतुष्टोमो यज्ञमुखमेव पुरस्ताद्वियातयति" (५।३।२अ०) इति। 'धर्त्रः' (धारयिता) 'अग्निष्टोमः', स च सोमयागानां प्रथमभावित्वात् 'यज्ञमुखं'। 'चतुष्टोमः' तस्य यज्ञभूतत्रिवृदाद्यात्मकत्वात् 'यज्ञमुखत्वम्'।

अथ प्रकृतानुवाकगतं नवमं मन्त्रं विनियुङ्क्ते,—"यावानां भागोऽसीति दक्षिणतो मासा वै यावा अर्द्धमासा अयावाः तस्माद्दक्षिणावृता मासा अन्नं वै यावा अन्नं प्रजा अन्नमेव दक्षिणतो धत्ते तस्मात् दक्षिणेनान्नमद्यते" (५।३।२अ०) इति। भोलोकस्य प्रादक्षिण्येन सञ्चरता आदित्येन सम्पाद्यत्वान्मासानां

दक्षिणात्वत्त्वं। यावच्छब्दवाच्यानां मासानां कालरूपाणामन्नपाक-हेतुत्वादन्नत्वं। प्रजानामन्नभोक्तृत्वादन्नत्वम् ।

अथ दशमं मन्त्रं विनियुङ्क्ते,—"प्रभूणां भागोऽसीति पश्चात् प्रतिष्ठित्यै" (५।२।३अ०) इति । देवानामनुग्राहकत्वेन प्रतिष्ठा-हेतुत्वम् ।

अथ पूर्वानुवाकगतं सप्तदशं मन्त्रं विनियुङ्क्ते,—"विवर्तो-ऽष्टाचत्वारिंश इत्युत्तरतोऽनयोर्लोकयोः सवीर्यत्वाय तस्मादिमौ लोकौ समावद्वीर्यौ" (५।२।३अ०) इति । स्तोमानां मध्ये 'अष्टाचत्वारिंशः' स्तोमः सर्वोत्तमः, ततोऽभ्यधिकस्तोमस्याभावात्, मनुष्यलोके दिशां मध्ये विन्ध्यादुत्तरा दिक् उत्तमा ; अत उत्तमद्वयमेलनेन मनुष्यलोको वीर्यवान् सम्पन्नः । स्वर्गस्य लोकस्य देवाधिष्ठितत्वात् वीर्यवत्त्वं प्रसिद्धम् । एवञ्च सति उभयोः 'लोकयोः' समानवीर्यत्वं भवति । यस्मादेवं मनुष्यलोकस्य वीर्यवत्त्वं सम्पादितं, 'तस्मात्' 'इमौ' 'लोकौ' 'समावद्वीर्यौ' ; मनुष्यलोकः पुण्यानुष्ठाननिष्पादनेन वीर्यवानिति समत्वम् ।

अनुवाकद्वयेन वक्तत्वेनोपहितानाम् इष्टकानां मध्ये एकैकस्यां दिशि या उपहितास्ताः सर्वा दिग्विशेषोपाधिना संगृह्य प्रशंसति,—"यस्य मुख्यवतीः पुरस्तादुपधीयन्ते मुख्य एव भवति आ अस्य मुख्यो जायते यस्यान्नवतीर्दक्षिणतोऽन्ति अन्नम् आ अस्या-न्नादो जायते यस्य प्रतिष्ठावतीः पश्चात् प्रत्येव तिष्ठति यस्यो-जस्वतीरुत्तरत ओजस्व्येव भवति आ अस्यौजस्वी जायते" (५।२।३अ०) इति । मुख्यत्वेन पूर्वोक्तेषु अर्थवादेषु स्तुता इष्टका

'मुख्यवत्यः'। तासां पूर्वस्यां दिश्युपधानेन स्वयं 'मुख्यो' भवति, स्वपुत्रस्य 'मुख्यो' 'जायते'। अन्नत्वेन स्तुता इष्टका अन्नवत्यः। तस्मात् दक्षिणस्यां दिश्युपधानेन स्वयं पुत्रश्चान्नवन्तौ सम्पद्येते। प्रतिष्ठात्वेन स्तुता इष्टकाः प्रतिष्ठावत्यः। तासां पश्चिमायां दिश्युपधानेन प्रतिष्ठितो भवति। ओजस्त्वेन स्तुता इष्टका ओजस्वत्यः। तासामुत्तरस्यां दिश्युपधानेन स्वयं पुत्रश्चोजस्विनौ भवतः।

वक्रत्वेन योऽयमुपधानप्रकारोऽभिहितः तमेतं स्तोत्रशस्त्ररूपत्वेन प्रशंसति,—"अर्को वा एष यदग्निस्तस्यैतदेव स्तोत्रमेतच्छस्त्रं यदेषा विधा विधीयतेऽर्क एव तदर्क्यमनुविधीयते" (५।३।२ अ०) इति। यः 'अग्निः' अस्ति, स 'एष' 'अर्कः' (अर्चनीयः), तस्य अर्चनाङ्गत्वेन स्तोत्रशस्त्रे अपेक्षिते, तथा सति योऽयं वक्रत्वेनोपधानप्रकारोऽभिहितः, तत्रैकेनानुवाकेनोक्तं 'स्तोत्रम्,' इतरेणानुवाकेनोक्तं 'शस्त्रं'। एवं सति अर्चनीये वह्नौ एवार्चनयोग्यमनुष्ठानं क्रमेण सम्पादितं भवति।

एतदनुष्ठानं तद्वेदनञ्च प्रशंसति,—"अत्त्यन्नम् आ अस्यान्नादो जायते यस्यैषा विधा विधीयते य उ चैनामेवं वेद" (५।३।२ अ०) इति। 'एनां' विधाम्।

अत्र विनियोगसंग्रहः,—

अग्ने, श्रिष्टा इशादध्यादष्टणयास्तोमसञ्ज्ञका इति।

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये चतुर्थकाण्डे तृतीयप्रपाठके नवमोऽनुवाकः॥ ९॥

---

एकयाऽस्तुवत प्रजा अधीयन्त प्रजापतिरधिपतिरासीत्[१] तिसृभिरस्तुवत ब्रह्मासृज्यत ब्रह्मणस्पतिरधिपतिरासीत्[२] पञ्चभिरस्तुवत भूतान्यसृज्यन्त भूतानां पतिरधिपतिरासीत्[३] सप्तभिरस्तुवत सप्तर्षयोऽसृज्यन्त धाताऽधिपतिरासीत्[४] नवभिरस्तुवत पितरोऽसृज्यन्तादितिरधिपत्न्यासीत्[५] एकादशभिरस्तुवतर्तवोऽसृज्यन्तार्तवोऽधिपतिरासीत्[६] त्रयोदशभिरस्तुवत मासा असृज्यन्त संवत्सरोऽधिपतिः ॥ १ ॥

आसीत्[७] पञ्चदशभिरस्तुवत क्षत्रमसृज्यन्तेन्द्रोऽधिपतिरासीत्[८] सप्तदशभिरस्तुवत पशवोऽसृज्यन्त बृहस्पतिरधिपतिरासीत्[९] नवदशभिरस्तुवत शूद्रार्यावसृज्येतामहोरात्रे अधिपत्नी आस्ताम्[१०] एकविंशत्यास्तुवतैकशफाः पशवोऽसृज्यन्त वरुणोऽधिपतिरासीत्[११] त्रयोविंशत्यास्तुवत क्षुद्राः पशवोऽसृज्यन्त पूषाधिपतिरासीत्[१२] पञ्चविंशत्यास्तुवतारण्याः पशवोऽसृज्यन्त वायुरधिपतिरासीत्[१३] सप्तविंशत्यास्तुवत द्यावापृथिवी वि ॥ २ ॥

एतां वसवो रुद्रा आदित्या अनु व्यायन् तेषामाधिपत्यमासीत्[१४] नवविंशत्यास्तुवत वनस्पतयोऽसृज्यन्त सोमोऽधिपतिरासीत्[१५] एकविंशतास्तुवत प्रजा

असृज्यन्त यावानाञ्चायावानाञ्चाधिपत्यमासीत्(१६) त्रयस्त्रिंशतास्तुवत भूतान्यशाम्यन् प्रजापतिः परमेष्ठ्यधिपतिरासीत्(१७) ॥ ३ ॥

संवत्सरोऽधिपतिः। वि। पञ्चत्रिंशच्च ॥ १० ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे तृतीयप्रपाठके दशमोऽनुवाकः ॥०॥

नवमेऽनुवाके अवशिष्टा अक्ष्णयास्तोमीया उक्ताः। अथ दशमे सृष्टिशब्दाभिधेया इष्टका उच्यन्ते। कल्पः, 'एकयाऽस्तुवतेति सप्तदश सृष्टीः' इति। पाठस्तु,—"एकयाऽस्तुवत प्रजा अधीयन्त प्रजापतिरधिपतिरासीत् तिसृभिरस्तुवत ब्रह्मासृज्यत ब्रह्मणस्पतिरधिपतिरासीत् पञ्चभिरस्तुवत भूतान्यसृज्यन्त भूतानां पति रधिपतिरासीत् सप्तभिरस्तुवत सप्तर्षयोऽसृज्यन्त धाताऽधिपतिरासीन्नवभिरस्तुवत पितरोऽसृज्यन्तादितिरधिपत्न्यासीदेकादशभिरस्तुवत ऋतवोऽसृज्यन्तार्तवोऽधिपतिरासीत् त्रयोदशभिरस्तुवत मासा असृज्यन्त संवत्सरोऽधिपतिरासीत् पञ्चदशभिरस्तुवत क्षत्रमसृज्यन्तेन्द्रोऽधिपतिरासीत् सप्तदशभिरस्तुवत पशवोऽसृज्यन्त बृहस्पतिरधिपतिरासीन्नवदशभिरस्तुवत शूद्रार्यौ असृज्येतामहोरात्रे अधिपत्नी आस्तामेकविंशत्यास्तुवतैकशफाः पशवोऽसृज्यन्त वरुणोऽधिपतिरासीत् त्रयोविंशत्यास्तुवत क्षुद्राः पशवोऽसृज्यन्त

पूषाऽधिपतिरासीत् पञ्चविंꣳशत्यास्तुवत आरण्याः पशवोऽसृज्यन्त वायुरधिपतिरासीत् सप्तविंꣳशत्यास्तुवत द्यावापृथिवी वि एतां वसवो रुद्रा आदित्या अनु वि आयन् तेषामाधिपत्यमासीन्नव-विंꣳशत्या अस्तुवत वनस्पतयोऽसृज्यन्त सोमोऽधिपतिरासीदेक-त्रिंꣳशतास्तुवत प्रजा असृज्यन्त यावानाञ्चायावानाञ्चाधिपत्यमा-सीत् त्रयस्त्रिंꣳशतास्तुवत भूतान्यशाम्यन् प्रजापतिः परमेष्ठी अधि-पतिरासीत्(१-१०)" इति। पूर्वं महर्षयः कदाचित् यागकाले 'एकया' स्तोत्रियया ऋचा स्तुतिमकुर्वन्, तत्सामर्थ्यात् 'प्रजाः' 'अधीयन्त' (तैः महर्षिभिः उदपाद्यन्त); तदानीं 'प्रजापतिः' तासां, प्रजानां 'अधिपतिरासीत्'। अथ कदाचित् 'तिसृभिः' स्तोत्रियाभिः 'अस्तुवत', तत्सामर्थ्यात् 'ब्रह्म' (ब्राह्मणजातिः) तैः 'असृज्यत'; 'ब्रह्मणस्पतिः' इति प्रसिद्धो देवः, स ब्राह्मणजातेः 'अधिपति-रासीत्'। एवं सर्वत्र योज्यम्। 'भूतानां पतिः' कश्चिद्देवविशेषः। अत एवान्यत्राम्नातम्, 'भूतानां पतये स्वाहा' इति। सोऽयमत्र 'भूतानां पतिः 'अधिपतिः' (स्वामी) 'आसीत्'। 'धाता' जगत्-स्रष्टा। 'अदितिः' भूमिः। 'आर्त्तवः' ऋतुपालकः कश्चिद्देव-विशेषः। 'क्षत्रं' क्षत्रियजातिः। शूद्रः वैश्यश्चेति जातिद्वयम्। अहर्देवता रात्रिदेवता चेत्येते जातिद्वयस्य 'अधिपत्नी' (स्वामि-रूपे) 'आस्तां'। सप्तविंशतिस्तोत्रसामर्थ्यात् पूर्वमेकीभूते 'द्यावा-पृथिव्यौ" परस्परं वियुक्ते अभूतां। तयोर्वियोगम् 'अनु' वस्वा-दयस्त्रयो गणाः परस्परं वियुक्ता अभवन्। 'तेषां' (वस्वादीनां) द्यावापृथिव्यौ प्रति 'आधिपत्यम्' 'आसीत्'। 'यावाः' (मास-

देवताः)। 'अयावाः' (अर्द्धमासदेवताः), उभयविधदेवतानां प्रजाः प्रति 'आधिपत्यमासीत्'। 'भूतान्यशाम्यन्' (प्राणिनः शान्तान् उपद्रवरहितान् अकुर्वत)। परमे सत्यलोके तिष्ठतीति 'परमेष्ठी' तादृशः प्रजापतिः स्वामी अभूत्।

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते,—"सृष्टीरुपदधाति यथा-सृष्टमेवावरुन्धे" (५।३।२अ०) इति।

अत्र विनियोगसंग्रहः,—

एक, सप्तदशादश्यादिष्टकाः सृष्टिमन्त्रिकाः।

अथ मीमांसा, प्रथमाध्यायस्य चतुर्थपादे चिन्तितम् (अ०१७)।

"सृष्टीरुपदधातीति ये मन्त्राः सृष्टिलिङ्गिकाः।
विधेयास्ते गुणत्वेन वादो वाच गुणो विधिः॥
आख्यातेनाभिसम्बन्धादविध्यन्तरयोगतः।
लिङ्गप्रकरणप्राप्तेर्मन्त्राणां विध्यसम्भवात्॥
ताननूद्येष्टकाधानं विदध्यात् स्तोष्यते यतः।
यथासृष्टेत्यनेनातः सृष्टीरित्यत्र वादगीः॥
एकयाऽस्तुवतेत्यादौ मन्त्रसङ्गः क्वचिन्नहि।
सृष्टिशब्दस्तथाप्युक्तिः सृष्टिशब्देन भूमतः॥

अग्निचयने श्रूयते, 'सृष्टीरुपदधाति' इति। सृष्टिशब्दोपेता मन्त्रा यासामिष्टकानाम् उपधाने विधन्ते, ता इष्टकाः सृष्टय इत्युच्यन्ते, सृष्टिमान् आसामुपधानो मन्त्रः इति विगृह्य "तदान्

सामामुपधानः'' (४।४।१२५ सू०) इत्यादिव्याकरणसिद्धप्रक्रियया तन्निष्पादनात्। सृष्टिशब्दोपेतास्सोपधानमन्त्रा ''एकयाऽस्तुवत'' इत्यस्मिन्ननुवाके समाम्नाताः, ब्रह्मासृज्यत भूतान्यसृज्यन्त इत्यादिना सृजतिधातोस्तेषु मन्त्रेषु प्रयुक्तत्वात्। ते च मन्त्रा अत्र सृष्टिशब्देन उपधाने गुणत्वेन विधीयन्ते। कुतः?। उपदधातीत्यनेनाख्यातेन सम्बन्धात्। न चार्थवादत्वमस्य सम्भवति, विध्यन्तेन सहैकवाक्यत्वाभावात्।

इति प्राप्ते ब्रूमः,—अग्निचयनप्रकरणे पठितत्वात् तेषां मन्त्राणां सामान्यतश्चयनसम्बन्धो गम्यते; विशेषसम्बन्धस्तु सृजतिलिङ्गादवगन्तव्यः। तथा सति प्राप्तत्वान्न ते मन्त्रा अत्र विधीयन्ते, किन्तु तान् मन्त्राननूद्य इष्टकोपधानं विधीयते। सृष्टिशब्देनानुवादस्तु वक्ष्यमाणार्थवादोपपत्त्यर्थः। यथा 'सृष्टमेवावरुन्धे' इति हि वक्ष्यमाणोऽर्थवादः। यदि विधिवाक्ये मन्त्राणामनुवादः सृष्टिशब्देन स्यात्, तदानीमर्थवादे सृष्टिशब्दप्रयोगाद् विध्यर्थवादयोर्वैयधिकरण्यभ्रमः* स्यात्। तस्मान्मन्त्रानुवादी सृष्टिशब्दो न गुणविधायकः किन्त्वर्थवादः। ननु प्रथममन्त्रे सृजतिधातुर्न प्रयुक्तः,'एकयाऽस्तुवत प्रजा अधीयन्त' इति पाठात्। बाढं। तथापि द्वितीयतृतीयादिषु सृजतिधातुप्रयोगात् भूमरूपसादृश्यमस्ति,—यत्र सर्वाणि वाक्यानि सृष्टिशब्दोपेतानि तत्र

---

* वैय्यधिकरण्य इति सर्व्वत्र पाठो न सम्यक्। वैयधिकरण्यभ्रम इत्यत्र वैयधिकरण्यमेव स्यात् इति का० सं० पु० पाठः।

यथा सृष्टिभ्रमात्, तथात्रापि भ्रमगुणयोगेन सृष्यसृष्टिसत्त्वे सृष्टि-शब्दप्रयोगः ॥"

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे तृतीयप्रपाठके दशमोऽनुवाकः ॥०॥

---

इयमेव सा या प्रथमा व्यौच्छदन्तरस्यां चरति प्रविष्टा। वधूर्जजान नवगज्जनित्री त्रय एनां महिमानः सचन्ते[१]। छन्दस्वती उषसा पेपिशाने समानं योनिमनु सञ्चरन्ती। सूर्यपत्नी विचरतः प्रजानती केतुं कृण्वाने अजरे भूरिरेतसा[२]। ऋतस्य पन्थामनु तिस्र आगुस्त्रयो घर्मासो अनु ज्योतिषागुः। प्रजामेका रक्षत्यूर्जमेका ॥ १ ॥

व्रतमेका रक्षति देवयूनां[३]। चतुष्टोमो अभवद्या तुरीया यज्ञस्य पक्षावृषयो भवन्ती। गायत्रीं त्रिष्टुभं जगतीमनुष्टुभं बृहदर्कं युञ्जानाः सुवराभरन्निदं[४]। पञ्चभिर्धाता विदधाविदं यत्तासाᳶ स्वसॄरजनयत् पञ्च पञ्च। तासामु यन्ति प्रयवेण पञ्च नानारूपाणि क्रतवो वसानाः[५]। त्रिᳶशत्स्वसार उपयन्ति निष्कृतᳶ समानं केतुं प्रतिमुञ्चमानाः ॥ २ ॥

ऋतूंस्तन्वते कवयः प्रजानतीर्मध्ये छन्दसः परि यन्ति भास्वतीः(६)। ज्योतिष्मती प्रतिमुञ्चते नभो रात्री देवी सूर्यस्य व्रतानि। वि पश्यन्ति पशवो जायमाना नानारूपा मातुरस्या उपस्थे(७)। एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रं। तेन दस्यून् व्यसहन्त देवा हन्ताऽसुराणामभवच्छचीभिः(८)। अनानुजामनुजां मामकर्त्त सत्यं वदन्त्यन्विच्छ एतत् भूयासं ॥ ३ ॥

अस्य सुमतौ यथा यूयमन्या वो अन्यामति मा प्रयुक्त(९)। अभून्मम सुमतौ विश्ववेदा आष्ट प्रतिष्ठामविदद्धि गाधं। भूयासमस्य सुमतौ यथा यूयमन्या वो अन्यामति मा प्रयुक्त(१०)। पञ्च व्युष्टीरनु पञ्च दोहा गां पञ्चनाम्नीमृतवोऽनु पञ्च। पञ्च दिशः पञ्चदशेन क्लृप्ताः समानमूर्ध्नीरभिलोकमेकं(११) ॥ ४ ॥

ऋतस्य गर्भः प्रथमा व्यूषुष्यपामेका महिमानं बिभर्त्ति। सूर्यस्यैका चरति निष्कृतेषु घर्मस्यैका सवितैकां नियच्छति(१२)। या प्रथमा व्यौच्छत् सा धेनुरभवद्यमे। सा नः पयस्वती धुक्ष्वोत्तरामुत्तराᳪ समां(१३)। शुक्रर्षभा नभसा ज्योतिषाऽऽगाद् विश्वरूपा शबलीरग्निकेतुः। समानमर्थᳪ स्वपस्यमाना बिभ्रती जरा-

मजर उष आगाः(१४)। ऋतूनां पत्नी, प्रथमेयमागा-दह्नां नेत्री जनित्री प्रजानाम्। एका सती बहुधोषो व्युच्छस्यजीर्णा त्वं जरयसि सर्वमन्यत्(१५)॥५॥

ऊर्जमेका। प्रतिमुञ्चमाना। भूयासम्। एक। पत्नी। एकोनविंꣳशतिश्च॥ ११॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे तृतीय-प्रपाठके एकादशोऽनुवाकः॥ ०॥

दशमेऽनुवाके सृष्टिनामका इष्टका मन्त्राः उक्ताः। अथैका-दशे व्युष्टिनामका उच्यन्ते। कल्पः, 'इयमेव सा या प्रथमा व्यौच्छदिति षोड़श व्युष्टीः' इति। तत्र प्रथमामाह,—"इयमेव सा या प्रथमा व्यौच्छदन्तरस्यां चरति प्रविष्टा। वधूर्जजान नवगज्जनित्री त्रय एनां महिमानः सचन्ते(१)" इति। अत्रोप-धीयमाना 'या' इष्टकास्ति, 'इयमेव' 'सा' (तथाविधव्युष्टिरूपा, तच्छब्देन परामृश्यमाना पुनर्विविच्यते), सेयं व्युष्टिरूपा कालानां प्रथमभूता सती 'व्यौच्छत्' (विशेषेण प्रकाशरूपाऽभूत्)। आदिसृष्टिकाले प्रथमो यः प्रभातकालः तद्रूपेयमिष्टकेत्यर्थः। 'सा' (सृष्टिकालीना) 'प्रथमा' व्युष्टिरादित्येनानु'प्रविष्टा' सती 'अस्यां' (पृथिव्यां) दैनन्दिनप्रभातरूपेण 'चरति'। तत्र दृष्टान्तः, 'वधूर्जजान नवगज्जनित्री' (नवं वरं गच्छतीति) 'नवगत्' (नूतन-

विवाहवती) 'वधूः' 'जनित्री' (उत्तरोत्तरप्रजोत्पादिका) 'जजान' (जाता), तद्वदियमपि व्युष्टिरुत्तरोत्तरप्रभातनिष्पादिकेत्यर्थः। 'त्रयः' (त्रिसङ्ख्याकाः) 'महिमानः' (महिमोपेताः) अग्निसूर्यचन्द्ररूपा देवता 'एनां' (व्युष्टिं) 'सचन्ते' (समवयन्ति)। देवतात्रयप्रकाशकानुग्रहादस्याः प्रभातरूपत्वमित्यर्थः। एवंविधां* व्युष्टिरूपामिष्टकामुपदधामीत्यभिप्रायः।

अथ द्वितीयामाह,—"छन्दस्वती उषसा पेपिशाने समानं योनिमनु सञ्चरन्ती। सूर्यपत्नी विचरतः प्रजानती केतुं कृण्वाने अजरे भूरिरेतसा[१]" इति। द्वे ह्युषसौ,—एका सृष्टिकालीना, 'प्रथमा' ह स पूर्वमन्त्रोक्ता; अपरा प्रतिदिनसञ्चारिणी; सापि 'अस्यां चरति प्रविष्टा' इति पूर्वमन्त्रोक्ता। एवं सती 'उषसा' 'विचरतः' (द्वे अप्युषसौ विविधं चरतः); रात्रावपि प्रलयकाले तिरोहितजगत आविर्भावलक्षणसृष्टिरूपा सती दिवससादृश्यमापादयति, तदिदमेकस्यां चरणम्, शार्वरतमोनिवर्त्तकत्वमपरस्यां चरणं। कीदृश्यौ उषसौ?—'छन्दस्वती' (छन्दोयुक्तैर्मन्त्रैः स्तूयमानतया छन्दस्वत्यौ); 'पेपिशाने' (भृशं प्रकाशयन्त्यौ); 'समानं' 'योनिं' 'अनुसञ्चरन्ती', उभयोः कालविशेषत्वात् कालसामान्यमेव योनिः (हेतुः), स चोभयोः समानः,—महाप्रभातं सृष्टिरूपं कल्पप्रभातं दैनन्दिनं चेत्युभौ कालविशेषौ, तौ च स्वकीयं

---

* एवंविधमिति सर्वत्र पाठः। न सम्यक्।

† 'महाप्रभातं सृष्टिरूपकल्पप्रभातम्' इति का० ह० पु० एवं B. पु० पाठः। वस्तुतः 'महाप्रभातं सृष्टिरूपम्, कल्पप्रभातम्' इति पाठो भवितुं युक्तः।

कालसामान्यम् 'अनु'-सृत्य वर्त्तते इति 'अनु'-सञ्चरन्त्यौ उषसौ ; ते च 'सूर्यपत्नी' (सूर्यस्य जाये); 'प्रजानती' (स्वयं देवतारूपत्वेन प्रज्ञानवत्यौ); 'केतुं' 'कृण्वाने' (ज्ञानं कुर्वन्त्यौ), प्रकाशप्रदानेन हि प्राणिनां रूपज्ञानं जनयन्त्यः); 'अजरे' (कदाचिदपि जरारहिते); 'भूरिरेतसा' (प्रभूतरेतस्के) सकलव्यापारकारणभूते इत्यर्थः।

अथ तृतीयामाह,—"ऋतस्य पन्थामनु तिस्र आऽगुस्त्रयो घर्मासो अनु ज्योतिषाऽऽगुः। प्रजामेका रक्षत्यूर्जमेका व्रतमेका रक्षति देवयूनाम्[३]" इति। 'तिस्रः' उषसः 'ऋतस्य' (यज्ञस्य) 'पन्थां' (मार्गम्) 'अनु'-'आ'-'अगु' (अनुप्राप्ताः) यज्ञरक्षकत्वेन व्यक्ता व्यवस्थिता इत्यर्थः। 'त्रयो घर्मासः' (दीप्तिरूपाः) अग्निचन्द्रादित्याः 'ज्योतिषा' (प्रकाशप्रदानेन यज्ञमार्गम्) 'अनु'-'आ'-'अगुः' (अनुप्राप्ताः)। तिसृणामुषसां देवीनां मध्ये यजमानस्य 'प्रजामेका' 'रक्षति'; यजमानस्य 'ऊर्जं' (बलम्) 'एका' 'रक्षति'; देवान् आत्मन इच्छतां यजमानानां 'व्रतं' (कर्मानुष्ठानम्) 'एका' 'रक्षति'।

अथ चतुर्थीमाह,—"चतुष्टोमो अभवद् या तुरीया यज्ञस्य पक्षावृषयो भवन्ती। गायत्रीं त्रिष्टुभं जगतीमनुष्टुभं बृहदर्कं युञ्जानाः सुवराभरन्निदम्[४]" इति। यद्यप्येकैव उषा, तथापि जगद्रक्षणाय योगैश्वर्यादनेकशरीरस्वीकारे सति बहव उषसो भवन्ति। तत्र 'या' 'तुरीया' (चतुर्थी), सा च उषा 'चतुष्टोमः' (त्रिवृदादिस्तोमचतुष्टययुक्ताग्निष्टोमक्रतुरूपः) 'अभवत्'। कीदृशी?—

'यज्ञस्य' 'पक्षौ' (प्राच्यप्रतीच्याकृरूपौ पक्षसदृशौ द्वाववयवौ) 'भवन्ती' (भावयन्ती) सम्भावयन्तीत्यर्थः, तथा 'ऋषयः' (ऋषीन् यज्ञनिष्पादकान् ऋत्विजः) जनयन्ती; तथा 'बृहदर्कं' (प्रौढ-मर्चनारूपं स्तोत्रं) 'युञ्जानाः' (सम्पादयन्ती); गायत्र्यादिदेवतास्वतस्तः, 'सुवः' (फलभूतं स्वर्गम्), 'इदं' कर्म च 'आभरन्' (सर्वतो हरन्ती) पोषयन्तीत्यर्थः।

अथ पञ्चमीमाह,—"पञ्चभिर्धाता विदधाविदं यत्तासाᳬस्वसॄरजनयत् पञ्च-पञ्च। तासामु यन्ति प्रयवेण पञ्च नाना-रूपाणि क्रतवो वसानाः(५)" इति। 'यत्' 'इदं' अस्ति तत्सर्वं 'धाता' (स्रष्टा प्रजापतिः) 'पञ्चभिः' उषोभिर्देवीभिः 'विदधौ' (निर्मित-वान्)। 'तासां' (पञ्चानामुषसां) प्रत्येकं 'पञ्च'-'पञ्च' 'स्वसॄ-रजनयत्'। एवञ्च सति पञ्चसङ्ख्याका ज्येष्ठा उषसः, तासां स्वसारः पञ्चविंशतिसङ्ख्याका इत्येकस्मिन् मासि प्रतिपदादिरूपास्त्रिंशदुषसः सम्पद्यन्ते। 'तासाम्' (तासामपि) उषसां 'प्रयवेण' (प्रकृष्टरूपेण मिश्रणेन) 'पञ्च' मुख्या उषसः 'क्रतवः' (क्रतुनिष्पादिकाः), 'वसानाः' (आच्छादयन्त्यः, क्रत्वङ्गानि सर्वाणि व्याप्नुवन्त्यः), 'नानारूपाणि' (बहुविधस्वरूपाणि) 'यन्ति' (प्राप्नुवन्ति)। तत्रैका दिनं दिनम् अग्निहोत्रं निष्पादयति; ततो द्वे दर्शपूर्णमासौ निष्पादयतः; औपवसथ्यदिनकृत्यम् एका निष्पादयति; सुत्या-दिनकृत्यमेकेत्येवं पञ्चानामुपयोगात् प्रकृष्टमिश्रणानां* प्रकृष्टोप-कारित्वं, क्रत्ववान्तरभेदनिष्पादकत्वेन† नानारूपत्वम्।

---

* प्रकृष्टमित्यंशानामिति क्वचित् पाठः।

† वान्तरनिष्पादकत्वेन इति B. एवं का० सू० पु० पाठः।

अथ षष्ठीमाह,—"त्रिꣳशत् स्वसार उपयन्ति निष्कृतꣳ समानं केतुं प्रतिमुञ्चमानाः। ऋतूꣳस्तन्वते कवयः प्रजानतीर्मध्येछन्दसः परि यन्ति भास्वतीः(६)" इति। 'त्रिंशत्' (मासतिथिरूपेण त्रिंशत्सङ्ख्याकाः) 'स्वसारः' (भगिन्यः) उषसो देव्यो 'निष्कृतम्' (अजस्रं कृतम्*) अग्निहोत्रादिकर्म 'उपयन्ति' (प्राप्नुवन्ति)। कीदृश्यः?—'समानं केतुं' (सदृशं चिह्नं) प्रकाशरूपं 'प्रतिमुञ्चमानाः' (कञ्चुकवद्धारयन्त्यः); ताश्च 'कवयः' (विद्वत्समानाः); 'प्रजानतीः' (तत्तद्दिनसम्पादनीयं प्रजानन्त्यः); 'ऋतूंस्तन्वते' (स्वयमेव पुनःपुनरावर्त्तनेन वसन्तादीन् ऋतून् सम्पादयन्ति); छन्दसां वेदानां मध्ये तिष्ठतीति 'मध्येछन्दाः' सूर्यः; तथा चान्यत्राम्नायते, 'ऋग्भिः पूर्वाह्णे दिवि देव ईयते। यजुर्वेदे तिष्ठति मध्ये अह्नः। सामवेदेनास्तमये महीयते। वेदैरशून्यस्त्रिभिरेति सूर्यः' इति। तस्य 'मध्येछन्दसः' (सूर्यस्य) 'परि' (पार्श्वेषु) 'भास्वतीः' (भास्वत्यः प्रकाशमानाः) 'यन्ति' (गच्छन्ति) वर्त्तन्ते इत्यर्थः।

अथ सप्तमीमाह,—"ज्योतिष्मती प्रतिमुञ्चते नभो रात्री देवी सूर्यस्य व्रतानि। वि पश्यन्ति पशवो जायमाना नानारूपा मातुरस्या उपस्थे(७)" इति। सेयमुषा 'ज्योतिष्मती' (ज्योतीरूपैर्नक्षत्रैर्युक्तत्वात्); 'रात्री' चेयं, सूर्योदयात् पूर्वभावित्वात्; 'देवी' दीप्यमाना; तादृगुषा 'नभः' (नभस्य[?]) 'सूर्यस्य' 'व्रतानि' (सूर्यसम्बन्धित्वेन व्रतवन्नियतानि) रश्मिजालानि 'प्रति'-'मुञ्चते'

* अजस्रं कृतमिति पाठः का० ख० पुस्तके नास्ति।

(कञ्चुकमिव स्वीकरोति)। तस्यामुषसि 'नानारूपाः' (गोमहिषादि-जातिभेदभिन्नाः) 'पशवः' 'जायमानाः' (जन्मसदृशं निद्रायाः प्रबोधं प्राप्नुवन्तः); 'मातुः' (मातृसमानायाः) 'अस्याः' भूम्या 'उपस्थे' (उत्सङ्गे) पश्यन्ति* (विविधमरण्यगमनादिव्यवहारमवलोकयन्ति)।

अथाष्टमीमाह,—"एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रं। तेन दस्यून् व्यसहन्त देवाः हन्ताऽसुराणामभवच्छचीभिः(८)" इति। 'एकाष्टका' इति माघकृष्णाष्टमी कथ्यते, तथा चापस्तम्बः, 'या माघ्याः पौर्णमास्या उपरिष्टात् व्यष्टका तस्यामष्टमी ज्येष्ठया सम्पद्यते तामेवेष्टकेत्याचक्षते' इति। सेयम् 'एकाष्टका' 'तपसा तप्यमाना' (पुत्रार्थं तपश्चरन्ती) 'महिमानं' (महिमोपेतं) 'गर्भं' (स्वोदरवर्त्तिनं) 'इन्द्रं' 'जजान' (उत्पादयामास), 'तेन' (इन्द्रेण) 'देवाः' सर्वे 'दस्यून्' (तस्कररूपान् राक्षसान्) 'व्यसहन्त' (विशेषेणाभिभूतवन्तः)। स चेन्द्रः 'शचीभिः' (स्वकीयशक्तिभिः) 'असुराणां' 'हन्ता' 'अभवत्'।

अथ नवमीमाह,—"अनानुजामनुजां मामकर्त्त सत्यं वदन्त्यन्विच्छ एतत्। भूयासमस्य सुमतौ यथा यूयमन्या वो अन्यामति मा प्रयुक्त(९)" इति। हे एकाष्टका देव्यो, 'मां' यजमानं पूर्वम् 'अनानुजां' सन्तम् इदानीं 'अनुजां' 'अकर्त्त' (कृतवत्यः)। 'आ (समन्तात्) कर्मानुष्ठानस्यानुकूलत्वेन जायत इति 'अनुजा', तद्विपरीतस्तु 'अनानुजाः'; अनुष्ठानरहितं 'मां' अनु-

* एवमेव सर्व्वत्र पाठः। वि-पश्यन्ति इति पाठस्तु भवितुं युक्तः।

ष्ठानोपेतं स्तनवत्य इत्यर्थः। कीदृश्य एकाष्टकाः?—'सत्यं वदन्तीः' (अवितथं धर्मं वदन्त्यः) हे यजमान, एवमेतं धर्ममनुतिष्ठेत्येवं बोधयन्त्य इत्यर्थः। अतस्त्वत्प्रसादात् सन्मार्गवृत्तिरहम् 'एतत्' 'अश्विच्छे'(वक्ष्यमाणमेतत् अपेक्षितं प्रार्थये)। किन्तदपेक्षितमिति?—तदुच्यते, हे एकाष्टकाः, 'यूयम्' 'अस्य' (युष्मत्पुत्रस्य) इन्द्रस्य 'सुमतौ' (कल्याणबुद्धौ) 'यथा' स्थिताः, एवमहमपि 'अस्य' (इन्द्रस्य) 'सुमतौ' अनुग्रहचित्ते 'भूयासं'। 'वः' (युष्माकं) मध्ये 'अन्यां' (इतरां) 'अति'-लङ्घ्य 'मा प्रयुक्त' (प्रयोगव्यवहारं न करोति) किन्तु परस्परानुकूल्येनैव व्यवहरन्ति*; तद्वदहमप्यृत्विजामनुकूल-व्यवहारयुक्तो 'भूयासम्'।

अथ दशमीमाह,—"अभून्मम सुमतौ विश्ववेदा आष्ट प्रतिष्ठामविदद्धि गाधं। भूयासमस्य सुमतौ यथा यूयमन्या वो अन्यामति मा प्रयुक्त(१०)" इति। 'मम' यजमानस्य 'सुमतौ' (भक्तियुक्तायां बुद्धौ) 'विश्ववेदाः' (सर्वजगदभिज्ञा) इयमुषा 'अभूत्' (स्थितवती)। सा च 'प्रतिष्ठां' 'आष्ट' (अस्मदनुग्रहे स्थैर्यं व्याप्त-वती; 'हि' (यस्मात्) इयमुषा 'गाधं' (प्रतिष्ठानिमित्तभूतं) यजमानम् 'अविदत्' (लब्धवती), तस्मान्मदनुग्रहे स्थैर्यवतीत्यर्थः। भूयासमित्यादि पूर्ववत्।

---

* एवमेव सर्व्वत्र पाठः। वस्तुतः'—'अन्या' (इतरा) 'अन्याम्' (इतराम्) 'अति'—लङ्घ्य 'यथा' 'मा प्रयुक्त' (प्रयोगव्यवहारं न करोति) किन्तु परस्परानुकूल्येनैव व्यवहरन्ति' इति पाठो भवितुं युक्तः।

अथैकादशीमाह,—"पञ्च व्युष्टीरनु पञ्च दोहा गां पञ्चनाम्नीमृतवोऽनु पञ्च। पञ्च दिशः पञ्चदशेन क्लृप्ताः समानमूर्द्धीरभि लोकमेकम्(११)" इति। अग्निहोत्र-दर्शपूर्णमासौ-पशबन्ध्य-सुत्याख्यकर्मनिष्पादिकाः पञ्च मुख्याः उषसो याः पूर्वमुक्ताः, तान्(?)'पञ्च व्युष्टीरनु' पञ्चात्मकं सर्वमिदमुत्पन्नमिति। तदुच्यते—'पञ्च दोहा' उत्पन्नाः,-तमिस्रा ज्योत्स्ना सन्ध्याद्वयम् अहरित्येते पञ्च दोहाः। ते च होत्रब्राह्मणे, 'इदं वा अग्रे नैव किञ्चन आसीत्' इत्यनुवाके, 'यास्य सा तनूरासीत्। तामपाहत। सा तमिस्राऽभवत्' इत्यादिना समाम्नाताः। तत्रैव, 'तेभ्यो मृण्मये पात्रेऽन्नमदुहत्' इत्यादिना दोहा आम्नाताः। आम्नाय चान्ते तदुपसंहृतम्,—'एते वै प्रजापतेर्दोहाः' इति। एते 'पञ्च दोहाः' 'पञ्च व्युष्टीरनु' उत्पन्नाः। येयं गौः (पृथिवी), 'पञ्चनाम्नीं' (पञ्चविधनामोपेताम्) अपि पञ्च व्युष्टीरनूत्पन्नां विद्यात्,—वसन्तर्त्तौ पुष्पवतीति नाम, ग्रीष्मर्त्तौ तापवतीति नाम, वर्षर्त्तौ वृष्टिवतीति नाम, शरदर्त्तौ* जलप्रसादवतीति नाम, हेमन्तशिशिरयोः शैत्यवतीति नाम, सैव पञ्चनाम्नी व्युष्टीरनूत्पन्ना। तथा हेमन्तशिशिरयोरैक्येन 'पञ्च' 'ऋतवो' व्युष्टीः 'अनु' उत्पन्नाः†। तथा प्राच्यादयः सहोर्द्ध्वया 'पञ्च' 'दिशो' व्युष्टीरनूत्पन्नाः। पञ्चदशाख्यस्तोमेन 'क्लृप्ताः' (सम्पादिताः), पञ्चविधवृत्त्युपेताः स्तोत्रियाः पञ्च

---

*शरदर्त्तौ इति सर्व्वत्र पाठः, शारदर्त्तौ इति शरदृतौ इति वा पाठो भवितुं युक्तः। एवं वृष्टिवतीत्यत्र वृष्टिमतीति पाठो भवितुं युक्तः।

† व्युष्टिरनुत्पन्नाः इति सर्व्वत्र पाठो न सम्यक्।

व्युष्टीरनूच्यन्ताः। तस्य सोमस्य विधायके ब्राह्मणे 'पञ्चभ्यो हिङ्करोति' इत्येवं त्रिवारमाम्नातं। ता एताः पञ्च व्युष्टयः। 'एकं' 'लोकम्' 'अभि' 'समानमूर्द्धीः',—'लोकः' आलोकः प्रकाशः, तमेकं प्रति समानस्वभावाः। मूर्द्धशब्द उत्तमाङ्गवाची सन् मुख्यं स्वभावमुपलक्षयति। मुख्यस्वभावस्य व्युष्टीनां प्रकाशत्वं। एवं-विधव्युष्टिरूपेयमिष्टकेति स्तूयते।

अथ द्वादशीमाह,—"ऋतस्य गर्भः प्रथमा व्यूषुष्यपामेका महिमानं बिभर्त्ति। सूर्यस्यैका चरति निष्कृतेषु घर्मस्यैका सवितैकां नियच्छति(११)" इति। या एताः पूर्वोक्ताः पञ्चोषसो मुख्याः, तासां मध्ये 'प्रथमा' या व्युष्टिरुषःकालरूपाऽस्ति, सा 'ऋतस्य' (सत्यस्य) 'गर्भः' (गर्भसदृशी) तेन आदित्येन सहैव वर्त्तते। 'एका' काचिदुषाः रश्मिसहकारिणी 'अपां' 'महिमानं' 'बिभर्त्ति' (घर्मकाले रश्मिद्वारा जलमानीय मेघोदरे गर्भ-रूपत्वं महत्त्वं पोषयति)। 'एका' काचिदन्या उषाः 'सूर्यस्य' सम्बन्धिषु 'निष्कृतेषु' प्रदेशेषु 'चरति' (प्रकाशं कुर्वती वर्त्तते)। 'एका' काचिदन्योषाः 'घर्मस्य' (दीप्यमानस्य) अग्नेः सम्बन्धिषु 'चरति' (प्रकाशं करोति)। 'एकां' काञ्चिदन्यामुषसं 'सविता' 'नियच्छति' (दैनन्दिनं प्रकाशकारित्वेन नियतां करोति)।

अथ त्रयोदशीमाह,—"या प्रथमा व्यौच्छत् सा धेनुरभवद् यमे। सा नः पयस्वती धुक्ष्वोत्तरामुत्तराꣳ समाम्(१२)" इति। मुख्यासु पञ्चसु उषःसु 'या' 'प्रथमा' उषा 'व्यौच्छत्' (तमो व्यवारयत्) प्रकाशोत्पादनेन तमो निराकरोतीत्यर्थः। 'सा'

(तादृगुणाः) 'यमे' 'धेनुरभवत्' (यमस्वामिके लोके प्रकाश-प्रदानेन धेनुवत् प्रीतिहेतुरभवत्)। तथाविधे उषः, 'सा' त्वं 'पयस्वती' (व्युष्ट्युदकयुक्ता सती) 'नः' (अस्माकं) उत्तरोत्तरेषु सर्वेष्वपि संवत्सरेषु निरन्तरं 'धुक्ष्व' (दोहनं कुरु)। यथा धेनुः क्षीरं प्रयच्छति, तद्वत् त्वं व्युष्टिं प्रकाशस्व* प्रयच्छेत्यर्थः।

अथ चतुर्दशीमाह,—"शुक्रर्षभा नभसा ज्योतिषाऽऽगाद्विश्वरूपा शबलीरग्निकेतुः। समानमर्थꣳ स्वपस्यमाना बिभ्रती जरामजर उष आगाः(१४)" इति। येयमुषा 'शुक्रर्षभा' (शुक्रेषु प्रकाशरूपेषु नक्षत्रादिषु मध्ये श्रेष्ठा), सेयमुषाः 'नभसा' 'ज्योतिषा' (आकाशवर्त्तिप्रकाशेन युक्ता) 'आगात्' (इह समागता)। कीदृशी?—'विश्वरूपा' (सर्वाणि प्रकाश्यानि यस्याः सा 'विश्वरूपा'); 'शबलीः' (सूर्योदयात्पूर्वम् अन्धकारलेशानुवृत्तेर्मिश्रवर्णा); 'अग्निकेतुः' (अग्निहोत्रिभिरुषःकाले विहृत्य प्रज्वालिता येऽग्नयस्ते केतवो ध्वजस्थानीया यस्याः सा 'अग्निकेतुः'। 'समानमर्थं' 'बिभ्रती',—सूर्यस्य यत्प्रयोजनम्† अन्धकारनिवारणरूपं,—तदेवोषसोऽपि प्रयोजनं, अतः सूर्येण सह समानप्रयोजनोपेता; 'स्वपस्यमाना' (शोभनान्यपांसि कर्माणि तानि आत्मन इच्छतीति 'स्वपस्यमाना'। हे 'अजरे' 'उषः', त्वं 'जराम्' 'आगाः' (वलीपलितादिरूपजरारहितापि सृष्ट्यादिमारभ्य प्रवृत्तत्वात् चिरकाललक्षणां जरां प्राप्ताऽसि। तादृगुषारूपा इयमिष्टकेत्यर्थः।

---

* व्युष्टिः प्रकाशस्व इति सर्व्वत्र प्रथमान्तपाठो न सम्यक्।

† शतयोजनम् इति का॰ ख॰ पु॰ पाठः।

अथ पञ्चदशीमाह,—"ऋतूनां पत्नी प्रथमेयमागादह्नां नेत्री जनित्री प्रजानां। एका सती बहुधोषो व्युच्छस्यजीर्णा त्वं जरयसि सर्वमन्यत्(१५)" इति। 'इयं' 'प्रथमा' उषा 'आगात्' (इह कर्मण्यागता)। कीदृशी?—'ऋतूनां' (वसन्तादीनां) 'पत्नी' (पालयित्री), उषःकालस्यासकृदावृत्त्या ऋतवः सम्पद्यन्ते। 'अह्नां' 'नेत्री' (नयनस्य हेतुः, प्रकाशप्रदानेन निष्पादिकेत्यर्थः)। 'प्रजानां' 'जनित्री' (उत्पादयित्री) उषःकालवृत्त्या हि नवमासगर्भ-धारणादिना प्रजा उत्पद्यते। हे 'उषः', 'त्वं' स्वरूपेण 'एका' 'सती' 'बहुधा' (दिनभेदेन बहुप्रकारा) भूत्वा 'व्युच्छसि' (तमो वासयसि) निष्कासयसीत्यर्थः। कीदृशी त्वं?—'अजीर्णा' (वलीपलितादिजरारहिता)। 'सर्वम् अन्यत्' (मनुष्यशरीरादिकं) 'जरयसि' (जीर्णं करोषि)। इत्थं पञ्चदशाम्नाताः, षोडशी त्वन्यत्र द्रष्टव्या।

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते,—"न वा इदं दिवा न नक्तमासीदव्यावृत्तं ते देवा एता व्युष्टीरपश्यन् ता उपादधत ततो वा इदं व्यौच्छद्यस्यैताः उपधीयन्ते व्येवास्मा उच्छत्यथो तम एवापहते" (५।३।४अ०) इति। 'इदं' कालस्वरूपं यत् दिवारात्रयोर्व्यावृत्तिकया उषसा रहितत्वात् 'अव्यावृत्तं' 'आसीत्', तथा सति 'दिवा' अपि 'न' 'आसीत्', 'नक्तम्' अपि 'न' 'आसीत्' व्यावृत्तस्वरूपस्य निश्चेतुमशक्यत्वात्, तदानीं 'देवाः' व्यावृत्ति-कारिणीर्व्युष्टिसञ्ज्ञका 'एता' इष्टका 'अपश्यन्'। (विशेषेण) 'उच्छति' तमो विनाशयतीति 'व्युष्टिः' उषःकालः, तद्वाचकशब्देनोपेतैर्मन्त्रैरुप-

धेया इष्टका व्युष्टयः। 'ताः' व्युष्टीरिष्टी* 'उपादधत'। 'ततः' ऊर्द्धम् 'इदं' कालस्वरूपं 'व्यौच्छत्' (व्यावृत्तिकया व्युष्ट्या दिवा-नक्तभेदेन व्यावृत्तमासीत्)। तस्मात् व्युष्टीरुपदध्यात्। तदुपधाने हि यजमानार्थं 'व्युच्छति' एव। अपि च बुद्धिगतभ्रान्तिरूपं 'तमो' विनाशयति।

अत्र विनियोगसंग्रहः,—

इयं व्युष्टिरुपादध्यात् मन्त्राः पञ्चदशेरिताः॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे तृतीयप्रपाठके एकादशोऽनुवाकः॥ ० ॥

---

अग्ने जातान् प्रणुदा नः सपत्नान् प्रत्यजातां जातवेदो नुदस्व। अस्मे दीदिहि सुमना अहेडन्तव स्याᳪं शर्मं त्रिवरूथ उद्भित्[१]। सहसा जातान् प्रणुदा नः सपत्नान् प्रत्यजातां जातवेदो नुदस्व। अधि नो ब्रूहि सुमनस्यमानो वयᳪं स्याम प्रणुदा नः सपत्नान्[२]। चतुश्चत्वारिᳪंशः स्तोमो वर्चो द्रविणᳪं[३] षोडशः स्तोम ओजो द्रविणं[४] पृथिव्याः पुरीषमसि॥ १ ॥

---

* व्युष्टीरिष्ट्वा इति सर्व्वत्र पाठो न सम्यक्।

अस्मो नाम(५)। एवश्छन्दो वरिवश्छन्दः शम्भूश्छन्दः परिभूश्छन्द आच्छच्छन्दो मनश्छन्दो व्यचश्छन्दः सिन्धुश्छन्दः समुद्रं छन्दः सलिलं छन्दः संयच्छन्दो वियच्छन्दो बृहच्छन्दो रथन्तरं छन्दो निकायश्छन्दो विवधश्छन्दो गिरश्छन्दो भ्रजश्छन्दः सष्टुप्छन्दोऽनुष्टुप्छन्दः ककुच्छन्दस्त्रिककुच्छन्दः काव्यं छन्दोऽङ्कुपं छन्दः ॥ २ ॥

पदपंक्तिश्छन्दोऽक्षरपंक्तिश्छन्दो विष्टारपंक्तिश्छन्दः क्षुरोभृज्वा छन्दः प्रच्छच्छन्दः पक्षश्छन्द एवश्छन्दो वरिवश्छन्दो वयश्छन्दो वयस्कृच्छन्दो विशालं छन्दो विष्पर्धाश्छन्दश्छदिश्छन्दो दूरोहणं छन्दस्तन्द्रं छन्दोऽङ्काङ्कं छन्दः(६-४५) ॥ ३ ॥

असि। अङ्कुपं छन्दः। चयस्त्रिꣳशच्च ॥ १२ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे तृतीयप्रपाठके द्वादशोऽनुवाकः ॥ ० ॥

एकादशानुवाके व्युष्टाख्या इष्टका अभिहिताः, तावता चतुर्थचितिः समाप्ता। अथ द्वादशे पञ्चम्यां चित्यामसपत्नाख्या उच्यन्ते। कल्पः, 'श्वो भूते पौर्वाह्णिकीभ्यां प्रचर्य पञ्चमीं चितिं चिनोत्यग्ने जातान् प्रणुदा नः सपत्नानिति पुरस्तादुपदधाति' इति। पाठस्तु,—"अग्ने जातान् प्रणुदा नः सपत्नान् प्रत्यजातान्

जातवेदो नुदस्व । अस्मे दीदिहि सुमना अहेडन्तव स्याꣳ शर्म्मन् त्रिवरूथ उद्भित(१)" इति । हे 'अग्ने', 'नः' (अस्माकं) 'जातान्' 'सपत्नान्' (ये पूर्वमुत्पन्नाः शत्रवः तान्) 'प्रणुद' (प्रकर्षेण नाशय)। हे 'जातवेदः', ये पूर्वमनुत्पन्ना इतः परमुत्पत्तिप्रसक्तियुक्तास्तान् 'अजातान्' शत्रून् 'प्रति'-'नुदस्व' (उत्पत्तिप्रतिबन्धेन निराकुरु)। 'सुमनाः' (सानुग्रहचित्तः) त्वं 'अहेडन्' (अकुर्वन्) 'त्रिवरूथः' (त्रिवरूथः प्राग्वंश-सदो-हविर्द्धानरूपगृहत्रयोपेतः) 'उद्भित्' (अनुष्ठेयकर्म्मोत्पादकः) सन् 'अस्मे दीदिहि' (अस्मदादीन् प्रकाशय)। 'तव' प्रसादात् 'शर्म्मन्' 'स्याम्' आसुखवान् भवेयम्।

एतन्मन्त्रसाध्यमुपधानं विधत्ते,—"अग्ने जातान् प्रणुदा नः सपत्नानिति पुरस्तादुपदधाति जातानेव भ्रातृव्यान् प्रणुदते" (५।३।५अ०) इति।

कल्पः, * "सहसा जातान् प्रणुदा नः सपत्नान् प्रत्यजातान् जातवेदो नुदस्व। अधि नो ब्रूहि सुमनस्यमानो वयꣳ स्याम प्रणुदा नः सपत्नान्(२)" इति। 'सहसा' (बलेन) 'जातान्' इति पूर्ववत्। 'सुमनस्यमानः' (सौमनस्यं प्राप्तः) सन् 'नः' (अस्मान्) 'अधि'-'ब्रूहि', 'वयम्' अपि त्वदनुग्रहादधिकाः 'स्याम', 'नः' (अस्मदीयान्) 'सपत्नान्' (शत्रून्) 'प्रणुद'।

एतन्मन्त्रसाध्यमुपधानं विधत्ते'—"सहसा जातानिति पश्चा-ज्जनिष्यमाणानेव प्रणुदते" † (५।३।५अ०) इति। 'पश्चात्' 'उप-

* अत्र तु 'सहसा जातान् प्रणुदा नः सपत्नानिति पश्चादुपदधाति इति। पाठस्तु' इत्यधिकः पाठो भवितुं युक्तः।

† 'प्रतिनुदते' इति आदर्श पुस्तकपाठः।

दधाति' इत्यनुवर्त्तते। पूर्वमन्त्रे उत्पन्नविनाशप्राधान्यम् इह तु उत्पत्स्यमानप्रतिबन्धप्राधान्यम्,—अनेनाभिप्रायेणोभयत्र एवकार-प्रयोगः।

कल्पः, 'चतुश्चत्वारिंशश इति दक्षिणतः' इति। पाठस्तु,—"चतुश्चत्वारिंशः स्तोमो वर्चो द्रविणम्[३]" इति। योऽयं 'स्तोमः' चतुश्चत्वारिंशदावृत्त्या सम्पन्नः, 'वर्चः' (बलरूपं धनं); हे इष्टके तदुभयरूपा त्वमसि।

एतन्मन्त्रं विनियुङ्क्ते,—"चतुश्चत्वारिंशः स्तोम इति दक्षिणतः, ब्रह्मवर्चसं वै चतुश्चत्वारिंशो ब्रह्मवर्चसमेव दक्षिणतो धत्ते तस्माद्दक्षिणोऽर्द्धो ब्रह्मवर्चसितरः" (५।३।५ अ०) इति। ब्राह्मणानामाधिक्यात्, तैर्निष्पाद्यस्य स्तोमस्य ब्रह्मवर्चःस्वरूपत्वम्।

कल्पः, 'षोडशः स्तोम इत्युत्तरतः' इति। पाठस्तु,—"षोडशः स्तोम ओजो द्रविणम्[४]" इति। षोडशभिरावृत्तिभिर्निष्पाद्यः 'षोडशः', यस्तादृशः 'स्तोमः', यश्चाष्टमधातुरूपं धनं वा, हे इष्टके तदुभयरूपा त्वमसि।

एतन्मन्त्रं विनियुङ्क्ते,—"षोडशः स्तोम इत्युत्तरत ओजो वै षोडश ओज एवोत्तरतो धत्ते तस्मादुत्तरतोऽभिप्रयायी जयति" (५।३।५ अ०) इति। षोडशस्तोमस्य ओजोवृद्धिहेतुत्वात् ओजस्त्वम्।

अथेष्टकाद्वयं सह प्रशंसति,—"वज्रो वै चतुश्चत्वारिंशो वज्रः षोडशो यदेते इष्टके उपदधाति जाताꣳश्चैव जनिष्यमाणाꣳश्च भ्रातृव्यान् प्रणुद्य वज्रमनुप्रहरति स्तृत्यै" (५।३।५ अ०) इति।

स्तोमयोरनिष्टनिवारकत्वेन वज्रत्वं । 'प्रणोदनम्' अस्मात् स्थाना-न्निवारणं। ततो वज्रस्यानुप्रहारः 'स्तृत्यै' (हिंसायै) सम्पद्यते ।

कल्पः, 'इष्टकायां पुरीषमध्यूह्य पृथिव्याः पुरीषमसीति मध्येऽग्नेः पुरीषवतीम्' इति। पाठस्तु,—"पृथिव्याः पुरीषमस्यप्सो नाम(५)" इति। हे इष्टकास्वरूप, त्वं 'पृथिव्याः' (चितिरूपायाः) 'पुरीषं' (पूरकम्) 'असि'। प्साति भक्षयति विनाशयतीति प्सः, न प्सातीत्यप्सः। हे इष्टके त्वम् 'अप्सः' 'नाम' 'असि'।

एतन्मन्त्रसाध्यमुपधानं विधत्ते,—"पुरीषवतीं मध्य उपदधाति पुरीषं वै मध्यमात्मनः सात्मानमेवाग्निं चिनुते" (५।३।५ अ०) इति। पुरीषमध्यूह्य तस्योपर्युपधीयमानत्वात् पुरीषवती। 'पुरीषं वै' 'आत्मनः' (गवादिशरीरस्य)* 'मध्यं' उदरमध्ये वर्त्तमानत्वात्। अतः पुरीषत्वेन 'सात्मानं' (शरीरसहितम्) 'एव' 'अग्निं' 'चिनुते'।

तद्वेदनं प्रशंसति,—"सात्माऽमुष्मिंल्लोके भवति य एवं वेद" (५।३।५ अ०) इति। नामकरणं पूर्वमुक्तम्।

इष्टकापञ्चकं प्रशंसति,—"एता वा असपत्ना नामेष्टका यस्यैता उपधीयन्ते नास्य सपत्नो भवति" (५।३।५ अ०) इति। सपत्नानां शत्रूणां विनाशकत्वात् 'असपत्ना' इत्येतासामिष्टकानां नाम ध्येयम्†।

कल्पः, 'एवश्छन्दो वरिवश्छन्द इति चत्वारिंशतं विराजो दश दश प्रतिदिशमस्तृणाय' इति। पाठस्तु,—"एवश्छन्दो(६) वरि-वश्छन्दः(७) शम्भूश्छन्दः(८) परिभूश्छन्द(९) आच्छच्छन्दो(१०)

* गवादिशरीरस्य इति आदर्शपुस्तकपाठः।
† नामधेयमिति पाठो भवितुं युक्तः।

मनश्छन्दो(११) व्यचश्छन्दः(१२) सिन्धुश्छन्दः(१३) समुद्रं छन्दः(१४) सलिलं छन्दः(१५) संयच्छन्दो(१६) वियच्छन्दो(१७) बृहच्छन्दो(१८) रथन्तरं छन्दो(१९) निकायश्छन्दो(२०) विवधश्छन्दो(२१) गिरश्छन्दो(२२) भ्रजश्छन्दः(२३) सष्टुप्छन्दः(२४) अनुष्टुप्छन्दः(२५) ककुच्छन्द(२६) स्त्रिककुच्छन्दः(२७) काव्यं छन्दः(२८) अङ्कुपं छन्दः(२९)। पङ्क्तिश्छन्दो(३०) रचपङ्क्तिश्छन्दो(३१) विष्टारपङ्क्तिश्छन्दः(३२) क्षुरोभृज्वा छन्दः(३३) प्रच्छच्छन्दः(३४) पचश्छन्द(३५) एवश्छन्दो(३६) वरिवश्छन्दो(३७) वयश्छन्दो(३८) वयस्कृच्छन्दो(३९) विशालं छन्दो(४०) विष्पर्द्धाश्छन्दः(४१) छदिश्छन्दो(४२) दूरोहणं छन्दः(४३) तन्द्रं छन्दः(४४) अङ्काङ्कं छन्दः(४५)" इति। 'एवः' 'वरिवः' इत्याद्याः शब्दाः स्वर्गलोकवर्त्तिनां छन्दोविशेषाणां नामधेयानि। हे इष्टके, त्वम् 'एवश्छन्दो' यत्, तद्रूपासि। एवं सर्वत्र ऊहनीयम्।

एतन्मन्त्रसाध्यमुपधानं विधत्ते,—"पशुर्वा एष यदग्निर्विराज उत्तमायां चित्यामुपदधाति विराजमेवोत्तमां पशुषु दधाति तस्मात् पशुमानुत्तमां वाचं वदति" (५।३।५ अ०) इति। पशुप्राप्तिहेतुत्वादग्नेः पशुत्वम्। अतः 'पशुषु' 'उत्तमां' 'विराजं' (क्षीरदध्यादिरूपमन्नं) स्थापयितुम् अस्मिन् पशुरूपेऽग्नौ 'उत्तमायां' पञ्चम्यां 'चित्यां' विराडाख्या इष्टका उपदध्यात्। विराड्रूपत्वं तु वक्ष्यमाणदशसङ्ख्यया सम्पद्यते। यस्मात् पशुरूपेऽग्नावन्नरूपं 'विराजं' 'उपदधाति', 'तस्मात्' लोकेऽपि बहुपशुयुक्तः पुरुषः समागतान् अतिथीन् प्रति 'उत्तमां' 'वाचं' 'वदति',—आगत्य

यूयं मद्गृहे समागच्छत, भुज्यताम्* इति। सेयं उत्तमा वाक्।

एकैकस्यां दिशीष्टकामङ्ख्यां विधत्ते,—"दश दशोपदधाति सवीर्यत्वाय" (५।३।५ अ०) इति। 'सवीर्यत्वं' (दार्ढ्यापेतत्वं)। तच्च बहुभिरिष्टकाभिः सम्पद्यते।

सम्यक्पङ्क्तिरूपत्वं वारयित्वा† वक्रत्वं विधत्ते,—"अक्ष्णयोपदधाति तस्मादक्ष्णया पशवोऽङ्गानि प्रहरन्ति प्रतिष्ठित्यै" (५।३।५ अ०) इति।

उक्ता विराजः प्रशंसति,—"यानि वै छन्दांसि सुवर्ग्याण्यासन् तैर्देवाः सुवर्गं लोकमायन् तेनर्षयोऽश्राम्यन् ते तपोऽतप्यन्त तानि तपसा अपश्यन् तेभ्य एता इष्टका निरमिमतेवश्छन्दो वरिवश्छन्द इति ता उपादधत ताभिर्वै ते सुवर्गं लोकमायन् यदेता इष्टका उपदधाति यान्येव छन्दांसि सुवर्ग्याणि तैरेव यजमानः सुवर्गं लोकमेति" (५।३।५ अ०) इति। स्वर्गम् अर्हन्तीति 'सुवर्ग्याणि', तादृशानि 'यानि' आम्नातानि 'छन्दांसि' स्वर्गलोके स्थितानि, तैश्छन्दोभिः 'देवाः' स्वर्गं प्राप्ताः,—तत्पाठस्तेषां स्वर्गप्राप्तिसाधनं। 'ऋषयः' च 'तेन' (स्वर्गप्राप्तिनिमित्तेन) 'अश्राम्यन्' (उपायमन्विष्यालभमानाः खिन्ना आसन्) 'ते' पुनर्विचार्य स्वर्गप्राप्त्यर्थं 'तपः' कृतवन्तः, ततोऽनुष्ठितेन 'तपसा' 'तानि'

* भुञ्जन्ताम् इति तु क्वचित् पाठः।
† अत्र वारयितुमिति पाठो भवितु युक्तः।

'छन्दांसि' स्वर्गसाधनानि 'अपश्यन्', 'तेभ्यः' (छन्दोभ्यः) 'एता' (विराडाख्या) 'इष्टका' निर्मितवन्तः, निर्माय च 'एवश्छन्दो वरिवश्छन्दः' इति मन्त्रैः 'ता' (विराजः) 'उपादधत' 'ताभिः' (इष्टकाभिः) तद्विषयं प्राप्ताः। अतो यजमानोऽपि तदुपधानेन स्वर्ग्यैस्तैश्छन्दोभिः स्वर्गं प्राप्नोत्येव॥

अत्र विनियोगसंग्रहः,—

पञ्चम्यान्तु चितावग्निर्ह्यमपत्नास्तु पञ्च च।
एवंश्चत्वारिंशदुक्ता विराजो दिक्षु वक्रगाः॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे तृतीयप्रपाठके द्वादशोऽनुवाकः॥०॥

---

अग्निर्वृत्राणि जङ्घनद् द्रविणस्युर्विपन्यया। समिद्धः शुक्र आहुतः[१]। त्वꣳ सोमासि सत्पतिस्त्वꣳ राजोत वृत्रहा। त्वं भद्रो असि क्रतुः[२]। भद्रा ते अग्ने स्वनीक संदृग्घोरस्य सतो विषुणस्य चारुः। न यत्ते शोचिस्तमसा वरन्त न ध्वस्मानस्तनुवि रेप आ धुः[३]। भद्रं ते अग्ने सहसिन्ननीकमुपाक आ रोचते सूर्यस्य॥

॥ १ ॥

रुशद्दृहशे दहृशे नक्तया चिदरूक्षितं दृश आ रूपे अग्ने[४]। सैनानीकेन सुविदत्रो अस्मे यष्टा देवाꣳ आयजिष्ठः स्वस्ति । अदब्धो गोपा उत नः परस्पा अग्ने द्युमदुत रेवद्दिदीहि[५]। स्वस्ति नो दिवो अग्ने पृथिव्या विश्वायुर्धेहि यजथाय देव। यत् सीमहि दिविजात प्रशस्तं तदस्मासु द्रविणं धेहि चित्रं[६]। यथा होतर्मनुषः ॥ २ ॥

देवताता यज्ञेभिः सूनो सहसो यजासि एवा नो अद्य समना समानानुशन्नग्न उशतो यक्षि देवान्[७]। अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजं। होतारꣳ रत्नधातमं[८]। वृषा सोम द्युमाꣳ असि वृषा देव वृषव्रतः। वृषा धर्माणि दधिषे[९]। सान्तपना इदꣳ हविर्मरुतस्तज्जुजुष्टन। युष्माकोती रिशादसः[१०]। यो नो मर्तो वसवो दुर्हृणायुस्तिरः सत्यानि मरुतः ॥ ३ ॥

जिघाꣳसात्। द्रुहः पाशं प्रति स मुचीष्ट तपिष्ठेन तपसा हन्तना तं[११]। संवत्सरीणा मरुतः स्वर्का उरुक्षयाः सगणा मानुषेषु। तेऽस्मत् पाशान् प्रमुञ्चन्त्वꣳहसः सान्तपना मदिरा मादयिष्णवः[१२]। पिप्रीहि देवाꣳ उशतो यविष्ठ विद्वाꣳ ऋतुꣳ ऋतुपते यजेह। ये दैव्या ऋत्विजस्तेभिरग्ने त्वꣳ होतॄणामस्यायजि-

ष्टः[१३]। अग्ने यदद्य विशो अध्वरस्य होतः पावक॥
॥ ४ ॥

शोचे वेष्ट्वꣳ हि यज्वा। ऋता यजासि महिना वि यद्भूर्हव्या वह यविष्ठ या ते अद्य[१४]। अग्निना रयिमश्नवत् पोषमेव दिवे-दिवे। यशसं वीरवत्तमं[१५]। गयस्फानो अमीवहा वसुवित् पुष्टिवर्द्धनः। सुमित्रः सोम नो भव[१६]। गृहमेधास आगत मरुतो मापभूतन। प्रमुञ्चन्तो नो अꣳहसः[१७] पूर्वीभिर्हि ददाशिम शरद्भिर्मरुतो वयं। महोभिः॥ ५ ॥

चर्षणीनां[१८]। प्र बुध्निया ईरते वो महाꣳसि प्र णामानि प्र यज्ञवस्तिरध्वं। सहस्रियं दम्यं भागमेतं गृहमेधीयं मरुतो जुषध्वं[१९]। उप यमेति युवतिः सुदक्षं दोषावस्तोर्हविष्मती घृताची। उप स्वैनमरमतिर्वसूयुः[२०]। इमो अग्ने वीततमानि हव्याजस्रो वक्षि देवतातिमच्छ। प्रति न ईꣳ सुरभीणि वियन्तु[२१]। क्रीडं वः शर्धो मारुतमनर्वाणꣳ रथेशुभं॥ ६ ॥

कण्वा अभि प्रगायत[२२]। अत्यासो न ये मरुतः स्वञ्चो यक्षदृशो न शुभयन्त मर्याः। ते हर्म्येष्ठाः शिशवो न शुभ्रा वत्सासो न प्रक्रीडिनः पयोधाः[२३]। प्रैषां मज्मेषु विथुरेव रेजते भूमिर्यामेषु यद्ध युञ्जते शुभे।

ते क्रीड़यो धुनयो भ्राजदृष्टयः स्वयं महित्वं पनयन्त धूतयः(२४)। उपह्वरेषु यदचिध्वं ययिं वय इव मरुतः केन ॥ ७ ॥

चित् पथा। श्चोतन्ति कोशा उप वो रथेष्वा घृत-मुक्षता मधुवर्णमर्चते(२५)। अग्निमग्निꣳ हवीमभिः सदा हवन्त विश्पतिं। हव्यवाहं पुरुप्रियं(२६)। तꣳहि शश्वन्त ईड़ते स्रुचा देवं घृतश्चुता। अग्निꣳ हव्याय वोड़वे(२७)। इन्द्राग्नी रोचना दिवः श्नथद्वृत्रम्(२८-२९) इन्द्रं वो विश्वतस्परीन्द्रं नरो(३०-३१) विश्वकर्मन् हविषा वावृ-धानो विश्वकर्मन् हविषा वर्द्धनेन(३२-३३) ॥ ८ ॥

सूर्यस्य। मनुषः। मरुतः। पावक। महोभिः। रथेशुभं। केन। षट्चत्वारिꣳशच्च ॥ १३ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे तृतीयप्रपाठके त्रयोदशोऽनुवाकः ॥ ० ॥

अपां त्वेमन्। अयं पुरः। प्राची। ध्रुवक्षितिः। व्यविः। इन्द्राग्नी। मा छन्दः। आशुस्त्रिवृत्। अग्ने-र्भागोऽसि। एकया। इयमेव सा या। अग्ने जातान्। अग्निर्वृत्राणि जङ्घनत्। त्रयोदश ॥ १३ ॥

अपां त्वा (१।१)। इन्द्राग्नी (६।१)। इयमेव सा (११।१) देवताता (१३।३)। षट्त्रिꣳशत् ॥३६॥

हरिः ओम् ॥

॥०॥ समाप्तश्च तृतीयप्रपाठकः ॥०॥

द्वादशेऽनुवाके असपत्ना विराजश्चोक्ताः। अथ त्रयोदशस्य अन्यानुवाकत्वात् तत्र याज्यानुवाक्या उच्यन्ते। चातुर्मास्ये साकमेधाख्ये तृतीये पर्वणि 'अग्नयेऽनीकवते पुरोडाशमष्टाकपालं निर्वपति साकꣳ सूर्येणोद्यता' इत्यादिर्हवींषि* आम्नातानि। तत्र प्रथमस्याज्यभागस्य पुरोनुवाक्यामाह,—"अग्निर्वृत्राणि जङ्घनद् द्रविणस्युर्विपन्यया। समिद्धः शुक्र आहुतः[१]" इति। अयम् 'अग्निः' अस्माननुगृह्णात्विति शेषः। कीदृशः अग्निः?—'वृत्राणि' 'जङ्घनत्' (कर्मानुष्ठाननिवारकाणि पापान्यतिशयेन हतवान्); 'विपन्यया' (अस्मत्कृतया स्तुत्या) 'द्रविणस्युः' (अस्मदर्थं द्रविणेच्छुः); 'समिद्धः' (सम्यक् प्रज्वालितः); 'शुक्रः' (शोचमानः); 'आहुतः' ('आ' समन्तात् अस्माभिराकारितः, अनेनाज्येनाहुतो वा)† ।

अथ द्वितीयाज्यभागस्य पुरोनुवाक्यामाह,—"त्वꣳ सोमासि सत्पतिस्त्वꣳ राजोत वृत्रहा। त्वं भद्रो असि क्रतुः[२]" इति।

---

* इत्यादीनि हवींषि इति, इत्यादिना हवींषि इति वा पाठो भवितुं युक्तः।

† अनेनाज्ये हुतो वा इति क्वचित् पाठः।

हे 'सोम', 'त्वं' सतां (सम्यगनुष्ठितानां) कर्मणां 'पतिः' 'असि'; किञ्च 'त्वं' 'राजा' (दीप्तिमान्); अपि च 'त्वं' 'वृत्रहा' (पापघाती); किञ्च 'त्वं' 'भद्रः' (फलप्रदत्वेन मङ्गलः); 'क्रतुः' 'असि' (तस्य क्रतोर्निष्पादकत्वात्)। यद्यप्येतन्मन्त्रद्वयमुद्देशक्रमप्राप्तं, तथाप्यमावास्याविकृतित्वप्रयुक्तं वृधन्वत्योः प्राप्तिं वारयितुं पुनः-पाठः।

अथ प्रधानस्याग्नेरनीकवतो हविषः पुरोनुवाक्यामाह,—"भद्रा ते अग्ने स्वनीक सदृग्घोरस्य सतो विषुणस्य चारुः। न यत्ते शोचिस्तमसा वरन्त न ध्वस्मानस्तनुवि रेप आधुः[३]" इति। शोभनमनीकं सैन्यं यस्यासौ स्वनीकः, तादृश हे 'अग्ने', 'ते' (त्वदीयानि) च गात्राणि 'भद्रा' (भद्राणि मङ्गलानि)। कथं भद्रत्वमिति?—तदुच्यते,—त्वं 'सदृक्' (यजमानान् पश्यसि, यजमानादिभिर्वा सम्यक् दृश्यसे)। तथा त्वं 'घोरस्य' (उग्रस्य), 'सतः' (सर्वथा विद्यमानस्य), 'विषुणस्य' (बहुज्वालारूपेण विष्वग्-व्याप्तस्य) 'चारुः' (चरणहेतुः), अग्निरूपनिवारकस्य निरन्तरस्य ज्वालासमूहस्य प्रवर्त्तक इत्यर्थः। 'यत्' 'ते' (तव) 'शोचिः' (प्रकाशनं), तत् कदाचिदपि 'तमसा' 'न' 'वरन्त' (नाव्रियन्ते)। 'ध्वस्मानः' (ध्वंसहेतवः) राक्षसाः 'तनुवि' (शरीरे) त्वदीये 'रेपः' (प्रहाररूपं पापं) 'न' 'आधुः' (नैव सम्पादितवन्तः)।

अथ तत्रैव याज्यामाह,—"भद्रं ते अग्ने सहसिन्ननीकमुपाक आ-रोचते सूर्यस्य। रुशद् दृशे ददृशे नक्तया चिदरूक्षितं दृश आ रूपे अन्नम्[४]" इति। 'सहो' (बलम्) अस्यास्तीति सहसी,

तादृश हे 'अग्ने', 'सूर्यस्य' 'ते' (सूर्यसदृशस्य तव) 'भद्रं' (कल्याणं) 'अनीकं' ज्वालारूपं (सैन्यं) 'उपाके' (उपान्तिके समीपे) 'आ-रोचते' (सर्वतो दीप्यते)। तादृशं ज्वालारूपं त्वदीयम् अनीकं नक्तम् अपि गाढ़ान्धकारावृतायां रात्रावपि 'ददृशे' (विस्पष्टं प्राणिभिर्दृश्यते)। किमर्थं रात्रौ तज्ज्वालादर्शनमिति?–तदुच्यते,— 'रुशत्' (हिंसकं सर्वाधिकं) 'दृशे' (मार्गं द्रष्टुं), तथा रात्रौ भोजनवेलायां 'आ*' 'रूपे' (पुरतो निरूपिते पात्रे) 'अरूचितं' (रूचोपलक्षितं मक्षिकाद्युपद्रवम्) अभितम्(?)† 'अन्नम्' 'आ'-'दृशे' (सर्वतो द्रष्टुम्)।

अथ तत्रैव विकल्पितां याज्यामाह,—"सेनानीकेन सुविदत्रो अस्मे यष्टा देवाꣳ आयजिष्ठः स्वस्ति। अदब्धो गोपा उत नः परस्पा अग्ने द्युमदुत रेवद्दिदीहि(५)" इति। हे 'अग्ने', 'स' त्वं 'द्युमत्' (दीप्यमानः); 'उत' (अपि च) 'रेवत्' (बहुधनयुक्तं गृहक्षेत्रादिकं) 'दिदीहि' (प्रकाशय)। कीदृशस्त्वं?—'एनानी-केन' (एतेन ज्वालासमूहेन), 'सुविदत्रः' (सुष्ठु वेदिता) 'अस्मे' (अस्मदर्थं) 'देवान्' 'यष्टा' (देवान् उद्दिश्य यागनिष्पादकः) 'स्वस्ति' (विघ्नराहित्यं) यथा भवति, तथा 'आयजिष्ठः' (अति-शयेन कृत्स्नयागसमाप्तिकारी); 'अदब्धः' (केनाप्यहिंसितः); 'गोपाः' (यज्ञस्य गोप्ता‡) 'उत' (अपि च) 'नः' (अस्माकं) 'परस्पा' (अतिशयेन पालयिता)।

---

* 'आ' इति पाठो का० ह० पुस्तके नास्ति।

† रूचोपलक्षितमक्षिकाद्युपद्रवरहितम् इति पाठो भवितुं युक्तः।

‡ गोप्ता इति पाठो भवितुं युक्तः।

अथ स्विष्टकृतः पुरोऽनुवाक्यामाह,—"स्वस्ति नो दिवो अग्ने पृथिव्या विश्वायुर्धेहि यजथाय देव। यत् सीमहि दिविजात प्रशस्तं तदस्मासु द्रविणं धेहि चित्रम्[१]" इति। हे 'अग्ने', 'नः' (अस्मभ्यं) 'स्वस्ति' (निर्विघ्नं) 'विश्वायुः' (सम्पूर्णमायुः) 'धेहि' (सम्पादय)। किमर्थं?—'यजथाय' (यागानुष्ठानार्थं)। कुत्र?—'दिवः' (द्युलोके), 'पृथिव्या' (भूलोके)। हे 'देव', यथा द्युलोके भूलोके तिष्ठामः, तथा सर्वसम्पूर्णमायुः प्रयच्छेत्यर्थः। हे 'दिविजात' (स्वर्गसमुत्पन्न) अग्ने, 'यत्' 'द्रविणं' 'सीमहि' (वयं सेवेम), 'तत्' 'द्रविणम्' 'अस्मासु' 'धेहि' (सम्पादय)। कीदृशं द्रविणं?—'प्रशस्तं' (विद्यमानश्रेष्ठं); 'चित्रं' (मणिमुक्तादिजात्युपेतम्)।

तत्रैव याज्यामाह,—"यथा होतर्मनुषो देवताता यज्ञेभिः सूनो सहसो यजासि। एवा नो अद्य समना समानानुशन्नग्न उशतो यक्षि देवान्[२]" इति। 'सहसो' (मथनरूपस्य बलस्य) 'सूनुः' (पुत्रः) अग्निः, स च देवानामाह्वाता, हे 'सहसः' 'सूनो' 'होतः', अग्ने, 'यथा' 'मनुषो' (मनुष्यान्) अनुग्रहेण पालयसि, 'देवताता' (देवान्) अपि यज्ञैः 'यजासि' (पूजयसि)। तातिप्रत्ययस्य स्वार्थे विहितत्वाद् देवा एव देवतातयः; 'देवताता' (देवतातिन्*)। इतरयजमानानां पालनं तदीयदेवयजनञ्च दृष्टान्तः, दार्ष्टान्तिकन्तु स्वकीयदेवयजनमुच्यते। 'एवा' (एवमेव) हे 'अग्ने', 'नः' (अस्माकं) 'अद्य' (अस्मिन् कर्मणि) 'देवान्' 'यक्षि' (त्वं यज)। कीदृशस्त्वं?—'समना' (तैर्देवैः सह समानमनस्कः), यद्वा

* 'देवतातीन्' इति पाठो भवितुं युक्तः।

समानखैर्देवैस्तुल्य इत्यर्थः; 'उशन्' (कामयमानः) आस्थायुक्त इत्यर्थः। कीदृशान् देवान्?—'समानान्' (त्वया तुल्यान्)। 'उशतः' (कामयमानान्) त्वयि प्रीतियुक्तानित्यर्थः।

अथ मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुमित्यत्र प्रथमाज्य-भागस्य पुरोऽनुवाक्यामाह,—"अग्निमीड़े पुरोहितं यज्ञस्य देव-मृत्विजं। होतारꣳ रत्नधातमम्[८]" इति। इमम् 'अग्निम्' अहम् 'ईड़े' (स्तौमि)। कीदृशं?—पुरोदेशे आहवनीये स्थापितं; 'यज्ञस्य' (अनुष्ठीयमानस्य कर्मणः) 'ऋत्विजं' (ऋत्विङ् निष्पादकं*); 'देवं' (द्योतमानं); 'होतारं' (देवतानामाह्वातारं); 'रत्नधातमं' (मणिमुक्ताप्रभृतीनां सम्पादकम्)।

अथ द्वितीयाज्यभागस्य पुरोऽनुवाक्यामाह,—"वृषा सोम द्युमाꣳ असि वृषा देव वृषव्रतः। वृषा धर्माणि दधिष[९]" इति। हे 'सोम', त्वं कामानां वर्षयिता। 'द्युमां' (दीप्तिमान्) 'असि'। यस्मात् त्वं 'वृषव्रतः' (वृषनिमित्तं कर्म यस्यासौ वृषव्रतः)। किञ्च यस्मात् त्वं वर्षयिता, तस्मात् पुण्यानि 'दधिषे' (धारयसि)।

अथ प्रधानस्य हविषः पुरोऽनुवाक्यामाह,—"सान्तपना इदꣳ हविर्मरुतस्तज्जुजुष्टन। युष्माकोती रिशादस.[१०]" इति। सम्यक् तप्यन्ते शत्रव एभिरिति 'सान्तपनाः', तादृशा हे 'मरुतः', अस्माभिर्दीयमानं यत् 'इदं' 'हविः' अस्ति, 'तत्' 'जुजुष्टन' (सेवध्वं)। 'युष्माकोती' (युष्माकमूतये तुदाधातो रक्षणाय)।

* निष्पादक इति पाठो भवितुं युक्तः।

कीदृशा मरुतः?—'रिशादसः' रिशन्ति हिंसन्तीति रिशाः, तान् अदन्ति भक्षयन्ति विनाशयन्तीति 'रिशादसः'।

अथ तत्रैव याज्यामाह,—"यो नो मर्त्तो वसवो दुर्हृणायु-स्तिरः सत्यानि मरुतो जिघांसात्। द्रुहः पाशं प्रति स मुचीष्ट तपिष्ठेन तपसा हन्तना तम्(११)" इति। 'वसवः' (वासहेतवः) हे 'मरुतः', 'यः' 'मर्त्तः' (मनुष्यः) 'दुर्हृणायुः' (दुष्टक्रोधोऽत्यन्तं-पाप-युक्तबुद्धिः) सन् 'सत्यानि' 'तिरः' अस्मान् प्रतिकृतान् सर्वथा नानिष्टं करिष्यामीत्येवंरूपां शपथां* तिरस्कृत्य 'नः' (अस्मान्) 'जिघांसात्' (हन्तुमिच्छेत्), स 'द्रुहः' (द्रोही) 'पाशं' (भवदीयं बन्धनरज्जुं) 'प्रति'-'मुचीष्ट' (प्रतिमुञ्चतु) स्वगले बध्नात्वित्यर्थः। 'तं' द्रोहिणं 'तपिष्ठेन' 'तपसा' (अत्यधिकेन सन्तापेन) 'हन्तना' (मारयत)।

तत्रैव विकल्पितां याज्यामाह,—"संवत्सरीणा मरुतः स्वर्का उरुक्षयाः सगणा मानुषेषु। तेऽस्मत् पाशान् प्रमुञ्चन्त्वंहसः सान्तपना मदिरा मादयिष्णवः(१२)" इति। ये 'मरुतः' सन्ति, 'ते' 'पाशान्' (स्वकीयबन्धनरज्जुं) 'अस्मत्' (अस्मत्तः) अपनीय 'मानुषेषु' विरोधिजनेषु 'प्रमुञ्चन्तु' (गले बध्नन्तु)। कीदृशान्?—'अंहसः' (पापिष्ठान् अत्यन्तनीचहेतूनित्यर्थः)। कीदृशा मरुतः?—'संवत्सरीणाः' (सकृद्यागेनाराधिताः संवत्सरपर्यन्तं रक्षकाः); 'स्वर्का' (सुष्ठु अर्चनीयाः); 'उरुक्षयाः' (विस्तीर्णगृहाः); 'सगणाः' (सप्तभिर्गणैः सहिताः), 'सप्तगणा वै मरुतः' इति श्रुत्यन्तरात्।

---

* एवंरूपान् शपथान् इति पाठो भवितुं युक्तः।

'सान्तपनाः' (सम्यक् शत्रुतापकारिणः); 'मदिराः' (स्वयं हृष्टाः); 'मादयिष्णवः' (अस्मानपि हर्षयन्तः)।

तत्रैव स्विष्टकृतः पुरोऽनुवाक्यामाह,—"पिप्रीहि देवाꣳ उशतो यविष्ठ विद्वाꣳ ऋतूꣳ ऋतुपते यजेह। ये दैव्या ऋत्विजस्तेभिरग्ने त्वꣳ होतॄणामस्या यजिष्ठः(१३)" इति। हे 'यविष्ठ' (युवतम) 'अग्ने', 'उशतः' (कामयमानान्) 'देवान्' 'पिप्रीहि' (अतिशयेन प्रीणय)। हे 'ऋतुपते' (सूर्यात्मना कालपरिपालक), 'त्वं' 'ऋतून्' (कालविशेषान्) 'विद्वान्' (जानन्) वर्त्तसे। तस्मात् 'इह' (उचितकाले) 'यज'। देवेषु भवा 'दैव्या' 'ये' 'ऋत्विजः' सन्ति,—'अग्निर्होता अश्विनाध्वर्यू त्वष्टाग्नीत्' इत्यादिना आम्नाताः, 'तेभिः' (तैः) देवैः सह 'त्वं' यजमानस्य सम्बन्धिनां 'होतॄणां' ऋत्विजां मध्ये 'आ यजिष्ठः' (सर्वतो यष्टृतमः) 'असि'।

तत्रैव याज्यामाह,—"अग्ने यदद्य विशो अध्वरस्य होतः पावक शोचे वेस्त्वꣳ हि यज्वा। ऋता यजासि महिना वि यद्भूर्हव्या वह यविष्ठ या ते अद्य(१४)" इति। हे स्विष्टकृत् 'अग्ने', 'विशः' (प्रविष्टस्यानुष्ठितस्य) 'अध्वरस्य' सम्बन्धि 'यत्' हविरस्ति तत् 'अद्य' 'वेः' (अशान भक्षय)। 'होतः' (होमकर्त्तः) 'पावक'* (शोधक), 'शोचे' (दीप्यमान); तान्येतानि अग्निविशेषणानि। 'हि' (यस्मात्) 'त्वं' 'यज्वा' (यागस्य कर्त्ता); तस्मात् ऋते अस्मदीय-'महिना' (महिम्ना), 'यजासि' (देवान् प्रीणयसि)। 'यत्' (यस्मात् कारणात्) 'वि'-'भूः' (विशिष्टो भवसि), तत् (तस्मात् कारणात्)

---

* व्यापक इति सर्व्वत्र पाठो न सम्यक्।

हे 'यविष्ठ' (युवतम), 'अद्य' 'ते' (तव) 'या' (यानि) हव्यानि अस्माभिर्दीयन्ते, तानि स्वीकुरु* । यद्यप्येतन्मन्त्रद्वयं दार्शिके होत्र-काण्डे समाम्नातत्वात् चोदकादेव प्राप्तं, तथापि विस्पष्टार्थं पुन-र्वचनमिति द्रष्टव्यम् ।

अथ मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायं चरुमित्यत्र प्रथमस्याज्यभागस्य पुरोऽनुवाक्यामाह,—"अग्निना रयिमश्नवत् पोषमेव दिवे-दिवे। यशसं वीरवत्तमम्[१५]" इति । अनेन 'अग्निना' 'रयिं' (धनम्) 'अश्नवत्' (सर्वो जनः प्राप्नोति)। न केवलं धनस्य स्वरूपमात्रं, किन्तु दिने-दिने तस्य धनस्य पुष्टिमेव प्राप्नोति न तु ह्रासं। 'यशसं' (कीर्त्तिकरं), 'वीरवत्तमं' (वीरा अस्मदीयाः पुत्रा अस्येति वीरवान् अतिशयेन तथाविधम्) ।

अथ द्वितीयाज्यभागस्य पुरोऽनुवाक्यामाह,—"गयस्फानो अमीवहा वसुवित् पुष्टिवर्द्धनः। सुमित्रः सोम नो भव[१६]" इति। हे 'सोम', 'नः' (अस्मान्) उच्यमानविशेषणविशिष्टो 'भव' । कानि तानि विशेषणानि? इति, तान्युच्यन्ते,—'गयस्फानः' (गृहाणां वर्द्धयिता) ; 'अमीवहा' (रोगाणां हन्ता), 'वसुवित्' (धनस्य लम्भयिता) ; 'पुष्टिवर्द्धनः' (गवादिपुष्टेर्वर्द्धयिता) ; 'सुमित्रः' (शोभनं यजमानरूपं मित्रं यस्यासौ सुमित्रः) ।

अथ प्रधानस्य पुरोऽनुवाक्यामाह,—"गृहमेधास आगत मरुतो माऽपभूतन प्रमुञ्चन्तो नो अंहसः[१७]" इति । गृहे क्रियमाणो मेधो यज्ञो येषां ते 'गृहमेधासः', तादृशा हे

* अत्र 'वह' (स्वीकुरु) इति पाठो भवितुं युक्तः ।

'मरुतः', 'आगत' (आगच्छत)। 'माऽप भूतन' (कदाचिदपि मा गच्छत*)। किं कुर्वतः ?—'अंहसः' (पापात्) 'नः' (अस्मान्) 'प्रमुञ्चन्तः' (प्रकर्षेण मोचयन्तः)।

तत्रैव याज्यामाह,—"पूर्वीभिर्हि ददाशिम शरद्भिर्मरुतो वयं। महोभिश्चर्षणीनाम्(१८)" इति। हे 'मरुतः', 'वयं' (यजमानाः†) 'पूर्वीभिः' (अनादिकालप्रवृत्ताभिः) श्रीत्यादि-सम्पूर्णतया महनीयाभिः 'शरद्भिः' (संवत्सरैः) 'चर्षणीनां' (मनुष्याणां ऋत्विजां) मध्ये श्यायोभिः यस्मात् 'ददाशिम' (हविर्ददेम), तस्माद् यूयम् इह आगच्छत।

तत्रैव विकल्पितां याज्यामाह,—"प्र बुध्निया ईरते वो महांसि प्र णामानि प्र यज्ञवस्तिरध्वं। सहस्रियं दम्यं भागमेतं गृहमेधीयं मरुतो जुषध्वम्(१९)" इति। हे 'मरुतः', 'बुध्निया' (बुध्ने मूले भवानि बुध्नियानि कालप्रवृत्तानीत्यर्थः), 'वो महांसि' (युष्माकं तेजांसि)'प्र'-'ईरते' (प्रकर्षेण गच्छन्ति) प्रवृत्तानीत्यर्थः। 'प्र'-'यज्ञवः' (प्रकृष्टयागयुक्ताः) यूयं 'नामानि' (गृहमेधिनः मरुतो वयमित्यादीनि भवदीयनामधेयानि) 'प्र'-'तिरध्वं' (प्रकर्षेण लोके ख्यापयत)। 'सहस्रियं' (सहस्रसमाहं) 'गृहमेधीयं' (गृहमेधिनो युष्मानुद्दिश्य दीयमानमेतं भागं पुरोडाशरूपं) 'जुषध्वं' (सेवध्वम्)।

अथ तत्रैव स्विष्टकृतः पुरोऽनुवाक्यामाह,—"उप यमेति युवतिः सुदक्षं दोषा वस्तोर्हविष्मती घृताची। उप स्वैनमरमति-

---

* मा गच्छतः इति का० ह० पु० पाठः।

† यजमान इति सर्व्वत्र एकवचनान्तः पाठो न सम्यक्।

वंस्युः(१०)" इति। 'युवतिः' (मन्त्रेण मिश्रीभूता) 'हविष्मती' (सम्पूर्णहविर्युक्ता)·'घृताची' (घृते पुष्टा) इयमाहुतिः 'दोषा' (रात्रौ) दिवसे च 'दत्तं*' (कुशलं) 'यं' (स्विष्टकृतमग्निम्) 'उप'-'एति' (प्राप्नोति)। येन स्विष्टकृतमग्निम् 'अरमतिः' (कदाचिदप्युपरमतिरहितः), 'वस्युः' (धनमिच्छन्) यजमानः, 'स्वा' (स्वकीयेन) हविषा 'उप'-'एति' (प्राप्नोति), सेवत इत्यर्थः।

तत्रैव याज्यामाह,—"इमो अग्ने वीततमानि हव्याऽजस्रो वक्षि देवतातिमच्छ। प्रति न ईꣳ सुरभीणि वियन्तु(११)" इति। हे 'अग्ने', 'इमो' (इमानि), 'वीततमानि' (अतिशयेन कान्तानि), 'हव्या' (हवींषि) 'देवतातिमच्छ' (देवानभिप्राप्तुम्) 'अजस्रः' (अनुपरतः), 'वक्षि' (वहनात्मसम्बन्धीनि), 'सुरभीणि' (सुगन्धीनि) हवींषि 'प्रति न ईꣳ' (प्रत्येकमेव) 'वियन्तु' (भक्षयन्तु)।

अथ 'मरुद्भ्यः क्रीड़िभ्यः पुरोडाशꣳ सप्तकपालं निर्वपति साकꣳ सूर्येणोद्यत' इत्यस्य हविषः पुरोऽनुवाक्यामाह,—"क्रीड़ं वः शर्धो मारुतमनर्वाणꣳ रथेशुभं कण्वा अभिप्रगायत(१२)" इति। हे 'कण्वाः' (कण्वप्रभृतयो वेदाचार्याः), 'शर्धः' (बलम्) 'अभिप्रगायत' (अभितो वैदिकैः स्तोत्रैः प्रकर्षेण गानं कुरुत)। कीदृशं बलं?—'वः' 'क्रीड़ं' (युष्माकं क्रीड़ाकारणं), 'मारुतं' (मरुतां सम्बन्धि), 'अनर्वाणं' (भ्रातृव्यैरतिरस्कृतं), 'भ्रातृव्यो वा अर्वा' इति श्रुत्यन्तरात्। 'रथेशुभं' (रथप्रेरणे समर्थम्)।

तत्रैव याज्यामाह,—"अत्यासो न ये मरुत स्वञ्चो यक्षदृशो

* 'सदत्तं' इति पाठो भवितुं युक्तः।

न शुभयन्त मर्याः। ते हर्म्येष्ठाः शिशवो न शुभ्रा वत्सासो न प्रक्रीडिनः पयोधाः[२३]" इति। हे 'मरुतः', 'शुभयन्त' (शोभयन्ते) स्वसञ्चारेण सर्वं जगदलंकुर्वन्तीत्यर्थः। ततोऽस्मान् अनुगृह्णन्त्विति शेषः। कीदृशा मरुतः?—'अत्यासो न' (सतत-गमनशीला अश्वादय इव), 'स्वञ्चः' (शोभनगतयः), 'यज्वदृशो न' 'मर्याः' (यागदर्शनार्थिनो मर्त्या इव) औत्सुक्येनात्र समागता इति शेषः। हे 'हर्म्येष्ठाः शिशवो न शुभ्राः' (प्रासादमारूढा राजबालका इव पर्वतेषु शुभ्राः) सञ्चरन्तीति शेषः। 'वत्सासो न प्रक्रीडिनः' (यथा अत्यन्तबालवत्साः शीघ्रमितस्ततः पलायमानाः प्रकर्षेण क्रीडन्ति, तथा अत्र सञ्चरन्तः क्रीडापराः), 'पयोधाः' (मेघानुत्पाद्य जलधारिणः)।

तत्रैव विकल्पितामन्यां पुरोऽनुवाक्यामाह,—"प्रैषामज्मेषु विथुरेव रेजते भूमिर्यामेषु यद्ध युञ्जते शुभे। ते क्रीडयो धुनयो भ्राजदृष्टयः स्वयं महित्वं पनयन्त धूतयः[२४]" इति। 'एषां' (मरुतां) 'अज्मेषु' (गमनेषु) 'भूमिः' प्रकर्षेण 'रेजते' (कम्पते), भृशं भूकम्पजनकानि मरुतां गमनानीत्यर्थः। तत्र दृष्टान्तः,—'विथुरेव' (यथा भर्तृरहिता योषित्पालकाभावाद्-त्यन्तं कम्पते तद्वत्)। यदा येभिर्मरुतः* 'यामेषु' (जलस्य नियामकेषु मेघेषु) 'युञ्जते' (जलं योजयन्ति), 'ते' (मरुतः) 'महित्वं' (स्वकीयं महिमानं) 'स्वयं' 'पनयन्त' (स्वयमेव व्यव-हरन्ति स्तुवन्ति वा)। कीदृशास्ते?—'क्रीडयः' (क्रीडापराः),

* येऽमी मरुतः इत्येव पाठो भवितुं युक्तः।

'धुनयः' (कम्पयुक्ताः सर्वदा बलवन्त इत्यर्थः), 'भ्राजदृष्टयः' (भ्राजो दीप्तिर्विद्युद्रूपा येषां ते भ्राजदृष्टयः),। 'धूतयः' (शत्रूणां कम्पहेतवः)।

तत्रैव विकल्पितामन्यां याज्यामाह,—"उपह्वरेषु यदचिध्वं ययिं वयः इव मरुतः केनचित् पथा। श्चोतन्ति कोशा उप वो रथेष्वा घृतमुक्षता मधुवर्णमर्चते(१५)" इति। हे 'मरुतः', 'यत्' (यदा) वयं 'केनचित् पथा' (केनापि मार्गेण) 'उपह्वरेषु' (उपेत्य मर्त्तव्येषु ताड़नीयेषु मेघेषु) 'ययिम्' 'अचिध्वं' (गतिं सम्पादितवन्तः), यथा जलपूर्णमेघमास्फालयन्ति भवन्त इत्यर्थः। तदानीं 'कोशाः' (धनपूर्णगृहसदृशाः जलपूर्णमेघाः*) 'वः' (युष्माकं) 'रथेषु' 'उप' (समीपम्) आगतेषु सत्सु 'श्चोतन्ति' (स्रावयन्ति)। यूयमपि 'अर्चते' (यजमानाय) 'मधुवर्णं' (मधुररसोपेतं) 'घृतं' (घृतसमानमुदकम्) 'आ' (समन्तात्) 'उक्षत' (सिञ्चत)।

अथ तत्रैव स्विष्टकृतः पुरोऽनुवाक्यामाह,—"अग्निमग्निं हवीमभिः सदा हवन्त विश्पतिं। हव्यवाहं पुरुप्रियम्(१६)" इति 'अग्निमग्निं' (तत्तद्यागगतस्विष्टकृतं) 'हवीमभिः' (आह्वानपरैः) 'सदा हवन्त' (सर्वदा यजमाना आह्वयन्ति)। कीदृशमग्निं?—'विश्पतिं' (प्रजानां पालकं), 'हव्यवाहं' (देवान् प्रति हविषो वोढारं), 'पुरुप्रियं' (पुरूणां बहूनां यजमानानां प्रीतिहेतुम्)।

---

* मेघ इति सर्व्वत्र पाठो न सम्यक्।

तत्रैव याज्यामाह,—"तꣳ हि शश्वन्त ईडते स्रुचा देवं घृतश्चुता। अग्निꣳ हव्याय वोढवे(२०)" इति। 'शश्वन्तः' (निरन्तरमनुतिष्ठन्तः) ऋत्विजः 'घृतश्चुता' (घृतं स्रवता) 'स्रुचा' युक्ताः 'तं' 'अग्निं' 'देवम्' 'ईडते' (स्तुवते)। किमर्थं?—'हव्याय वोढवे' (हविर्वोढुम्)।

अथ यान्यन्यानि त्रीणि हवींष्याम्नातानि, 'ऐन्द्राग्नमेकादशकपालमैन्द्रं चरुं वैश्वकर्मणमेककपालम्' इति। तत्रैन्द्राग्नस्य याज्यानुवाक्ययोः प्रतीके दर्शयति,—"इन्द्राग्नी रोचना दिवः श्नथद्वृत्रम्(२८-२९)" इति। 'इन्द्राग्नी रोचना दिवः' इति पुरोऽनुवाक्या। 'श्नथद्वृत्रम्' इति याज्या। एतच्चोभयं पूर्वप्रपाठकस्यान्त्यानुवाके व्याख्यातम्।

अथैन्द्रस्य याज्यानुवाक्ययोः प्रतीके दर्शयति,—"इन्द्रं वो विश्वतस्परीन्द्रं नरः(३०-३१)" इति। 'इन्द्रं वो विश्वतस्परि' इति पुरोऽनुवाक्या; 'इन्द्रं नरः' इति याज्या। एतच्चोभयम् 'इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः' (१।६।१२अ०) इत्यनुवाके व्याख्यातम्।

अथ वैश्वकर्मणस्य याज्यानुवाक्ययोः प्रतीके दर्शयति,—"विश्वकर्मन् हविषा वावृधानो विश्वकर्मन् हविषा वर्द्धनेन(३२-३३)" इति। तत्र 'विश्वकर्मन् हविषा वावृधानः' इति पुरोऽनुवाक्या, 'विश्वकर्मन् हविषा वर्द्धनेन' इति याज्या। एतच्चोभयं 'इमा* विश्वा भुवनानि जुह्वत्' इत्यनुवाके (४।६।२अ०) व्याख्यास्यते॥

---

* अत्र 'य इमा' इति पाठो भवितुं युक्तः।

अत्र विनियोगसंग्रहः,—

अथ याज्या साकमेधेऽग्न्यनीक इति यागके।
आज्यभागानुवाक्ये द्वे अग्निर्वृत्रेति वर्णिते॥
भद्रा,-तिस्रः प्रधाने स्युः, स्वस्ति, स्विष्टकृति द्वयम्।
अग्निं, सान्तपनीयाज्यभागयोर्द्वे, प्रधानके॥
सान्तेति तिस्रः, पिप्रीहि,-द्वयं स्विष्टकृतीरितम्।
अग्निना, गृहमेधीये द्वे स्यातामाज्यभागयोः॥
गृह, प्रधाने तिस्रः स्युरुप, स्विष्टकृति द्वयम्।
क्रीड,-चतुष्टयं क्रीडे, क्रीयाग्निं वमिति* द्वयम्॥
संयाज्ये स्तामयेन्द्राग्नी, अथचेन्द्राग्नयागके।
इन्द्रमग्निं† चेन्द्रयागे, विश्व,-द्वे वैश्वकर्मणि॥
त्रयस्त्रिंशदृचः प्रोक्ता अनुवाक इहान्तिमे॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्॥
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे तृतीयप्रपाठके त्रयोदशोऽनुवाकः॥ ०॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्क-भूपालसाम्राज्यधुरन्धरेण सायनाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामकतैत्तिरीययजुःसंहिताभाष्ये चतुर्थकाण्डे तृतीयः प्रपाठकः सम्पूर्णः॥ ०॥

---

* अत्र "त्वमिति" इति पाठो भवितुं युक्तः।
† अत्र 'इन्द्रमिन्द्रं' इति पाठो भवितुं युक्तः।

श्रीगणेशाय नमः ।

---

# अथ तैत्तिरीयसंहिताभाष्ये

## चतुर्थकाण्डे चतुर्थप्रपाठके

### प्रथमोऽनुवाकः ।

रश्मिरसि क्षयाय त्वा क्षयं जिन्व प्रेतिरसि धर्माय त्वा धर्मं जिन्वान्वितिरसि दिवे त्वा दिवं जिन्व सन्धिरस्यन्तरिक्षाय त्वान्तरिक्षं जिन्व प्रतिधिरसि पृथिव्यै त्वा पृथिवीं जिन्व विष्टम्भोऽसि वृष्ट्यै त्वा वृष्टिं जिन्व प्रवास्यह्ने त्वाहर्जिन्व (१-७) अनुवासि रात्रियै त्वा रात्रिं जिन्वोशिगसि ॥ १ ॥

वसुभ्यस्त्वा वसूं जिन्व प्रकेतोऽसि रुद्रेभ्यस्त्वा रुद्रां जिन्व सुदीतिरस्यादित्येभ्यस्त्वाऽऽदित्यां जिन्वौजोऽसि पितृभ्यस्त्वा पितॄं जिन्व तन्तुरसि प्रजाभ्यस्त्वा प्रजा जिन्व पृतनाषाडसि पशुभ्यस्त्वा पशूं जिन्व (८-१४) रेवदस्योषधीभ्यस्त्वौषधीर्जिन्वाभिजिदसि युक्तग्रावेन्द्राय त्वेन्द्रं जिन्वाधिपतिरसि प्राणाय ॥ २ ॥

त्वा प्राणं जिन्व यन्तास्यपानाय त्वापानं जिन्व सꣳसर्पोऽसि चक्षुषे त्वा चक्षुर्जिन्व वयोधा असि श्रोत्राय त्वा श्रोत्रं जिन्व त्रिवृदसि(१५-२१) प्रवृदसि संवृदसि विवृदसि सꣳरोहोऽसि नीरोहोऽसि प्ररोहोऽस्यनुरोहोऽसि(२२-२८) वसुकोऽसि वेषश्रिरसि वस्यष्टिरसि(२९-३१) ॥ ३ ॥

उशिगसि । प्राणाय । त्रिचत्वारिꣳशच्च ॥ १ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे चतुर्थप्रपाठके प्रथमोऽनुवाकः ॥०॥

॥०॥ श्रीगणेशाय नमः ॥०॥

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
प्रपाठके तृतीये हि चितयः पञ्च वर्णिताः।
चतुर्थे पञ्चमचितेः शेषः सर्वो विधीयते ॥

तत्र प्रथमानुवाके स्तोमभागा उच्यन्ते। कल्पः, 'रश्मिरसि क्षयाय त्वा क्षयं जिन्वेति स्तोमभागाः सप्त सप्त प्रतिदिशमवशिष्टा मध्ये' इति। तत्र पूर्वस्यां दिश्युपधेयानामिष्टकानां सप्त मन्त्रानाह,—"रश्मिरसि क्षयाय त्वा क्षयं जिन्व(१) प्रेतिरसि धर्माय त्वा

धर्मं जिन्व(३) अन्वितिरसि दिवे त्वा दिवं जिन्व(३) सन्धिरस्यन्त-रिक्षाय त्वाऽन्तरिक्षं जिन्व(४) प्रतिधिरसि पृथिव्यै त्वा पृथिवीं जिन्व(५) विष्टम्भोऽसि वृष्ट्यै त्वा वृष्टिं जिन्व(६) प्रवास्यह्ने त्वाह-र्जिन्व(७)" इति। हे इष्टके, त्वमादित्यरश्मिरूपासि। अतः 'क्षयाय' (निवाससिद्ध्यर्थं) त्वाम् उपदधामि, त्वं च अस्माकं 'क्षयं' (निवासं) 'जिन्व' (प्रीणय, सम्पादयेत्यर्थः)। एवं सर्वत्र योजनीयं। प्रकृष्टा गतिर्यस्याः सा 'प्रेतिः'। 'धर्मः' विहित-कर्मानुष्ठानं। अनुकूला गतिर्यस्यासौ 'अन्वितिः'। द्यौः स्वर्गः। द्यावापृथिव्योर्मध्यवर्त्तिदेशः 'सन्धिः'। 'अन्तरिक्षं' गन्धर्वादिलोक-भागः, अन्तरिक्षशब्देन भूलोकभाग उपलक्ष्यते। * विशेषेण स्तभ्यते जलमत्र वार्यते इति 'विष्टम्भः' मेघः। प्रथमं वाति गच्छति, प्रवर्त्तत इत्युषःकालः। उषा हि सूर्योदयात् पूर्वं प्रवर्त्तते, अतोषासिध्यर्थं† त्वाम् उपदधामि।

अथ दक्षिणस्यां दिश्युपधेयानामिष्टकानां सप्त मन्त्रानाह,— "अनुवाऽसि रात्रियै त्वां रात्रिं जिन्व(८) उशिगसि वसुभ्यस्त्वा वसूं जिन्व(९) प्रकेतोऽसि रुद्रेभ्यस्त्वा रुद्रां जिन्व(१०) सुदीति-रस्यादित्येभ्यस्त्वादित्यां जिन्व(११) ओजोऽसि पितृभ्यस्त्वा पितॄं जिन्व(१२) तन्तुरसि प्रजाभ्यस्त्वा प्रजा जिन्व(१३) पृतनाषाडसि पशुभ्यस्त्वा पशूं जिन्व(१४)" इति। 'अनु' सूर्यास्तमयात् पश्चाद् वाति चरति प्रयातीति 'अनुवा' सायंसन्ध्या। 'उशिगसि'

---

* अत्र प्रतिधिशब्दार्थप्रकाशकोऽंशः पतित इव प्रतिभाति।

† अत्र 'अत उषासिद्ध्यर्थम्' इति पाठो भवितुं युक्तः।

(काम्यमानासि), अतः 'वसुभ्यः' (वसूनां प्रीत्यर्थं) त्वाम् उपदधामि, त्वं 'वसून्' 'जिन्व' (प्रीणय)। एवमुत्तरत्र योज्यं। प्रशस्तः केतः प्रकेतः, रुद्राणां यः 'प्रकेतः', तद्रूपा त्वम् 'असि'। शोभना दितिर्दीप्तिः* 'सुदीतिः', सा त्वम् 'असि'। 'ओजः' बलं, पितॄणां यद्बलमनुग्रहसमर्थं तद्रूपा त्वम् 'असि'। 'तन्तुः' पुत्रपौत्रादिसन्तत्यं। स्वकीयान् गवादिपशून् अपहर्त्तुम् आगता या परकीयसेना सा पृतना, तां सहते अभिभवतीति 'पृतनाषाट्'।

अथ पश्चिमायां दिश्युपधेयानामिष्टकानां सप्त मन्त्रानाह,—"रेवदस्योषधीभ्यस्त्वौषधीर्जिन्व(१५), अभिजिदसि युक्तग्रावेन्द्राय त्वेन्द्रं जिन्व(१६), अधिपतिरसि प्राणाय त्वा प्राणं जिन्व(१७), यन्तास्यपानाय त्वापानं जिन्व(१८), सꣳसर्पोऽसि चक्षुषे त्वा चक्षुर्जिन्व(१९), वयोधा असि श्रोत्राय त्वा श्रोत्रं जिन्व(२०), त्रिवृदसि(२१)" इति। रा अस्यास्तीति 'रेवत्' ओषधिसाध्यं यद्धनं तद्वत् जीवनं, तद्रूपा त्वम् 'असि'। अभितो जयसि शत्रून् अभिभवसीति 'अभिजित्'। पाषाणसदृशो वज्रमिव 'युक्तः' (हस्ते स्वीकृतः) 'ग्रावा' यस्यासौ 'युक्तग्रावा'। 'इन्द्रः' चक्षुरादीन्द्रियाण्यधिष्ठाय पालयिता। यः श्वासरूपो वायुः स 'अधिपतिः', तद्रूपा त्वम् 'असि'। बहिर्निर्गतवतः श्वासस्य पुनरप्यन्तःप्रवेशाय नियामको यो वायुविशेषः स 'यन्ता', तद्रूपा त्वम् 'असि'। सम्यक् सर्पयति बलेनेति 'संसर्पा' अहो धनदृष्टिप्रसारणया धनम्

---

* अत्र दीतिर्दीप्तिरिति पाठो भवितुं युक्तः।

अवति एवं मामवतु धने दृष्टिं प्रसार्य*। 'वयः' पक्षी तद्वत् दधातीति† 'वयोधाः' पक्षी, तत्र तत्र गत्वा स्वकार्यं साधयति, तथा श्रोत्रेन्द्रियशक्तिः तत्र‡ शब्दं प्राप्य निश्चिनोति, तच्छक्तिरूपा त्वम् 'असि'। तिस्रः 'आवृतः' (अवयवविशेषाः) यस्य मिथुनी-भावस्य सोऽयं 'त्रिवृत्',—पुमान् योषित् सङ्गश्चेत्यवयवत्रयं, तथा-विधमिथुनीभावरूपा त्वम् 'असि'।

अथोदीच्यां दिशि उपधेयानामिष्टकानां सप्त मन्त्रानाह,—"प्रवृदसि(२२), संवृदसि(२३), विवृदसि(२४), सꣳरोहोऽसि(२५), नीरोहोऽसि(२६), प्ररोहोऽसि(२७), अनुरोहोऽसि(२८)" इति। स्त्रीपुरुषयोः संसर्गानन्तरभाविनी या प्रवृत्तिः सा 'प्रवृत्', तद्रूपा त्वम् 'असि'। प्रवृत्त्यनन्तरभावी यः सम्यग्व्यापारः सोऽयं 'संवृत्', तद्रूपा त्वम् 'असि'। सद्व्यापारादूर्द्ध्वं या निवृत्तिः सा 'विवृत्', तद्रूपा त्वम् 'असि'। सम्भोगादूर्द्ध्वं वीजस्य क्षेत्रे यः समारोपः सोऽयं 'संरोहः', तद्रूपा त्वम् 'असि'। क्षेत्रे क्षिप्तस्य वीजस्य नि:शेषेण गर्भाशयव्याप्तिः 'नीरोहः', तद्रूपा त्वम् 'असि'। गर्भा-शये व्याप्तस्य शरीराकारः परिणामः 'प्ररोहः', तद्रूपा त्वम् 'असि'। तस्य च परिणतस्य शरीरस्यानुकूलः पुत्रादिरूपेण प्रादुर्भावः 'अनुरोहः', तद्रूपा त्वम् 'असि'।

---

* अत्र 'अवतो' इत्यत्र अहिरिति एवं 'मामवतु' इत्यत्र मामवितु-मिति पाठो भवितुं युक्तः। सम्यक् सर्पयति बलेनानिवार्त्तीति अनु मां वति धनदृष्टिप्रसारणाय दृष्टि इति का० ह० पु० एवं B. पु० पाठः।

† तद्वत् धावतीति आदर्शपु० पाठः।

‡ तत्तत् इति आदर्शपु० पाठः।

अथ मध्यदेशे उपधेयानामिष्टकानां त्रीन् मन्त्रानाह,— 'वसुकोऽसि(१९), वेषश्रिरसि(२०), वस्यष्टिरसि(२१)'' इति । 'वसु' (धनम्) अस्यास्तीति 'वसुकः' (धनीपुत्रः *) तद्रूपा त्वम् 'असि' । 'वेषः' व्याप्तं धनं, वेषं श्रयति सेवत इति 'वेषश्रिः' (प्राप्तस्याभिवृद्धि-कारीत्यर्थः); तद्रूपा त्वम् 'असि' । 'वसुनः' (अभिवृद्धस्य धनस्य) 'अष्टिः' (भोजनं) यस्यामि 'वस्यष्टिः†' (धनं सम्पाद्य तदभिवृद्धिञ्च कृत्वा तयाऽभिवृद्ध्या जीवतीत्यर्थः), तद्रूपा त्वम् 'असि' ।

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते,—''यज्ञेन वै प्रजापतिः प्रजा असृजत ता स्तोमभागैरेवासृजत यत्स्तोमभागा उपदधाति प्रजा एव तद् यजमानः सृजते'' (५।३।६ अ०) इति । 'प्रजापतिः' यदा 'यज्ञेन' 'प्रजा' 'असृजत', तदानीं यज्ञमध्यवर्त्तिनः स्तोम-भागमन्त्रा एव वृद्धिहेतवः, त्रिवृदादिस्तोमयुक्तानि यानि बहिष्पवमानादिस्तोत्राणि, तानि भजन्त इति । रश्मिरित्यादयो मन्त्रा स्तोमभागाः । ब्रह्मा तु स्तोत्राण्यभ्यनुज्ञातो रश्मिरित्या-दिकमेकैकं मन्त्रमुच्चार्य्य अभ्यनुजानाति । एतच्च अस्माभिः पूर्वम् ''ऋषयो वा इन्द्रं प्रत्यक्षम्'' (३।५।१) इत्यनुवाके स्पष्टमुक्तम् । अतो रश्मिरित्यादयो मन्त्राः स्तोमभागाः । तदुपधानेन 'यज-मानः' 'प्रजाः' 'सृजते' 'एव' ।

ता एता स्तोमभागाख्या इष्टका यज्ञप्रतिष्ठात्वेन च क्रमेण प्रशंसति,—''बृहस्पतिर्वा एतद् यज्ञस्य तेजः समभरद् यत्स्तोम

* धनिपुत्रः किंवा धनी पुत्र इति पाठो भवितुं युक्तः ।
† वकारस्थाने यकारः कथमिति चिन्तनीयम् ।

भागा यत्स्तोमभागा उपदधाति सतेजसमेवाग्निं चिनुते बृह-स्पतिर्वा एतां यज्ञस्य प्रतिष्ठामपश्यत् यत्स्तोमभागा यत्स्तोम-भागा उपदधाति यज्ञस्य प्रतिष्ठित्यै'' (५।३।६ अ०) इति ।

सामान्येन विहितं पुनर्विशेषाकारेण प्रशंसति,—''सप्त सप्तोप-दधाति सवीर्यत्वाय तिस्रो मध्ये प्रतिष्ठित्यै'' (५।३।६ अ०) इति। एकैकस्यां दिशि सप्त सप्तोपधानेन सवीर्यत्वं* दार्ढ्यं भवति। 'मध्ये' तिसृणामुपधानेन प्रतिष्ठास्थैर्यं भवति ।

प्रजापतिः स्तोमभागैरेव प्रजा असृजत इति सामान्यत उक्तं, तत्र कैः स्तोमभागैः किमसृजत ?—इति एकैकमिष्टकामन्त्रं विभजते, —''रश्मिरित्येवादित्यमसृजत, प्रेतिरिति धर्मम्, अन्वितिरिति दिवꣳ, सन्धिरित्यन्तरिक्षं, प्रतिधिरिति पृथिवीं, विष्टम्भ इति वृष्टिं, प्रवेत्यहः, अनुवेति रात्रिम्, उशिगिति वसून्, प्रकेत इति रुद्रान्, सुदीतिरित्यादित्यान्, ओज इति पितॄन्, तन्तुरिति प्रजाः, पृतनाषाडिति पशून्, रेवदित्योषधीः'' (५।३।६ अ०) इति। अत्र रश्मिरित्यादयो मन्त्रास्तत्तत्सृज्यपदार्थसम्बन्धित्वेन पूर्वं व्याख्याताः। अतस्तेन तेन मन्त्रेण तत्तत्पदार्थमसृजतेत्युपपन्नम्। एवं पञ्चदशभिर्मन्त्रैः सृष्टिरभिहिता ।

अथ सृष्टस्य जगतो रक्षाहेतुत्वं षोडशमन्त्रस्य दर्शयति,—''अभिजिदसि युक्तग्रावा इन्द्राय त्वेन्द्रं जिन्वेत्येव दक्षिणतो वज्रं पर्यौहदभिजित्यै'' (५।३।६ अ०) इति। अस्मिन् मन्त्रे वज्र एव सम्बोध्यते । हे वज्र, त्वं 'अभिजित्' (जयहेतुः†), 'युक्तग्रावा'

* सवीर्यत्वस्य इति पाठो भवितुं युक्तः।

† सर्वस्मिन् पुस्तके जयहेतु इति निर्विसर्गः पाठो न सम्यगिवाभाति।

(स्थापितपाषाण इव दृढः) च 'असि'। अत इन्द्रप्रीत्यर्थं त्वां पर्यूहामि, तेन 'इन्द्रं' प्रीणय इति मन्त्रार्थः। प्रजापतिरेतन्मन्त्रमुच्चारयन् दक्षिणहस्तेन सृष्टस्य जगतः प्रेरितवान्, तेन बाधकविनाशे सति सृष्ट्याऽभिजयोऽभूत्।

याः सृष्टाः प्रजा वज्रेणाभिरक्षितास्तासु शरीररूपासु प्रजासु मन्त्रचतुष्टयेन इन्द्रियस्थापनं दर्शयति,—"ताः प्रजा अपप्राणा असृजन तास्वधिपतिरसीत्येव प्राणमदधाद्, यन्तेत्यपानꣳ, सꣳसर्प इति चक्षुः, वयोधा इति श्रोत्रम्" (५।३।६अ०) इति।

एवमिन्द्रिययुक्तैः शरीरैर्व्यवहरन्तीषु प्रजासु मन्त्रचतुष्टयेन मिथुनीभावसम्पत्तिं दर्शयति,—"ताः प्रजाः प्राणतीरपानतीः पश्यन्तीः शृण्वतीर्न मिथुनी अभवन् तासु त्रिवृदसीत्येव मिथुनमदधात्" (५।३।६अ०) इति।

मिथुनीभूतासु प्रजासु मन्त्रचतुष्टयेन प्रजोत्पादनसामर्थ्यं दर्शयति,—"ताः प्रजा मिथुनीभवन्तीर्न प्राजायन्त ताः सꣳरोहोऽसि नीरोहोऽसीत्येव प्राजनयत्" (५।३।६अ०) इति।

अपत्योपेतानां प्रजानां प्रतिष्ठा भवतीत्येतद्दर्शयति,—"ताः प्रजाः प्रजाता न प्रत्यतिष्ठन् ता वसुकोऽसि, वेषश्रिरसि, वस्यष्टिरसीत्येवैषु लोकेषु प्रत्यस्थापयद् यदाह वसुकोऽसि वेषश्रिरसि वस्यष्टिरसीति प्रजा एव प्रजाता एषु लोकेषु प्रतिष्ठापयति" (५।३।६अ०) इति।

एतद्वेदनं प्रशंसति,—"सात्मान्तरिक्षꣳ रोहति स प्राणोऽमुष्मिंल्लोके प्रतितिष्ठत्यव्यर्धकः प्राणापानाभ्यां भवति य एवं

वेद'' (५।३।६अ०) इति। 'आत्मा' (सशरीरः) 'अन्तरिक्षं' गत्वा यक्षगन्धर्वादिलोकेषु भोगान् भुङ्क्ते, स्वर्गलोकेऽपि प्राणशरीरयुक्त एव 'प्रतितिष्ठति', 'प्राणापानाभ्यां' कदाचिदपि न वियुक्तो 'भवति'।

अत्र विनियोगसंग्रहः,—

इष्टका रश्मिरित्येकत्रिंशत्तु स्तोमभागका। इति।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये चतुर्थकाण्डे चतुर्थप्रपाठके प्रथमोऽनुवाकः॥०॥

राज्ञ्यसि प्राची दिग्वसवस्ते देवा अधिपतयोऽग्निर्हेतीनां प्रतिधर्त्ता त्रिवृत् त्वा स्तोमः पृथिव्याᳪं श्रयत्वाज्यमुक्थमव्यथयत् स्तभ्नातु रथन्तरᳪं साम प्रतिष्ठित्यै(१) विराडसि दक्षिणा दिग्रुद्रास्ते देवा अधिपतय इन्द्रो हेतीनां प्रतिधर्त्ता पञ्चदशस्त्वा स्तोमः पृथिव्याᳪं श्रयतु प्रउगमुक्थमव्यथयत् स्तभ्नातु बृहत् साम प्रतिष्ठित्यै(२) सम्राडसि प्रतीची दिक्॥ १॥

आदित्यास्ते देवा अधिपतयः सोमो हेतीनां प्रतिधर्त्ता सप्तदशस्त्वा स्तोमः पृथिव्याᳪं श्रयतु मरुत्वतीयमुक्थमव्यथयत् स्तभ्नातु वैरूपᳪं साम प्रतिष्ठित्यै(३)

स्वराडस्युदीची दिक् विश्वे ते देवा अधिपतयो वरुणो हेतीनां प्रतिधर्त्तैकविꣳशस्त्वा स्तोमः पृथिव्याꣳ श्रयतु निष्कैवल्यमुक्थमव्यथयत् स्तभ्नातु वैराजꣳ साम प्रतिष्ठित्यै[4] अधिपत्न्यसि बृहती दिङ् मरुतस्ते देवा अधिपतयः ॥ २ ॥

बृहस्पतिर्हेतीनां प्रतिधर्त्ता त्रिणवत्रयस्त्रिꣳशौ त्वा स्तोमौ पृथिव्याꣳ श्रयतां वैश्वदेवाग्निमारुते उक्थे अव्यथयन्ती स्तभ्नीताꣳ शाक्वररैवते सामनी प्रतिष्ठित्यै[5] अन्तरिक्षायर्षयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिणा प्रथन्तु विधर्त्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठे सुवर्गे लोके यजमानञ्च सादयन्तु[6] ॥ ३ ॥

प्रतीची दिक् । मरुतस्ते देवा अधिपतयः । चत्वारिꣳशच्च ॥ २ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे चतुर्थप्रपाठके द्वितीयोऽनुवाकः ॥ ० ॥

प्रथमेऽनुवाके स्तोमभागाख्या इष्टका उक्ताः । अथ द्वितीये नाकसदाख्या इष्टका अभिधीयन्ते । कल्पः, 'राज्ञ्यसि प्राची दिगिति पञ्च नाकसदः प्रतिदिशमेकां मध्ये' इति । पाठस्तु,—तत्र

प्रथमामाह,—"राज्ञ्यसि प्राची दिग्वसवस्ते देवा अधिपतयो-ऽग्निर्हेतीनां प्रतिधर्त्ता त्रिवृत्त्वा स्तोमः पृथिव्याꣳ श्रयत्वाज्य-मुक्थमव्यथयत् स्तभ्नातु रथन्तरꣳ साम प्रतिष्ठित्यै(१)" इति। हे इष्टके, त्वं 'राज्ञी' (राजमाना) 'प्राची दिक्', तद्रूपा त्वम् 'असि'। 'ते' (तव) 'वसवः' अष्टसङ्ख्याका 'अधिपतयः' (अधिकं पालयितारः); 'अग्निः' तवोपद्रवकराणां 'हेतीनां' (परकीयायु-धानां) 'प्रतिधर्त्ता' (निराकर्त्ता); योऽयं त्रिवृदाख्य'-स्तोमः', स त्वां 'पृथिव्यां' स्थापयतु। यत् 'आज्यमुक्थम्' (आज्यनामकं, 'प्र वो देवायाग्नये' इत्यादिकं शस्त्रम् अवस्थितं, त्वाम् 'अव्यथयत्' (व्यथारहितां कुर्वन्*) 'स्तभ्नातु' (दृढीकरोतु)। यत् 'रथन्तरं' 'साम' तत्, 'प्रतिष्ठित्यै' (तव चिरावस्थानाय) भवतु। एवमुत्तरे-ष्वपि मन्त्रेषु योज्यम्।

अथ द्वितीयं मन्त्रमाह,—"विराडसि दक्षिणा दिग्रुद्रास्ते देवा अधिपतय इन्द्रो हेतीनां प्रतिधर्त्ता पञ्चदशस्त्वा स्तोमः पृथिव्याꣳ श्रयतु प्र उगमुक्थमव्यथयत् स्तभ्नातु बृहत्साम प्रति-ष्ठित्यै(२)" इति। तत्तत्सम्बन्धिनस्त्रिवृदादयो†स्तोमास्ते च "समिध-मातिष्ठ" (१।८।१३) इत्यत्रैव व्याख्याताः। "वायुरग्रे गाः" इत्यादिकं शस्त्रं 'प्र उगम्'।

अथ तृतीयं मन्त्रमाह,—"सम्राडसि प्रतीची दिगादित्यास्ते देवा अधिपतयः सोमो हेतीनां प्रतिधर्त्ता सप्तदशस्त्वा स्तोमः

---

* कुर्व्वत् इति पाठो भवितुं युक्तः।

† तत्तत्सम्बन्धिनस्त्रिवृदादय इत्यंशः का० ङ० पुस्तके नास्ति।

पृथिव्याᳪ श्रयतु मरुत्वतीयमुक्थमव्यथयत् स्तभ्नातु वैरूपᳪ साम प्रतिष्ठित्यै[३]" इति। "आ त्वा रथं यथोतयः" इत्यादिकं 'मरुत्वतीयं' शस्त्रम्।

अथ चतुर्थं मन्त्रमाह,—"स्वराड़स्युदीची दिक् विश्वे ते देवा अधिपतयो वरुणो हेतीनां प्रतिधर्त्तैकविᳪशस्त्वा स्तोमः पृथिव्याᳪ श्रयतु निष्केवल्यमुक्थमव्यथयत् स्तभ्नातु वैराजᳪ साम प्रतिष्ठित्यै[४]" इति। "अभि त्वा शूर नोनुम" इत्यादिकं 'निष्केवल्यम्'।

अथ पञ्चमं मन्त्रमाह,—"अधिपत्न्यसि बृहती दिङ्मरुतस्ते देवा अधिपतयो बृहस्पतिर्हेतीनां प्रतिधर्त्ता त्रिणवत्रयस्त्रिᳪशौ त्वा स्तोमौ पृथिव्याᳪ श्रयतां वैश्वदेवाग्निमारुते उक्थे अव्यथयन्तौ स्तभ्नीताᳪ शाक्वररैवते सामनी प्रतिष्ठित्यै[५]" इति। अधिकं पालयित्री 'अधिपत्नी'। 'बृहती दिक्' (प्रौढ़ा ऊर्द्धा दिक्)। "तत्सवितुर्वृणीमहे" इत्यादिकं शस्त्रं वैश्वदेवम्। "वैश्वानराय पृथुपाजसे" इत्यादिकं शस्त्रम् आग्निमारुतम्।

अथ सर्वेष्वपि मन्त्रेष्वनुषञ्जनीयं शेषमाह,—"अन्तरिक्षाय-र्षयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिणा प्रथन्तु विधर्त्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठे सुवर्गे लोके यजमानञ्च सादयन्तु[६]" इति। 'देवेषु' मध्ये याः* 'प्रथमजा' 'ऋषयः' (नारदाद्याः), अत एव स्मर्यते, 'देवर्षिर्नारदस्तथा' इति, 'ते' (महर्षयः) त्वां (इष्टकां) 'दिवो' 'मात्रया' (आकाशस्य यत् परिमाणं, तेन परिमाणेन) 'प्रथन्तु' (विस्तारयन्तु)।

---

* ये इति पाठो भवितुं युक्तः।

किमर्थं ?। अन्तरिक्षार्थं—अन्तरिक्षं व्याप्तुमित्यर्थः। कीदृशेन प्रमाणेन ?—'वरिणा' (वरणीयेन)। न केवलमृषयः प्रथन्तु, किन्तु 'विधर्त्ता चायमधिपतिश्च' (योऽयमिष्टकानां निष्पादयिता यश्च पालकः) तावपि प्रथतां। तेन* महर्षयः विधर्त्ता अधिपतिश्च 'सर्वे' 'संविदानाः' (परस्परमैकमत्यं प्राप्ताः) 'नाकस्य' 'पृष्ठे' (स्वर्गसदृशस्यास्य क्षेत्रस्योपरि) 'त्वा' 'सादयन्तु', 'यजमानञ्च' 'स्वर्गे' 'लोके' 'सादयन्तु'।

अत्र यान्युदाहृतानि शस्त्राणि तान्याश्वलायनो दर्शयति,—"प्र वो देवायेत्याज्यमुपसन्तनुयादिति। वायुरग्रे गा यज्ञप्रीरिति सप्तानां पुरोरुचां तस्यास्तस्याः उपरिष्टात्तृचस्तृचं शंसेद्वायवा-याहि दर्शतेति सप्तदृचा द्वितीयां; प्रउगं त्रिः इति। मरुत्वतीयं शस्त्रं शंसेत् अध्वर्यो शो सावोमिति माध्यन्दिने शस्त्रादिष्वाह्वाव आ त्वा रथं यथोतय इदं वसो सुतमंध इति मरुत्वतीयस्य प्रतिपदनुचराविति। निष्केवल्यस्याभि त्वा शूर नो नुमोऽभि त्वा पूर्वपीतय इति प्रगाथौ स्तोत्रियानुरूपौ यदि रथन्तरपृष्ठमिति। तत्सवितुर्वृणीमहे† श्यानो देवसवितरिति वैश्वदेवस्य प्रतिपदनुचरावि-ति। स्वध्ययमाग्निमारुतं तस्यां पच्छः स्तुगावानं पच्छः शस्त्रावदर्धर्चश इतरां सन्तानमुत्तमेनां वचनेन वैश्वानराय पृथुपाजसे" इति।

राज्ञसीत्यादिभिर्मन्त्रैः साध्यमुपधानं विधत्ते,—"नाकसद्भि-र्वै देवाः सुवर्गं लोकमायन् तं नाकसदां नाकसत्त्वं यत् नाकसद

---

* 'ते' च इति पाठो भवितुं युक्तः।

† उत्तमे ये इति ह० पु० पाठः।

उपदधाति नाकसद्भिरेव तद्यजमानः सुवर्गं लोकमेति" (५।३।७अ०) इति। 'नाकः' (स्वर्गः) सद्यते प्राप्यते यैर्मन्त्रैर्नाकः* ते 'नाकसदः', तथा च मन्त्रलिङ्गं 'नाकस्य पृष्ठे सुवर्गे लोके यजमानस्य सादयन्तु' इति, तैर्मन्त्रैरुपधेया इष्टका अपि 'नाकसदः'। यस्मात् ताभिः 'देवाः' स्वर्गं गताः, तस्मात् 'नाकसत्' इति नाम सम्पन्नं, तदुपधानेन यजमानः स्वर्गं लोकं प्राप्नोति।

दुःखनिवारकत्वेन तदुपधानं प्रशंसति,—"सुवर्गो वै लोको नाको यस्यैता उपधीयन्ते नास्मा अकं भवति" (५।३।७अ०) इति। कं सुखं 'अकं' दुःखं, न विद्यते तद्दुःखं यत्र सोऽयं 'नाकः'; स्वर्गस्य तादृशः। ततो नाकसदामुपधाने यजमानस्य दुःखं न भवति।

पुनरपि स्थानसम्पादकत्वेन प्रशंसति,—"यजमानायतनं वै नाकसदो यन्नाकसद उपदधात्यायतनमेव तद्यजमानः कुरुते" (५।३।७अ०) इति।

पृष्ठस्तोत्रसम्बन्धितेजोरूपत्वेन पुनः प्रशंसति,—"पृष्ठानां वा एतत्तेजः सम्भृतं यन्नाकसदो यन्नाकसद उपदधाति पृष्ठानामेव तेजोऽवरुन्धे" (५।३।७अ०) इति॥

अत्र विनियोगसंग्रहः,—

राज्ञी†,—नाकसदः पञ्च, सर्वशेषोऽन्तरित्ययम्।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये चतुर्थकाण्डे चतुर्थप्रपाठके द्वितीयोऽनुवाकः॥ ०॥

* अत्र 'नाकः' इति शब्दः अधिक इव प्रतिभाति।

† 'राज्ञी',—इति पाठो भवितुं युक्तः।

अयं पुरो हरिकेशः सूर्यरश्मिस्तस्य रथगृत्सश्च रथौजाश्च सेनानिग्रामण्यौ पुञ्जिकस्थला च कृतस्थला चाप्सरसौ यातुधाना हेती रक्षांसि प्रहेतिः[१] अयं दक्षिणा विश्वकर्मा तस्य रथस्वनश्च रथेचित्रश्च सेनानिग्रामण्यौ मेनका च सहजन्या चाप्सरसौ दंक्ष्णवः पशवो हेतिः पौरुषेयो वधः प्रहेतिः[२] अयं पश्चाद्विश्वव्यचास्तस्य रथप्रोतश्चासमरथश्च सेनानिग्रामण्यौ प्रम्लोचन्ती च ॥ १ ॥

अनुम्लोचन्ती चाप्सरसौ सर्पा हेतिर्व्याघ्राः प्रहेतिः[३] अयमुत्तरात् संयद्वसुस्तस्य सेनजिच्च सुषेणश्च सेनानिग्रामण्यौ विश्वाची च घृताची चाप्सरसावापो हेतिर्वातः प्रहेतिः[४] अयमुपर्य्यर्वाग्वसुस्तस्य तार्क्ष्यश्चारिष्टनेमिश्च सेनानिग्रामण्यावुर्वशी च पूर्वचित्तिश्चाप्सरसौ विद्युद्धेतिरवस्फूर्जन् प्रहेतिः[५] तेभ्यो नमस्ते नो मृडयन्तु ते यं ॥ २ ॥

द्विष्मो यश्च नो द्वेष्टि तं वो जंभे दधामि[६*] आयोस्त्वा सदने सादयाम्यवतश्छायायां नमः समुद्राय नमः समुद्रस्य चक्षसे[१] परमेष्ठी त्वा सादयतु दिवः पृष्ठे व्यचस्वतीं प्रथस्वतीं विभूमतीं प्रभूमतीं परिभूमतीं

---

* नायं स्वतन्त्रो मन्त्रः ।

दिवं यच्छ दिवं दृꣳह दिवं मा हिꣳसीर्विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय सूर्यस्त्वाभिपातु मह्या स्वस्त्या, छर्दिषा शन्तमेन तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद(७)। प्रोथदश्वो न यवसे अविष्यन् यदा महः संवरणाद् व्यस्थात्। आदस्य वातो अनु वाति शोचिरध स्म ते व्रजनं कृष्णमस्ति(८)॥

॥ ३ ॥

प्रम्लोचन्ती च। यꣳ। स्वस्त्या। अष्टाविꣳशतिश्च ॥ ३ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे चतुर्थप्रपाठके तृतीयोऽनुवाकः ॥०॥

द्वितीयेऽनुवाके नाकसदाख्या इष्टका उक्ताः। अथ तृतीये चोडाख्या इष्टका उच्यन्ते। कल्पः, 'तासु पुरीषमध्यूह्य, 'अयं पुरः' इति पञ्चचोडा अभ्युपदधाति, द्वेष्यं मनसा ध्यायन् पश्चात् प्राचीमुत्तमाम्' इति। तत्र प्रथममाह,—"अयं पुरो हरिकेशः सूर्यरश्मिस्तस्य रथगृत्सश्च रथौजाश्च सेनानिग्रामण्यौ पुञ्जिकस्थला च कृतस्थला चाप्सरसौ यातुधाना हेती रक्षाꣳसि प्रहेतिः(१)" इति। 'अयम्' (अग्निः) 'पुरः' (पूर्वस्यां दिशि) 'हरिकशः' (हिरण्यवर्णकेशसमाना ज्वाला यस्यासौ हरिकेशः), 'तस्य' (तादृशस्याग्नेः) परिचारकौ द्वौ 'सेनानि—ग्रामण्यौ',—

एकः सेनां परराज्येषु नयति, अपरः स्वराज्ये ग्रामं नयति। तत्र 'रथगृत्सः' इति सेनान्यो नामधेयं। गृत्सो गर्धवान्*, यस्य रथे महती तृष्णा सोऽयं 'रथगृत्सः'। 'रथौजाः' इति ग्रामण्यो नामधेयम्। ओजो बलं, यस्य रथारोहणे बलाधिक्यं, स 'रथौजाः'। यथैतौ मुख्यौ परिचारकौ, तथा द्वे 'अप्सरसौ' परिचारिके, तत्र 'पुञ्जिकस्थला' इत्येकस्या नामधेयं, 'क्रतुस्थला' इत्यपरस्या नामधेयं। 'यातुधाना' 'रक्षांसि' 'च' इत्यवान्तरजातिभेदोऽवगन्तव्यः। 'हेति—प्रहेती' अप्यायुधविशेषौ,—तत्र यातुधाना क्रूरास्तीक्ष्णहेतिस्वरूपाः; 'रक्षांसि' अतिक्रूराः तीक्ष्णप्रहेतिस्वरूपाणि। यस्याग्नेरिदं सर्वं, हे इष्टके, तदग्निस्वरूपाऽसीत्यभिप्रायः। एवं सर्वत्र योज्यम्।

अथ द्वितीयं मन्त्रमाह,—"अयं दक्षिणा विश्वकर्मा तस्य रथस्वनश्च रथेचित्रश्च सेनानिग्रामण्यौ मेनका च सहजन्या चाप्सरसौ दंक्ष्णवः पशवो हेतिः पौरुषेयो वधः प्रहेतिः(१)" इति। विश्वानि कर्माण्यग्निहोत्रादीनि यस्याग्नेः, सोऽयं 'विश्वकर्मा' दक्षिणस्यां दिशि स्थितः। 'तस्य' 'रथस्वनः' 'सेनानीः'। 'रथेचित्रः' 'ग्रामणीः'। 'मेनका' इति 'सहजन्या' इति चाप्सरसोः नामधेयं। 'दंक्ष्णवः' (दंशनशीला व्याघ्रादयः) 'हेतिः'। सङ्ग्रामेषु पुरुषसम्बन्धी यो 'वधः' स 'प्रहेतिः'।

अथ तृतीयमाह,—"अयं पश्चाद्विश्वव्यचास्तस्य रथप्रोतश्चासमरथश्च सेनानिग्रामण्यौ प्रम्लोचन्ती चानुम्लोचन्ती चाप्सरसौ

---

* गृत्सो मत्सर्वान् इति ह० पु० पाठः।

सर्पा हेतिर्व्याघ्राः प्रहेतिः(३)" इति। विश्वं व्यचति प्राप्नोतीति 'विश्वव्यचाः'। सर्वमन्यत् पूर्ववद्व्याख्येयम्।

अथ चतुर्थं मन्त्रमाह,—"अयमुत्तरात् संयद्वसुस्तस्य सेनजिच्च सुषेणश्च सेनानिग्रामण्यौ विश्वाची च घृताची चाप्सरसावापो हेतिर्वातः प्रहेतिः(४)" इति। 'संयत्' (प्राप्तं) 'वसु' (धनं) यस्याग्नेः, सोऽयं 'संयद्वसुः', सोऽग्निः 'उत्तरात्' (उत्तरस्यां दिशि) वर्त्तते। शेषं पूर्ववत्।

अथ पञ्चमं मन्त्रमाह,—"अयमुपर्य्यर्वाग्वसुस्तस्य तार्क्ष्यश्चारिष्टनेमिश्च सेनानिग्रामण्यावुर्वशी च पूर्वचित्तिश्चाप्सरसौ विद्युद्धेतिरवस्फूर्जन् प्रहेतिः(५) इति। 'अर्वाग्वसुः' (अधोमुखत्वेन) 'वसुनो' (मेघात्) भूमौ पतनात् वैद्युतोऽग्निस्तथोच्यते, स च 'उपरि' (ऊर्द्ध्वायां दिशि) प्रवर्त्तते। भयहेतुः प्रकाशः(?) 'विद्युत्'। मारको ध्वनिः 'अवस्फूर्जन्'।

एतेषु पञ्चस्वपि मन्त्रेष्वनुषञ्जनीयं शेषमाह,—"तेभ्यो नमस्ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि(६)" इति। योऽयमग्निः, यौ च 'सेनानिग्रामण्यौ', ये च 'अप्सरसौ' यौ च 'हेतिप्रहेती', 'तेभ्यः' सर्वेभ्यः 'नमः' अस्तु 'ते' सर्वे 'नः' (अस्मान्) 'मृडयन्तु' (सुखयन्ति*)। 'यं' वैरिणं 'ते' वयं 'द्विष्मः', 'यश्च' वैरी 'नः' (अस्मान्) 'द्वेष्टि', 'तं' वैरिणं युष्माभिरनुमृष्टोतोऽहं 'वः' (युष्माकं) 'जम्भे' (विदारितास्ये) 'दधामि' (स्थापयामि)।

---

* सुखयन्तु इति पाठो भवितुं युक्तः।

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते,—"पञ्चचोडा उपदधाति अप्सरस एवैनमेता भूता अमुष्मिंल्लोक उपशेरतेऽथो तनूपानीरेवैता यजमानस्य" (५।३।७अ०) इति। 'गूह संवरणे' इत्यस्माद्धातो-रुत्पन्नश्चोडाशब्दः; नाकसदामुपरि च्छिद्रावरणार्थत्वात् 'चोडाः' इत्युच्यन्ते। पञ्चसङ्ख्याकाश्चोडाः 'पञ्चचोडाः'; तासामुपधाने सति 'एता' इष्टकाः 'अप्सरसः' 'एव' 'भूताः' स्वर्गलोके 'एनं' (यजमानम्) 'उपशेरते'। अपि च 'एता' 'अप्सरसः' 'यजमानस्य' 'तनूपानीरेव' (शरीरपालनपरा एव)।

उपधानकाले ध्यानविशेषं विधत्ते,—"यं द्विष्यात्तमुपदधद् ध्यायेदेताभ्य एवैनं देवताभ्य आवृश्चति ताजगार्त्तिमार्च्छति" (५।३।७अ०) इति। अयं यजमानः, 'यं' पुरुषं 'द्विष्यात्' 'तं' (द्वेष्यम्) अध्वर्युरुपधानं कुर्व्वन् 'ध्यायेत्'। तेन ध्यानेन 'एताभ्यः' 'एव' (अग्निसेनान्यादिभ्यः) 'देवताभ्यः' 'एनं' द्वेष्यम् 'आवृश्चति' (सर्व्वतो विच्छिन्नं करोति) 'ताजक् आर्त्तिमार्च्छति' (तदानीमेव मरणं प्राप्नोति)।

नाकसदामुपरि पञ्चचोडाधानं विधत्ते,—"उत्तरा नाकसद्भ्य उपदधाति यथा जायामानीय गृहेषु निषादयति तादृगेव तत्" (५।३।७अ०) इति। गृहस्थानीया नाकसदः, जायास्थानीयाः पञ्चचोडाः।

तत्र 'अयं पश्चात्' इति तृतीयमन्त्रेणोपधेया येयमिष्टका, तस्याश्चरमत्वं विधत्ते,—"पश्चात् प्राचीमुत्तमामुपदधाति तस्मात् पश्चात् प्राची पत्न्यन्वास्ते" (५।३।७अ०) इति। यस्मात्

पश्चिमायां दिशि प्राङ्मुखत्वेनोपधेया इष्टका चरमत्वेनोपधत्ते, 'तस्मात्' पश्चिमायां दिश्यवस्थाय प्राङ्मुखी पत्नी गार्हपत्यमुपविशति।

कल्पः, 'आयोष्ट्वा सदने सादयामीति स्वयमातृण्णामभिमृश्याश्वेनोपघ्राप्य परमेष्ठी त्वा सादयत्वित्यविदुषा ब्राह्मणेन सह मध्येऽग्नेरुपदधाति' इति। अभिमर्शनमन्त्रपाठस्तु,—"आयोष्ट्वा सदने सादयाम्यवतश्छायायां नमः समुद्राय नमः समुद्रस्य चक्षसे(१)" इति। एति निरन्तरं गच्छतीति 'आयुः' आदित्यः, स च सर्वं जगद् अवति, तस्मात् 'अवतः' 'आयोः' 'छायायां' सत्यां, सन्तापपरिहारेण प्रीत्ये कृते सतीत्यर्थः। 'सदने' (अस्मिन् स्थाने) हे इष्टके, 'त्वां' 'सादयामि'। 'समुद्राय' (समुद्रसदृशादित्याय) 'नमः' अस्तु। 'समुद्रस्य' 'चक्षसे' (प्रकाशकाय) 'नमः' अस्तु।

उपधानमन्त्रपाठस्तु,—"परमेष्ठी त्वा सादयतु दिवः पृष्ठे व्यचस्वतीं प्रथस्वतीं विभूमतीं प्रभूमतीं परिभूमतीं दिवं यच्छ दिवं दृꣳह दिवं मा हिꣳसीर्विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय सूर्यस्त्वाभिपातु मह्या स्वस्त्या छर्दिषा शन्तमेन तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद(०)" इति। 'परमे' (उत्कृष्टे सत्यलोके) तिष्ठतीति 'परमेष्ठी' (ब्रह्मा)। स 'त्वा' 'दिवः' 'पृष्ठे' (स्वर्गस्योपरि) 'सादयतु'। कीदृशीं त्वां?—'व्यचस्वतीं' (अभिव्यक्तिमतीं), 'प्रथस्वतीं' (विस्तारवतीं), 'विभूमतीं' (विविधवस्तूत्पादनशक्तिमतीं), 'प्रभूमतीं' (प्रभुत्वशक्तिमतीं), 'परिभूमतीं' (परसैन्यपराभवशक्तिमतीं), 'दिवं' 'यच्छ' (स्वर्गभोगं यजमानाधीनतया

नियतं कुरु)। 'दिवं' 'दृꣳह' (द्युलोके भोगं दृढ़ीकुरु)। 'दिवं' 'मा हिꣳसीः' (दिवं द्युलोकभोगं, मा हिंसीर्मा विनाशय)। 'विश्वस्मै' (सर्वस्मै) प्राणापानव्यानोदानाख्यवायुवृत्तिलाभाय, 'प्रतिष्ठायै' (स्वगृहे स्थितिलाभाय), 'चरित्राय' (शास्त्रीयाचरणाय);—प्राणिनाम् एतस्य सर्वस्य सिद्ध्यर्थं अयं 'सूर्यः' 'त्वाम्' अभितः 'पातु'। केन रचणमिति?—तदुच्यते, 'मह्या' 'स्वस्त्या' (महत्या योगक्षेमसम्पत्त्या), 'शन्तमेन' 'छर्दिषा' (अत्यन्तसुखकारिणा दीप्तिविशेषेण), तव स्वामिभूतया 'देवतया' अनुगृहीता स्थिरा सती 'सीद' (इहोपविश)। 'अङ्गिरस्वत्' (अङ्गिरसा चयनानुष्ठाने यथा त्वं 'ध्रुवा' स्थिता, तद्वत्)।

कल्पः, 'प्रोथदश्व इत्युत्तरेऽꣳसे विकर्णीम्' इति। पाठस्तु,— "प्रोथदश्वो न यवसे अविष्यन् यदा महः संवरणाद् व्यस्थात्। आदस्य वातो अनु वाति शोचिरध स्म ते व्रजनं कृष्णमस्ति(८)" इति। अयमग्निः, 'अश्वो न' (अश्व इव) 'प्रोथत्' (प्रोथति, जाज्वल्यमानः शब्दं करोति)। दृष्टान्तभूतोऽश्वः कथं शब्दं करोति?—इति, तदुच्यते, 'यदा' 'महः' (महतः) 'संवरणात्' (अश्वशालारूपात् संवृतस्थानात्) 'व्यस्थात्' (विनिर्गच्छति), तदानीम् अरण्ये 'यवसे' 'अविष्यन्' (घासार्थं गमिष्यन्) शब्दं करोति। 'आत्' (अतः) अनन्तरं 'अस्य' (शब्दं कुर्वतोऽग्नेः) 'शोचिः' 'अनु' (दीप्तिमनु) 'वातो' 'वाति' (वायुः प्रवर्त्तते),—अग्निज्वालाशब्दसमनन्तरमेव वायोरवश्यं प्रवृत्तेरयमग्निर्वायुसख इति लोकेऽभिधीयते। 'अध'-शब्दो वर्गचतुर्थयुक्तोऽप्यानन्तर्यमेवाचष्टे। हे अग्ने, तव ज्वालाया

वायुसंयोगानन्तरं 'प्रजनम्' (अरण्यगमनस्थानं) 'कृष्णमस्ति' (दाहेन कृष्णमस्ति, दाहेन कृष्णवर्णमेवावभासते)।

आयोस्त्वेत्यादिमन्त्रसाध्यमुपधानं विधत्ते,—"स्वयमातृण्णाञ्च विकर्णीञ्चोत्तम उपदधाति प्राणो वै स्वयमातृण्णायुर्विकर्णी, प्राणञ्चैवायुश्च प्राणानामुत्तमौ धत्ते, तस्मात् प्राणश्चायुश्च प्राणानामुत्तमौ" (५।२।७अ०) इति। 'स्वयमातृण्णा' (स्वतश्छिद्रेष्टका) पूर्वमप्युक्ता; उत्तरेऽस्मे संस्पृष्टा सती, वामभागे विभक्तः कर्ण इवावभासमानत्वात् इयमिष्टका 'विकर्णी' इत्युच्यते। या 'स्वयमातृण्णा' या च 'विकर्णी' ते उभे अपि 'उत्तमे' उपदध्यात्; सर्वासाम् इष्टकानामवसाने तयोरुपधानमित्यर्थः। स्वयमातृण्णायाः प्राणरूपत्वात् विकर्ण्याश्चायुःस्वरूपत्वात् तयोरुत्तमत्वे सति चक्षुरादीनां प्राणानां मध्ये श्वासरूपमायुश्चोत्तमत्वेन धृतवान् भवति, तस्माल्लोकेऽपि श्वासायुषि* सर्वेषां 'प्राणानां' इतरेषां मध्ये उत्तमे, तयो स्थितयोश्चक्षुरादीन्द्रियवैकल्यमपि सहन्ते।

अन्यासामिष्टकानामुपरि यथैते इष्टके उपचिते, तथा तयोरुपरि अन्येष्टकोपाधानप्रसक्तिं वारयितुं निषेधति,—"नान्यामुत्तरामिष्टकामुपदध्यात् यदन्यामुत्तरामिष्टकामुपदध्यात् पशूनाञ्च यजमानस्य च प्राणञ्चायुश्चापि दध्यात् तस्मान्नान्योत्तरेष्टकोपधेया" (५।२।७अ०) इति। एतयोरुपरि अन्येष्टकोपाधाने श्वासायुषी च्छादिते भवतः, 'तस्मात्' 'अन्यां' न 'उपदध्यात्'।

---

* अत्र श्वासायुषी इति पाठो भवितुं युक्तः।

प्रथमचितौ या स्वयमातृणा, सा भूमित्वेन स्तुता; मध्यमचितौ अन्तरिक्षत्वेन। इदानीं पञ्चमचितौ द्युलोकत्वेन स्तौति,—"स्वयमातृणामुपदधात्यसौ वै स्वयमातृणाऽमूमेवोपधत्ते" (५।२।७अ०) इति।

उपधानात् प्रागश्वोपघ्रापणं विधत्ते,—"अश्वमुपघ्रापयति प्राणमेवास्यां दधात्यथो प्राजापत्यो वा अश्वः प्रजापतिनैवाग्निं चिनुते स्वयमातृणा भवति प्राणानामुत्सृष्ट्यै अथो सुवर्गस्य लोकस्यानुख्यात्यै एषा वै देवानां विक्रान्तिर्यद्विकर्णी यद्विकर्णीमुपदधाति देवानामेव विक्रान्तिमनु विक्रमते" (५।२।७अ०) इति। विकर्ण्या एव पराक्रमरूपत्वात् तदुपधानेन यजमानोऽपि देववत् पराक्रमवान् भवति।

उत्तरासरूपदेशं विधत्ते,—"उत्तरत उपदधाति तस्माद् उत्तरत उपचारोऽग्निः" (५।२।७अ०) इति। येषु उपचारेषु देशविशेषो न विहितस्ते सर्वेऽपि वह्नेः 'उत्तरतः' स्थित्वा कर्त्तव्याः, तद्यथा ब्रह्मवरणान्वाधानजपादयः।

अथैतस्या उपधाने 'आदस्य वातो अनुवाति शोचिः' इति वायुवाचिशब्दामृचं विनियुङ्क्ते,—"वायुमती भवति समिध्यै" (५।२।७अ०) इति। सति हि वायावग्निः समिध्यते।

अत्र विनियोगसंग्रहः,—

अयं पुरः, पञ्चचोड़ा लभ्य, इत्यनुषज्यते।
आ, स्पृशेत् स्वयमातृणां, परमेष्ठीति सादयेत्।

प्रोथद्, विकर्णीमादध्यान्मन्त्रा वष्टाविहेरिताः* ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे चतुर्थप्रपाठके तृतीयोऽनुवाकः ॥३॥

---

अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयं। अपाꣳ रेताꣳसि जिन्वति(१)। त्वामग्ने पुष्करादध्यथर्वा निरमन्थत। मूर्ध्नो विश्वस्य वाघतः(२)। अयमग्निः सहस्रिणो वाजस्य शतिनस्पतिः। मूर्द्धा कवी रयीणां(३)। भुवो यज्ञस्य रजसश्च नेता यत्रानियुद्भिः सचसे शिवाभिः। दिवि मूर्द्धानं दधिषे सुवर्षां जिह्वामग्ने चकृषे हव्यवाहं(४)। अबोध्यग्निः समिधा जनानां ॥

॥ १ ॥

प्रति धेनुमिवायतीमुषासं। यह्वा इव प्रवयामुज्जिहानाः प्रभानवः सिस्रते नाकमच्छ(५)। अवोचाम कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे। गविष्ठिरो नमसा स्तोममग्नौ दिवीव रुक्ममुर्व्यञ्चमश्रेत्(६)। जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षः सुविताय

---

* वष्टाविहेरिता इति पाठो भवितुं युक्तः।

नव्यसे। घृतप्रतीको बृहता दिविस्पृशा द्युमद्विभाति भरतेभ्यः शुचिः[७]। त्वामग्ने अङ्गिरसः॥ २॥

गुहाहितमन्वविन्दञ्छिश्रियाणं वने-वने। स जायसे मथ्यमानः सहो महत्त्वामाहुः सहसस्पुत्रमङ्गिरः[८] यज्ञस्य केतुं प्रथमं पुरोहितमग्निन्नरस्त्रिषधस्थे समिन्धते। इन्द्रेण देवैः सरथꣳ स बर्हिषि सीदन्निहोता यजथाय सुक्रतुः[९]। त्वां चित्रश्रवस्तम हवन्ते विक्षु जन्तवः। शोचिष्केशं पुरुप्रियाग्ने हव्याय वोढवे[१०]। सखायः सं वः सम्यञ्चमिषं॥ ३॥

स्तोमञ्चाग्नये। वर्षिष्ठाय क्षितीनामूर्जो नप्त्रे सहस्वते[११] सꣳ समिद्युवसे वृषन्नग्ने विश्वान्यर्य आ। इडस्पदे समिध्यसे स नो वसून्याभर[१२]। एना वो अग्निं नमसोर्जो नपातमाहुवे प्रियं चेतिष्ठमरतिꣳ स्वध्वरं विश्वस्य दूतममृतं[१३]। स योजते अरुषो विश्वभोजसा स दुद्रवत् स्वाहुतः। सुब्रह्मा यज्ञः सुशमी॥ ४॥

वसूनां देवꣳ राधो जनानां[१४]। उदस्य शोचिरस्थादाजुह्वानस्य मीढुषः। उद्धूमासो अरुषासो दिविस्पृशः समग्निमिन्धते नरः[१५]। अग्ने वाजस्य गोमत ईशानः सहसो यहो। अस्मे धेहि जातवेदो महि-

अर्वः[१६]। स इधानो वसुष्कविरग्निरीडेन्यो गिरा। रेवदस्मभ्यं पुर्वणीक दीदिहि[१७]। क्षपो राजन्नुत त्मनाग्ने वस्तोरुतोषसः स तिग्मजम्भ ॥ ५ ॥

रक्षसो दह प्रति[१८]। आ ते अग्न इधीमहि द्युमन्तं देवाऽजरं। यद्ध स्या ते पनीयसी समिद्दीदयति द्यवी-षंं स्तोतृभ्य आभर[१९]। आ ते अग्न ऋचा हविः शुक्रस्य ज्योतिषस्पते। सुश्चन्द्र दस्म विश्पते हव्यवाट् तुभ्यंं हूयत इषंं स्तोतृभ्य आभर[२०]। उभे सुश्चन्द्र सर्पिषो दर्वी श्रीणीष आसनि। उतो न.उत्पुपूर्याः॥ ॥ ६ ॥

उक्थेषु शवसस्पत इषंं स्तोतृभ्य आभर[२१]। अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रंं हृदिस्पृशं। ऋध्यामा त ओहैः[२२]। अधा ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः। रथीर्ऋतस्य बृहतो बभूथ[२३]। आभिष्टे अद्य गीर्भि-र्गृणन्तोऽग्ने दाशेम। प्र ते दिवो न स्तनयन्ति शुष्माः[२४]। एभिर्नो अर्कैर्भवा नो अर्वाङ् ॥ ७ ॥

सुवर्न ज्योतिः। अग्ने विश्वेभिः सुमना अनीकैः[२५]। अग्निंं होतारं मन्ये दास्वन्तं वसोः सूनुंं सहसो जातवेदसं। विप्रन्न जातवेदसं। य ऊर्द्ध्वया स्वध्वरो देवो देवाच्या कृपा। घृतस्य विभ्राष्टिमनु शुक्रशोचिष

आजुह्वानस्य सर्पिषः[२६]। अग्ने त्वन्नो अन्तमः। उत त्राता शिवो भव वरूथ्यः[२७]। तं त्वा शोचिष्ठ दीदिवः। सुम्नाय नूनमीमहे सखिभ्यः[२८]। वसुरग्निर्वसुश्रवाः। अच्छा नक्षि द्युमत्तमो रयिं दाः[२९] ॥ ८ ॥

जनानाम्। अङ्गिरसः। इषं᳚। सुशर्मा। तिग्मजम्भ। पुपूर्या। अर्वाङ्। वसुश्रवाः। पञ्च च ॥ ॥ ४ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे चतुर्थप्रपाठके चतुर्थोऽनुवाकः ॥ ० ॥

अथ तृतीयेऽनुवाके पञ्चचोडादय इष्टका उक्ताः। अथ चतुर्थेऽनुवाके छन्दोभिधा इष्टका उच्यन्ते। कल्पः, 'अग्निर्मूर्द्धेति तिस्रो गायत्रीः पुरस्तादुपदधात्येवमुत्तराणि त्रीणि त्रिष्टुभो दक्षिणतो जगतीः पश्चादनुष्टुभ उत्तरतो बृहतीरुष्णिहाः पङ्क्तीरक्षरपङ्क्तीरिति विषुरूपाणि छन्दाᳲसि यथावकाशमतिछन्दसं मध्ये द्विपदा अन्ततः' इति। तत्र तिसृषु गायत्रीषु प्रथमां गायत्रीमाह,—"अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयं। अपाᳲ रेताᳲसि जिन्वति[१]" इति। 'अयम्' 'अग्निः' आदित्यरूपेण 'दिवः' (द्युलोकस्य) 'ककुत्' (उच्छ्रितः) 'मूर्द्धा' (शिरस्थानीयः)। 'पृथिव्याः' 'पतिः' (दाहपाकादिकारित्वेन पालकोऽपि) 'अयं'। किञ्च

'अपां' 'रेतांसि' (उदककार्याणि स्थावरजङ्गमशरीराणि) जाठराग्नि-रूपेण 'जिन्वति' (प्रीणयति)।

अथ द्वितीयामाह,—"त्वामग्ने पुष्करादध्यथर्वा निरमन्थत। मूर्द्ध्नो विश्वस्य वाघतः[२]" इति। हे 'अग्ने', अथर्वाख्य ऋषिः 'पुष्करपर्णादधि' (पद्मपत्रस्योपरि) 'त्वां' 'निरमन्थत' (निःशेषेण मथितवान्)। अत एव पञ्चमकाण्डे ब्राह्मणमाम्नातं, "पुष्करे पर्णे ह्येनमुपश्रितमविन्दत्" इति। कीदृशात् पुष्करपर्णात्?—'मूर्द्ध्नः' (उत्तमाङ्गवत् प्रशस्तात्), 'विश्वस्य' 'वाघतः' (सर्वस्य जगतो वाह-कात्)। इदं हि पुष्करपर्णम् अग्निमन्थनयज्ञनिष्पादनादिद्वारा सर्वं जगन्निर्वहति।

अथ तृतीयामाह,—"अयमग्निः सहस्रिणो वाजस्य शतिन-स्पतिः। मूर्द्धा कवी रयीणाम्[३]" इति। 'अयं' समिध्यमानः 'अग्निः' सहस्रसङ्ख्यावतः शतसङ्ख्यावतश्च अन्नस्य 'पतिः'। अत एव 'मूर्द्धा' (शिरोवदुत्तमः), 'कविः' (विद्वान्), तादृशो 'रयीणां' (धनानां) दाता भवतु।

अथ तिसृषु त्रिष्टुप्सु प्रथमां त्रिष्टुभमाह,—"भुवो यज्ञस्य रजसश्च नेता यत्रानियुद्भिः सचसे शिवाभिः। दिवि मूर्द्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहम्[४]" इति। अयमग्निः, भूलोकस्य (तत्रानुष्ठेयस्य) 'यज्ञस्य' तस्मिन् यज्ञे प्रवर्त्तकस्य 'रजसः' (गुणस्य) 'च' 'नेता' (निर्वाहकः)। तादृश हे 'अग्ने', 'यत्र' (यस्यां दिवि) सूर्यरूपो भूत्वा 'नियुद्भिः' (रथे नितरां याज्यमानाभिः) 'शिवाभिः' (उत्तमाभिरश्वजातिभिः) 'सचसे' (समवैषि), तस्यां

'दिवि' 'मूर्द्धानं' (शिरोवदुन्नतस्थितिं) 'दधिषे' (धारयसि)। कीदृशं मूर्द्धानं?—'सुवर्षां' (सुवः स्वर्गे स्यति सर्वदा तिष्ठतीति सुवर्षास्तां)। सोमपाशब्दवत् पुंलिङ्गोऽयं। हे 'अग्ने', त्वम् अस्मिन् यज्ञे हव्यवाहं' (हविःप्रापिकां) 'जिह्वां' (ज्वालां) 'चकृषे' (करोषि)।

अथ द्वितीयां त्रिष्टुभमाह,—"अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासं। यह्वा इव प्र वयामुज्जिहानाः प्र भानवः सिस्रते नाकमच्छ(५)" इति। 'जनानाम्' ऋत्विजां सम्बन्धिना 'समिधा' अयम् 'अग्निः' 'अबोधि' (प्रबोधितः, प्रज्वलितोऽभूत्)। तत्र दृष्टान्तः,—'आयतीमुषासं' 'प्रति' 'धेनुं' उषःकाले समागते सति दोहनाय शयनाद्धेनुं यथा उत्थापयति, तद्वत्। बुध्यमानस्य अग्नेः 'भानवः' (रश्मयः) 'प्र'-'उज्जिहानाः' (प्रकर्षेणोद्गच्छन्तः), अपि एधि प्रबोधितः(?)। 'नाकमच्छ' (स्वर्गमभिप्राप्तुं) 'प्र'-'सिस्रते' (अतिशयेन प्रसरन्ति)। तत्र दृष्टान्तः,—'वयां' 'यह्वा' 'इव'—'वयां' (वीनां, पक्षिणां) मध्ये 'यह्वा' (महान्तः) पक्षिणो यथा प्रकर्षेणोत्पतन्ति तद्वत्।

अथ तृतीयां त्रिष्टुभमाह,—"अवोचाम कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे। गविष्ठिरो नमसा स्तोममग्नौ दिवीव रुक्ममुर्व्यञ्चमश्रेत्(६)" इति। वयं 'कवये' (विदुषे) वह्नये 'वचो' (वाक्यम्) 'अवोचाम'। कीदृशाय कवये?—'मेध्याय' (यज्ञ-योग्याय), 'वृषभाय' (श्रेष्ठाय), 'वृष्णे' (कामानां वर्षयित्रे), 'गविष्ठिरः'-गविष्ठिराय (भूमौ स्थिरत्वेनावस्थिताय)। कीदृशं वचः*?—'अग्नौ'

---

* अत्र वर्चः इति सर्व्वत्र पाठो न सम्यक्।

'नमसा' 'स्तोमं' (अग्निविषये नमस्कारेण युक्तं, स्तोत्ररूपं), अत एव 'वन्दारु' (वन्दनशीलं)। तत्र दृष्टान्तः,—यथा 'दिवि' (द्युलोके) 'इव' 'रुक्मं' (रोचमानं), 'उर्व्यञ्चं' (विस्तीर्णगतिम्), आदित्यं सन्ध्यावन्दनादिषु ब्राह्मणैः प्रयुक्तं वाक्यम् 'अश्रेत्' (आश्रयति) तद्वत् अस्मद्वचोऽपि वह्निमाश्रयतु।

अथ तिसृषु जगतीषु प्रथमां जगतीमाह,—"जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षः सुविताय नव्यसे। घृतप्रतीको बृहता दिविस्पृशा द्युमद्विभाति भरतेभ्यः शुचिः(७)" इति। अयम् 'अग्निः' 'अजनिष्ट' (उत्पन्नः)। किमर्थं?—'सुविताय' 'नव्यसे' (सुष्ठु दीप्ताय स्तुतियुक्ताय कर्मणे), एतत्कर्मसिध्यर्थमित्यर्थः। कीदृशस्य*?—'जनस्य' 'गोपाः' (प्राणिनो रक्षकः), 'सुदक्षः' (अत्यन्तकुशलः), 'जागृविः' (कर्मणि सावधानः), (घृतं प्रतीकं मुखे यस्यासौ) 'घृतप्रतीकः'; तादृशोऽयम् 'अग्निः' 'बृहता' (प्रौढेन) 'दिविस्पृशा' (द्युलोकस्पर्शिना) ज्वालासमूहेन 'द्युमत्' (दीप्यमानः) 'शुचिः' (शुद्धः सन्) 'भर', 'तेभ्यः' (भरणकुशलयजमानाद्यर्थं) 'विभाति' (विशेषेण भासते)।

अथ द्वितीयां जगतीमाह,—"त्वामग्ने अङ्गिरसो गुहाहितमन्वविन्दञ्छिश्रियाणं वने-वने। स जायसे मथ्यमानः सहो महत्त्वामाहुः सहसस्पुत्रमङ्गिरः(८)" इति। हे 'अग्ने', 'त्वाम्' 'अङ्गिरसः' महर्षयः 'अन्वविन्दन्' (अन्विष्य लब्धवन्तः)। कीदृशं

---

* अत्र कीदृशः सः? इति पाठो भवितुं युक्तः।

त्वां ?—गुहाहितं'?—(अरणीप्रभृतीषु गोप्यस्थानेष्ववस्थितं), 'वने-वने' 'शिश्रियाणं' (तस्मिन् तस्मिन् वने दावाग्निरूपेणाश्रितं)। 'स' त्वं 'महत्' 'सहः' (प्रौढ़ं बलं) वि-'मथ्यमानः' 'जायसे'। हे 'अङ्गिरः' (अङ्गिरोगोत्रयुक्त अग्ने), 'त्वां' 'सहसस्पुत्रं' (बलस्य पुत्रम्) 'आहुः', महता बलेन मन्थने सति जायमानत्वात्।

अथ तृतीयां जगतीमाह,—"यज्ञस्य केतुं प्रथमं पुरोहित-मग्निन्नरस्त्रिषधस्थे समिन्धते। इन्द्रेण देवैः सरथꣳ स बर्हिषि सीदं नि होता यजथाय सुक्रतुः(९)" इति। सह-स्थितानि स्थानानि सधस्थानि, त्रीणि सधस्थानि यस्मिन् देवयजने तत् 'त्रिषधस्थं', तस्मिन् 'नरः' (ऋत्विजः) 'अग्निं' 'समिन्धते' (दीपयन्ति)। कीदृशं ?—'यज्ञस्य' 'केतुं' (ज्ञातारं), 'प्रथमं' (यागोपक्रम एव सम्पन्नं), 'पुरोहितं' (पुरादेशवर्त्तिनं)। 'सुक्रतुः' (शोभनक्रतु-निष्पादकः), 'स' अग्निः 'यजथाय' (यागसिध्यर्थं) 'होता' (देवानामाह्वाता) सन् 'इन्द्रेण' 'देवैः' च सह 'सरथं' (रथ-सहितो यथा भवति, तथा 'बर्हिषि' अस्मिन् यज्ञे 'निषीदत्' (उपविष्टवान्)।

अथ चित्त्वनुष्टुप्सु प्रथमामाह,—"त्वां चित्रश्रवस्तम हवन्ते विक्षु जन्तवः। शोचिष्केशं पुरुप्रियाग्ने हव्याय वोढ़वे(१०)" इति। 'चित्रश्रवो' (विचित्रा कीर्त्तिर्यस्यासौ चित्रश्रवाः) अतिशयेन चित्र-श्रवाः 'चित्रश्रवस्तमः'। 'पुरूणां' (यजमानानां) 'प्रिय', तथाविध हे 'अग्ने', 'विक्षु' (प्रजासु) मध्ये 'जन्तवः' (जन्तव इव जनाः) 'त्वां' 'हवन्ते' (आह्वयन्ति)। किमर्थं ?—'हव्याय' 'वोढ़वे' (हवि-

वोढुम्)। कीदृशं त्वां ?—'शोचिष्केशं' (शोचींषि ज्वाला एव केशस्थानीया यस्यासौ शोचिष्केशः तं)।

अथ द्वितीयामनुष्टुभमाह,—"सखाय सं वः सम्यञ्चमिषꣳ स्तोमञ्चाग्नये। वर्षिष्ठाय चितीनामूर्जो नप्त्रे सहस्वते(११)" इति। हे 'सखायः' (परस्परसख्ययुक्ता ऋत्विग्यजमानाः), 'वः' (युष्माकं) 'सम्यञ्चमिषं' (समीचीनमभीष्टान्नं) सम्पादयतु। समित्यस्योपसर्ग-स्यापेक्षितः शेषोऽध्याहृतः। यूयं च 'अग्नये' 'स्तोमं' (स्तोत्रं) सम्पादयत। कीदृशायाग्नये ?—'चितीनां' मध्ये (रक्षकाणां मध्ये) 'वर्षिष्ठाय' (वृद्धतमाय)। 'ऊर्जो' 'नप्त्रे' (बलस्य न पातयित्रे, विनाशमकुर्वते)* स्वयमतिशयेन बलवते।

अथ तृतीयामनुष्टुभमाह,—"सꣳ समिद् युवसे वृषन्नग्ने विश्वान्यर्य आ। इडस्पदे समिध्यसे स नो वसून्याभर(१२)" इति। हे 'वृषन्' (कामानां वर्षक) 'अग्ने', 'विश्वानि' (सर्वाणि) फलानि 'सं-समित्' (सम्पाद्य सम्पाद्य) एवं 'युवसे' (यजमाने) संमिश्रयसि। 'अर्य' 'आ' (ईश्वरस्त्वमागत्य) 'इडस्पदे' (पृथिवीरूपाया वेद्याः स्थाने) 'समिध्यसे' (सम्यक् ज्वाल्यसे)। एतादृशो महानुभावस्त्वं 'नः' (अस्मभ्यं) 'वसूनि' (धनानि) 'सम्'-'आभर' (सम्यगाहृत्य प्रयच्छ)।

अथ तिसृषु बृहतीषु प्रथमामाह,—"एना वो अग्निं नम-सोर्जो नपातमाहुवे। प्रियं चेतिष्ठमरतिꣳ स्वध्वरं विश्वस्य दूत-ममृतम्(१३)" इति। हे ऋत्विग्यजमानाः, 'वः' (युष्माकं) सम्बन्धिनम्

* अत्र 'सहस्वते' इति शब्दः पतित इवाभाति।

'अग्निम्' 'एना' 'नमसा' (एतेन नमस्कारेण युक्तः) अहम् 'आहुवे' (आह्वयामि)। कीदृशमग्निं?—'ऊर्जो' (अन्नस्य) 'नपातं' (अविनाशयितारं), 'प्रियं' (यजमानानां प्रीतिहेतुं), 'चेतिष्ठं' (अतिशयेन चेतयितारं, ज्ञातारं) 'अरतिं' (रतिः रुक् तद्रहितं) सर्वदोद्युक्तमित्यर्थः। 'स्वध्वरं' (शोभनस्य क्रतोर्निष्पादकं), 'विश्वस्य दूतं' (सर्वस्य जगतो दूतवत् कार्यकर्त्तारं), सर्वस्य हि गृहे दाहपाकादिकार्यं करोति। 'अमृतं' (मरणरहितं); न हि मनुष्यवद्देवानां सहसा मरणमस्ति।

अथ द्वितीयां बृहतीमाह,—"स योजते अरुषा विश्वभोजसा स दुद्रवत् स्वाहुतः। सुब्रह्मा यज्ञः सुशमी वसूनां देवꣳ राधो जनानाम्(१४)" इति। 'स' (अग्निः) 'योजते' (प्रस्तुतं कर्म योजयतीत्यर्थः)। 'अरुषः' (रोषरहितः) यजमाने स्निग्ध इत्यर्थः। 'विश्वभोजसा' (विश्वं जगद्भोजनीयं दाह्यत्वेन यस्यासौ विश्वभोजसः, 'स' अग्निः 'राधः' (अन्नं) 'दुद्रवत्' (द्रवयतु) सम्पादयतु इत्यर्थः। कीदृशं 'राधः'?—'वसूनां' 'जनानां' (निवासार्थिनां प्राणिनां व्यवहारकारणं)। कीदृशः सोऽग्निः?—'स्वाहुतः' (ऋत्विग्भिः सुष्ठु कर्मण्याहूतः), 'सुब्रह्मा' (शोभन ऋत्विग्रूपो ब्रह्मा यस्यासौ सुब्रह्मा, शोभनमन्त्रो वा), 'यज्ञः' (यजनीयः), 'सुशमी' (पापं सुष्ठु शमयतीति सुशमी)।

अथ तृतीयां बृहतीमाह,—"उदस्य शोचिरस्थादाजुह्वानस्य मीढुषः। उद्धूमासो अरुषासो दिविस्पृशः समग्निमिन्धते नरः(१५)" इति। 'अस्य' (अग्नेः) 'शोचिः' (दीप्तिः) 'उत्'-'अस्थात्'

(उत्थितं)। कीदृशस्याग्नेः ?—'आजुह्वानस्य' (सर्वतो होमनिष्पाद-कस्य), 'मीढुषः' (आहुतिद्वारा वृष्टिसेचनसमर्थस्य), 'उद्धूमासः' (धूमाद्वोत्थिताः)। 'अरुषासः' (रोषरहिताः), चक्षुराद्युपद्रवमकुर्वन्त* इत्यर्थः। 'दिविस्पृशः' (आकाशस्पर्शिनः) अत्युन्नता इत्यर्थः। अर्थ-तस्त्वेवं भवति। तथा 'नरः' (ऋत्विग्यजमानाः) 'अग्निमिन्धते' (दीपयन्ति)।

अथ तिसृषूष्णिक्षु प्रथमामुष्णिहमाह,—"अग्ने वाजस्य गोमत ईशानः सहसो यहो। अस्मे धेहि जातवेदो महिश्रवः(१६)" इति। 'सहसः' (बलस्य) 'यहः' (सूनो), 'जातवेदः' (उत्पन्नजगदभिज्ञ) 'अग्ने', 'गोमतः' (गोभिर्युक्तस्य) 'वाजस्य' (अन्नस्य) 'ईशानः' त्वं 'अस्मे' (अस्मासु) 'महिश्रवः' (महतीं कीर्त्तिं) 'धेहि' (सम्पादय)।

अथ द्वितीयामुष्णिहमाह,—"स इधानो वसुष्कविरग्निरीडेन्यो गिरा। रेवदस्मभ्यं पुर्वणीक दीदिहि(१७)" इति। पुरु बहु अनीकं सैन्यं यस्य असौ 'पुर्वणीकः'। तादृश हे अग्ने, 'स' त्वम् 'अस्मभ्यं' 'रेवत्' (धनयुक्तं, गृहक्षेत्रादिकं) 'दीदिहि' (प्रयच्छ)। कीदृशस्त्वं ?—'इधानः' (दीप्यमानः), 'वसुः' (निवासहेतुः), 'कविः' (विद्वान्), 'अग्निः' (अग्रणीः), प्रथमं यज्ञप्रवर्त्तक इत्यर्थः। 'गिरा' (मन्त्ररूपया वाचा) 'ईडेन्यः' (स्तुत्यः)।

अथ तृतीयामुष्णिहमाह,—"क्षपो राजन्नुत त्मनाग्ने वस्तो-रुतोषसः। स तिग्मजम्भ रक्षसो दह प्रति(१८)" इति। हे 'अग्ने',

---

* अत्र 'उद्धूमासः' (धूमाद्वोत्थिता यस्मात् तस्य), 'अरुषासः' (रोषरहितस्य) चक्षुराद्युपद्रवमकुर्वत इति पाठो भवितुं युक्तः।

'वस्तः' (अहानि) 'क्षपः' (क्षपय)। 'उत' (अपि च) 'उषः' (उषः-कालान्) अपि क्षपय। द्वितीयाया अत्यन्तसंयोगवाचित्वात् सर्वेष्वप्युषःकालेषु राक्षसान् विनाशयेत्यर्थः। हे 'राजन्' (दीप्यमान) 'अग्ने', न केवलं स्वकीयसेनामुखेन रक्षसां क्षपणं, 'त्मना' अपि (स्वयमपि) क्षपयेति मुखविदारणवाचिना जम्भशब्देन ज्वाला उपलक्ष्यन्ते। तिग्मास्तीक्ष्णा जम्भा यस्यासौ 'तिग्मजम्भः', 'स' त्वं 'रक्षसो' (राक्षसान्) 'दह' (भस्मीकुरु)।

अथ तिसृषु पङ्क्तिषु प्रथमामाह,—"आ ते अग्न इधीमहि द्युमन्तं देवाऽजरं। यद्ध स्या ते पनीयसी समिद्दीदयति द्यवीषꣳ स्तोतृभ्य आभर(१९)" इति। हे 'अग्ने' 'देव', 'अजरं' (जरारहितं) 'ते' (त्वां) 'द्युमन्तं' (दीप्तिमन्तं) 'इधीमहि' (सर्वतः प्रज्वालयामः)। 'यत्' (यस्मात् कारणात्) 'पनीयसी' (अतिशयेन स्तुतियुक्ता) सा* 'ह' 'समित्' (अचेतनरूपा सा समिदपि) द्यवि-द्यवि (प्रतिदिनं) 'दीदयति' (त्वां प्रकाशयति), तस्माच्चेतना वयं दीपयाम इति किमु वक्तव्यं। त्वञ्च 'इषम्' (अन्नं) 'स्तोतृभ्यः' ऋत्विग्भ्यः 'आभर' (सम्पादय)।

अथ द्वितीयां पङ्क्तिमाह,—"आ ते अग्न ऋचा हविः शुक्रस्य ज्योतिषस्पते। सुश्चन्द्र दस्म विश्पते हव्यवाट् तुभ्यꣳ हूयत इषꣳ स्तोतृभ्य आभर(२०)" इति। 'शुक्रस्य' (शुद्धस्य) 'ज्योतिषः' 'पते' (पालक), (सुष्ठु आह्लादकारिन्) 'सुश्चन्द्र', (पापस्योपक्षपयिता) 'दस्म', (प्रजानां पालक) 'विश्पते', (हविषो वोढ़ा) 'हव्यवाट्';

* अत्र 'स्या' इति पाठो भवितुं युक्तः। एवं उत्तरत्र द्यवि द्यवि इत्यत्र 'द्यवि' इति।

तथाविध हे 'अग्ने', 'ते' 'ऋचा' (त्वत्सम्बन्धिना मन्त्रेण) 'तुभ्यं' 'हविः' 'आ' (समन्तात्) 'हूयते'। 'इषम्' इत्यादि गतम्।

अथ तृतीयां पङ्क्तिमाह,—"उभे सुश्चन्द्र सर्पिषो दर्वी श्रीणीष आसनि। उतो न उत्पुपूर्या:। उक्थेषु शवसस्पत इषꣳ स्तोतृभ्य आभर(२१)" इति। हे 'सुश्चन्द्र' (सुष्ठु आह्लादकर), 'आसनि' (त्वदीयास्ये) 'सर्पिषः' सम्बन्धिन्या 'उभे' 'दर्वी' सदृशे हनू 'श्रीणीषे' हनूपूरणपर्यन्तं* सर्पिस्त्वया पीतमित्यर्थः। 'उतः' (अपि च) हे 'शवसस्पते' (बलस्याधिपते) 'उक्थेषु' (शस्त्रवत्सु) यज्ञेषु 'नः' (अस्मान्) 'पुपूर्याः'† (उत्कर्षेण पूरय) प्रापयेत्यर्थः। 'स्तोतृभ्यः' (यजमानेभ्यः) 'इषम्' (अन्नम्) 'आभर' (सम्पादय)।

अथ चरपङ्क्तीषु चतुर्षु प्रथमामाह,—"अग्ने त्वमद्याश्वं न स्तोमैः क्रतुन्न भद्रꣳ हृदिस्पृशं। ऋध्याम ते ओहैः(२२)" इति। हे 'अग्ने', 'हृदिस्पृशं' (हृद्यम्, अन्तःप्रियं) तं त्वाम् 'अद्य' (अस्मिन् कर्मणि) 'ओहैः' (समूहरूपैः) 'स्तोमैः' (त्वदीयैः स्तोत्रैः) 'ऋध्याम' (समृद्धं करवाम)। तत्रैको दृष्टान्तः,—'अश्वं न',—यथा अश्वं घासादिप्रदानेन समर्थयन्ति तद्वत्। अथापरो दृष्टान्तः,—'क्रतुं न भद्रं' यथा समीचीनं ज्योतिष्टोमादिक्रतुं सर्वयागानुष्ठानेन समर्थयन्ति तद्वत्। 'भद्रं' (कल्याणम्) इत्यग्निविशेषणं वा।

अथ द्वितीयामचरपङ्क्तिमाह,—"अधा ह्यग्ने क्रतोर्भद्रस्य दक्षस्य

---

* अत्र हनूपूरणपर्य्यन्तमिति पाठो भवितुं युक्तः। अन्यथा प्रक्रम-भङ्गदोषः स्यात्।

† 'उत'—'पुपूर्य्याः' इति पाठो भवितुं युक्तः।

साधोः। रथीर्ऋतस्य बृहतो बभूथ[१३]" इति। हे 'अग्ने', 'अध' (अस्मदीयस्तोत्रानन्तरं) 'क्रतोः' (अनुष्ठीयमानस्य कर्मणः) 'रथीः' 'बभूथ' 'हि' (रथोऽस्यास्तीति रथी सारथिर्निर्वाहकः, तथा त्वं निर्वाहको बभूथ खलु)। कीदृशस्य 'क्रतोः'?—'भद्रस्य' (कल्याणरूपस्य), 'दक्षस्य' (स्वपदप्रधानसमर्थस्य*) 'साधोः' (रश्मिभिः† साध्यस्य) 'ऋतस्य' (सत्यस्य, अमोघत्वस्य) 'बृहतः' (प्रौढ़स्य)।

अथ तृतीयामनुपङ्क्तिमाह,—"अभिष्टे अद्य गीर्भिर्गृणन्तोऽग्ने दाशेम। प्र ते दिवो न स्तनयन्ति शुष्माः[१४]" इति। हे 'अग्ने', 'अद्य' (अस्मिन् कर्मणि) आभिः 'गीर्भिः' (मन्त्ररूपाभिः) 'गृणन्तः' (स्तुवन्तः) वयं 'दाशेम' (हविर्दद्मः)। 'ते' (त्वदीयाः) 'शुष्माः' (प्रबला ज्वालाः) त्वां प्रकर्षेण 'स्तनयन्ति' (शब्दयन्ति)। तत्र दृष्टान्तः,—'दिवो न' (द्युस्था मेघा इव)।

अथ चतुर्थीमनुपङ्क्तिमाह,—"एभिर्नो अर्कैर्भवा नो अर्वाङ् सुवर्न ज्योतिः। अग्ने विश्वेभिः सुमना अनीकैः[१५]" इति। हे 'अग्ने', 'विश्वेभिः' 'अनीकैः' (सर्वसैन्यैः) सहितः 'सुमनाः' (सौमनस्यं प्राप्तः) 'एभिः' (इदानीं क्रियमाणैः) 'नः' (अस्मत्-सम्बन्धिभिः) 'अर्कैः' (अर्चनीयैः) 'नः' (अस्मान् प्रति) 'अर्वाङ्' 'भव' (समीपस्थो भव), समीपदेशमभिगच्छतीति अर्वाङ्। तत्र दृष्टान्तः,—'सुवर्न' (स्वर्गलोकप्रकाशरूप आदित्यो यथा समीपवर्ती भवति तद्वत्।

---

* स्वपदप्रदानसमर्थस्य इति पाठोऽत्र भवितुं युक्तः।

† रथिभिरिति रश्मिभिरिति च पाठान्तरम्।

अथातिच्छन्दसमाह,—"अग्निꣳ होतारं मन्ये दास्वन्तं वसोः सूनुꣳ सहसो जातवेदसं। विप्रन्न जातवेदसं। य ऊर्द्ध्वया स्वध्वरो देवो देवाच्या कृपा। घृतस्य विभ्राष्टिमनु शुक्रशोचिष आजुह्वानस्य सर्पिषः(१९)" इति। इमम् 'अग्निं' 'होतारं' (देवानामाह्वातारं) अहं 'मन्ये'। कीदृशमग्निं?—'वसोः' 'दास्वन्तं'(धनस्य दातारं), 'सहसः' 'सूनुं' (बलस्य पुत्रं) 'जातवेदसं' (उत्पन्नजगदभिज्ञं)। तत्र दृष्टान्तः,—'विप्रं न जातवेदसं' (यथा ब्राह्मणकुलीनमुत्पन्न-पुत्राद्यभिज्ञं मन्यन्ते तद्वत्)। 'यः' अग्निः 'देवः' 'ऊर्द्ध्वया' (अत्युन्नतया) 'देवाच्या' (देवान् प्रति गच्छन्त्या), कृपया (ज्वालया) 'स्वध्वरः' (सुष्ठु यागनिष्पादको भवति)। सोऽग्निः 'घृतस्य' 'विभ्राष्टिं' (विशेषेण दीप्तिम्) 'अनु'लक्ष्य दीप्यत इति शेषः। कीदृशस्य घृतस्य?—'शुक्रशोचिषः' (शुद्धदीप्तियुक्तस्य), 'आजुह्वानस्य', (सर्वतो हूयमानस्य) 'सर्पिषः' (सर्पणशीलस्य)।

अथ तिसृषु द्विपदासु प्रथमामाह,—"अग्ने त्वन्नो अन्तमः। उत त्राता शिवो भव। वरूथ्यः(२०)" इति। हे 'अग्ने', 'त्वं' 'नः' (अस्माकं) 'अन्तमः' (अन्तिकतमो भव)। 'वरूथ्यः' (वरूथे गृहे नित्यसन्निहितो भव)।

अथ द्वितीयां द्विपदामाह,—"तं त्वा शोचिष्ठ दीदिवः। सुम्नाय नूनमीमहे सखिभ्यः(१८)" इति। हे 'शोचिष्ठ' 'दीदिवः' (शुद्धतम दीप्यमान), 'सखिभ्यः' (सखीनामस्माकं) 'सुम्नाय' (सुखाय) 'नूनं' (पूर्वोक्तगुणयुक्तं) त्वाम् 'ईमहे' (प्राप्नुमः)।

अथ तृतीयां द्विपदामाह,—"वसुरग्निर्वसुश्रवाः। अच्छा

नचि द्युमत्तमो रयिं दाः(१९)” इति। ‘वसुः’ (वसुमान्) अयम् ‘अग्निः’, वसुरुद्रादिदेवैरादरेण श्रूयत इति ‘वसुश्रवाः’, हे तादृशाग्ने, स्वाभिमुखो ‘नचि’ (प्राप्नुहि)।

एतैरग्निर्मूर्धेत्यादिभिः* साध्यमुपधानं विधत्ते,—“छन्दाꣳस्युपदधाति पशवो वै छन्दाꣳसि पशूनेवावरुन्धे छन्दाꣳसि वै देवानां वामं पशवो वाममेव पशूनवरुन्धे एताꣳ ह वै यज्ञसेनश्चैत्रियायणश्चितिं विदाञ्चकार तया वै स पशूनवारुन्ध यदेतामुपदधाति पशूनेवावरुन्धे” (५।३।८अ०) इति। गायत्र्यादिच्छन्दोयुक्तैर्मन्त्रैरुपधेया इष्टका अपि ‘छन्दांसि’ इत्युच्यन्ते, तदुपधाने सति छन्दसां पशुहेतुत्वाद्यजमानः ‘पशून्’ प्राप्नोति। किञ्च ‘छन्दांसि’ ‘एव’ ‘देवानां’ वननीयधनरूपाणि, अतस्तादृशान् ‘पशून्’ अयं प्राप्नोति। किञ्च चित्रनामकस्य चित्पुरुषस्य वंशे समुत्पन्नो यज्ञसेननामकः कश्चित् पुरुष एताभिश्छन्दोभिधाभिरिष्टकाभिः सम्पादितां चितिं विदित्वा स्थितवान्, ततस्तयैव चित्या पशून् प्राप्नोत्, एवमन्योऽपि प्राप्नोति।

सामान्येन विहितं पुनर्विशेषाकारेण विधत्ते,—“गायत्रीः पुरस्तादुपदधाति तेजो वै गायत्री तेज एव मुखतो धत्ते” (५।३।८अ०) इति। अग्निर्मूर्धेत्यादिभिर्गायत्रीच्छन्दोभिर्युक्तैर्मन्त्रैरुपधेया इष्टका गायत्र्यः।

मन्त्रेषु मूर्धच्छब्दस्य तात्पर्यमाह,—“मूर्धन्वतीर्भवन्ति मूर्धानमेवैनꣳ समानानां करोति” (५।३।८अ०) इति। मूर्धच्छब्द-

* अग्निर्मूर्धत्यादिभिरिति सर्वत्र पाठो न सम्यक्।

युक्तैर्मन्त्रैरुपधेया इष्टका मूर्धन्वत्यः। समानानां मध्ये यजमानस्य मूर्धत्वं शिरोवदुत्कृष्टत्वम्।

भुवो यज्ञस्येत्यादिभिस्त्रिष्टुप्छन्दोयुक्तैर्मन्त्रैरुपधेया इष्टकान्* विधत्ते,—"त्रिष्टुभ उपदधातीन्द्रियं वै त्रिष्टुगिन्द्रियमेव मध्यतो धत्ते" (५।३।८अ०) इति।

जनस्य गोपा इत्यादिभिर्जगतीच्छन्दोभिर्मन्त्रैरुपधेया इष्टका विधत्ते,—"जगतीरुपदधाति जागता वै पशवः पशूनेवावरुन्धे" (५।३।८अ०) इति।

त्वां चित्रश्रवेत्यादिभिरनुष्टुप्छन्दोयुक्तैर्मन्त्रैरुपधेया इष्टका विधत्ते,—"अनुष्टुभ उपदधाति प्राणा वा अनुष्टुप् प्राणानाम् उत्सृष्ट्यै" (५।३।८अ०) इति।

'एना वो अग्निम्' इत्यादिभिः, 'अग्ने वाजस्य' इत्यादिभिः, 'आ ते अग्न इधीमहि' इत्यादिभिः, 'अग्ने तमद्य' इत्यादिभिश्चोपधेया विधत्ते,—"बृहतीरुष्णिहाः पङ्क्तीरक्षरपङ्क्तीरिति विषुरूपाणि छन्दाꣳस्युपदधाति विषुरूपा वै पशवः पशवः छन्दाꣳसि विषुरूपानेव पशूनवरुन्धे" (५।३।८अ०) इति। पूर्वोक्तेषु छन्दःसु समानाक्षराः सर्वे पादाः, बृहत्यादिषु विषमाक्षराः, अतो विषुरूपत्वं। 'पशवः' अपि गोमहिषादयः परस्परविलक्षणत्वाद्विषुरूपाः छन्दसाञ्च पशुहेतुत्वात् पशुत्वं। तथा सति एतदुपधानेन बहुविधान् पशूनाप्नोति।

अथोपधानेन वेदनञ्च प्रशंसति,—"विषुरूपमस्य गृहे दृश्यते

* अत्र उपधेया इष्टका इति पाठो भवितुं युक्तः।

यस्यैता उपधीयन्ते य उ चैनाः एवं वेद" (५।३।८अ०) इति। 'विषुरूपं' (बहुविधं धनं)।

अग्निं होतारमिति मन्त्रेणोपधेयां विधत्ते,—"अतिच्छन्दस-मुपदधात्यतिच्छन्दा वै सर्वाणि छन्दाꣳसि सर्वैभिरेवैनं छन्दोभिश्चिनुते वर्ष्म वा एषा छन्दसां यदतिच्छन्दा यदतिच्छन्दसमुपदधाति वर्ष्मैवैनꣳ समानानां करोति" (५।३।८अ०) इति। गायत्र्यादीनां सर्वच्छन्दसां येयमचरसङ्ख्या तस्या अतिच्छन्दस्त्वाभावात् सर्वच्छन्दोरूपत्वं। किञ्च सर्वेषामन्तर्भावादेवैतदीयेष्टका अतिच्छन्दोभिधानादन्यासां छन्दोभिधानानां इष्टकानां शरीरम्। अत एतदुपधानेन यजमानं समानानां पुरुषाणां शरीरस्थानं करोति, सर्वेऽप्येनमुपजीवन्तीत्यर्थः।

'अग्ने त्वन्नः' इत्यादिभिरुपधेया इष्टका विधत्ते,—"द्विपदा उपदधाति द्विपाद् यजमानः प्रतिष्ठित्यै" (५।३।८अ०) इति।

अत्र विनियोगसंग्रहः,—

अग्नि,-स्तिस्रस्तु गायत्र्यो, भुवस्तु, त्रिष्टुभा त्रयं।
जन, तिस्रो जगत्यः स्युस्त्वां चित्रानुष्टुभा त्रयं॥
एना, तिस्रो बृहत्यः स्युरग्न इत्युष्णिहा त्रयं।
आ ते, पंक्तित्रयं, ह्यग्नेऽचरपंक्तिचतुष्टयं॥
अग्निमेका ह्यतिच्छन्दा, अग्ने त्वं, द्विपदात्रयं।
एकोनत्रिंशदेतानि छन्दांस्युपदधाति हि॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये चतुर्थकाण्डे चतुर्थप्रपाठके चतुर्थोऽनुवाकः॥ ०॥

इन्द्राग्निभ्यां त्वा सयुजा युजा युनज्म्याघाराभ्यां तेजसा वर्चसोक्थेभिः स्तोमेभिश्छन्दोभी रय्यै पोषाय सजातानां मध्यमस्थेयाय मया त्वा सयुजा युजा युनज्मि(१-८) अम्बा दुला नितत्निरभ्रयन्ती मेघयन्ती वर्षयन्ती चुपुणीका नामासि प्रजापतिना त्वा विश्वाभिर्धीभिरुपदधामि(९-१५) पृथिव्युदपुरमन्नेन विष्टा मनुष्यास्ते गोप्तारोऽग्निर्वियत्तोऽस्यां तामहं प्रपद्ये सा ॥ १ ॥

मे शर्म च वर्म चास्तु(१६) अधि द्यौरन्तरिक्षं ब्रह्मणा विष्टा मरुतस्ते गोप्तारो वायुर्वियत्तोऽस्यां तामहं प्रपद्ये सा मे शर्म च वर्म चास्तु(१७) द्यौरपराजिताऽमृतेन विष्टादित्यास्ते गोप्तारः सूर्यो वियत्तोऽस्यां तामहं प्रपद्ये सा मे शर्म च वर्म चास्तु(१८) ॥ २ ॥

सा। अष्टाचत्वारिंशच्च ॥ ५ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे चतुर्थप्रपाठके पञ्चमोऽनुवाकः ॥ ० ॥

चतुर्थेऽनुवाके छन्दोभिधाना इष्टका उक्ताः। अथ पञ्चमे संयुगादय इष्टका उच्यन्ते। कल्पः, 'इन्द्राग्निभ्यां त्वा सयुजा युजा युनज्मीत्यष्टौ सयुजः' इति। पाठस्तु,—"इन्द्राग्निभ्यां त्वा

सयुजा युजा युनज्म्याघाराभ्यां तेजसा वर्चसोक्थेभिः स्तोमेभिश्छन्दोभी रय्यै पोषाय सजातानां मध्यमस्थेयाय मया त्वा सयुजा युजा युनज्मि (१-८)" इति। सह योजयतीति सयुक्, उत्तरेण युक्शब्देन सम्बन्धोऽभिधीयते। हे इष्टके, 'इन्द्राग्निभ्यां' सह योजयिता यः सम्बन्धः, तेन सम्बन्धेनाहं त्वां 'युनज्मि' (इह क्षेत्रे युक्तां करोमि)। 'आघाराभ्याम्' इत्यादिभिः सप्तभिस्तृतीयान्तैः सह प्रत्येकं 'त्वा सयुजा' इत्यादिशेषस्यानुषङ्गे सति षण्मन्त्राः सम्पद्यन्ते। 'आघारौ' (आहुती), 'तेजः' (कान्तिः), 'वर्चः' (धनं), 'उक्थानि' (शस्त्राणि), 'स्तोमानि' (स्तोत्राणि), 'छन्दांसि' (गायत्र्यादीनि)। 'रय्या' इत्यादिरष्टमो मन्त्रः। 'रय्यै' (धनार्थं), 'पोषाय' (पुष्ट्यर्थं)। 'सजातानां मध्यमस्थेयाय' (ज्ञातीनां मध्ये मुख्यत्वेनावस्थानार्थं, हे इष्टके, 'मया' सह तव योजना यः सम्बन्धस्तेन सम्बन्धेन त्वां इह क्षेत्रे युक्तां करोमि।

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते,—"सर्वाभ्यो वै देवताभ्योऽग्निश्चीयते यत् सयुजो नोपदध्याद्देवता अस्याग्निं वृञ्जीरन् यत्सयुज उपदधात्यात्मनैवैनꣳ सयुजं चिनुते नाग्निना व्यृध्यतेऽथो यथा पुरुषः स्नावभिः सन्तत एवमेवैताभिरग्निः सन्ततः" (५।३। ६ अ०) इति। योऽयं चीयमानः 'अग्निः' स सर्वदेवतार्थः। तथा सति सयुगाख्यानामिष्टकानामनुपधाने सति 'अस्याग्निं' इन्द्राग्न्याघारादिदेवताः परित्यजेयुः। देवताभिः सहाग्निं योजयन्तीति सयुजो मन्त्राः। तैर्मन्त्रैरुपधेया इष्टका अपि 'सयुजः'। तासामुपधाने सति यजमानः स्वेन सह योजयित्वाऽग्निं चितवान्

भवति। ततो नाग्निना वियुक्तो भवति। अपि च यथा लोके पुरुषः स्नावभिः शरीरे सर्वतो व्याप्तः तद्वदेताभिरिष्टकाभिरग्निः सर्वतो व्याप्तो भवति, तस्मादेता उपदध्यात्।

कल्पः, 'अम्बा नामासीति सप्त कृत्तिका' इति। पाठस्तु,—"अम्बा दुला नितत्निरभ्रयन्ती मेघयन्ती वर्षयन्ती चुपुणीका नामासि प्रजापतिना त्वा विश्वाभिर्धीभिरुपदधामि(९-१५)" इति। अम्बादिचुपुणीकान्तानि सप्त पदानि सप्तानां कृत्तिकादेवीनां नामानि। 'नामासि' इत्यादिशेषः सर्वेष्वपि पदेष्वनुषज्यते, ततः सप्तैते मन्त्राः। हे इष्टके, या इष्टका 'अम्बा'नामा तद्रूपा त्वम् 'असि', तादृशी त्वं 'प्रजापतिना' देवेन प्रेरिता, या अस्मद्-बुद्धयः ताभिः सर्वाभिः 'उपदधामि', (सावधानोऽहं बुद्धि-वैचित्र्येण सम्यगुपदधामीत्यर्थः)। एवं 'दुला' 'नामासि' इत्यादिकं योजनीयम्।

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते,—"अग्निना वै देवाः सुवर्गं लोकमायन् ता अमूः कृत्तिका अभवन् यस्यैता उपधीयन्ते सुवर्गमेव लोकमेति गच्छति प्रकाशं चित्रमेव भवति" (५।३।९) इति। पूर्वमेताभिरिष्टकाभिश्चितेन 'अग्निना' 'देवाः' स्वर्गं प्राप्ताः, 'ताः' च इष्टकाः तैः सह गत्वा तत्र 'अमूः' (दृश्यमानाः कृत्तिकाः) 'अभवन्' अतस्तदुपधानेन स्वर्गप्राप्तिः भवति। किञ्च अनेन स्वर्गे 'प्रकाशं' प्राप्नोति, 'चित्रम्' (आभरणादिकं) च अस्य 'भवति'।

कल्पः, 'पृथिव्युदपुरमन्नेनेति मण्डलेष्टकाम्' इति। पाठस्तु,—

"पृथिव्युदपुरमन्नेन विष्टा मनुष्यास्ते गोप्तारोऽग्निर्वियत्तोऽस्यां तामहं प्रपद्ये सा मे शर्म च वर्म चास्तु(१९)" इति। 'अन्नेन' 'विष्टा' (अन्नेन सम्पूर्णा) या पृथिवी, हे इष्टके, सा 'पृथिवी' 'उदपुरं' (उदसम्पूर्णं(?)। 'मनुष्याः' 'ते' (तव) 'गोप्तारः' (रक्षितारः), 'अस्यां' (पृथिव्याम्) 'अग्निर्वियत्तः' (रक्षणाय विशेषेण प्रयत्नवान्), तादृशीं पृथिवीरूपां 'तां' (इष्टकाम्) 'अहं' 'प्रपद्ये' (प्राप्नोमि)। 'सा' (तथाविधेष्टका) 'मे' (मम) यजमानस्य 'शर्म' (शरणं, गृहस्थानं) 'अस्तु', 'वर्म' 'च' रक्षणाय (कवचस्थानीयम्) अपि 'अस्तु'।

कल्पः, 'अधिद्योरिति मण्डलेष्टकाम्' इति। पाठस्तु,—"अधिद्योरन्तरिक्षं ब्रह्मणा विष्टा मरुतस्ते गोप्तारो वायुर्वियत्तोऽस्यां तामहं प्रपद्ये सा मे शर्म च वर्म चास्तु(२०)" इति। 'ब्रह्मणा विष्टा' (प्रौढ़ेन जनेन विष्टा युक्ता) 'अधिद्योः' दिवोऽप्यधिका या* पूः, सा 'अन्तरिक्षं' (अन्तरिक्षनामकं) हे इष्टके, तव पुरं 'मरुतः' (वायवः), तेष्वेको मुख्यो वायुः। शेषं पूर्ववत्।

कल्पः, 'द्यौरपराजितेति मण्डलेष्टकाम्' इति। पाठस्तु,—"द्यौरपराजितामृतेन विष्टादित्यास्ते गोप्तारः सूर्यो वियत्तोऽस्यां तामहं प्रपद्ये सा मे शर्म च वर्म चास्तु(२८)" इति। 'अमृतेन विष्टा' (पीयूषेण पूर्णा) 'द्यौः' (द्युलोकाख्या) हे इष्टके, तव पूः, तेनापि 'अपराजिता'। 'आदित्या' द्वादशसङ्ख्याकाः तेष्वेको मुख्यः सूर्यः। शेषं पूर्ववत्।

---

* अधिकायाः इति सर्व्वत्र पाठो न सम्यक्।

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते,—"मण्डलेष्टका उपदधाति इमे वै लोका मण्डलेष्टका इमे खलु वै लोका देवपुरा देवपुरा एव प्रविशति नार्त्तिमार्च्छत्यग्निं चिक्यानः" (५।२।८।अ०) इति। मण्डलाख्या इष्टकास्तिस्रः प्रथममध्यमोत्तमचितिषूपदध्यात्। तासां चेष्टकानां लोकत्रयरूपत्वात् लोकत्रयस्य देवपुरत्वात् 'देवपुरा एव' अग्निचित् 'प्रविशति'॥

अत्र विनियोगसंग्रहः,—

इन्द्रेति मयुजस्त्वष्ट, आघारादिपदेष्वपि।
अनुषङ्गस्त्वेति तथा 'रथ्या' इत्यष्टमो मतः॥
अम्बेति कृत्तिकाः सप्त, नामासीत्यनुषज्यते।
पृथि,—त्रिभिर्मण्डलाख्या मन्त्रा अष्टादशेरिताः॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे चतुर्थप्रपाठके पञ्चमोऽनुवाकः॥ ०॥

---

बृहस्पतिस्त्वा सादयतु पृथिव्याः पृष्ठे ज्योतिष्मतीं विश्वस्मै प्राणायापानाय विश्वं ज्योतिर्यच्छाग्निस्तेऽधिपतिः(१) विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे ज्योतिष्मतीं विश्वस्मै प्राणायापानाय विश्वं ज्योतिर्यच्छ वायुस्तेऽधिपतिः(२) प्रजापतिस्त्वा सादयतु दिवः पृष्ठे

ज्योतिष्मतीं विश्वस्मै प्राणायापानाय विश्वं ज्योतिर्यच्छ परमेष्ठी तेऽधिपतिः(२) पुरोवातसनिरस्यभ्रसनिरसि विद्युत्सनिः ॥ १ ॥

असि स्तनयित्नुसनिरसि वृष्टिसनिरसि(४-८) अग्नेर्यान्यसि देवानामग्नेयान्यसि(९-१०) वायोर्यान्यसि देवानां वायोयान्यसि(११-१२) अन्तरिक्षस्य यान्यसि देवानामन्तरिक्षयान्यसि(१३-१४) अन्तरिक्षमस्यन्तरिक्षाय त्वा(१५-१६) सलिलाय त्वा सर्णीकाय त्वा सतीकाय त्वा केताय त्वा प्रचेतसे त्वा विवस्वते त्वा दिवस्त्वा ज्योतिष आदित्येभ्यस्त्वा(१७-२४) अर्चे त्वा रुचे त्वा द्युते त्वा, भासे त्वा ज्योतिषे त्वा(२५-२९) यशोदां त्वा यशसि तेजोदां त्वा तेजसि पयोदां त्वा पयसि वर्चोदां त्वा वर्चसि द्रविणोदां त्वा द्रविणे सादयामि तेनर्षिणा तेन ब्रह्मणा तया देवतयाङ्गिरस्वद्ध्रुवा सीद(३०-३५) ॥२॥

विद्युत्सनिः। द्युते त्वा। एकान्नचित्वारिंशच्च ॥ ६ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे चतुर्थप्रपाठके षष्ठोऽनुवाकः॥ ० ॥

पञ्चमेऽनुवाके प्रयुजाद्या इष्टका उक्ताः। अथ षष्ठे विश्वज्योतिरद्या इष्टका उच्यन्ते। कल्पः, 'बृहस्पतिस्त्वा सादयतु

पृथिव्याः पृष्ठे ज्योतिष्मतीमिति विश्वज्योतिषाम्'* इति। पाठस्तु,—"बृहस्पतिस्त्वा सादयतु पृथिव्याः पृष्ठे ज्योतिष्मतीं विश्वस्मै प्राणायापानाय विश्वं ज्योतिर्यच्छाग्निस्तेऽधिपतिः(१)" इति। हे इष्टके, त्वां 'बृहस्पतिः' 'पृथिव्याः' 'पृष्ठे' (उपरि) स्थापयतु। कीदृशीं त्वां?—'ज्योतिष्मतीं' (प्रकाशवतीं)। किमर्थं?—'विश्वस्मै' 'प्राणायापानाय'।

कल्पः, 'विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे ज्योतिष्मतीमिति विश्वज्योतिष्मतीमिति† विश्वज्योतिषम्' इति। पाठस्तु,—"विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे ज्योतिष्मतीं विश्वस्मै प्राणायापानाय विश्वं ज्योतिर्यच्छ वायुस्तेऽधिपतिः(२)" इति। पूर्ववद् व्याख्येयम्।

कल्पः, 'प्रजापतिस्त्वा सादयतु दिवः पृष्ठे ज्योतिष्मतीमिति विश्वज्योतिषम्' इति। पाठस्तु,—"प्रजापतिस्त्वा सादयतु दिवः पृष्ठे ज्योतिष्मतीं विश्वस्मै प्राणायापानाय विश्वं ज्योतिर्यच्छ परमेष्ठी‡ तेऽधिपतिः(३)" इति। एतदपि पूर्ववद्व्याख्येयम्।

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते,—"विश्वज्योतिष उपदधाति। मानेवैताभिर्लोकान् ज्योतिष्मतः कुरुतेऽथो प्राणानेवैता यजमानस्य दाधत्येता वै देवताः सुवर्ग्यास्ता एवान्वारभ्य सुवर्गं लोकमेति" (५।३।९अ०)इति। विश्वशब्दोपेतैस्त्रिभिर्मन्त्रैरुपधेया 'विश्वज्योतिषः,'

---

* एवमेव सर्व्वत्र पाठः। विश्वज्योतिषमिति पाठो भवितुं युक्तः।

† अधिक इव पाठः प्रतिभाति।

‡ अत्र परमेष्ठीति टकारयुतः सर्व्वेषु भाष्येषु पाठो न समर्थः।

तास्च तिस्रः प्रथममध्यमोत्तमचितिषु उपदध्यात्, तदुपधानेन लोकान् प्रकाशवतः करोति। किञ्च एता इष्टका 'यजमानस्य' प्राणान् दृढं धारयन्ति। एतेषु मन्त्रेषु प्रतीयमाना बृहस्पत्यादयः 'एता' 'देवताः' स्वर्गयोग्याः 'ता' 'एव' अनुसृत्येष्टका उपधाय स्वर्गं प्राप्नोति।

कल्पः, 'पुरोवातसनिरसीति पञ्च वृष्टिसनीरनुपरिहारम्' इति। पाठस्तु,—"पुरोवातसनिरस्यभ्रसनिरसि विद्युत्सनिरसि स्तनयित्नुसनिरसि वृष्टिसनिरसि(४-८)" इति। पुरो वातं सनोति ददातीति 'पुरोवातसनिः', हे इष्टके तथाविधा त्वम् 'असि'। एवमभ्रादिषु योज्यम्।

एतन्मन्त्रसाध्यमुपधानं* विधत्ते,—"वृष्टिसनीरुपदधाति वृष्टिमेवावरुन्धे" (५।३।१०अ०) इति। 'वृष्टिसनिशब्दयुक्तैर्मन्त्रैरुपधेया इष्टका वृष्टिसनयः। तदुपधानेन वृष्टिं प्राप्नोति।

एकप्रयत्नोपधानं वारयितुमनुक्रमेण परितो हृत्वा हृत्वा तदुपधानं विधत्ते,—"यदेकधोपदध्यादेकमृतुं वर्षेदनुपरिहारꣳ सादयति तस्मात् सर्वान् ऋतून् वर्षति" (५।३।१०अ०) इति। एकामिष्टकां† हस्ते धृत्वा चयनक्षेत्रं प्रदक्षिणीकृत्योपदध्यात्। एवमनुक्रमेणोपधाने सति सर्वेष्वप्यृतुषु वृष्टिर्भवति।

मन्त्रेषु पुरोवातादिशब्दानां तात्पर्यं दर्शयति,—"पुरोवातसनिरसीत्याहैतद्वै वृष्ट्यै रूपꣳ रूपेणैव वृष्टिमवरुन्धे" (५।३।

---

* 'विधानं' इत्यधिकः पाठः का० ह० पुस्तकेऽस्ति।

† अत्र इष्टका इति निरनुस्वारः पाठो न सम्यक्।

१०अ०) इति। पुरोवाताभ्रविद्युत्स्तनयित्नुवर्षणानि मिलित्वा पञ्च वृष्टेः स्वरूपम्, अतो वृष्टिवाचिना मन्त्रेणैव वृष्टिं प्राप्नोति।

कल्पः, 'अग्नेर्यान्यसीति द्वे संयान्यौ' इति। पाठस्तु,—"अग्नेर्यान्यसि देवानामग्नेयान्यसि(९-१०)" इति। हे इष्टके, त्वम् 'अग्नेः' (चीयमानस्य वह्नेः) 'यानी' (प्रापिका) 'असि'। अनेन मन्त्रेण यजमानस्यापि प्राप्तिरुक्ता। द्वितीये देवानामग्निप्राप्तिरुच्यते। हे 'अग्ने' (त्वं) 'यानी' (प्राप्नोतीत्येतादृगुच्चारणं) यस्याम् इष्टकायां सेयम् 'अग्नेयानी'। इष्टके देवानां सम्बन्धिनी तथाविधा त्वम् 'असि'।

कल्पः, 'वायोर्यान्यसीति द्वे संयान्यौ' इति। पाठस्तु,—"वायोर्यान्यसि देवानां वायोयान्यसि(११-१२)" इति। पूर्ववद्व्याख्येयं।

कल्पः, 'अन्तरिक्षस्य यान्यसीति द्वे संयान्यौ' इति। पाठस्तु,—"अन्तरिक्षस्य यान्यसि देवानामन्तरिक्षयान्यसि(१३-१४)" इति। एतदपि पूर्ववद्व्याख्येयं।

कल्पः, 'अन्तरिक्षमस्यन्तरिक्षाय त्वेति द्वे संयान्यौ' इति। पाठस्तु,—"अन्तरिक्षमस्यन्तरिक्षाय त्वा(१५-१६)" इति। हे इष्टके, त्वं अन्तरिक्षरूपासि। हे द्वितीयेष्टके, अन्तरिक्षप्रीत्यर्थं त्वाम् उपदधामीति शेषः।

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते,—"संयानीभिर्वै देवा इमांल्लोकान्त्समयुस्तत्संयानीनां संयानीत्वं यत्संयानीरुपदधाति यथाप्सु नावा संयात्येवमेवैताभिर्यजमान इमाँल्लोकान्त्संयाति" (५।३।१०अ०) इति। संयानीशब्देनापेतैर्मन्त्रैरुपधेया इष्टकाः संयान्यः।

ताभिः 'देवाः' 'इमान्' 'लोकान्' सम्यक् प्राप्ताः। ततः सम्यक् यान्ति लोकानाभिरिति संयानीशब्दो व्युत्पन्नः, तदुपधाने सति यथा लोके नद्यादिजलेषु नावा परतीरं सम्यग् याति, एवम् 'एताभिः' 'लोकान्' सम्यक् प्राप्नोति।

पूर्व्वं नौदृष्टान्तेन प्रशंसा कृता, अथ प्लवरूपत्वमारोप्य प्रशंसति,—"प्लवो वा एषोऽग्नेर्यत्संयानीर्यत्संयानीरुपदधाति प्लव-मेवैतमग्नय उपदधाति" (५।३।१०अ०) इति। चीयमानस्याग्नि-समुद्रस्य संयानीसमूहोऽयं प्लवरूपः, अतस्तदुपधानेनाग्न्यर्थं प्लवरूपमेवोपदधाति।

प्रकारान्तरेण पुनः प्रशंसति,—"उत यस्यैतास्वुपहितास्वापो-ऽग्निꣳ हरन्त्यहृत एवास्याग्निः" (५।३।१०अ०) इति। अपि च तदुपधानादूर्द्ध्वं यदि कथञ्चित् बहुलवृष्टिं सम्पादितप्रवाहेण* चीयमानो हृतो भवेत् तथापि 'अस्य' (यजमानस्य) 'अग्निः' 'अहृतः' 'एव' भवति।

कल्पः, 'सलिलाय त्वेत्यष्टावादित्येष्टका' इति। पाठस्तु,—"सलिलाय त्वा सर्णीकाय त्वा सतीकाय त्वा केताय त्वा प्रचेतसे त्वा विवस्वते त्वा दिवस्त्वा ज्योतिष आदित्येभ्यस्त्वा(१०-१४)" इति। सलिल-सर्णीक-सतीकशब्दा जलावान्तरविशेषवाचिनः,—यस्मिन् बहुले जले पतितं वस्तु लीनं भवति, तद्बहुलजलं 'सलिलं'। हे इष्टके, तथाविधजलसिद्ध्यर्थं त्वाम् उपदधामि। एवमुत्तरत्रापि

* एवमेव सर्व्वत्र पाठः। तदुपधानादूर्द्ध्वं यदि कथञ्चित् बहुल-वृष्टिसम्पादितप्रवाहेण इति पाठस्तु भवितुं युक्तः।

योग्यं । प्रवाहरूपेण सरणशीलं जलं 'सर्णीकं' । तथैव सद्भावमापन्नं जलं 'सतीकं' । 'केतो' ज्ञानमात्रं । 'प्रचेतः' प्रकृष्टज्ञानं । विशेषेण वासहेतुः* सूर्यप्रकाशो हि 'विवस्वान्' । द्युलोकवर्त्ती नक्षत्रादिप्रकाशो 'दिवो' 'ज्योतिः' । आदित्याः प्रसिद्धाः ।

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते,—"आदित्येष्टका उपदधात्यादित्या वा एतं भूत्यै प्रतिनुदन्ते योऽलं भूत्यै सन् भूतिं न प्राप्नोत्यादित्या एवैनं भूतिं गमयन्त्यसौ वा एतस्यादित्यो रुचमादत्ते योऽग्निं चित्वा न रोचते यदादित्येष्टका उपदधात्यसावेवास्मिन्नादित्यो रुचं दधाति यथासौ देवानाꣳ रोचत एवमेवैष मनुष्याणाꣳ रोचते" (५।३।१०अ०) इति । आदित्यशब्दोपेतैर्मन्त्रैरुपधेया 'आदित्येष्टकाः'।"यः' राजा अमात्यादिपुष्कलेन भूत्यर्थं समर्थोऽपि 'भूतिं न प्राप्नोति', 'एनम्' 'आदित्या' एव भूतेरपनयन्ति, अतस्त्यादित्येष्टकोपधानेन आदित्या एव भूतेः प्रापयितारो भवन्ति । 'यः' (यजमानः) उक्तक्रमेण 'अग्निं चित्वा' अपि मनुष्येभ्यो न 'रोचते' । अयमग्निचिदित्येवं मनुष्या बहुमानं न कुर्वन्ति, तदानीमस्याग्निचितो 'रुचं' (प्रीतिम्) 'आदित्य' उपं 'आदत्ते' । तस्यादित्येष्टकोपधाने सति आदित्य एव तस्मिन् स्थापयति । ततः शास्त्रीयवचनेन यथा देवानां प्रियः 'एवमेव' 'मनुष्याणां' प्रियो भवति । ततः—

"अग्निचित् कपिला सत्री राजा भिक्षुर्महोदधिः ।

---

* वसहेतुरिति का० स० पु० ।

दृष्टमात्राः पुनन्त्येते तस्मात् पश्येत नित्यशः" ॥

इत्यादिस्मृतिविषयत्वेनैनं मनुष्या गणयन्ति ॥

कल्पः, 'स्वचे त्वा रुचे त्वेति पञ्च घृतेष्टकाः' इति। पाठस्तु,— "स्वचे त्वा रुचे त्वा द्युते त्वा भासे त्वा ज्योतिषे त्वा(२५-२९)" इति। हे इष्टके, पादबद्धं* मन्त्रसाध्यस्तुत्यर्थं त्वाम् उपदधामि। एवमुत्तरत्रापि योज्यं। प्रकाशवाचिनी 'रुक्'। 'द्युत्'-'भा'-'ज्योतिः'-शब्दा आदित्यचन्द्राग्निनक्षत्रदीप्तिविषयतया क्रमेण व्याख्येयाः।

एतन्मन्त्रसाध्यमुपधानं विधत्ते,—"घृतेष्टका उपदधात्येतद्वा अग्नेः प्रियं धाम यद्घृतं प्रियेणैवैनं धाम्ना समर्द्धयत्यथो तेजसा" (५।३।१०अ०) इति। घृतपिण्डा एव 'घृतेष्टकाः'। अमृन्मयीषु इष्टकासु सूत्रकारेण परिगणितत्वात् घृतस्याग्निप्रियद्रव्यत्वात् तेनाग्निः समृद्धो भवति। किञ्च 'तेजसा' अपि युक्तो भवति।

तत्रापि पूर्ववदेकैकस्या इष्टकायाः प्रदक्षिणावृत्तिपूर्वकत्वं विधत्ते,—"अनुपरिहारꣳ सादयत्यपरिवर्गमेवास्मिन् तेजो दधाति" (५।३।१०अ०) इति। परितः क्वापि वर्जनं कृत्वा† सर्वतो यजमाने 'तेजः' स्थापयति।

कल्पः, 'यशोदां त्वेति पञ्च यशोदा' इति। पाठस्तु,— यशोदां त्वा यशसि तेजोदां त्वा तेजसि पयोदां त्वा पयसि वर्चोदां त्वा वर्चसि द्रविणोदां त्वा द्रविणे सादयामि तेनर्षिणा तेन

---

* पादबद्ध-इति पाठो भवितुं युक्तः।

† अकृत्वा इति पाठो भवितुं युक्तः।

ब्रह्मणा तया देवतयाङ्गिरस्वद्ध्रुवा सीद(१०-१४)" इति। 'यशः' कीर्त्तिः। 'तेजः' कान्तिः। 'वर्चः' बलं। 'पयः' क्षीरं। 'द्रविणं' धनं। हे इष्टके, यशःप्रदां त्वां यशोनिमित्तं 'सादयामि'। केन सह?—यस्त्वदभिज्ञ ऋषिः, यच्च ब्रह्मत्वप्रतिपादकं मन्त्रवाक्यं, या च त्वदभिमानिनी देवता; तैः सर्वैः सह त्वाम् अहं 'सादयामि'। यथा अङ्गिरसः सादयन्ति तद्वत्। एवं 'तेजोदां त्वा' इत्यादिषु चतुर्षु मन्त्रेषु सादयामीत्यादिकं सर्वमनुषज्य व्याख्येयम्।

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते,—"प्रजापतिरग्निमचिनुत स यशसा व्यार्ध्यत स एता यशोदा अपश्यत् ता उपाधत्त ताभिर्वै स यश आत्मन्नधत्त यद्यशोदा उपदधाति यश एव ताभिर्यजमान आत्मन्धत्ते" (५।३।१०अ०). इति। अग्निं चित्वाप्येतासामनुपधानात् 'प्रजापतिः' यशसा वियुक्त आसीत्। तत एता दृष्ट्वा ता उपधाय यशो लब्धवान्। एवं यजमानोऽपि तदुपधानेन यशो लभते।

इष्टकासङ्ख्यां विधत्ते,—"पञ्चोपदधाति पाङ्क्तः पुरुषो यावानेव पुरुषस्तस्मिन् यशो दधाति" (५।३।१०अ०) इति। हस्तपादशिरोभिः पञ्चभिरवयवैः पुरुषस्य पाङ्क्तत्वम्॥

अत्र विनियोगसंग्रहः,—

वृह,—विश्व,—प्रजेत्येता विश्वज्योतिष ईरिताः।
पुरो,—वृष्टिसनीः पञ्च, व्यग्नेः, संयानिकाष्टकम्॥
सख्यादित्येष्टका अष्टावुच पञ्च घृतेष्टकाः।

यज्ञः,—पञ्च यशोदाः स्युः सादयाम्यनुपठ्यते।

षष्ठानुवाके संप्रोक्तास्चतुस्त्रिंशत्तु मन्त्रकाः॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे चतुर्थप्रपाठके षष्ठोऽनुवाकः॥ ०॥

---

भूयस्कृदसि वरिवस्कृदसि प्राच्यस्यूर्ध्वास्यन्तरिक्ष-सदस्यन्तरिक्षे सीद(१-५) अप्सुषदसि श्येनसदसि गृध्रस-दसि सुपर्णसदसि नाकसदसि(६-१०) पृथिव्यास्त्वा द्रविणे सादयाम्यन्तरिक्षस्य त्वा द्रविणे सादयामि दिवस्त्वा द्रविणे सादयामि दिशां त्वा द्रविणे सादयामि द्रवि-णोदां त्वा द्रविणे सादयामि(११-१५) प्राणं मे पाह्यपानं मे पाहि व्यानं मे॥ १॥

पाह्यायुर्मे पाहि विश्वायुर्मे पाहि सर्वायुर्मे पाहि(१६-२१) अग्ने यत्ते परꣳ हृन्नाम तावेहि सꣳरभावहै पाञ्च-जन्येष्वप्येध्यग्ने(२२) यावा अयावा एवा ऊमा सन्नः सगरः सुमेकः(२३-२९)॥ २॥

व्यानं मे। द्वात्रिꣳशच्च॥ ७॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे चतुर्थप्रपाठके सप्तमोऽनुवाकः॥ ०॥

षष्ठेऽनुवाके विश्वज्योतिरादय इष्टका उक्ताः। अथ सप्तमे भूयस्कृदादय इष्टका उच्यन्ते। कल्पः, 'भूयस्कृदसीति पञ्च भूयस्कृतः' इति। पाठस्तु,—"भूयस्कृदसि वरिवस्कृदसि प्राच्यस्यूर्द्ध्वास्यन्तरिक्षसदस्यन्तरिक्षे सीद(१-५)" इति। हे इष्टके, त्वं, 'भूयो' (बाहुल्यं) करोतीति 'भूयस्कृत्', तथाविधा 'असि'। एवमुत्तरत्रापि योज्यं। 'वरिवो' (भूमेः पूज्यत्वं) करोतीति 'वरिवस्कृत्'। स्पष्टमन्यत्।

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते,—"देवासुराः संयत्ता आसन्, कनीयाꣳसो देवा आसन्, भूयाꣳसोऽसुरास्ते देवा एता इष्टका अपश्यन्, ता उपादधत भूयस्कृदसीत्येव भूयाꣳसोऽभवन्, वनस्पतिभिरोषधीभिर्वरिवस्कृदसीतीमामजयन्, प्राच्यसीति प्राचीं दिशमजयन्नूर्द्ध्वासीत्यमूमजयन्नन्तरिक्षसदस्यन्तरिक्षे सीदेत्यन्तरिक्षमजयन् ततो देवा अभवन्, पराऽसुरा यस्यैता उपधीयन्ते भूयानेव भवत्यभीमाँल्लोकान् जयति भवत्यात्मना परास्य भ्रातृव्यो भवति" (५।३।११अ०) इति। देवाश्च असुराश्च यदा युद्धायोद्युक्ताः, तदा देवाः पुरुषसङ्ख्यया द्रव्यसम्पत्त्या* च अल्पा भूत्वा तत्परिहाराय 'एता इष्टका' दृष्ट्वा 'ता' उपधाय प्रथममन्त्रेण वनस्पत्योषधिद्रव्यसम्पत्त्या तदुपलक्षितपुरुषसम्पत्त्या च अतिबहुला अभवन्। उपरितनैर्मन्त्रैर्भूम्यादिजयं प्राप्ताः, ततो देवा विजयिनोऽभवन्, असुराश्च पराभूताः। यजमानोऽप्येतासामुपधानेन तथा भवति॥

कल्पः, 'अप्सुषदसीति पञ्चाग्निरूपाणि' इति। पाठस्तु,—

* द्रव्यसङ्ख्यया चेति क० ङ० पु० पाठः।

"अप्सुषदसि श्येनसदसि गृध्रसदसि सुपर्णसदसि नाकसदसि(९-१०)" इति। योऽग्निरप्सु सीदति, हे इष्टके, तद्रूपा त्वम् 'असि'। आरुणकेतुकचयने, जानुदघ्नीमुत्तरवेदिमद्भिः पूरयित्वा तास्वग्निश्चीयते। श्येनगृध्रसुपर्णाः पक्षिविशेषाः, तत्तदाकारेण स्थितोऽग्निः श्येनसदादिशब्दैरुच्यते। नाके (स्वर्गे) वर्त्तमानोऽग्निः 'नाकसत्'; तदग्निरूपा इष्टके त्वम् 'असि' इति योज्यम्।

मन्त्रेष्वप्सुषदादिपदानामग्न्याकारवत्त्वं दर्शयति,—"अप्सुषदसि श्येनसदसीत्याहैतद्वा अग्नेरूपꣳ रूपेणैवाग्निमवरुन्धे" (५।३।११अ०) इति। अग्न्याकारवाचिनां पदानां पाठेन योग्यरूपेण युक्तमग्निमेव प्राप्नोति। अग्निरूपवाचिभिर्मन्त्रैरुपधेयत्वादिष्टका अप्यग्निरूपाणीत्येवोच्यन्ते।

कल्पः, 'पृथिव्यास्त्वा द्रविणे सादयामीति पञ्च द्रविणोदा' इति। पाठस्तु,—"पृथिव्यास्त्वा द्रविणे सादयाम्यन्तरिक्षस्य त्वा द्रविणे सादयामि दिवस्त्वा द्रविणे सादयामि दिशां त्वा द्रविणे सादयामि द्रविणोदां त्वा द्रविणे सादयामि(११-१५)" इति। 'पृथिव्याः' सम्बन्धि यत् द्रविणं (धनं), तस्मिन् 'द्रविणे' 'त्वां' 'सादयामि'। एवमुत्तरत्रापि योज्यं। द्रविणप्रदां त्वाम् अनुक्तविशेषेऽपि सर्वस्मिन् 'द्रविणे' 'सादयामि'।

मन्त्राणां तात्पर्यं दर्शयति,—"पृथिव्यास्त्वा द्रविणे सादयामीत्याहेमानेवैताभिर्लोकान् द्रविणावतः कुरुते" (५।३।११अ०) इति 'एताभिः' एतन्मन्त्रसाध्याभिः, द्रविणोदाख्याभिर्द्रविणोदाशब्दयुक्तैर्मन्त्रैरुपधेयत्वात् 'द्रविणोदा' इत्यासां नाम।

कल्पः, 'प्राणं मे पाहीति षडायुष्याः' इति । पाठस्तु,—"प्राणं मे पाह्यपानं मे पाहि व्यानं मे पाह्यायुर्मे पाहि विश्वायुर्मे पाहि सर्वायुर्मे पाहि(१९-२१)" इति । हे इष्टके, मदीयां प्राणवृत्तिं पालय । एवं सर्वत्र । स्वकीयायुषः साकल्यं विश्वशब्देनोच्यते । स्वसम्बन्धिषु पुत्राद्यायुष्यं* सर्वशब्देनोच्यते ।

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते,—"आयुष्या उपदधात्यायुरेवास्मिन् दधाति" (५।३।११ अ०) इति । आयुःशब्दोपेतैर्मन्त्रैरुपधेयत्वादेता इष्टका 'आयुष्याः' ।

कल्पः, 'अग्ने यत्ते परꣳ हृन्नामेत्यग्नेर्हृदयम्' इति । पाठस्तु,—"अग्ने यत्ते परꣳ हृन्नाम तावेहि सꣳरभावहै पाञ्चजन्येष्वप्येध्यग्ने(२२)" इति । हे 'अग्ने', 'हृत्' इति 'यत्ते' 'परम्' (उत्कृष्टं) 'नाम', अनिष्टपापं हरतीति 'हृत्' तेन नाम्ना युक्तस्त्वम् 'एहि' (मत्समीपमागच्छ)। 'तौ' (त्वञ्च अहञ्च इत्युभौ) आवां 'संरभावहै' (सङ्गतौ कुर्मः† कुर्वः) । पञ्चजनशब्दः सञ्ज्ञायां समस्तत्वादत्र चितिपञ्चकमाचष्टे । हे 'अग्ने', त्वं 'पाञ्चजन्येष्वपि' (पञ्चचितिसम्बन्धेषु सर्वेष्वपि स्थानेषु) 'एधि' (अवस्थितो भव) ।

मन्त्रस्य प्रथमपादे हृच्छब्दस्य तात्पर्यं दर्शयति,—"अग्ने यत्ते परꣳ हृन्नामेत्याहैतद्वा अग्नेः प्रियं धाम प्रियमेवास्य धामोपाप्नोति" (५।३।११ अ०) इति । हृच्छब्दवाच्यं पापहारिस्वरूपं 'यत्', तदेव 'अग्नेः' 'प्रियं' स्थानम् ।

मध्यभागे संरभावहै इत्यस्य तात्पर्यं दर्शयति,—"तावेहि

---

* स्वसम्बन्धिपुत्राद्यायुष्यमिति पाठो भवितुं युक्तः ।

† "कुर्मः" इति अधिक इव प्रतिभाति ।

सꣳरम्भावस्था इत्याह व्येवैनेन परिधत्ते" (५।३।११अ०) इति। सहानुष्ठानप्रार्थने सति 'अनेन' अग्निना स्वस्य परिधानं प्रावरणं विशेषेण कृतं भवति।

तृतीयभागे पाञ्चजन्यशब्दार्थं दर्शयति,—"पाञ्चजन्येष्वप्येध्यग्न इत्याहैष वा अग्निः पाञ्चजन्यो यः पञ्चचितीकस्तस्मादेवमाह" (५।३।११अ०) इति।

कल्पः, 'यावा अयावा इति सप्तर्त्तव्याः' इति। पाठस्तु,—"यावा अयावा एवा ऊमाः सब्दः सगरः सुमेकः(२३-२९)" इति। यावाद्याः षट् शब्दा वसन्ताद्यृतुवाचिनः। सुमेकशब्दः संवत्सरवाची। हे इष्टके त्वं तद्रूपासीति योज्यम्।

एतन्मन्त्रसाध्यमुपधानं विधत्ते,—"ऋतव्या उपदधात्येतद्वा ऋतूनां प्रियं धाम यदृतव्या ऋतूनामेव प्रियं धामावरुन्धे। सुमेक इत्याह संवत्सरो वै सुमेकः संवत्सरस्यैव प्रियं धामोपाप्नोति" (५।३।११अ०) इति। एतद्यावादिशब्दानामृतुसम्बन्धित्वात् तैरुपधेया इष्टका अपि 'ऋतव्या' इत्युच्यन्ते॥

अत्र विनियोगसंग्रहः,—

भूयो,—भूयस्कृतः पञ्च, पञ्चाप्स्वित्यग्निरूपकाः।
पृथि,—पञ्च द्रविणोदाः, प्राणमायुष्यकास्तु षट्॥
अग्ने,—ऽग्नेर्हृदयं प्रोक्तं, यावाः सप्त ऋतव्यकाः।
अनुवाके सप्तमेऽस्मिन्नेकोनत्रिंशदीरिताः॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये चतुर्थकाण्डे चतुर्थप्रपाठके सप्तमोऽनुवाकः॥ ७॥

अ॒ग्निना॑, वि॒श्वाषाट्[१] सूर्ये॑ण स्व॒राट्[२] क्रत्वा॒ शची॒पति॑ः[३] ऋ॒ष॒भेण॒ त्वष्टा॑[४] य॒ज्ञेन॑ म॒घवा॑न्[५] दक्षि॑णया सु॒वर्गो॑[६] म॒न्युना॑ वृत्र॒हा[७] सौहा॑र्द्ये॑न त॒नू॒धा[८] अन्ने॑न॒ गय॑ः[९] पृ॒थि॒व्यास॑नोद्[१०] ऋ॒ग्भि॒र॑न्ना॒दो[११] व॑षट्का॒रेण॒र्द्धः[१२] साम्ना॑ तनू॒पा[१३] वि॒राजा॒ ज्योति॑ष्मान्[१४] ब्रह्म॑णा सोम॒पा[१५] गोभि॑र्य॒ज्ञं दा॑धार[१६] क्ष॒त्रेण॑ म॒नु॒ष्या॑न्[१७] अश्वे॑न च॒ रथे॑न च॒ व॒ज्री[१८] ऋ॒तुभि॑ः प्र॒भुः[१९] सं॑व॒त्स॒रेण॑ परि॒भूः[२०] त॒प॒सान॑ाधृष्टः[२१] सूर्य॑ः सं॒त॒नूभि॑ः[२२] ॥ १ ॥.

अ॒ग्निना॑। एका॒न्नप॑ञ्चा॒शत् ॥ ८ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे चतुर्थप्रपाठके अष्टमोऽनुवाकः ॥०॥

सप्तमेऽनुवाके भूयस्कृदाद्या इष्टका उक्ताः। अथाष्टमे इन्द्र-तन्वाख्या इष्टका उच्यन्ते। कल्पः, 'अग्निना विश्वाषाडिति द्वाविंशतिमिन्द्रतनूः' इति। पाठस्तु,—"अग्निना विश्वाषाट्[१] सूर्येण स्वराट्[२] क्रत्वा शचीपतिः[३] ऋषभेण त्वष्टा[४] यज्ञेन मघवान्[५] दक्षिणया सुवर्गो[६] मन्युना वृत्रहा[७] सौहार्द्येन तनूधा[८] अन्नेन गयः[९] पृथिव्याऽसनोद्[१०] ऋग्भिरन्नादो[११]

वषट्कारेणर्द्धः(१२) साम्ना तनूपा(१३) विराजा ज्योतिष्मान्(१४) ब्रह्मणा सोमपा(१५) गोभिर्यज्ञं दाधार(१६) क्षत्रेण मनुष्यान्(१७) अश्वेन च रथेन च वज्री(१८) ऋतुभिः प्रभुः(१९) संवत्सरेण परिभूः(२०) तपसाऽनाधृष्टः(२१) सूर्यः सन् तनूभिः(२२)" इति। विश्वं सहते तत्पालनप्रयासमङ्गीकरोतीति 'विश्वाषाट्'। 'अग्निना' सह 'विश्वाषाड्' य इन्द्रः, हे इष्टके तद्रूपा त्वम् असि। एवं सर्वत्र योज्यं। 'सूर्येण' सह स्वतो राजत इति 'स्वराट्' इन्द्रः। 'क्रत्वा' (ज्योतिष्टोमादिप्रौढकर्मणा) सहितः। शच्याः देव्याः 'पतिः' इन्द्रः। 'ऋषभेण' (वर्षित्रा धर्मेण) सह 'त्वष्टा' (रूपकृत्) इन्द्रः। 'यज्ञेन' (अल्पेन पाकयज्ञेन) सहितो 'मघवान्' (अन्नवान्) इन्द्रः। 'दक्षिणया' (गवादिरूपया) 'सुवर्गः' (स्वर्गलोकात्मको यः) इन्द्रः। 'मन्युना' (क्रोधेन सह) 'वृत्रहा' (शत्रुघाती) इन्द्रः। सुहृदो भावः 'सौहार्द्यं' स्नेहातिशयः, तेन सहितः 'तनूधाः' (शरीरधारी) इन्द्रः। 'अन्नेन' सहितः 'गयः' (गृहविशेषरूपः) इन्द्रः। 'पृथिव्या' सह 'असनोत्' (द्रव्यादिदानं कृतवान्) इन्द्रः। 'ऋग्भिः' मन्त्रविशेषैः सहितः, 'अन्नादो' (हविर्लक्षणस्यान्नस्य भोक्ता) इन्द्रः।'वषट्कारेण' (हविःप्रदानहेतुना) सह 'ऋद्धः' (समृद्धः) इन्द्रः। 'साम्ना' (गीयमानमन्त्रेण) सह 'तनूपाः' (शरीरपालकः) इन्द्रः। 'विराजा' (दशाक्षरच्छन्दसा) सह 'ज्योतिष्मान्' (प्रकाशवान्) इन्द्रः। 'ब्रह्मणा' (मुख्येन ऋत्विजा, मन्त्रेण वा) सह 'सोमपाः' (सोमपानस्य कर्त्ता) इन्द्रः। 'गोभिः' (दक्षिणारूपाभिः) सह 'यज्ञं दाधार' (यज्ञधारकः)

इन्द्रः। 'क्षत्रेण' (राज्ञा) सह 'मनुष्यान्' दाधारेत्यनुवर्त्तते*। योऽयम् अश्वः यस्य रथः, ताभ्यामुभाभ्यां सह 'वज्री' (वज्रयुक्तः) इन्द्रः। 'ऋतुभिः' (वसन्तादिभिः) सह 'प्रभुः' (फलदानसमर्थः) इन्द्रः। 'संवत्सरेण' (कालरूपेण) सह 'परिभूः' (परितो व्याप्तवान्) इन्द्रः। 'तपसा' (अन्नवर्जनधनदानादिरूपेण) 'अनाधृष्टः' (केनाप्यतिरस्कृतः) इन्द्रः। 'तनूभिः' (द्वादशमूर्त्तिभिः) सह 'सूर्यः सन्' (सूर्यरूपो भूत्वा) इन्द्रो वर्त्तते। हे इष्टके तद्रूपा त्वमसि।

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते,—"देवासुराः संयत्ता आसन् ते न व्यजयन्त स एता इन्द्रस्तनूरपश्यत् ता उपाधत्त ताभिर्वै स तनुवमिन्द्रियं वीर्यमात्मन्नधत्त ततो देवा अभवन् पराऽसुरा यदिन्द्रतनूरुपदधाति तनुवमेव ताभिरिन्द्रियं वीर्यं यजमान आत्मन्धत्तेऽथो सेन्द्रमेवाग्निꣳ सतनुं चिनुते भवत्यात्मना पराऽस्य भ्रातृव्यो भवति" (५।४।१ अ०) इति। देवानामसुराणाञ्च संग्रामे प्राप्ते दुर्बला देवा विजयं न प्राप्ताः, तदानीं विजयाय 'स' 'इन्द्रः' 'एताः' 'तनू'-नामिका इष्टका दृष्ट्वा तदुपधानेन शरीरपुष्टिम् इन्द्रियपाटवं शौर्यपाटवञ्च धृतवान्। ततो देवानां जयोऽसुराणां पराभवश्चासीत्। ततो यजमानोऽपि इन्द्रतनूनाम् उपधानेन तथाविधो भवति। विश्वाषाडित्यादिशब्दा इन्द्रतनू-विशेषवाचकाः। तद्युक्तैर्मन्त्रैरुपधेया इष्टका इन्द्रतन्वः† ॥

---

* "तथा मनुष्यधारक इन्द्रः" इत्यधिकः पाठ आदर्शपुस्तक एवास्ति।
† तनव इति का० ष० पु० पाठः। तनुव इति आदर्शपुस्तकपाठः।

अत्र विनियोगसंग्रहः,—

अग्नीन्द्रतनुनामानो द्वाविंशतिरितीरिताः॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये चतुर्थकाण्डे चतुर्थप्रपाठकेऽष्टमोऽनुवाकः॥०॥

---

प्रजापतिर्मनसान्धोऽच्छेतो(१) धाता दीक्षायाꣳ(२) सविता भृत्यां(३) पूषा सोमक्रयण्यां(४) वरुण उपनद्धो(५) असुरः॥ क्रीयमाणो(६) मित्रः क्रीतः(७) शिपिविष्ट आसादितो(८) नरंधिषः प्रोह्यमाणो(९) अधिपतिरागतः(१०) प्रजापतिः प्रणीयमानो(११) अग्निराग्नीध्रे(१२) बृहस्पतिराग्नीध्रात् प्रणीयमान(१३) इन्द्रो हविर्धाने(१४) अदितिरासादितो(१५) विष्णुरुपावह्रियमाणो(१६) ऽथर्वोपोत्तो(१७) यमोऽभिषुतो(१८) अपूतपा आधूयमानो(१९) वायुः पूयमानो(२०) मित्रः क्षीरश्रीः(२१) मन्थी सक्तुश्रीः(२२) वैश्वदेव उन्नीतो(२३) रुद्रः, आहुतो(२४) वायुरावृत्तो(२५) नृचक्षाः प्रतिख्यातो(२६) भक्ष आगतः(२७) पितॄणां नाराशꣳसो(२८) ऽसुरात्तः(२९) सिन्धुरवभृथमवप्रयन्(३०) समुद्रोऽवगतः(३१) सलिलः प्रप्लुतः(३२) सुवरुदृचं गतः(३३)॥ १॥

रुद्रः। एकविंशतिश्च ॥ ९ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे चतुर्थप्रपाठके नवमोऽनुवाकः ॥९॥

अष्टमेऽनुवाके इन्द्रतन्वाख्या इष्टका उक्ताः। अथ नवमे यज्ञतन्वाख्या इष्टका उच्यन्ते। कल्पः, 'प्रजापतिर्मनसान्धोऽच्छेत इति त्रयस्त्रिंशतं यज्ञतनूः' इति। पाठस्तु,—"प्रजापतिर्मनसान्धोऽच्छेतो(१) धाता दीक्षायाꣳ(२) सविता भृत्यां(३) पूषा सोमक्रयण्यां(४) वरुण उपनद्धः(५) असुरः क्रीयमाणो(६) मित्रः क्रीतः(७) शिपिविष्ट आसादितो(८) नरंधिषः प्रोह्यमाणः(९) अधिपतिरागतः(१०) प्रजापतिः प्रणीयमानः(११) अग्निराग्नीध्रे(१२) बृहस्पतिराग्नीध्रात् प्रणीयमानः(१३) इन्द्रो हविर्द्धाने(१४) अदितिरासादितो(१५) विष्णुरुपावह्रियमाणः(१६) अथर्वोपोत्तो(१७) यमोऽभिषुतः(१८) अपूतपा आधूयमानो(१९) वायुः पूयमानो(२०) मित्रः क्षीरश्रीः(२१) मन्थी सक्तुश्रीः(२२) वैश्वदेव उन्नीतो(२३) रुद्र आहुतो(२४) वायुरावृतो(२५) नृचक्षाः प्रतिख्यातो(२६) भक्ष आगतः(२७) पितॄणां नाराशꣳसः(२८) असुरात्तः(२९) सिन्धुरवभृथमवप्रयन्(३०) समुद्रोऽवगतः(३१) सलिलः प्रप्लुतः(३२) सुवरुदृचं गतः"(३३) इति। अत्र सङ्कल्पमारभ्य समाप्तिपर्यन्तं ये सोमयागाः, ते यज्ञपुरुषस्य तनुविशेषाः। तद्रूपत्वमिष्टकानामुच्यते। यो यजमानोऽस्ति असौ, 'मनसा', 'अन्धः' (अन्नं) तेन तद्धेतुर्यज्ञ उपलक्ष्यते, यज्ञं 'अच्छेतः' (प्राप्तुं गतः); मनसा यज्ञं करिष्यामि

इति सङ्कल्पितवानित्यर्थः। सोऽयं सङ्कल्पदशामापन्नो यज्ञस्य विग्रहः 'प्रजापति'-नामकः। हे इष्टके, तद्रूपा त्वमसि। 'दीक्षायां' योऽयं विग्रहो यज्ञसम्बन्धी, स 'धाता' (धातृसदृशमूर्त्तिः)। हे इष्टके, तद्रूपा त्वमसि। एवं सर्वत्र योज्यं। 'सूतिः' यज्ञभिक्षा, तस्यां सवितृसमानमूर्त्तिर्यज्ञतनुः। 'सोमक्रयणी' (एकहायनी गौः), तस्यां पूषसमानो* यज्ञविग्रहः। 'उपनद्धः' (वस्त्रेण बद्धः) यः सोमः, स वरुणसमानशरीरो यज्ञपुरुषः। 'क्रीयमाणः' यः, सोऽयम् 'असुरः' इन्द्रसमानविग्रहः। शत्रूनस्यति क्षिपतीति असुरः, असून् (प्राणान्) राति (ददाति) इति वा असुरः। यः 'क्रीतः' सोमः, सोऽयं मित्रसमानविग्रहो यज्ञः। 'आसादितः' यजमानस्य ऊरौ यः स्थापितः सोमः, सोऽयं 'शिपिविष्टः' (विष्णुसमानविग्रहो) यज्ञः। 'प्रोह्यमाणः' शकटेन प्राग्वंशं प्रति नीयमानो यः सोमः, सोऽयं 'नरंधिषः' (अग्निसमानविग्रहो) यज्ञः। नरैर्यजमानैर्धीयते आधीयते इति 'नरंधिषः' (अग्निः)। 'आगतः' प्राग्वंशे आसन्दीं प्रति समागतो यः सोमः, सोऽयम् 'अधिपतिः' (अधिकं पालकः) य आहवनीयः, तत्समान-विग्रहः। 'प्रणीयमानः' प्राग्वंशादाग्नीध्रीयं प्रति नीयमानो यः सोमः, सोऽयं प्रजापतिसमानविग्रहः। 'आग्नीध्रे' अवस्थितो यः सोमः, सोऽयमग्निसमानविग्रहः। 'आग्नीध्रात्' हविर्धानं प्रति नीयमानो यः सोमः, सः बृहस्पतिसमानविग्रहः। 'हविर्धाने'

* पूषं समान इति सर्व्वत्र पाठो न सम्यक्।

प्रविष्टः 'इन्द्र'-समानविग्रहः। 'आसादितः' (आसन्द्यां स्थापितः) सोमः 'अदिति'-समानविग्रहः। 'उपावह्रियमाणः' (शकटादधिषवणफलकस्थग्रावस्ववरोप्यमाणः) सोमः 'विष्णु'-समानविग्रहः। 'उपोक्तः' (वसतीवरीभिरद्भिः क्लेदितः) सोमः 'अथर्वा' (अथर्वमहर्षिसमानविग्रहः)। 'आधूयमानः' (अदाभ्यग्रहे सोमांशुभिस्ताड्यमानः)। अपूतं मूत्राद्युपहतं भूप्रदेशं पाति शोषयतीति* विशेषेण शुद्धं करोतीति 'अपूतपाः' (आदित्यः)। 'पूयमानः' (दशापवित्रेण शोध्यमानः) सोमः 'वायु'-समानविग्रहः। 'क्षीरश्रीः' (मैत्रावरुणग्रहे पयसा मिश्रितः) सोमः 'मित्र'-समानविग्रहः। 'सक्तुश्रीः' (मन्थिग्रहे सक्तुभिर्मिश्रितः) सोमो 'मन्थी' (मन्थिग्रहदेवताद्रूपेन्द्रसमानविग्रहः)। 'उन्नीतः' (चमसेषु पूरितः सोमः) 'वैश्वदेवः' (विश्वैर्देवैः समानविग्रहः)। 'आहुतः' (वह्नौ प्रक्षिप्तः) सोमः 'रुद्र'-समानविग्रहः। 'आवृतः' (भक्षार्थं सदसि आनेतुं प्रतिनिवृत्तः) सोमः 'वायु'-समानविग्रहः। 'प्रतिख्यातः' (भक्षार्थमपेक्षितः) सोमः 'नृचक्षाः' (मनुष्यदृष्टिसमानविग्रहः)। 'आगतः' (आस्ये प्रवेशितः) सोमः 'भक्षः' (वैश्वानरसमानविग्रहः)। भक्षयन्तीति व्युत्पत्त्या भक्षशब्दस्तद्वाची। 'नाराशंसः' (भक्षितशेषः सन् पुनर्वसतीवरीभिराप्यायितः) सोमः पितृसमानविग्रहः। 'अत्तः'† (अवभृथगमनार्थं स्वीकृतः) सोमः, 'असुः' प्राणदेवतासमानविग्रहः।

---

* "शोधयतीति" इति पाठो भवितुं युक्तः।

† 'आत्तः' इति पाठो भवितुं युक्तः।

'अवभृथमवप्रयन्' (अवभृथकर्मार्थं मार्गं गच्छन्) सोमः 'सिन्धुः' नदीदेवतासमानविग्रहः। 'अवगतः' (अवभृथप्रदेशं प्राप्तः) सोमः समुद्रदेवतासमानविग्रहः। 'प्रप्लुतः' (जले प्रक्षिप्तः) सोमो जलदेवतासमानविग्रहः। 'उदृचम्' (उत्तमामृचं समाप्तिरूपं गतः) सोमः स्वर्गनिवासिदेवतासमानविग्रहः।

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते,—"यज्ञो देवेभ्योपाक्रमत् तमवरुन्धं नाशक्नुवन् त एता यज्ञतनूरपश्यन् ता उपादधत ताभिर्वै ते यज्ञमवारुन्धत यद्यज्ञतनूरुपदधाति यज्ञमेव ताभिर्यजमानोऽवरुन्धे" (५।४।१अ०) इति। केनापि निमित्तेन 'देवेभ्यः' अपक्रान्तो यज्ञोऽन्यत्रापगच्छत्। 'तं' (यज्ञं) देवा अपरोद्धुं 'नाशक्नुवन्', तदवरोधोपायत्वेन यज्ञतन्वाख्या इष्टका दृष्ट्वा ता उपधाय 'यज्ञमवारुन्धत'। ततो यजमानोऽपि यज्ञतनूभिर्यज्ञं प्राप्नोति। यज्ञतनुप्रतिपादकशब्दयुक्तैर्मन्त्रैरुपधेया इष्टका यज्ञतनवः।

इष्टकासङ्ख्यां विधत्ते,—"त्रयस्त्रिꣳशतमुपदधाति त्रयस्त्रिꣳशद्वै देवता देवता एवावरुन्धेऽथो सात्मानमेवाग्निꣳ सतनुं चिनुते" (५।४।१अ०) इति। हविर्भाजां देवतानामियं सङ्ख्या त्रिंशत्त्रयस्त्रेति मन्त्रे समाम्नाता। अतः सङ्ख्यया तावती देवताः प्राप्नोति। अपि च तनूपधानेन सशरीरमेवाग्निं चितवान् भवति।

एतद्वेदनं प्रशंसति,—"सात्मामुष्मिंल्लोके भवति य एवं वेद" (५।४।१अ०) इति।

यदुक्तं सूत्रकारेण, 'ज्योतिष्मतीं त्वा सादयामीति द्वादश ज्योतिष्मतीः' इति।

तदिदं विधत्ते,—"ज्योतिष्मतीरुपदधाति ज्योतिरेवास्मिन् दधात्येताभिर्वा अग्निश्चितो ज्वलति ताभिरेवैनꣳ समिन्ध उभयो-रस्मै लोकयोर्ज्योतिर्भवति" (५।४।१अ०) इति। ज्योतिष्मती-शब्दयुक्तैर्मन्त्रैरुपधेया इष्टका ज्योतिष्मत्यः। ते च मन्त्रा आरण्य-काण्डे समाम्नाताः। तदुपधानेन ज्योतिः स्थापयतीति। किञ्च एताभिः 'चितः' 'अग्निः' प्र-'ज्वलति', अतः 'ताभिरेवैनम्' अग्निं दीपितवान् भवति। ततः 'अस्मै' यजमानाय 'उभयोः' 'लोकयोः' 'ज्योतिः' सम्पद्यते॥

अत्र विनियोगसंग्रहः,—

प्रजेति यजुःशतनवत्रयस्त्रिंशतमीरिताः॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे चतुर्थप्रपाठके नवमोऽनुवाकः॥०॥

---

कृत्तिका नक्षत्रमग्निर्देवताग्नेरुचः स्थ प्रजापतेर्धातुः सोमस्यर्चे त्वा रुचे त्वा द्युते त्वा भासे त्वा ज्योतिषे त्वा[१] रोहिणी नक्षत्रं प्रजापतिर्देवता मृगशीर्षं नक्षत्रꣳ सोमो देवतार्द्रा नक्षत्रꣳ रुद्रो देवता पुनर्वसू नक्षत्र-

मदितिर्देवता तिष्यो नक्षत्रं बृहस्पतिर्देवताश्लेषा नक्ष-त्रं सर्पा देवता मघा नक्षत्रं पितरो देवता फल्गुनी नक्षत्रं ॥ १ ॥

अर्यमा देवता फल्गुनी नक्षत्रं भगो देवता हस्तो नक्षत्रं सविता देवता चित्रा नक्षत्रमिन्द्रो देवता स्वाती नक्षत्रं वायुर्देवता विशाखे नक्षत्रमिन्द्राग्नी देव-तानूराधा नक्षत्रं मित्रो देवता रोहिणी नक्षत्रमिन्द्रो देवता विचृतौ नक्षत्रं पितरो देवता अषाढा नक्षत्रमापो देवताऽषाढा नक्षत्रं विश्वेदेवा देवता श्रोणा नक्षत्रं विष्णुर्देवता श्रविष्ठा नक्षत्रं वसवः ॥ २ ॥

देवता शतभिषङ्नक्षत्रमिन्द्रो देवता प्रोष्ठपदा नक्ष-त्रमज एकपाद्देवता प्रोष्ठपदा नक्षत्रमहिर्बुध्नियो देव-ता रेवती नक्षत्रं पूषा देवताश्वयुजौ नक्षत्रमश्विनौ देवतापभरणीर्नक्षत्रं यमो देवता (२-२७) पूर्णा पश्चात्(१) यत्ते देवा अदधुः(२) ॥ ३ ॥

फल्गुनी नक्षत्रं । वसवः । त्रयस्त्रिंशच्च ॥ १० ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे चतुर्थप्रपाठके दशमोऽनुवाकः ॥०॥

नवमेऽनुवाके यज्ञतन्वाख्या इष्टका उक्ताः। अथ दशमे नक्षत्रेष्टका उच्यन्ते। कल्पः, ‘पूर्णा पश्चादिति पूर्णमासीं पुरस्तादुपधाय कृत्तिका नक्षत्रमिति नक्षत्रेष्टकाः पुरस्तात् प्रतीचीरसंस्पृष्टाः पूर्वां पूर्वामुपधायापरामपरामाविशाखाभ्यां दक्षिणेन स्वयमातृण्णाः रीतिं प्रतिपादयति यत्ते देवा अदधुरित्यमावास्यां पश्चादुपधायावशिष्टानां पूर्वामापभरणीभ्य उत्तरेण स्वयमातृण्णाः रीतिं प्रतिपादयति पौर्णमासीमन्ततः। रुचे त्वा रुचे त्वेति सर्वासु नक्षत्रेष्टकास्वनुषजति’ इति। येयं स्वयमातृण्णेष्टका तस्याः पूर्वस्यां* दिशमारभ्य प्रदक्षिणावृत्त्येष्टका उपदध्यात्। तत्र या इष्टका पौर्णमास्याख्या पूर्वस्यां दिश्युपधेया, तां सर्वासाम् ‘अन्ततः’ उपदध्यात्। तत्र प्रथममन्त्रपाठस्तु,—“कृत्तिका नक्षत्रमग्निर्देवताग्ने रुचः स्थ प्रजापतेर्धातुः सोमस्यर्चे त्वा रुचे त्वा द्युते त्वा भासे त्वा ज्योतिषे त्वा(१)” इति। अम्बाकुला-(?)† नितत्निरित्यादिका ज्योतिरूपा या देवता दिव्या भासन्ते ताः कृत्तिकाः। तासां समुदायरूपमेकं नक्षत्रं, तस्य च नक्षत्रस्याग्निर्देवता स्वामित्वेन वर्त्तते। हे कृत्तिकाः, यूयम् ‘अग्नेः’ ‘प्रजापतेः’ ‘धातुः’ ‘सोमस्य’ च सम्बन्धिनो ये‡ ‘रुचः’ (दीप्तयः) ‘स्थ’। प्रजापतेर्धातुश्च पालकत्वोत्पादकत्वाकारेण भेदः। उक्तदेवतारूपे हे इष्टके, ‘ऋचे’ (स्तुतिरूपमन्त्रसिध्यर्थं) त्वाम् उपदधामि। तथा ‘रुचे’ (शारीर-

---

* पूर्व्वामिति पाठो भवितुं युक्तः।

† अम्बाकुला इति का० इ० पु० पाठः।

‡ सम्बन्धिन्यो या इति पाठो भवितुं युक्तः।

कान्तिसिध्यर्थं) त्वाम् उपदधामि। द्युतिभाज्योतिःशब्दा अग्निसूर्यचन्द्राणां दीप्तिवाचकाः; तत्सिध्यर्थं त्वाम् उपदधामि। एवमुत्तरेष्वपि नक्षत्रेषु योजनीयम्।

द्वितीयनक्षत्रमन्त्रमारभ्य षड्विंशतिनक्षत्रमन्त्राणां पाठस्तु,— "रोहिणी नक्षत्रं प्रजापतिर्देवता(२) मृगशीर्षन्नक्षत्रꣳ सोमो देवता(३) आर्द्रा नक्षत्रꣳ रुद्रो देवता(४) पुनर्वसू नक्षत्रमदितिर्देवता(५) तिष्यो नक्षत्रꣳ बृहस्पतिर्देवता(६) आश्रेषा नक्षत्रꣳ सर्पा देवता(७) मघा नक्षत्रं पितरो देवता(८) फल्गुनी नक्षत्रम् अर्यमा देवता(९) फल्गुनी नक्षत्रं भगो देवता(१०) हस्तो नक्षत्रꣳ सविता देवता(११) चित्रा नक्षत्रमिन्द्रो देवता(१२) स्वाती नक्षत्रं वायुर्देवता(१३) विशाखे नक्षत्रमिन्द्राग्नीदेवता(१४) अनूराधा नक्षत्रं मित्रो देवता(१५) रोहिणी नक्षत्रमिन्द्रो देवता(१६) विचृतौ नक्षत्रं पितरो देवता(१७) अषाढा नक्षत्रमापो देवता(१८) अषाढा नक्षत्रं विश्वेदेवा देवता(१९) श्रोणा नक्षत्रं विष्णुर्देवता(२०) श्रविष्ठा नक्षत्रं वसवो देवता(२१) शतभिषङ्नक्षत्रमिन्द्रो देवता(२२) प्रोष्ठपदा नक्षत्रमज एकपाद्देवता(२३) प्रोष्ठपदा नक्षत्रमहिर्बुध्नियो देवता(२४) रेवती नक्षत्रं पूषा देवता(२५) अश्वयुजौ नक्षत्रमश्विनौ देवता(२६) अपभरणीर्नक्षत्रं यमो देवता(२७)" इति। अत्र रोहिण्यादयो नक्षत्रविशेषा ज्योतिःशास्त्राभिज्ञेषु तदीयव्यवहाराभिज्ञेषु च प्रसिद्धाः। 'तिष्यः' पुष्यः। द्वितीया रोहिणी ज्येष्ठा। विचृतशब्दो मूलवाची, ज्योतिर्मण्डलद्विरूपतो द्विवचनं। पितृशब्दोऽत्र निर्ऋतिवाची। आधानेन पाठमात् पितृत्वम्। श्रोणाशब्दः

श्रवणवाची। श्रविष्ठाशब्दो धनिष्ठावाची। शतभिषङ्नक्षत्रस्य वरुणो देवता, स च परमैश्वर्ययोगादिन्द्र इत्युच्यते। 'प्रोष्ठपदाः' भाद्रपदाः।

अथ पौर्णमास्यमावास्याभिधेययोरिष्टकयोर्यौ मन्त्रौ तयोः प्रतीके दर्शयति,—"पूर्णा पश्चात्[१] यत्ते देवा अदधुः[२]" इति। एतच्चोभयं तृतीयकाण्डस्य पञ्चमप्रपाठकादौ व्याख्यातम्।

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते,—"नक्षत्रेष्टका उपदधात्येतानि वै दिवो ज्योतिꣳषि तान्येवावरुन्धे" (५।४।१अ०) इति। नक्षत्रशब्दोपेतैर्मन्त्रैरुपधेया इष्टका 'नक्षत्रेष्टकाः'। यानि कृत्तिकादीनि द्युलोकसम्बन्धीनि 'ज्योतींषि', अत* उपधानेन 'तान्येव' प्राप्नोति।

प्रकारान्तरेण प्रशंसति,—"सुकृतां वा एतानि ज्योतीꣳषि यन्नक्षत्राणि तान्येवाप्नोत्यथो अनूकाशमेवैतानि ज्योतीꣳषि कुरुते सुवर्गस्य लोकस्यानुख्यात्यै" (५।४।१अ०) इति। ये शोभनं शास्त्रविहितं पुण्यं कर्म कुर्वन्ति ते सुकृतिनः, तेषाम् 'एतानि' दिवि दृश्यमानानि नक्षत्ररूपाणि 'ज्योतींषि'। ते हि पुण्यकृतः स्वर्गं गत्वा भासमानविग्रहाः तान्याप्नुवन्ति। अत एव तदुपधानेन तदीयानि 'ज्योतींषि' प्राप्नुवन्ति। अपि च 'एतानि' नक्षत्रज्योतींषि 'अनु' तेनोपधानेन किञ्चित्प्रकाशं करोति। स च प्रकाशः स्वर्गलोकाविर्भावाय सम्पद्यते।

अथोपधाने कञ्चिद्विशेषं विधत्ते,—"यत् सꣳस्पृष्टा उपदध्याद्

* अनेन इति पाठो भवितुं युक्तः।

वृष्ट्यै लोकमपि दध्यादवर्षुकः पर्जन्यः स्यादसꣳस्पृष्टा उपदधाति वृष्ट्या एव लोकं करोति वर्षुकः पर्जन्यो भवति" (५।४।१अ०) इति। इष्टकानां परस्परसंस्पर्शे सति वृष्टेः स्थानस्याच्छादितत्वात् 'पर्जन्यो' वृष्टिरहितो भवति। असंस्पर्शे तु तच्छिद्रस्य वृष्टिस्थानत्वात् मेघो वर्षणशीलो भवति।

उपधाने विशेषान्तरं विधत्ते,—"पुरस्तादन्याः प्रतीचीरुपदधाति पश्चादन्याः प्राचीस्तस्मात् प्राचीनानि च प्रतीचीनानि च नक्षत्राण्यावर्त्तन्ते" (५।४।१अ०) इति। स्वयमातृणाया दक्षिणभागे पूर्वां दिशमारभ्य प्रत्यगवसाना: कृत्तिकादिविशाखान्ता इष्टका उपदध्यात्। अनूराधा आरभ्य भरण्यन्ता इष्टकाः स्वयमातृणाया उत्तरभागे प्रतीचीं दिशमारभ्य प्रागवसाना उपदध्यात्। स्वयमातृणाया दक्षिणोत्तरभागस्थितयोः पंक्त्योर्मध्ये पश्चिमायां दिशि समरूपेण अमावास्यामिष्टकामुपदध्यात्। स्वयमातृणाया दक्षिणोत्तरभागस्थितयोः पंक्त्योर्मध्ये पूर्वस्यां दिशि समरूपेण पौर्णमास्याख्यामिष्टकामुपदध्यात्। यस्मादेवं, तस्माल्लोकेऽपि नक्षत्राणि गोलकस्यापि दक्षिणभागे पश्चिमाभिमुखानि, उत्तरभागे तु प्राङ्मुखानीत्येवमावर्त्तन्ते॥

अत्र विनियोगसंग्रहः,—

कृत्तिकानक्षत्रेष्टकाः स्युः (?) सप्तविंशतिरीरिताः।
स्वचे त्वा सर्वशेषः स्यात् पूर्णा, यत्ते, इति द्वयम्॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये चतुर्थकाण्डे चतुर्थप्रपाठके दशमोऽनुवाकः॥०॥

---

मधुश्च माधवश्च वासन्तिकावृतू(१-२) शुक्रश्च शुचिश्च ग्रैष्मावृतू(३-४) नभश्च नभस्यश्च वार्षिकावृतू(५-६) इष-श्चोर्जश्च शारदावृतू(७-८) सहश्च सहस्यश्च हैमन्तिका-वृतू(९-१०) तपश्च तपस्यश्च शैशिरावृतू(११-१२) अग्नेरन्त-श्श्लेषोऽसि कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधीः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः ॥ १ ॥

येऽग्नयः समनसोऽन्तरा द्यावापृथिवी शैशिरावृतू अभिकल्पमाना इन्द्रमिव देवता अभिसंविशन्तु(०) संयच्च प्रचेताश्चाग्नेः सोमस्य सूर्यस्य(१) उग्रा च भीमा च पितॄणां यमस्येन्द्रस्य(२) ध्रुवा च पृथिवी देवस्य सवितुर्मरुतां वरुणस्य(३) धर्त्री च धरित्री च मित्रा-वरुणयोर्मित्रस्य धातुः(४) प्राची च प्रतीची च वसूनां रुद्राणां ॥ २ ॥

आदित्यानां(५) ते तेऽधिपतयस्तेभ्यो नमस्ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि(०) सहस्रस्य प्रमा असि सहस्रस्य प्रतिमा असि सहस्रस्य विमा असि सहस्रस्योन्मा असि साहस्रोऽसि सहस्राय त्वा(१-५) इमा मे अग्न इष्टका धेनवः सन्त्वेका च शतं च सहस्रं चायुतं च ॥ ३ ॥

नियुतञ्च प्रयुतञ्चार्बुदञ्च न्यर्बुदञ्च समुद्रश्च मध्यं

चान्तश्च परार्धश्चैमा मे अग्न इष्टका धेनवः सन्तु षष्टिः सहस्रमयुतमक्षीयमाणा ऋतस्थाः स्थर्तावृधो घृतश्चुतो मधुश्चुत ऊर्जस्वती स्वधाविनीस्ता मे अग्न इष्टका धेनवः सन्तु विराजो नाम कामदुघा अमुष्मिँ-ल्लोके[१] ॥ ४ ॥

सन्नता । रुद्राणाम् । अयुतञ्च । पञ्चचत्वारिंशच्च ॥ ११ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे चतुर्थप्रपाठके एकादशोऽनुवाकः ॥ ० ॥

दशमेऽनुवाके नक्षत्रेष्टका उक्ताः। अथैकादशे ऋतव्याख्या इष्टका उच्यन्ते। कल्पः, 'मधुश्च माधवश्चेति द्वे ऋतव्ये समानतया देवते' इति। पाठस्तु,—"मधुश्च माधवश्च वासन्तिकावृतू[१-२]" इति। 'मधुः' चैत्रमासः, 'माधवः' वैशाखमासः, तावुभौ वसन्तसम्बन्धिनावृत्ववयवौ। यद्यप्येतौ द्वौ मन्त्रौ, तथापि सहपठितत्वात् तया देवतयेति शेषं सकृदेव उच्चार्य्य द्वे इष्टके प्रथमचितावुपदध्यात्।

कल्पः, 'शुक्रश्च शुचिश्चेति द्वे ऋतव्ये समानतया देवते' इति। पाठस्तु,—"शुक्रश्च शुचिश्च ग्रैष्मावृतू[१-४]" इति। 'शुक्रः' (ज्येष्ठः), 'शुचिः' (आषाढः)। तावुभौ ग्रीष्मसम्बन्धिनावृत्ववयवौ। एतेन मन्त्रेण द्वितीयस्यां चितौ द्वे उपदध्यात्।

कल्पः, 'नभश्च नभस्यश्चेति चतस्र ऋतव्या द्वे द्वे समानतया देवते' इति। पाठस्तु,—"नभश्च नभस्यश्च वार्षिकावृतू(५-६) इषश्चोर्जश्च शारदावृतू(७-८)" इति। 'नभः' श्रावणः, 'नभस्यः' भाद्रपदः, तावुभौ वर्षाणां सम्बन्धिनौ ऋत्ववयवौ। 'इषः' आश्वयुजः। 'ऊर्जः' कार्तिकः, तावुभौ शरत्सम्बन्धिनौ ऋत्ववयवौ। एतन्मन्त्रसाध्याश्चतस्र इष्टका मध्यमचितावुपदध्यात्।

कल्पः, 'सहश्च सहस्यश्चेति द्वे ऋतव्ये समानतया देवते' इति। पाठस्तु,—'सहश्च सहस्यश्च हैमन्तिकावृतू(९-१०)" इति। 'सहः' मार्गशीर्षः, 'सहस्यः' पौषः, तावुभौ हेमन्तसम्बन्धिनौ ऋत्ववयवौ। एतन्मन्त्रसाध्ये द्वे इष्टके चतुर्थ्यां चितावुपदध्यात्।

कल्पः, 'तपश्च तपस्यश्चेति-द्वे ऋतव्ये समानतया देवते' इति। पाठस्तु,—'तपश्च तपस्यश्च शैशिरावृतू(११-१२)" इति। 'तपः' माघः, 'तपस्यः' फाल्गुनः, एतावुभौ शिशिरसम्बन्धिनौ ऋत्ववयवौ। एतन्मन्त्रसाध्ये द्वे इष्टके पञ्चम्यां चितावुपदध्यात्।

अथ सर्वेष्वप्यनुषञ्जनीयं मन्त्रशेषमाह,—"अग्नेरन्तःश्लेषोऽसि कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधीः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रता येऽग्नयः समनसोऽन्तरा द्यावापृथिवी शैशिरावृतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु(०)" इति। हे ऋतुविशेष, त्वं चीयमानस्य 'अग्नेरन्तःश्लेषोऽसि', यथा कुड्यस्यान्तर्दार्ढ्यार्थं काष्ठपाषाणादयः श्लिष्यन्ते तद्वत् 'मम' (अग्निं चिन्वतो यजमानस्य) 'ज्यैष्ठ्याय' उत्कर्षार्थं इमे द्यावापृथिव्यौ 'कल्पेतां' (स्वोचितमुपकारं सम्पादयतां)। समानं 'व्रतं' (कर्म) येषां

ते 'समताः', एकस्मिन् कर्मण्यवस्थिता आहवनीयाद्यग्नयोऽपि 'पृथक्' 'कल्पन्तां' (स्वस्वोचितव्यापारं सम्पादयन्तु)। किञ्च 'द्यावापृथिवी' 'अन्तरा' (द्यावापृथिव्योर्मध्ये) वर्त्तमानाः 'समनसः' (एकमनस्काः) 'येऽग्नयः', ते सर्वेऽपि शिशिरसम्बन्धिनौ चलवयवौ 'अभिकल्पमानाः' (सर्वतः सम्पादयन्तः) एतत् कर्म 'अभिसंविशन्तु'। 'इन्द्रमिव देवाः',—यथा अन्ये सर्वे देवा इन्द्रमभितः सेवन्ते, तद्वत्। हे इष्टके, ईदृगृतुस्वरूपां त्वामुपदधामीति तात्पर्यार्थः। यदा वसन्ताद्यृतुमन्त्रविशेषत्वेनायं पठ्यते, तदानीं 'शैशिरावृतू' शैशिरसमानौ वासन्तिकावृतू इत्याद्यर्थो व्याख्येयः।

एतन्मन्त्रसाध्यमुपधानं विधत्ते,—"ऋतव्या उपदधात्यृतूनां क्लृप्त्यै द्वन्द्वमुपदधाति तस्माद् द्वन्द्वमृतवः" (५।४।२अ०) इति। यस्मादिष्टकयोर्द्वन्द्वमुपधीयते, तस्मान्मासयोर्द्वयमृतुस्वरूपं भवति।

मध्यमचितौ चतुष्टयोपधानं विधत्ते,—"अधृतेव वा एषा यन्मध्यमा चितिरन्तरिक्षमिव वा एष द्वन्द्वमन्यासु चितीषूपदधाति चतस्रो मध्ये धृत्यै" (५।४।२अ०) इति। येषा मध्यमा चितिः, सेयं भूमिं न स्पृशति नापि दिवं, तस्मादियम् 'अधृतेव' (आधाररहितेव) तिष्ठति, अत एवान्तरिक्षसमाना। तस्मात् 'अन्यासु' 'चितिषु' द्वन्द्वमात्रोपधानेऽप्यस्यां चितौ धारणार्थं 'चतस्रः' उपदध्यात्।

अथ सर्वा ऋतव्याः सामान्येन प्रशंसति,—"अन्तःश्लेषणं वा एतास्त्रितीनां यदृतव्या यदृतव्या उपदधाति चितीनां विधृत्यै"

(५।४।२अ०) इति। यथा कुड्यादेर्दृढधारणाय पाषाणाद्यन्तःक्षेपणं, तथा चितीनां दृढधारणाय 'स्तव्याः' उपदध्यात्।

एतासामृतव्यानामुपरि शैवालस्योपनिधानं विधत्ते,—"अवकामनूपदधात्येषा वा अग्नेर्योनिः। सयोनिमेवाग्निं चिनुते" (५।४।२अ०) इति। उदकजन्यां शैवालापरपर्यायां 'अवकाम्' उपरि उपदध्यात्। आपो हि अग्नेः स्थानं, 'स निलायत सोऽपः प्राविशत्' इति श्रुत्यन्तरात्। अवका च जलस्य कार्यत्वाज्जलवदग्नेर्योनिः। अतस्तदुपधानेन सयोनिमेवाग्निं चितवान् भवति।

प्रकारान्तरेणावकासहिता स्तव्यास्तद्वेदनञ्च प्रशंसति,—"उवाच ह विश्वामित्रोऽददित् स ब्रह्मणान्नं यस्यैता उपधीयन्ते य उ चैना एवं वेदत्" (५।४।२अ०) इति। 'यस्य' (यजमानस्य) अवकायुक्ता स्तव्या 'उपधीयन्ते', योऽप्येता जानाति, 'स' (उपधाता ज्ञाता च) 'ब्रह्मणा' (मुख्यया ब्राह्मणवृत्त्या) 'अन्नम्' 'आदत् इत्' (सर्वथाप्यन्नं भक्षयत्येव) इति 'विश्वामित्रः' 'स' 'ह' ऋषिम् 'उवाच'। तस्मादेताः स्तुत्या इत्यर्थः।

कल्पः, 'अथ यो न प्रतितिष्ठेत् स क्रतुमारभमाण एकचितीकमेव चिन्वीत संयच्च प्रचेताश्चेति पञ्च नामामन्त्रा उत्तरवेद्यामुपदध्यात्' इति। तत्र प्रथमेष्टकामन्त्रमाह,—"संयच्च प्रचेताश्चाग्नेः सोमस्य सूर्यस्य(१)" इति। अग्निसोमसूर्याणां 'संयत्' (संयमनकारणं) यदस्ति, 'प्रचेताः' (प्रकाशज्ञानहेतुः) च योऽस्ति, हे इष्टके, तदुभयरूपा त्वमसि।

अथ द्वितीयेष्टकामन्त्रमाह,—"उग्रा च भीमा च पितॄणां

यमस्येन्द्रस्य(२)" इति। पित्रादीनां येयम् 'उग्रा' (ताड़नादिशक्तिः), या च 'भीमा' (भयङ्करी शक्तिः) तदुभयरूपा त्वमसि।

अथ तृतीयेष्टकामन्त्रमाह,—"ध्रुवा च पृथिवी च देवस्य सवितुर्मरुतां वरुणस्य(३)" इति। सवित्रादीनां या 'ध्रुवा' (स्थिरा शक्तिः), या च 'पृथिवी' (विस्तीर्णा शक्तिः) तदुभयरूपा त्वमसि।

अथ चतुर्थेष्टकामन्त्रमाह,—"धर्त्री च धरित्री च मित्रा-वरुणयोर्मित्रस्य धातुः(४)" इति। मित्रावरुणादीनां या धारण-शक्तिः, या च परप्रेरणारूपा धारयितृत्वशक्तिः, तदुभयरूपा त्वमसि।

अथ पञ्चमेष्टकामन्त्रमाह,—"प्राची च प्रतीची च वसूनाꣳ रुद्राणाम् आदित्यानाम्(५)" इति। वस्वादीनां प्राग्वर्त्तिनी या शक्तिः, या च प्रतीचीदिग्वर्त्तिनी, तयोर्हि दिशोः सर्वे प्राणिनः एतदाश्रामनुसृत्यैव वर्त्तन्ते, हे इष्टके तथाविधशक्तिरूपा त्वमसि।

अथ सर्वेष्वप्यनुषञ्जनीयं मन्त्रशेषमाह,—"ते तेऽधिपतयस्तेभ्यो नमस्ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि(६)" इति। 'ते' अग्निसोमादयः तत्तन्मन्त्रोक्ता देवाः, हे इष्टके 'ते' (तव) अधिकं पालयितारः, तेभ्यो नम इत्यादिकं तु पञ्चचोड़ामन्त्रवद्व्याख्येयम्।

ता एता इष्टकाः षष्ठचितौ विधातुमादौ षष्ठीं चितिं विधत्ते,—"संवत्सरो वा एतं प्रतिष्ठायै नुदते योऽग्निं चित्वा न प्रतितिष्ठति पञ्च पूर्वाश्चितयो भवन्त्यथ षष्ठीं चितिं चिनुते

षड् वा ऋतवः संवत्सर ऋतुष्वेव संवत्सरे प्रतितिष्ठति" (५।४।२अ०) इति। यो यजमानः पूर्वोक्तप्रकारेण पञ्चचितीकमग्निं चित्वापि उत्तरकालनुष्ठानाय द्रव्यादिसम्पत्तिरूपां प्रतिष्ठां न प्राप्नोति, एतं यजमानं संवत्सराभिमानी देवः 'प्रतिष्ठायै' अपनुदति, तथा सति याः पूर्वाः पञ्च चितय आसन्, ताभिः प्रतिष्ठाया अलाभात् तदपेक्षया येयं चितिः षष्ठी, तां चिनुयात्, षट्सङ्ख्यया बुद्धिस्था 'ऋतवः' तद्द्वारा 'संवत्सरे' 'प्रतितिष्ठति'।

षष्ठीं चितिं विधाय तत्र संयच्छेत्यादिमन्त्रसाध्यमुपधानं विधत्ते,—"एता वा अधिपत्नीर्नामेष्टका यस्यैता उपधीयतेऽधिपतिरेव समानानां भवति" (५।४।२अ०) इति। अधिपतिशब्दयुक्तैर्मन्त्रैरुपधेया इष्टका अधिपत्न्यः। तदुपधानेन स्वसमानानां पुरुषाणां स्वयमधिपतिर्भवति।

उपधानकाले ध्यानविशेषं विधत्ते,—यं द्विष्यात्तमुपदधद् ध्यायेदेताभ्य एवैनं देवताभ्य आवृश्चति ताजगार्त्तिमार्च्छति" (५।४।२अ०) इति। एतद्वाक्यं पञ्चचोड़ाब्राह्मणवद्व्याख्येयम्।

कल्पः, 'सहस्रस्य प्रमा असीति सहस्रेण हिरण्मयेनोर्द्धस्तिष्ठन्* प्रतिदिशमग्निं प्रोक्षति' इति। पाठस्तु,—"सहस्रस्य प्रमा असि सहस्रस्य प्रतिमा असि सहस्रस्य विमा असि सहस्रस्योन्मा असि साहस्रोऽसि सहस्राय त्वा(१-५)" इति। हे इष्टके, प्राच्यां दिशि इष्टका 'सहस्रस्य, प्रमातुल्या 'असि'। एवं दक्षिणस्यां

---

* ऊर्द्धं तिष्ठन् इति पाठो भवितुं युक्तः।

दिशि 'सहस्रस्य, प्रतिमातुल्या 'असि'। तथा पश्चिमायां दिशि 'सहस्रस्य, विमातुल्या 'असि'। तथोत्तरस्यां दिशि 'सहस्रस्य, उन्मातुल्या 'असि'। हे चित्याग्ने, त्वं ऊर्द्ध्वायां दिशि साहस्र-सम्बन्ध्यसि। अतः 'सहस्राय' (सहस्रसङ्ख्याकफलसिद्ध्यर्थं) त्वां प्रोक्षामि।

एतन्मन्त्रसाध्यं प्रोक्षणं विधत्ते,—"अङ्गिरसः सुवर्गं लोकं यन्तो या यज्ञस्य निष्कृतिरासीत् तामृषिभ्यः प्रत्यौहन् तद्धिरण्य-मभवद् यद्धिरण्यशल्कैः प्रोक्षति यज्ञस्य निष्कृत्या अथो भेषज-मेवास्मै करोत्यथो रूपेणैवैनꣳ समर्धयत्यथो हिरण्यज्योतिषैव सुवर्गं लोकमेति" (५।४।२अ०) इति। 'अङ्गिरसो' महर्षयः कर्मानुष्ठायिनो यदा स्वर्गं गताः, तदानीं 'यज्ञस्य' यन्मूल्यं स्वाधीनत्वकारणसाधनद्रव्यं, तदन्येभ्य ऋषिभ्यः प्रददुः। 'तत्' च द्रव्यं 'हिरण्यमभवत्' ततो 'हिरण्यशल्कैः' हस्तोद्धृतैः सह प्रोक्षणं यत्, तन्मूल्यदानेन यज्ञनिष्क्रयार्थं सम्पद्यते। अपि च वैकल्यपरि-हाररूपं 'भेषजम्' अग्न्यर्थं सम्पादयति। अपि च हिरण्यसम्बन्धात् 'एनम्' अग्निं रूपसमृद्धं करोति। अत एवान्यत्राम्नातं, 'यथा ह वै योषं सुवर्णꣳ हिरण्यं पेशलं बिभ्रती रूपाण्यास्ते' इति। अपि चायं यजमानो हिरण्यरूपेणैव ज्योतिषा मार्गं दृष्ट्वा स्वर्गं प्राप्नोति।

तस्मिन् प्रोक्षणे सहस्रस्य प्रमेत्यादिमन्त्रं विनियुङ्क्ते, "साहस्र-वता प्रोक्षति साहस्रः प्रजापतिः प्रजापतेराप्त्यै" (५।४।२अ०) इति। साहस्रोऽसीत्येवं साहस्रशब्दो यस्मिन् प्रोक्षणमन्त्रसङ्घेऽस्ति

सोऽयं साहस्रवान्। प्रजापतिश्च सहस्रसङ्ख्याकजगदुत्पादकत्वात् साहस्रः, अतोऽयं मन्त्रः प्रजापतिप्राप्तये भवति।

कल्पः, 'इमा मे अग्न इष्टका धेनवः सन्त्वितीष्टका धेनूर्यजमानः कुरुते' इति। पाठस्तु, "इमा मे अग्न इष्टका धेनवः सन्त्वेका च शतं च सहस्रं चायुतं च नियुतं च प्रयुतं चार्बुदं च न्यर्बुदं च समुद्रश्च मध्यं चान्तश्च परार्धश्चेमा मे अग्न इष्टका धेनवः सन्तु षष्टिः सहस्रमयुतमक्षीयमाणा ऋतस्था स्थर्त्तावृधो घृतश्चुतो मधुश्चुत ऊर्जस्वतीः स्वधाविनीस्ता मे अग्न इष्टका धेनवः सन्तु विराजो नाम कामदुघा अमुत्रामुष्मिँल्लोके[१]" इति। हे अग्ने, 'इमा' उपहिता 'इष्टकाः' 'मे' (मम) 'धेनवः' (धेनुवत् प्रीतिहेतवः) 'सन्तु'। शतादयः परार्धान्ता दशोत्तराः सङ्ख्याविशेषा एकशतसहस्रादिसङ्ख्यासङ्ख्येययोः सत्योः मां प्रीणयन्तु। यदा ममैकया प्रीतिः तदा 'शतं' भूत्वेत्येवं सर्वत्र द्रष्टव्यं। उत्तरवाक्यसम्बन्धार्थम् 'इमा मे अग्न' इत्यादेः पुनर्वचनम्। हे 'इष्टकाः', षष्ट्यादिसङ्ख्यासङ्ख्येयाः सत्यः 'अक्षीयमाणाः (क्षयरहिताः) 'ऋतस्थाः' (यज्ञवर्त्तिन्यस्थाः), 'ऋतावृधः' (यज्ञवर्धयित्र्यः) भवत। 'घृतश्चुतः' (घृतक्षरणशीलाः), 'मधुश्चुतः' (मधुररसक्षरणशीलाः), 'ऊर्जस्वतीः' (बलवत्यः), 'स्वधाविनीः' (अन्नवत्यश्च) 'स्थ' (भवत)। 'ता मे अग्न' इत्यादि वक्ष्यमाणवाक्यसम्बन्धार्थं। 'विराजः' (विविधराजमानाः), 'कामदुघाः' (कामानां दोग्ध्र्यः), 'अमुत्र' (सामान्येन स्वर्गमात्रे), 'अमुष्मिँल्लोके' (विशेषतः इन्द्रादिलोके) कामं धेनवः 'सन्तु' इत्यन्वयः।

मन्त्रस्य तात्पर्यं दर्शयति,—"इमा मे अग्न इष्टका धेनवः सन्त्वित्याह धेनूरेवैनाः कुरुते ता एनं कामदुघा अमुत्रामुष्मिँल्लोक उपतिष्ठन्ते" (५।४।२अ०) इति।

अत्र विनियोगसंग्रहः,—

मधुश्च द्वादशर्चंत्र्याः, अग्नेरित्यनुषज्यते।
संयच्चोग्रा ध्रुवा धर्त्री प्राची पञ्चेष्टका इमाः॥
षष्ठ्यां चितौ सर्वशेषः ते त इत्यादिको मतः।
सहस्रं पञ्चभिर्मन्त्रैर्दिक्षु मध्ये च तां चितिं॥
सहस्रस्वर्णशकलैः प्रोच्चे तत इमामिति।
स्वांसोधेनूः करोत्येतास्त्रयोविंशतिमन्त्रकाः॥

अथ मीमांसा,—चतुर्थाध्यायस्य चतुर्थपादे (१अ०) चिन्तितम्।

नित्या षष्ठी चितिर्नो वा पञ्चापूर्वत्वतोऽग्रिमः।
अपवृत्तावप्रतिष्ठानिमित्तोक्त्या नोऽग्रिमः॥

अग्नौ श्रूयते, 'योऽग्निं चित्वा न प्रतितिष्ठति पञ्च पूर्वाश्चितयो भवन्त्यथ षष्ठीं चितिं चिनुते' इति। लाङ्गलेन कृष्टभूम्यां याममात्रे भूप्रदेशे नानाविधाभिरिष्टकाभिः पक्ष्याकारेण स्थण्डिलं निष्पाद्यते सेयं चितिः। तादृश्यः पञ्च चितयः पूर्वाः क्रियन्ते। तत्र षष्ठी चितिः, तत्र षण्णां पूरणी षष्ठीति व्युत्पत्तौ पूर्वाः पञ्च चितयोऽपेक्ष्यन्ते, अन्यथा षट्सङ्ख्यापूरकत्वासम्भवात्। तस्मादेकप्रयोगनियमादितरचितिवत् नित्येति चेत्। मैवं, अग्निं चित्वेति पूर्वाभिरेव पञ्चभिश्चितिभिर्नित्यस्याग्निचयनस्य समाप्तौ षष्ठ्यां

पश्चात् यो न प्रतितिष्ठतीति, असौ षष्ठीं चितिं चिनुत इति कर्तृसमानाधिकृतेन यच्छब्देन अप्रतिष्ठां निमित्तीकृत्य विधानात् षष्ठी नैमित्तिकी। ततः पञ्चचितिको नित्योऽग्निः, नैमित्तिकस्त्वेकचितीक इति न प्रयोगैक्यं, पूरणप्रत्ययस्तु अभिधानापेक्षया उपपद्यते। पूर्वाः पञ्चचितयोऽभिहिताः, अभिधास्यमानानां* षष्ठीं चितिं चिनुत इति वचनव्यक्तिः॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये चतुर्थकाण्डे चतुर्थप्रपाठके एकादशोऽनुवाकः॥०॥

समिद्दिशामाशया नः सुवर्विन्मधोरतो माधवः पात्वस्मान्। अग्निर्देवो दुष्टरीतुरदाभ्य इदं क्षत्रꣳ रक्षतु पात्वस्मान्[१]। रथन्तरꣳ सामभिः पात्वस्मान् गायत्री च्छन्दसां विश्वरूपा। त्रिवृन्नो विष्टया स्तोमो अह्नाꣳ समुद्रो वात इदमोजः पिपर्तु[२]। उग्रा दिशामभिभूतिर्वयोधाः शुचिः शुक्रे अहन्योजसीना। इन्द्राधिपतिः पिपृतादतो नो महि॥ १॥

---

* अभिधास्यमानां इति पाठो भवितुं युक्तः।

क्षत्रं बिभ्रतो धारयेदं[३]। बृहत्साम क्षत्रभृद्वृद्धवृष्णियं त्रिष्टुभौजः शुभितमुग्रवीरं। इन्द्र स्तोमेन पञ्चदशेन मध्यमिदं वातेन सगरेण रक्ष[४]। प्राची दिशाꣳ सहयशा यशस्वती विश्वे देवाः प्रावृषाह्नाꣳ सुवर्वती। इदं क्षत्रं दुष्टरमस्त्वोजोऽनाधृष्टꣳ सहस्रियꣳ सहस्वत्[५]। वैरूपे सामन्निह तच्छकेम जगत्यैनं विक्ष्वावेशयामः। विश्वे देवाः सप्तदशेन ॥ २ ॥

वर्च इदं क्षत्रꣳ सलिलवातमुग्रं[६]। धर्त्री दिशां क्षत्रमिदं दाधारोपस्थाशानां मित्रवदस्त्वोजः। मित्रावरुणा शरदाह्नां चिकित्नू अस्मै राष्ट्राय महि शर्म यच्छतं[७] वैराजे सामन्नधि मे मनीषानुष्टुभा सम्भृतं वीर्यꣳ सहः। इदं क्षत्रं मित्रवदार्द्रदानु मित्रावरुणा रक्षतमाधिपत्यैः[८]। सम्राट् दिशाꣳ सहसाम्नी सहस्वत्यृतुर्हेमन्तो विष्ठया नः पिपर्तु। अवस्युवाताः ॥ ॥ ३ ॥

बृहतीर्नु शक्करीरिमं यज्ञमवन्तु नो घृताचीः[९] सुवर्वती सुदुघा नः पयस्वती दिशां देव्यवतु नो घृताची। त्वं गोपाः पुर एतोत पश्चाद् बृहस्पते याम्यां युङ्धि वाचं[१०]। ऊर्द्ध्वा दिशाꣳ रन्तिराशौषधीनाꣳ संवत्सरेण सविता नो अह्नां। रेवत् सामाति-

छन्दा उ छन्दो जातशत्रुः स्योना नो अस्तु[११]। स्तोमत्रयस्त्रिꣳशे भुवनस्य पत्नि विवस्वद्वाते अभि नः॥

॥ ४ ॥

गृणाहि घृतवती सवितराधिपत्यैः पयस्वती रन्तिराशा नो अस्तु[१२]। ध्रुवा दिशां विष्णुपत्न्यघोरास्येशाना सहसो या मनोता। बृहस्पतिर्मातरिश्वोत वायुः सन्धुवाना वाता अभि नो गृणन्तु[१३]। विष्टम्भो दिवो धरुणः पृथिव्या अस्येशाना जग तो विष्णुपत्नी। विश्वव्यचा इषयन्ती सुभूतिः शिवा नो अस्त्वदितिरुपस्थे[१४]। वैश्वानरो न ऊत्या[१५] पृष्टो दिवि[१६] अनु नो ऽद्यानुमतिः[१७] अन्विदनुमते त्वं[१८] कया नश्चित्र आ भुवत्[१९] को अद्य युङ्क्ते[२०] ॥ ५ ॥

महि। सप्तदशेन। अवस्युवाता। अभि नः। अनु नः। चतुर्दश च ॥ १२ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे चतुर्थप्रपाठके द्वादशोऽनुवाकः ॥०॥

रश्मिरसि। राज्ञ्यसि। अयं पुरो हरिकेशः। अग्निर्मूर्द्धा। इन्द्राग्निभ्यां। बृहस्पतिः। भूयस्कृदसि। अग्निना विश्वाषाट्। प्रजापतिर्मनसा। कृत्तिका। मधुश्च। समिद्दिशां। द्वादश ॥ १२ ॥

रश्मिरसि (१अ०१)। प्रति धेनुम् (४अ०२)। असि स्तनयित्नुसनिरसि (६अ०२)। आदित्यानाꣳ(११अ०३)। सप्तचिꣳशत्* ॥ ३७ ॥

॥०॥ हरिः ओम् ॥०॥

॥०॥ समाप्तश्च चतुर्थप्रपाठकः ॥०॥

एकादशेऽनुवाके स्कृतव्याद्या इष्टका उक्ताः, तावता चितयः समाप्ताः। अथान्तिमे द्वादशे याज्यानुवाक्या उच्यन्ते। अश्वमेधप्रकरणे कल्पः पठ्यते,—'अग्नये गायत्रायेति दश हविषाꣳ सर्वपृष्ठां निर्वपति समिद्दिशामाशया न इति यथालिङ्गं याज्यानुवाक्याः' इति। तत्र 'अग्नये गायत्राय त्रिवृते राथन्तराय वासन्तायाष्टाकपालः' इत्यस्य पुरोऽनुवाक्यामाह,—"समिद्दिशामाशया नः सुवर्विन्मधोरतो माधवः पात्वस्मान्। अग्निर्देवो दुष्टरीतुरदाभ्य इदं क्षत्रꣳ रक्षतु पात्वस्मान्[१]" इति। 'दिशां' मध्ये या दिक् 'समित्' (समिन्धनहेतुः)। तदेव कथम्? इति। तदुच्यते, 'सुवर्वित्' स्वर्गस्थमादित्यं विन्दते लभते इति सुवर्वित्। आदित्योदयस्थानत्वात् प्राच्या दिशः समिन्धनहेतुत्वं। तादृशी दिक् 'नः' (अस्मान्) 'आशया' 'पातु', (अस्माकं धनादिविषया या काचिद् आशा वर्त्तते, तस्याः पूरणेन 'नः' [अस्मान्] रक्षतु)। मधुः चैत्रमासः, 'माधवः' वैशाखमासः, तावुभावपि पूर्वदिग्वत् समिन्धनहेतुः, तयोर्मासयोरादित्यप्रकाशस्यातितीक्ष्णत्वात्। तत्रापि

---

* प्रथमेऽनुवाके ३, द्वितीये ३, तृतीये ३, चतुर्थे ८, पञ्चमे २, षष्ठे २, सप्तमे २, अष्टमे १, नवमे १, दशमे ३, एकादशे ४, एव द्वादशे ५ इति सप्तचिंशत्।

'अतः' (अस्मात्) 'मधोः' (चैत्रमासात्) अधिकप्रकाशो यो 'माधवः' (वैशाखमासः), सः 'अस्मान्' सन्तापभयात् 'पातु'। दुःखेन स्तरीता (आच्छादयिता) 'दुष्टरीता', यो वैरी प्रावरणवस्त्रेणेव दुःखेन आच्छादयति, तस्यापि दुःखकारिणो वैरिणः 'अदाभ्यः' दम्भितुं हिंसितुमशक्यो यः 'अग्निर्देवः', सोऽयम् 'इदं क्षत्रं' (अस्मदीयमिदं बलं), अस्मांश्च 'रक्षतु'।

तत्रैव याज्यामाह,—"रथन्तरꣳ सामभिः पात्वस्मान् गायत्री छन्दसां विश्वरूपा। त्रिवृन्नो विष्ठया स्तोमो अह्नां समुद्रो वात इदमोजः पिपर्तु(२)" इति। यत् 'रथन्तरं' साम, तदन्यैः 'सामभिः' सह 'अस्मान्' 'पातु'। 'छन्दसां' मध्ये 'गायत्री' 'विश्वरूपा' यवमध्यपिपीलिकामध्यादिभेदैर्बहुरूपा, सा 'अस्मान्' रक्षतु। त्रिवृदाख्यो यः 'स्तोमः' 'अह्नाम्' एकाहादिसम्बन्धिन्या 'विष्ठया' (विविधया स्थित्या) युक्तः, अहःसु विविधं प्रयुज्यत इत्यर्थः, तादृशः 'अस्मान्' 'पातु'। समुद्राख्यो यः 'वातः' अस्ति,—'समुद्राय त्वा वाताय स्वाहा। समुद्रोऽसि नभस्वान्' इत्यादावाम्नातः, तादृशो वायुः 'इदमोजः' (अस्मदीयं बलं) 'पिपर्तु' (पालयतु पूरयतु वा)।

अथ 'इन्द्राय त्रैष्टुभाय पञ्चदशाय वार्हताय ग्रैष्मायैकादश-कपालः' इत्यस्य पुरोऽनुवाक्यामाह,—"उग्रा दिशामभिभूति-र्वयोधाः शुचिः शुक्रे अहन्योजसीना। इन्द्राधिपतिः पिपृतादतो नो महि क्षत्रं विश्वतो धारयेदम्(१)" इति। 'दिशां' मध्ये येयं 'उग्रा' (दक्षिणा दिक्), उग्रत्वे हेतुः,—'अभिभूतिः', पापानामभि-भवहेतुत्वादुग्रत्वं। सा 'वयोधाः' (वय आयुष्यं, तस्मिन्नतीते सति

मृतान् पुरुषान् यमलोके दधाति स्थापयतीति वयोधाः)। वयसोऽन्ते दधातीति मध्यमपदलोपो द्रष्टव्यः। 'शुचिः' आषाढ़-मासः, 'शुक्रः' ज्येष्ठः, तयोः सम्बन्धिनि दिवसे यदौष्ण्यमस्ति, ततोऽपि 'शुचिः' 'ओजसोना' (अतिशयेनौष्ण्यरूपौजोयुक्तः)। हे 'इन्द्र' (परमैश्वर्य्ययुक्त), त्वम् 'अधिपतिः' (तस्या उग्राया दिशः, तयोरत्युष्णयोश्च स्वामी। तादृशस्त्वं 'अनः' (उभयस्मात्) 'नः' (अस्मान्) 'पिपृतात्' (पालय)। किञ्च 'विश्वतः' 'महि' (सर्व-स्मात् महत्) 'इदं' 'चत्रं' (बलं) 'धारय' (सम्पादय)।

तत्रैव याज्यामाह,—"बृहत् साम चत्रभृद्वृद्धवृष्णियं त्रिष्टु-भौजः शुभितमुग्रवीरं। इन्द्र स्तोमेन पञ्चदशेन मध्यमिदं वातेन सगरेण रच(४)" इति। बृहदाख्यं यत् 'साम', तत् 'त्रिष्टुभा' छन्दसा सह, पिपर्त्त्वित्यनुवर्त्तते, अस्मान् पालयत्वित्यर्थः। कीदृशं साम?—'चत्रभृत्' (बलस्य धारयितृ), 'वृद्धवृष्णियं' (उत्पन्नपुंस्त्वं), 'ओजः' (बलप्रदं), 'शुभितं' (शोभमानं), 'उग्रवीरं' (तीव्रपुत्र-प्रदं)। हे 'इन्द्र', पञ्चदशाख्येन 'स्तोमेन' सगराख्येन 'वातेन' सहितः सन् 'इदं' 'मध्यं' 'रच' (अतीतानागतयोर्मध्ये स्थितं इदमस्मदीयं शरीरं पालय)।

अथ 'विश्वेभ्यो देवेभ्यो आगतेभ्यः सप्तदशेभ्यो वैरूपेभ्यो वार्षिकेभ्यो द्वादशकपालः' इत्यस्य पुरोऽनुवाक्यामाह,—"प्राची दिशाꣳ सहयशा यशस्वती विश्वे देवाः प्रावृषाह्नाꣳ सुवर्वती। इदं चत्रं दुष्टरमस्त्वोजोऽनाधृष्टꣳ सहस्रियꣳ सहस्वत्(५)" इति। अत्र प्रशब्दः प्रतिशब्दार्थे वर्त्तते। तथा सति 'दिशां' मध्ये या 'प्राची'

पश्चिमा दिगित्यर्थः, सा च 'सहयशाः' (अस्मासु सम्पाद्यमानेन यशसा सहिता), स्वयमपि 'यशस्वती,' सा च 'सुवर्वती' (स्वर्गनिवासिनी) सूर्येणास्तमयकालभाविना युक्ता; तथाविधा दिक् अस्मान् पात्विति शेषः। तथा 'विश्वे देवाः' 'प्रावृषा' (वर्षर्तुना) तदीयानाम् 'अह्नां' समूहेन सहिता अस्मान पालयन्त्विति शेषः। 'इदं क्षत्रं' (अस्मत्परिपालकं राजशरीरं) केनाप्यन्येन वैरिणा तरितुं लङ्घयितुमशक्यम् 'अस्तु'। 'ओजो' (मदीयं बलं) 'अनाधृष्टं' (केनाप्यतिरस्कृतम्) अस्तु। तथा 'सहस्रियं' (सहस्रसङ्ख्यायोग्यं) 'सहस्वत्' (प्रबलं धाम) अस्तु।

तत्रैव याज्यामाह,—"वैरूपे सामन्निह तच्छकेम जगत्यैनं विक्ष्वावेशयामः। विश्वे देवाः सप्तदशेन वर्च इदं क्षत्रꣳ सलिलवातमुग्रम्(१)" इति। वैरूपाख्यं यत् सामास्ति, तस्मिन्नाश्रिता वयम् 'इह' (कर्मणि) यत् फलमपेक्षितं, 'तत्' 'शकेम' (सम्पादयितुं शक्ताः स्मः)। तथा जगत्याख्यया छन्दोदेवतया अनुगृहीता वयं 'एनं' (यजमानं) 'विक्षु' (प्रजासु) 'आवेशयामः' (प्रजानां स्वामिनं कुर्म इत्यर्थः)। हे 'विश्वे देवाः' सप्तदशाख्येन स्तोमेन युष्माभिश्च अनुगृहीतं 'इदं क्षत्रम्' (अस्मत्पालकं राजशरीरं) 'वर्चः' (तेजोयुक्तं) सलिलाख्येन वायुविशेषेणानुगृहीतं,—'सलिलाय त्वा वाताय त्वा' इति। 'उग्रं' (वैरितिरस्कारक्षमम्) अस्तु।

अथ 'मित्रावरुणाभ्यामनुष्टुभाभ्यामेकविंशाभ्यां वैराजाभ्याꣳ शारदाभ्यां पयस्या' इत्यस्य पुरोऽनुवाक्यामाह,—"धर्त्री दिशां क्षत्रमिदं दाधारोपस्थाशानां मित्रवदस्त्वोजः। मित्रावरुणा शरदाह्ना

चिकित्नू अस्मै राष्ट्राय महि शर्म यच्छतम्[७]” इति। ‘दिशां’ मध्ये ‘धर्त्री’ (अस्माकं धारयित्री), इयमुदीची ‘इदं क्षत्रम्’ (अस्मत्पालकं क्षत्रियशरीरं) ‘दाधार’ (पोषयामास)। कीदृशी?— ‘आशानाम्’ उपस्थेया (अस्माकं धनादिविषयाणामाशानां सिध्यर्थं सेव्या), यस्या दिशः प्रसादादस्मदीयम् ‘ओजो’ (बलं) ‘मित्रवद्’ ‘अस्तु’ (बहुभिर्मित्रैरुपेतमस्तु)। हे ‘मित्रावरुणा’ ‘शरदा’ (शरन्नामकेन) ऋतुना तदीयानाम् ‘अह्नां’ ‘चिकित्नू’ (ज्ञातारौ) युवां ‘अस्मै’ (इदानीं वर्त्तमानाय) ‘राष्ट्राय’ ‘महि’ ‘शर्म’ ‘यच्छतं’ (महत् सुखं सम्पादयतम्)।

तत्रैव याज्यामाह,—“वैराजे सामन्नधि मे मनीषानुष्टुभा सम्भृतं वीर्यꣳ सहः। इदं क्षत्रं मित्रवदार्द्रदानु मित्रावरुणा रक्षतमाधिपत्यैः[८]” इति। वैराजाख्यं यत् सामास्ति, तस्मिन् ‘मे’ (मदीया) ‘मनीषा’ (बुद्धिः) आश्रिता तथाऽस्त्विति शेषः। तथा ‘वीर्यम्’ (अस्मदीयं शरीरव्यवहारसामर्थ्यं), ‘सहः’ (वैरितिरस्कारकं बलं) च ‘अनुष्टुभा’ (छन्दोदेवतया) ‘सम्भृतं’ (सम्पादितम्) अस्तु। ‘मित्रावरुणा’ (हे मित्रावरुणौ), ‘इदं क्षत्रं’ (राजशरीरं) ‘मित्रवत्’ (मित्रैर्बहुभिरुपेतं), ‘आर्द्रदानु’ (आर्द्रस्य जलसम्पूर्णस्य क्षेत्रादेर्धातृ*) यथा भवति, तथा युवां ‘आधिपत्यैः’ ‘रक्षतं’ (आधिपत्यान् विदित्वा पालयतम्)।

अथ ‘बृहस्पतये पाङ्क्ताय त्रिणवाय शाक्कराय हैमन्तिकाय

---

* ‘दातृ’ इति पाठः समीचीन इव प्रतिभाति।

सह:' इत्यस्य पुरोऽनुवाक्यामाह,—"सम्राट् दिशाᳲ सहसाम्नी सहस्वत्यृतुर्हेमन्तो विष्ठया नः पिपर्तु । अवस्युवाता बृहतीर्नु शक्वरीरिमं यज्ञमवन्तु नो घृताची(९)" इति । 'दिशां' मध्ये (सम्यग्राजते इति) 'सम्राट्' 'ऊर्ध्वा दिक्', सा च 'सहसाम्नी' (सामभिः सहिता), 'सहस्वती' (बलवती), 'नः' (अस्मान्) 'पिपर्तु' (पालयतु)। तथा हेमन्ताख्य 'ऋतुः' 'विष्ठया' (विशिष्टया स्थित्या) 'नः पिपर्तु' । 'अवस्युवाताः' (अवस्यवो रक्षयितारो 'वाताः' वायवः यासां बृहतीनामृचां, ताः अवस्युवाताः), 'बृहतीः' (बृहत्याख्यच्छन्दोयुक्ताः), 'शक्वरीः' 'नु' (शाक्वरसाम्नो योनिभूता ऋचः अपि), 'घृताचीः' (घृताहुतियुक्ताः) सत्यः 'नः' (अस्मदीयं) 'इमं' 'यज्ञमवन्तु' ।

तत्रैव याज्यामाह,—"सुवर्वती सुदुघा नः पयस्वती दिशां देव्यवतु नो घृताची । त्वं गोपाः पुर एतोत पश्चाद् बृहस्पते याम्यां युङ्धि वाचम्(१०)" इति । 'दिशां' स्वामिभूता देवी* 'सुवर्वती' (स्वर्गयुक्ता स्वर्गप्रदेत्यर्थः), 'नः' (अस्मान्) प्रति 'सुदुघा' (कामधेनुवत् सुष्ठु दोहनशीला), अत एव 'पयस्वती' (क्षीरादिरसद्रव्यपूर्णा), विशेषतः 'घृताची' (घृतं प्राप्नुवती), हे 'बृहस्पते', 'त्वं' 'पुर' 'एता' (पुरतो गन्ता सन्) 'गोपाः' (रक्षकः) ; 'उत' (अपि च) 'पश्चात्' (पृष्ठतः) अपि रक्षकः, तादृशस्त्वं 'याम्यां' (यममयीं) 'वाचं' 'युङ्धि' (योजय), एवमेव वर्त्तस्व आदिशेत्यर्थः ।

अथ 'सवित्रे अतिच्छन्दसाय त्रयस्त्रिंᳲशाय रैवताय शैशिराय द्वादशकपालः' इत्यस्य पुरोऽनुवाक्यामाह,—"ऊर्द्ध्वा दिशाᳲ रन्ति-

* 'देवीः' इति सर्व्वत्र पाठो न सम्यक् ।

राशोषधीनाꣳ संवत्सरेण सविता नो अह्नां । रेवत् सामातिच्छन्दा उ छन्दोऽजातशत्रुः स्योना नो अस्तु(११)” इति। ‘दिशां’ मध्ये येयम् ‘ऊर्द्धा’ दिक्, सा ‘रन्तिः’ (प्रीतिहेतुः), सा च ‘ओषधीनां’ वृष्टिद्वारा सम्पादिकेति शेषः। तादृशी ‘नः’ (अस्मान्) प्रति ‘स्योना’ (सुखदा) ‘अस्तु’ । तथा ‘अह्नां’ समूहरूपेण ‘संवत्सरेण’ सह ‘सविता’ (सुखप्रदः) ‘अस्तु’। तथा ‘रेवत्’ (रैवताख्यं) यत् ‘साम’ ‘अतिच्छन्दा उ’ (अतिच्छन्दोयुक्ता ऋगपि), तथा तस्यामृचि वर्त्तमानश्छन्दःस्वेत्येष समूहः ‘अजातशत्रुः’ ‘अस्तु’,—अस्मदीयः शत्रुर्यथा नोत्पद्यते तथा करोत्वित्यर्थः ।

तत्रैव याज्यामाह,—“स्तोमत्रयस्त्रिꣳशे भुवनस्य पत्नि विवस्वद्वाते अभि नो गृणाहि। घृतवती सवितराधिपत्यैः पयस्वती रन्तिराशा नो अस्तु(१२)” इति। हे ‘स्तोमत्रयस्त्रिंशे’ (त्रयस्त्रिंशाख्यः स्तोमो यस्या ऊर्द्धादिशः सा स्तोमत्रयस्त्रिंशा तत्सम्बोधनमिदम्), ‘भुवनस्य पत्नी’ (भूतजातस्य पत्नी पालयित्री),* हे ‘विवस्वद्वाते’ (विवस्वन्नामको वातो वायुर्यस्याः सा विवस्वद्वाता, तत्सम्बन्धोधनमिदं), ‘विवस्वते त्वा वाता स्वाहा’ इत्यन्यत्राम्नातं। तथाविधा ‘नः’ ‘अभि’ ‘गृणाहि’ (अस्मान् प्रति हितमुपदिश)। हे ‘सवितः’, इयम् ‘आशा’ (दिक्) ‘नः’ (अस्मान्) प्रति ‘घृतवती’ (बहुलघृतसम्पादिका), ‘अधिपत्यैः’ (अधिकपालनशक्तिभिः) योजयित्री, ‘पयस्वती’ (क्षीरसम्पादिका), ‘रन्तिः’ (प्रीतिहेतुः) ‘अस्तु’ ।

---

* अत्र, ‘भुवनस्य पत्नि, भूतजातस्य पत्नी पालयित्री, तत्सम्बोधनमिदम्’ इति पाठो भवितुं युक्तः ।

अथ 'अदित्यै विष्णुपत्न्यै चरुः' इत्यस्य पुरोऽनुवाक्यामाह,— "ध्रुवा दिशां विष्णुपत्न्यघोरास्येशाना सहसो या मनोता । बृहस्पतिर्मातरिश्वोत वायुः सन्धुवाना वाता अभि नो गृणन्तु[१३]" इति । 'दिशां' मध्ये या 'ध्रुवा' (स्थिरा, सूर्यगतिसापेक्षप्राच्यादिविभागरहिता समारूपा) दिक्, यश्च 'बृहस्पतिः' यश्च मातरिश्वाख्यो मुख्यवायुः, ये च अन्ये 'सन्धुवानाः' (सम्यक् तत्र तत्र कम्पयन्तः) 'वाताः' ते सर्वेऽपि 'नः' 'अभि' 'गृणन्तु' (अस्मान् प्रति हितमुपदिशन्तु)। कीदृशी ध्रुवा? 'विष्णुपत्नी' (विष्णुः पतिः पालको यस्याः सा 'विष्णुपत्नी'), 'अघोरा' (शान्तरूपा), 'अस्य' 'सहसः' (सर्वस्य बलस्य) 'ईशाना' (नियामिका)। 'मनोता' (मनसि ऊता पूजितेत्यर्थः) ।

तत्रैव याज्यामाह,—"विष्टम्भो दिवो धरुणः पृथिव्या अस्येशाना जगतो विष्णुपत्नी । विश्वव्यचा इषयन्ती सुभूतिः शिवा नो अस्त्वदितिरुपस्थे[१४]" । 'अदितिः' (अखण्डनीया) दिक्सामान्यरूपा देवता 'उपस्थे' (स्वोत्सङ्गे) स्थितान् 'नः' (अस्मान्) प्रति 'शिवा' (शान्ता) 'अस्तु',—सुखकरी भवतु। कीदृशी अदितिः? 'दिवो' 'विष्टम्भः' (द्युलोकस्याधारभूता), 'पृथिव्या' 'धरुणः' (भूमेर्धारयित्री), 'अस्य' 'जगतः' 'ईशाना' (सर्वस्य जगतः स्वामिभूता), (विष्णुः पतिः पालको यस्याः सा) 'विष्णुपत्नी', 'विश्वव्यचाः' (जगद्व्यापिनी), 'इषयन्ती' (इषमन्नं कुर्वती), 'सुभूतिः' (शोभनैश्वर्योपेता)।

अथ 'अग्नये वैश्वानराय द्वादशकपालः' इत्यस्य याज्यानुवाक्ययोः प्रतीके दर्शयति,—"वैश्वानरो न ऊत्या पृष्टो दिवि[१५-१६]" इति। 'वैश्वानरो न ऊत्या' इति पुरोऽनुवाक्या। 'पृष्टो दिवि' इति याज्या।

एतच्चोभयं प्रथमकाण्डस्य पञ्चमप्रपाठकस्यान्यानुवाके व्याख्यातम्।

अथ 'अनुमत्यै चरुः' इत्यस्य याज्यानुवाक्ययोः प्रतीके दर्शयति,—"अनु नोऽद्यानुमतिरन्विदनुमते त्वं(१७-१८)" इति। 'अनु नोऽद्यानुमतिः' इति पुरोऽनुवाक्या, 'अन्विदनुमते त्वम्' इति याज्या। एतच्चोभयम् "इदं वामास्ये हविः" (३।३।११) इत्यस्मिन्ननुवाके व्याख्यातम्।

अथ 'काय एककपाल.' इत्यस्य याज्यानुवाक्ययोः प्रतीके दर्शयति,—"कया नश्चित्र आभुवत् को अद्य युङ्क्ते(१९-२०)" इति। 'कया नश्चित्र आभुवत्' इति पुरोऽनुवाक्या, 'को अद्य युङ्क्ते' इति याज्या। एतच्चोभयम्,—"इन्द्राग्नी रोचना" (४।२।११) इत्यस्मिन्ननुवाके व्याख्यातम्।

अत्र विनियोगसंग्रहः,—

अथाश्वमेधे या त्विष्टिर्हविर्भिर्दशभिर्युता।
विधीयतेऽग्नये गायेत्यनुवाकेन (७।५।१४अ०) तत्र च॥
द्वे द्वे याज्यानुवाक्ये स्तामित्यृचो विंशतिस्त्विह॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे चतुर्थप्रपाठके द्वादशोऽनुवाकः॥०॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्क-भूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थ-प्रकाशनामकतैत्तिरीययजुःसंहिताभाष्ये चतुर्थकाण्डे चतुर्थप्रपाठकः सम्पूर्णः॥०॥

॥०॥ ॐ तत्सत् ॥०॥

॥०॥ श्रीगणेशाय नमः ॥०॥

# अथ तैत्तिरीयसंहिताभाष्ये

## चतुर्थकाण्डे पञ्चमप्रपाठके

### प्रथमोऽनुवाकः ।

नम॑स्ते रुद्र म॒न्यव॑ उ॒तो त॒ इष॑वे॒ नमः॑। नम॑स्ते अस्तु॒ धन्व॑ने बा॒हुभ्या॑मु॒त ते॒ नमः॑[१]। या त॒ इषुः॑ शि॒वत॑मा शि॒वं ब॒भूव॑ ते॒ धनुः॑। शि॒वा श॑र॒व्या॑ या तव॒ तया॑ नो रुद्र मृडय[२]। या ते॑ रुद्र शि॒वा त॒नूरघो॒राऽपा॑पकाशिनी। तया॑ नस्त॒नुवा॒ शंत॑मया॒ गिरि॑शंता॒भि चा॑कशीहि[३]। यामिषुं॑ गिरिशंत॒ हस्ते॑ ॥ १ ॥

बिभ॒र्ष्यस्त॑वे। शि॒वां गि॑रित्र॒ तां कु॑रु॒ मा हि॑ꣳसी॒ पुरु॑षं॒ जग॑त्[४]। शि॒वेन॒ वच॑सा त्वा॒ गिरि॒शाच्छा॑ वदामसि। यथा॑ नः॒ सर्व॒मिज्जग॑दय॒क्ष्मꣳ सु॒मना॒ अस॑त्[५]। अध्य॑वोचदधिव॒क्ता प्र॑थ॒मो दैव्यो॑ भि॒षक्। अही॑ꣳश्च॒ सर्वा॑ञ्ज॒म्भय॒न्त्सर्वा॑श्च यातुधा॒न्यः॑[६]। अ॒सौ यस्ता॒म्रो अ॑रु॒ण उ॒त ब॒भ्रुः सु॑म॒ङ्गलः॑। ये चे॒माꣳ रु॒द्रा अ॒भितो॑ दि॒क्षु ॥ २ ॥

श्रिताः सहस्रशोऽवैषां हेड ईमहे⁽⁷⁾। असौ यो-
ऽवसर्पति नीलग्रीवो विलोहितः। उतैनं गोपा अह-
श्रन्नदृश्रनुदहार्यैः उतैनं विश्वा भूतानि सः दृष्टो मृड-
याति नः⁽⁸⁾। नमो अस्तु नीलग्रीवाय सहस्राक्षाय मी-
ढुषे। अथो ये अस्य सत्वानोऽहं तेभ्योऽकरन्नमः⁽⁹⁾।
प्र मुञ्च धन्वनस्त्वमुभयोरार्त्नियोर्ज्याम्। याश्च ते हस्त
इषवः ॥ ३ ॥

परा ता भगवो वप⁽¹⁰⁾। अवतत्य धनुस्त्वꣳ सह-
स्राक्ष शतेषुधे। निशीर्य शल्यानां मुखा शिवो नः सुमना
भव⁽¹¹⁾। विज्यं धनुः कपर्दिनो विशल्यो बाणवाꣳ
उत। अनेशन्नस्येषव आभुरस्य निषङ्गथिः⁽¹²⁾। या ते
हेतिर्मीढुष्टम हस्ते बभूव ते धनुः। तयास्मान् विश्व-
तस्त्वमयक्ष्मया परि भुज⁽¹³⁾। नमस्ते अस्त्वायुधाया-
नातताय धृष्णवे। उभाभ्याम्, उत ते नमो बाहुभ्यां
तव धन्वने⁽¹⁴⁾। परि ते धन्वनो हेतिरस्मान् वृणक्तु
विश्वतः। अथो य इषुधिस्तवारे अस्मन्नि धेहि तम्⁽¹⁵⁾
॥ ४ ॥

हस्ते। दिक्षु। इषवः। उभाभ्याम्। द्वाविꣳशतिश्च॥ १॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके
प्रथमोऽनुवाकः ॥ ० ॥

श्रीगणेशाय नमः ।



यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥१॥
इष्टकाचितयः सर्वास्तुर्थे हि समापिताः ।
रुद्राध्याये पञ्चमे तु चित्यग्नौ होम उच्यते ॥२॥
कर्मप्रकरणे पाठात् कर्माङ्गत्वमपीष्यते ।
ज्ञानहेतुत्वमप्यस्य तथोपनिषदीरितम् ॥३॥
किं जप्येनामृतत्वं नो ब्रूहीत्युक्ते मुनिर्जगौ ।
शतरुद्रीयकेणेति जाबाला आमनन्ति तत् ॥४॥
स्मृत्यागमपुराणेषु रुद्राध्यायप्रशंसनम् ।
बह्वस्ति तद्विस्तरेण रुद्रकल्पेऽभिधास्यते ॥५॥
इह कर्माङ्गता यादृग्वर्णिता ब्राह्मणेन ताम् ।
बोद्धुं शब्दार्थमात्रस्य विवृतिः क्रियते स्फुटा ॥६॥

कल्पः,—'शतरुद्रीयं जुहोति, जर्त्तिलयवाग्वा गवीधुकयवाग्वा- जुहुयात्। जर्त्तिलैर्गवीधुकसक्तुभिर्वा कुशयवसर्पिषा अजाक्षीरेण मृगी- क्षीरेण वार्कपर्णेनोदङ्तिष्ठन्, उत्तरस्य पक्षस्य उत्तरापरस्याꣳ स्रक्त्यां विकर्ण्यां स्वयमातृण्णायामनु परिचारं वा नमस्ते रुद्रमन्यव इत्येताम् अनुवाकाꣳस्त्रेधा विभज्य, अपि वा प्रथमादुपक्रम्य, नमस्तक्षभ्य इति जानुदघ्ने धारयमाणः, रथकारेभ्यः श्व इत्युपक्रम्य, नमः स्वायुधाय चेति नाभिदघ्ने शेषेण प्रागवसानेभ्य आस्यदघ्ने हुत्वा, सहस्राणि सहस्रश

इति दशावदाना कृत्वाऽन्वारोहौ जुहोति, नमो रुद्रेभ्यो ये पृथिव्यामिति जानुदघ्ने धारयमाणः, नमो रुद्रेभ्यो येऽन्तरिक्ष इति नाभिदघ्ने, नमो रुद्रेभ्यो ये दिवीत्यास्यदघ्ने कृत्वा, एतानेव यजमानं वाचयित्वैतानेव विपरीतान् प्रत्यवरोहाम् कृत्वा, मत्सरे पशूनामर्क-पर्णमुदस्यति यं द्विष्यात् तस्य मत्सरः' इति। तत्र प्रथमानुवाके प्रथमामृचमाह,—"नमस्ते रुद्र मन्यव उतो त इषवे नमः। नमस्ते अस्तु धन्वने बाहुभ्यामुत ते नमः(१)" इति। हे 'रुद्र', त्वदीयो यो 'मन्युः' (कोपः) तस्मै 'नमः' 'अस्तु', स मन्युरस्मद्वैरिष्वेव प्रसरतु न त्वस्मासु। 'उतो' (अपि च) 'ते' 'इषवे' 'नमः' (त्वदीयाय बाणाय नमः) 'अस्तु', तथा 'ते' 'धन्वने' (त्वदीयाय धनुषे) 'नमः' 'अस्तु', 'उत' (अपि च) 'ते' 'बाहुभ्यां' (त्वदीयाभ्यां धनुर्बाणोपेताभ्यां हस्ताभ्यां) 'नमः' अस्तु। एतत्सर्वं वैरिष्वेव प्रवर्त्ततां न तु मयीत्यभिप्रायः।

द्वितीयामृचमाह,—"या त इषुः शिवतमा शिवं बभूव ते धनुः। शिवा शरव्या या तव तया नो रुद्र मृडय(२)" इति। हे 'रुद्र', 'ते' (त्वदीया) 'या' इयम् 'इषुः' 'शिवतमा' (शान्ततमा) 'बभूवः', तथा त्वदीयं यत् 'धनुः' शान्ततमं बभूव, 'या' च 'शरव्या' 'तव' (इषुधिः) 'तया' शान्तया इष्वा तेन च शान्तेन बाणेन, शान्तेन धनुषा, तथा शान्तया शरव्यया 'नः' (अस्मान्) 'मृडय' (सुखय) भक्तेषु प्रवृत्त्यभावस्तेषां शान्तत्वम्।

अथ तृतीयामृचमाह,—"या ते रुद्र शिवा तनूरघोराऽपापका-शिनी। तया नस्तनुवा शंतमया गिरिशंताभि चाकशीहि(३)" इति। द्वे हि रुद्रस्य तनू, तथा चोपरिष्टादाम्नायते, 'रुद्रो वा एष यदग्निस्तस्यैते तनुवौ घोराऽन्या शिवाऽन्या' इति। हिंसिका घोरा।

अनुग्राहिका शिवा। हे 'रुद्र', 'ते' (तव) 'या' 'तनूः' 'शिवा' (अस्मासु अनुग्रहकारिणी), अत एवाहिंसिका भवति। अघोरत्वमेव स्पष्टीक्रियते,—'अपापकाशिनी' (पापं हिंसारूपमनिष्टं काशयतीति पापकाशिनी, तादृशी न भवतीत्यपापकाशिनी)। (गिरौ कैलासे स्थित्वा नित्यं प्राणिभ्यो यः शं सुखं तनोति, तत्सम्बोधनं) हे 'गिरिशंत'। तथाविध हे रुद्र, 'शंतमया' (अतिशयेन सुखकारिण्या) 'तया' 'तनुवा' 'अभि चाकशीहि' (मामभिलक्ष्य प्रकाशं कुरु)। तादृशीं त्वदीयां तनूं प्रकाशयन् मां सुखिनं कुर्वित्यर्थः।

अथ चतुर्थीमाह,—"यामिषुं गिरिशंत हस्ते बिभर्ष्यस्तवे। शिवां गिरित्र तां कुरु मा हिꣳसीः पुरुषं जगत्[४]" इति। हे 'गिरिशंत', 'याम्''इषुं' (बाणं) 'अस्तवे' (वैरिषु प्रक्षेप्तुं) 'हस्ते' 'बिभर्षि', (गिरिं कैलासं त्रायते पालयति इति 'गिरित्रः', तत्सम्बोधनं) तथाविध हे रुद्र, 'तां' 'हस्ते' धृताम् 'इषुं' 'शिवां' अस्मासु (शान्तां) 'कुरु'। 'पुरुषम्' (अस्मदीयं मनुष्यं),'जगत्' मनुष्यव्यतिरिक्तमपि (जगत् जङ्गमं) गवादिकं 'मा हिंसीः'।

अथ पञ्चमीमाह,—"शिवेन वचसा त्वा गिरिशाच्छा वदामसि। यथा नः सर्वमिज्जगदयक्ष्मꣳ सुमना असत्[५]" इति। (गिरौ कैलासे शेते तिष्ठतीति गिरिशः) हे 'गिरिश', त्वाम् 'अच्छ' (प्राप्तुं) 'शिवेन' (मङ्गलेन) स्तुतिरूपेण 'वचसा' 'वदामसि' (वयं प्रार्थयामहे),—'यथा' (येन प्रकारेण) 'नः' (अस्मदीयं), 'सर्वमित्' 'जगत्' (यथा सर्वमपि मनुष्यपश्वादिकं जङ्गमजातं) 'अयक्ष्मम्'

(अरोगं*) 'सुमना' 'असत्' (अभवत्),—सौमनस्योपेतं यथा भवति, तथा कुरु।

अथ षष्ठीमाह,—"अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक्। अहीꣳश्च सर्वान् जम्भयन्त्सर्वाश्च यातुधान्यः(६)" इति। यो रुद्रः 'अधिवक्ता' (अधिकोऽयमित्येवं सर्वेषां अग्रे मां प्रतिवक्तुं क्षमः), तेनोक्ते सति मम सर्वाधिक्यं तदानीमेव सिध्यति। अतस्तादृशो रुद्रः 'अध्यवोचत्' (मां सर्वाधिकं वक्ति)। कीदृशोऽधिवक्ता? 'प्रथमः' (देवानां मध्ये मुख्यः) 'दैव्यः' (सर्वान् देवान् अर्हति), स्वयं देवान् पालयितुं क्षम इत्यर्थः। 'भिषक्' (एतस्य ध्यानमात्रेण सर्वरोगोपशमनादयं चिकित्सकः)। किं कुर्वन्? 'अहींश्च' 'सर्वान्' (सर्पव्याघ्रादीन् सर्वानपि), 'सर्वाश्च' 'यातुधान्यः' (सर्वानपि राक्षसान्) 'जम्भयन्' (विनाशयन्)।

अथ सप्तमीमाह,—"असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः। ये चेमाꣳ रुद्रा अभितो दिक्षु श्रिताः सहस्रशोऽवैषां हेड ईमहे(७)" इति। 'यः' रुद्रः, 'असौ' (मण्डलस्थादित्यरूपः), स च 'ताम्रः' (उदयकाले अत्यन्तरक्तः), 'अरुणः' (उदयादूर्द्ध्वमीषद्रक्तः)। 'उत' (अपि च) 'बभ्रुः' (ततोऽप्यूर्द्ध्वं पिङ्गलः)। एवमन्येऽपि वर्णास्तत्कालगता उन्नेयाः। 'सुमङ्गलः' (नानावर्णः सन् तदा तदा अन्धकारादिनिवर्त्तनादत्यन्तमङ्गलः)। 'ये च' अन्ये रश्मिरूपा 'रुद्राः' 'इमाम्' 'अभितः' (अस्या भूमेः परितः) 'दिक्षु' 'श्रिताः' (प्राच्यादिदिक्षु अवस्थिताः), ते च 'सहस्रशः' (अनेकसहस्रसङ्ख्याकाः), 'एषाम्' (आदित्य-तद्रश्मि-

---

* 'अरोगः' इति सर्वत्र पाठो न सम्यक्।

रूपाणां सर्व्वेषां रुद्राणां) 'हेडः' (क्रोधसदृशं तीक्ष्णत्वं) 'अव'-'ईमहे' (भक्तिनमस्कारादिना निवारयामः)।

अथाष्टमीमाह,—"असौ योऽवसर्पति नीलग्रीवो विलोहितः। उतैनं गोपा अदृश्रन्नदृश्रन्नुदहार्यः। उतैनं विश्वा भूतानि सः दृष्टो मृडयाति नः[८]" इति। 'यः' रुद्रः, 'नीलग्रीवः' (कालकूटविषधारणे नीलवर्णा ग्रीवा यस्य असौ नीलग्रीवः), स एव 'विलोहितः' (विशेषेण लोहितः सन्) 'असौ' मण्डलवर्त्ती भूत्वा 'अवसर्पति' (उदयास्तमयं सम्पादयितुं प्रवर्त्तते)। तस्य च रुद्रस्य मण्डलवर्त्तित्वरूपधारणे प्रयोजनमुच्यते,—'उत' (अपि च), 'गोपाः' (वेदसंस्काररहिता गोपालाः) अपि 'एनं' (मण्डलवर्त्तिनमादित्यरूपं रुद्रम्) 'अदृश्रन्' (पश्यन्ति*)। 'उदहार्यः' (उदकानां हारिण्यो योषितः) अपि 'एनम्' 'अदृश्रन्' (पश्यन्ति)। 'उत' (अपि च) 'एनं' (मण्डलवर्त्तिनमादित्यरूपिणं रुद्रं) 'विश्वा' 'भूतानि' (गोमहिषादयः सर्वेऽपि प्राणिनः) पश्यन्ति। सर्वेषां दर्शनार्थमेव हि रुद्रस्यादित्यमूर्त्तिधारणं, कैलासादिवर्त्ति रुद्रस्य रूपं वेदशास्त्राभिज्ञैरेव दृश्यते नान्यैः। तादृशो रुद्रः 'दृष्टः' सन् 'नः' (अस्मान्) 'मृडयाति' (अतिसुखिनः करोतु)।

अथ नवमीमाह,—"नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे। अथो ये अस्य सत्वानोऽहं तेभ्योऽकरन्नमः[९]" इति। यः पूर्वोक्तरीत्या नीलग्रीवः, स एव इन्द्रमूर्त्तिधारणेन सहस्राक्षः, स पुनः पर्जन्यमूर्त्तिधारणेन मीढ्वान् (सेचकः) वृष्टिकर्त्तेत्यर्थः। तादृशाय रुद्राय

---

* का० क्रो० पुस्तके 'पश्यन्ति स्म' इति पाठः। परन्तु पर्न पश्यन्ति इत्येव पाठः।

'नमः' 'अस्तु'। 'अथो' (अपि च) 'ये' केचिद् 'अस्य' (रुद्रस्य) 'सत्वानो' (भृत्यरूपाः प्राणिनः) 'तेभ्यः' (सर्वेभ्यः) 'अहं' 'नमः' 'अकरम्' (नमस्करोमि)।

अथ दशमीमाह,—"प्र मुञ्च धन्वनस्त्वमुभयोरार्त्नियोर्ज्याम्। याश्च ते हस्त इषवः परा ता भगवो वप[१०]" इति। हे 'भगवः' (भगवान्, पूजावान्[?] महदैश्वर्यसम्पन्न) रुद्र, 'त्वं' 'धन्वनः' (त्वदीयस्य धनुषः) 'उभयोरार्त्नियोः' (कोट्योः) अवस्थितां 'ज्याम्' (मौर्वीं) 'प्र मुञ्च' (अवरोपय)। 'याश्च' 'ते' 'हस्ते' 'इषवः' वर्त्तन्ते, 'ता' अपि 'परा' —'वप' (परित्यज्य[?])।

अथैकादशीमाह,—"अवतत्य धनुस्त्वꣳ सहस्राक्ष शतेषुधे। निशीर्य शल्यानां मुखा शिवो नः सुमना भव[११]" इति। इन्द्ररूपेण सहस्रसङ्ख्याकानि अक्षीणि यस्यासौ सहस्राक्षः। शतसङ्ख्याका इषुधयो वाणस्थापनकोशा यस्य असौ शतेषुधिः। तादृश हे रुद्र, 'धनुः' 'अवतत्य' (अवरोपितज्याकं कृत्वा) 'शल्यानां' 'मुखा' (इषुगतलोहानाम् खयाणि*) 'निशीर्य' (इषुधिषु न्यग्भावेन शीर्णा कृत्वा) 'नः' (अस्मान्) प्रति 'सुमना' (अनुग्रहयुक्तः) 'शिवः' (शान्तः) 'भव'।

अथ द्वादशीमाह,—"विज्यं धनुः कपर्दिनो विशल्यो बाणवाꣳ उत। अनेशन्नस्येषव आभुरस्य निषङ्गथिः[१२]" इति। कपर्दो जटाजूटः, सोऽस्यास्तीति कपर्दी रुद्रः, तस्य 'धनुः' 'विज्यं' (विगतज्याकम्) अस्तु। 'उत' (अपि च) वाणमस्मिन् तिष्ठतीति वाणवान् इषुधिः,

---

* 'अग्राणि' इति पाठो भवितुं युक्तः। एवं परत्र शीर्याणित्यत्र 'शीर्याणि' इति पाठो भवितुं युक्तः।

स च 'विशल्यः' अस्तु,—इषुगतानां शल्यानां तदुदरे गोपितत्वेन बहिराविर्भूतशल्यरहितोऽस्तु। 'अस्य' (रुद्रस्य) 'इषवः' (बाणाः) इषुधौ प्रक्षिप्ता 'अनेशन्' (वेद्धुमसमर्थाः) भवन्तु। 'अस्य' (रुद्रस्य) 'निषङ्गथिः' (बाणाधारः) 'आभुः' अस्तु (ईषत्प्रभुः) अस्तु। कुडूमानिखातशङ्कावासंजितत्वेन(?) बाणान् धारयितुमेव प्रभवति न तु बाणाकर्षणयोग्य इत्यर्थः। अथ वा 'निषङ्गथिः' (खड्गकोशः); सोऽपि पूर्ववत् क्वचिदारोपितत्वेन खड्गं धारयितुमेव प्रभवति, न तु खड्गाकर्षणसमर्थः।

अथ त्रयोदशीमाह,—"या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः। तयास्मान् विश्वतस्त्वमयक्ष्मया परि भुज(१३)" इति। हे 'मीढुष्टम' (अतिशयेन कामाभिवर्षक), 'या' 'ते' 'हेतिः' (तव सम्बन्धि खड्गादिरूपं यदायुधं), यदपि तव 'हस्ते' 'धनुः' 'बभूव'। 'अयक्ष्मया' (अनुपद्रवकारिण्या) 'तया' हेत्या तथाविधेन धनुषा च 'त्वम्' 'अस्मान्' 'विश्वतः' 'परि भुज' (सर्वतः परिपालय)।

अथ चतुर्दशीमाह,—"नमस्ते अस्त्वायुधायानातताय धृष्णवे। उभाभ्याम्, उत ते नमो बाहुभ्यां तव धन्वने(१४)" इति। हे रुद्र, 'ते' (त्वदीयाय) 'आयुधाय' (बाणरूपाय) 'नमः' 'अस्तु'। कीदृशाय आयुधाय?—'अनातताय' (धनुषि सन्धानाभावादनपसारिताय), 'धृष्णवे' (स्वरूपेण प्रहर्त्तुं प्रगल्भाय)। किञ्च 'ते' (त्वदीयाभ्याम्) 'उभाभ्यां' 'बाहुभ्यां' 'नमः' अस्तु। तथा 'तव' (त्वदीयाय) 'धन्वने' 'नमः' अस्तु।

अथ पञ्चदशीमाह,—"परि ते धन्वनो हेतिरस्मान् वृणक्तु विश्वतः। अथो य इषुधिस्तवारे अस्मन्नि धेहि तम्(१५)" इति। हे रुद्र,

'ते' (त्वदीयस्य) 'धन्वनः' 'हेतिः' बाणशल्यरूपा 'अस्मान्' 'विश्वतः' (सर्वतः) 'परि वृणक्तु' (वर्जितान् करोतु) मा बाधतामित्यर्थः। 'अथो' (अपि च) 'यः' 'तव' 'इषुधिः' 'अस्मद्' 'आरे' (अस्मत्तो दूरे) 'नि'-'धेहि' (स्थापय)॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे पञ्चमप्रपाठके प्रथमोऽनुवाकः ॥०॥

---

नमो हिरण्यबाहवे सेनान्ये दिशाञ्च पतये नमः(१) नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमः(२) नमः। सस्पिञ्जराय त्विषीमते पथीनां पतये नमः(३) नमो बभ्लुशाय विव्याधिनेऽन्नानां पतये नमः(४) नमो हरिकेशायोपवीतिने पुष्टानां पतये नमः(५) नमो भवस्य हेत्यै जगतां पतये नमः(६) नमो रुद्रायाततायिने क्षेत्राणां पतये नमः(७) नमः सूतायाहन्त्याय वनानां पतये नमः(८) नमो, रोहिताय स्थपतये वृक्षाणां पतये नमः(९) नमो मन्त्रिणे वाणिजाय कक्षाणां पतये नमः(१०) नमो भुवन्तये वारिवस्कृतायौषधीनां पतये नमः(११) नम उच्चैर्घोषायाक्रन्दयते पत्तीनां पतये नमः(१२) नमः कृत्स्नवीताय धावते सत्वनां पतये नमः(१३) ॥ १ ॥

वनानां पतये नमो नमः। एकान्नत्रिꣳशच्च॥ २॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके द्वितीयोऽनुवाकः॥ ०॥

प्रथमेऽनुवाके भगवतो रुद्रस्य या प्रधानभूता तनुः, तां बहुधा प्रसाद्य तस्य ये लीलाविग्रहा जगन्निर्वाहहेतवः तेऽष्टभिरनुवाकैः प्रसाद्यन्ते। तेषु चानुवाकेषु सर्वाण्यपि यजूंषि; तानि च द्विविधानि,—उभयतो नमस्काराणि अन्यतरतो नमस्काराणि च। तत्र त्रिषु अनुवाकेषु नमस्कारादिकं नमस्कारान्तकम् एकैकं यजुः; इतरेषु पञ्चसु अनुवाकेषु नमस्कारादिकम् एकैकं यजुः। तत्र द्वितीयेऽनुवाके प्रथमं यजुराह,—"नमो हिरण्यबाहवे सेनान्ये दिशाञ्च पतये नमः(१)" इति। हिरण्यनिर्म्मितानि आभरणानि बाह्वोः यस्यासौ हिरण्यबाहुः। संग्रामेषु सेनां नयतीति सेनानी। तादृशमूर्त्तिधारी यो रुद्रः, तस्मै 'नमः' अस्तु। यश्च 'दिशां' पालको रुद्रः तस्मै 'च' 'नमः' अस्तु।

अथ द्वितीयं यजुराह,—"नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमः(२)" इति। हरितवर्णाः केशा येषां वृक्षाणां, ते हरिकेशाः, तादृशेभ्यो वृक्षेभ्यो रुद्रमूर्त्तिधारिभ्यः 'नमः' अस्तु। यो रुद्रः 'पशूनां' पालकः, तस्मै 'नमः' अस्तु।

अथ तृतीय यजुराह,—"नमः सस्पिञ्जराय त्विषीमते पथीनां पतये नमः(३)" इति। सस्पिञ्जरशब्दो बालतृणवाची। पीतरक्तसङ्कीर्ण-वाची सपिञ्जरः, बालतृणवत् पिञ्जरः सस्पिञ्जरः। स च त्विषिमान्*

* त्विषीमते इति पाठो भवितुं युक्तः।

दीप्तिमान्। तथाविधरुद्रमूर्त्तये 'नमः' अस्तु। 'पथीनां' (शास्त्रोक्त-दक्षिणोत्तरतृतीयमार्गाणां) पतिः (पालको) यो रुद्रः, तस्मै 'नमः' अस्तु।

अथ चतुर्थं यजुराह,—"नमो बभ्लुशाय विव्याधिनेऽन्नानां पतये नमः(४)" इति। बिभर्त्ति रुद्रमिति बभ्रुर्वृषभः, स एव बभ्लुः, तस्मिन् शेते तिष्ठतीति बभ्लुशः, स च विद्वेषिणो विशेषेण विध्यतीति विव्याधी। तथाविधाय 'नमः' अस्तु। यस्य 'अन्नानां' पालको रुद्रः, तस्मै 'नमः' अस्तु।

अथ पञ्चमं यजुराह,—"नमो हरिकेशायोपवीतिने पुष्टानां पतये नमः(५)" इति। नीलालकमूर्द्धजटाय, पलितरहिताय, 'उपवीतिने' (मङ्गलार्थयज्ञोपवीतधारिणे) रुद्राय 'नमः' अस्तु। 'पुष्टानां' (परिपूर्णगुणानां पुरुषाणां) 'पतये' (स्वामिने) 'नमः' अस्तु।

अथ षष्ठं यजुराह,—"नमो भवस्य हेत्यै जगतां पतये नमः(६)" इति। भवः संसारः, तस्य हेतिरायुधं। संसारच्छेत्रे रुद्राय 'नमः' अस्तु। 'जगतां' यः पालको रुद्रः, तस्मै 'नमः' अस्तु।

अथ सप्तमं यजुराह,—"नमो रुद्रायाततायिने क्षेत्राणां पतये नमः(७)" इति। आततेन विस्तारितेन धनुषा अवति रक्षतीत्याततावी, तस्मै रुद्राय 'नमः' अस्तु। 'क्षेत्राणां' पालको यो रुद्रः, तस्मै 'नमः' अस्तु।

अथाष्टमं यजुराह,—"नमः सूतायाहन्त्याय वनानां पतये नमः(८)" इति। सूतः सारथिः। अहन्त्यो वैरिभिर्हन्तुमशक्यः। तादृशाय रुद्राय 'नमः' अस्तु। यः 'वनानां' पालकः, तादृशाय रुद्राय 'नमः' अस्तु।

अथ नवमं यजुराह,—"नमो रोहिताय स्थपतये वृक्षाणां पतये नमः(९)" इति। रोहितो लोहितवर्णः। स्थपतिः प्रभुः, तस्मै रुद्राय 'नमः' अस्तु। 'वृक्षाणां' यः पालकः, तस्मै 'नमः' अस्तु।

अथ दशमं यजुराह,—"नमो मन्त्रिणे वाणिजाय कक्षाणां पतये नमः(१०)" इति। राजसभायां मन्त्रालोचनचतुरो मन्त्री, स च वणिजां स्वामित्वेन वाणिजः, तस्मै रुद्राय 'नमः' अस्तु। वनगता गुल्मादयः कक्षाः, तेषां पालकाय 'नमः' अस्तु।

अथैकादशं यजुराह,—"नमो भुवन्तये वारिवस्कृतायौषधीनां पतये नमः(११)" इति। भुवं तनोतीति भुवन्तिः। 'वरिवः' (धनं) तस्य कर्त्ता वरिवस्कृत्, स एव वारिवस्कृतः, तस्मै रुद्राय 'नमः' अस्तु। 'ओषधीनां' ग्राम्यारण्यानां पालकाय 'नमः' अस्तु।

अथ द्वादशं यजुराह,—"नम उच्चैर्घोषायाक्रन्दयते पत्तीनां पतये नमः(१२)" इति। युद्धकाले उच्छ्रितो घोषो ध्वनिर्यस्य असौ उच्चैर्घोषः, आक्रन्दयन् वैरिणां रोदयिता; तस्मै रुद्राय 'नमः' अस्तु। 'पत्तीनां' (पादचारिणो योधाः पत्तिशब्दवाच्याः, तेषां) पालकाय 'नमः' अस्तु।

अथ त्रयोदशमाह,—"नमः कृत्स्नवीताय धावते सत्वनां पतये नमः(१३)" इति। कृत्स्नं सैन्यं वीतं वेष्टितं येनासौ कृत्स्नवीतः, 'धावते' (पलायमानानां परकीयसैन्यानां पृष्ठतो गच्छन् धावन् तस्मै) सत्वनः पालकाः, तेषां पालकाय 'नमः' अस्तु।

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये चतुर्थकाण्डे पञ्चमप्रपाठके द्वितीयोऽनुवाकः ॥०॥

नमः सहमानाय निव्याधिन आव्याधिनीनां पतये नमः[१] नमः ककुभाय निषङ्गिणे स्तेनानां पतये नमः[२] नमः। निषङ्गिण इषुधिमते तस्कराणां पतये नमः[३] नमो वञ्चते परिवञ्चते स्तायूनां पतये नमः[४] नमो निचेरवे परिचरायारण्यानां पतये नमः[५] नमः सृकाविभ्यो जिघांसद्भ्यो मुष्णतां पतये नमः[६] नमोऽसिमद्भ्यो नक्तञ्चरद्भ्यः प्रकृन्तानां पतये नमः[७] नम उष्णीषिणे गिरिचराय कुलुञ्चानां पतये नमो[८] नमः ॥ १ ॥

इषुमद्भ्यो धन्वाविभ्यश्च वो नमः[९] नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमः[१०] नम आ यच्छद्भ्यो वि सृजद्भ्यश्च वो नमः[११] नमोऽस्यद्भ्यो विध्यद्भ्यश्च वो नमः[१२] नमो आसीनेभ्यः शयानेभ्यश्च वो नमो नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमो नमः सभाभ्यः सभापतिभ्यश्च वो नमो नमो अश्वेभ्योऽश्वपतिभ्यः, च वो नमः[१३-१७] ॥ २ ॥

कुलुञ्चानां पतये नमो नमः। अश्वपतिभ्यः। चीणि च ॥ ३ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके तृतीयोऽनुवाकः ॥०॥

द्वितीयेऽनुवाके उभयतोनमस्काराणि कानिचिद् यजूंषि उक्तानि। अथापराणि तथाविधान्येव तृतीये अस्पष्टार्थानि द्वादश, स्पष्टार्थानि पञ्च* कानिचिदुच्यन्ते। तत्र प्रथमं यजुराह,—"नमः सहमानाय निव्याधिन आव्याधिनीनां पतये नमः(१)" इति। सहमानो विरोधिनोऽभिभवन्। नितरां विरोधिनो विध्यतीति निव्याधी। तादृशाय रुद्राय 'नमः'। 'आ' (समन्ताद्) विध्यन्तीति आव्याधिन्यः शूराः सेनाः, तासां पालकाय 'नमः'।

अथ द्वितीयं यजुराह,—"नमः ककुभाय निषङ्गिणे स्तेनानां पतये नमः(२)" इति। 'ककुभाय' ककुत्सदृशाय प्रधानभूतायेत्यर्थः। निषङ्गी खड्गहस्तः, तस्मै 'नमः'। 'स्तेनाः' गुप्तचोराः तेषां पालकाय 'नमः'। रुद्रो हि लीलया नट इव तत्तद्वेषं धत्ते। यद्वा तस्य सर्वजगदात्मकत्वात् ये यत्र यथा वर्त्तन्ते, तेषु तत्र रुद्र एव तत्तद्रूपेण वर्त्तन्ते† इति रुद्रस्य सार्वात्म्यमनुसन्धातुं मन्त्रैरेवमुच्यते। स्तेनादिशरीरेषु रुद्रो द्वेधा वर्त्तन्ते†, जीवरूपेणेश्वररूपेण च, तत्र यज्जीवरूपं तत् स्तेनादिशब्दानां वाच्योऽर्थः, स एव शास्त्रेषु निन्द्यः, यत्तु ईश्वररूपं तत्तु स्तेनादिशब्दैरुपलक्ष्यते, तदनुसन्धानन्तु पापक्षयहेतुत्वेन परमपुरुषार्थ इति, लक्ष्यार्थविवक्षया मन्त्रेषु लौकिकाः शब्दाः प्रयुज्यन्ते इति द्रष्टव्यं। उपलक्षकवाच्यार्थद्वारेण लक्ष्यार्थो मुग्धैरपि सहसा सम्यक् बोद्धुं शक्यते, यथा शाखाग्रे चन्द्र इत्यत्र।

* 'अस्पष्टार्थानि द्वादश, स्पष्टार्थानि पञ्च' इति पाठः क्वचित् नास्ति।

† वर्त्तते इति पाठो भवितुं युक्तः।

तस्मादस्यार्थस्यैव विवक्षायामपि सुखावबोधद्वारत्वेन मुख्यार्थवाचकाः शब्दाः प्रयोक्तव्याः।

अथ तृतीयं यजुराह,—"नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमः(३)" इति। धनुषि सन्धातुं हस्ते धृतो वाणो निषङ्गः, पृष्ठे बद्धो वाणाधार इषुधिः, तदुभययुक्ताय 'नमः'। तस्कराः प्रकाशचोराः, तेषां पालकाय 'नमः'।

अथ चतुर्थं यजुराह,—"नमो वञ्चते परिवञ्चते स्तायूनां पतये नमः(४)" इति। स्वामिन आप्तो भूत्वा तदीयक्रयविक्रयादिव्यवहारेषु यत्र- क्वापि यत्किञ्चिद्द्रव्यापह्नवो वञ्चनं, सर्वेष्वपि व्यवहारेषु अपह्नवः परिवञ्चनं, तदुभयरूपाय 'नमः'। गुप्तचोरा द्विविधाः,— दूरादागत्य रात्रावज्ञाताः सन्तः कपाटाद्युद्घाटनेन ये द्रव्यापहर्त्तारस्ते स्तेनाः, स्वकीया एवम्भूता रात्रौ अहनि वा अन्यैरज्ञाताः सन्तोऽप- हर्त्तारो ये ते स्तायवः, तेषां पालकाय 'नमः'।

अथ पञ्चमं यजुराह,—"नमो निचेरवे परिचरायारण्यानां पतये नमः(५)" इति। स्वामिगृह एव कदा अपहरिष्यामीत्यनया बुद्ध्या सावधानो निरन्तरं चरणशीलो निचेरुः, परित आपणवीथी- प्रवाटिकादौ अपहारेच्छया चरणशीलः परिचरः, तदुभयरूपाय 'नमः'। मार्गे गन्तॄन् द्रव्यापहारेण वाधितुम् अरण्ये वर्त्तमानाश्चोरा आरण्याः, तेषां पालकाय 'नमः'।

अथ षष्ठं यजुराह,—"नमः सृकाविभ्यो जिघांसद्भ्यो मुष्णतां पतये नमः(६)" इति। सृक्शब्दो वज्रवाची तेन स्वशरीरं अवन्ति रक्षन्तीति सृकाविनः, प्राणिनो हन्तुमिच्छन्तश्चोरा जिघांसन्तः,

तदुभयरूपाय 'नमः'। कृषिकाः सन्तो स्वामिधान्यापहर्त्तारो मुष्णन्तः, तेषां पालकाय 'नमः'।

अथ सप्तमं यजुराह,—"नमोऽसिमद्भ्यो नक्तंचरद्भ्यः प्रकृन्तानां पतये नमः(७)" इति। असिमन्तः खड्गधारिणः, ये रात्रौ चरन्तो वीथ्यां निर्गतान् प्राणिनो बाधमानास्तेऽराः ते नक्तंचरन्तः, तदुभयरूपाय 'नमः', हत्वैवापहरन्तः प्रकृन्ताः, तेषां पालकाय 'नमः'।

अथाष्टमं यजुराह,—"नम उष्णीषिणे गिरिचराय कुलुञ्चानां पतये नमः(८)" इति। शिरोवेष्टनवान् उष्णीषी, ग्राम्यजनवद् उष्णीषेण शिरो वेष्टयित्वा तन्मध्ये प्रविश्य वर्त्तमानस्तोर उष्णीषी, गिरौ काष्ठादिसम्पादकानां वस्त्रादिकमपहर्तुं चरतीति गिरिचरः, तदुभयरूपाय 'नमः'। 'कुं' (भूमिं गृहक्षेत्रादिरूपां) लुञ्चन्ति (अपहरन्तीति) कुलुञ्चाः, तेषां पालकाय 'नमः'।

अथ नवमं यजुराह,—"नम इषुमद्भ्यो धन्वाविभ्यश्च वो नमः(९)" इति। भीषयितुं हस्ते बाणधारिण इषुमन्तः, तथा, भीषयितुं हस्ते धनुर्धारिणो धन्वाविनः, तदुभयरूपा हे रुद्राः, 'वः' (युष्मभ्यं) 'नमः' इति विशेषणद्वयेन वाक्यं भेत्तुं द्विर्नमस्कारः।

अथ दशमं यजुराह,—"नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमः(१०)" इति। धनुषि ज्यामारोपयन्त आतन्वानाः, तद्रूपेभ्यो युष्मभ्यं रुद्रेभ्यः 'नमः'। धनुषि बाणं सन्दधानाः, तद्रूपेभ्यो युष्मभ्यं 'नमः'।

अथैकादशं यजुराह,—"नम आयच्छद्भ्यो विसृजद्भ्यश्च वो

नमः(११)" इति। आकर्षणं कुर्वन्त आयच्छन्तः। बाणं मुञ्चन्तो विसृजन्तः। शेषं पूर्ववद्व्याख्येयम्।

अथ द्वादशं यजुराह,—"नमोऽस्यद्भ्यो विध्यद्भ्यश्च वो नमः(१२)" इति। मुक्तस्य बाणस्य लक्ष्यपर्य्यन्तं गमनं असनं, तस्य कर्त्तारो अस्यन्तः। लक्ष्यसमीपं गतस्य बाणस्य लक्ष्ये प्रवेशो वेधः, तस्य कर्त्तारो विध्यन्तः।

अथ त्रयोदशयजुरादि—सप्तदशयजुःपर्य्यन्तानि स्पष्टार्थान्याह,—"नम आसीनेभ्यः शयानेभ्यश्च वो नमो(१३) नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो(१४) नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमो(१५) नमः सभाभ्यः सभापतिभ्यश्च वो नमो(१६) नमो अश्वेभ्योऽश्वपतिभ्यश्च वो नमः(१७)" इति॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे पञ्चमप्रपाठके तृतीयोऽनुवाकः॥०॥

---

नम॑ आव्याधिनी॑भ्यो वि॒विध्य॑न्तीभ्यश्च वो॒ नमः॒(१) नम उग॑णाभ्यस्तृꣳहतीभ्य॑श्च वो॒ नमः॒(२) नमो॑ गृत्सेभ्यो॑ गृत्सप॑तिभ्यश्च वो॒ नमः॒(३) नमो॒ व्राते॑भ्यो॒ व्रात॑पतिभ्यश्च वो॒ नमः॒(४) नमो॑ ग॒णेभ्यो॑ ग॒णप॑तिभ्यश्च वो॒ नमः॒(५) नमो॒ विरू॑पेभ्यो॒ वि॒श्वरू॑पेभ्यश्च वो॒ नमः॒(६) नमो॑

महद्भ्यः क्षुल्लकेभ्यश्च वो नमः(७) नमो रथिभ्योऽरथेभ्यश्च वो नमः(८) नमो रथेभ्यः ॥ १ ॥

रथपतिभ्यश्च वो नमो नमः सेनाभ्यः सेनानिभ्यश्च वो नमो नमः क्षत्तृभ्यः संग्रहीतृभ्यश्च वो नमो नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमो नमः पुञ्जिष्टेभ्यो निषादेभ्यश्च वो नमो नम इषुकृद्भ्यो धन्वकृद्भ्यश्च वो नमो नमो मृगयुभ्यः श्वनिभ्यश्च वो नमो नमः श्वभ्यः श्वपतिभ्यश्च, वो नमः(९-१०) ॥ २ ॥

रथेभ्यः। श्वपतिभ्यश्च। द्वे च ॥ ४ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके चतुर्थोऽनुवाकः ॥०॥

तृतीयेऽनुवाके यानि उभयतोनमस्काराणि यजूंषि उक्तानि, तेभ्योऽन्यानि कानिचिदुभयतोनमस्काराणि च यजूंषि चतुर्थेऽभिधीयन्ते। तत्र प्रथमं यजुराह,—"नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमः(१)"। 'आ' (समन्तात्) वेद्धुं शक्ताः स्त्रीमूर्त्तय आव्याधिन्यः, विशेषेण वेद्धुं शक्ता विविध्यन्त्यः, ताभ्यः 'नमः'।

अथ द्वितीयं यजुराह,—"नम उगणाभ्यस्तृꣳहतीभ्यश्च वो नमः(२)"

इति। उत्कृष्टा गणरूपाः सप्तमातृकाद्याः स्त्रिय उगणाः, हिंसितुं समर्था दुर्गाद्या उग्रदेवताः तृंहत्यः ताभ्यः 'नमः'।

अथ तृतीयं यजुराह,—"नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमः(३)" इति। गर्धनशीला गृत्साः, विषयलम्पटा इत्यर्थः, तेषां पालका गृत्सपतयः, तेभ्यः 'नमः'।

अथ चतुर्थं यजुराह,—"नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमः(४)" इति। नानाजातीयानां संघाता व्राताः, तेषां पालका व्रातपतयः, तेभ्यः 'नमः'।

अथ पञ्चमं यजुराह,—"नमो गणेभ्यो गणपतिभ्यश्च वो नमः(५)" इति। देवस्यानुचरा भूतविशेषा गणाः, तेषां पालका गणपतयः, तेभ्यः 'नमः'।

अथ षष्ठं यजुराह,—"नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमः(६)" इति। विरूपा विकृतरूपा नग्नमुण्डादयः, विश्वरूपाः तुरङ्गगजवक्त्रादिनानाविधरूपधारिणो भृत्याः, तेभ्यः 'नमः'।

अथ सप्तमं यजुराह,—"नमो महद्भ्यः क्षुल्लकेभ्यश्च वो नमः(७)" इति। अणिमाद्यैश्वर्य्योपेता महान्तः, तद्रहिताः क्षुल्लकाः, तेभ्यः 'नमः'।

अथाष्टमं यजुराह,—"नमो रथिभ्योऽरथेभ्यश्च वो नमः(८)" इति। रथमारूढा रथिनः, तद्रहिता अरथाः, तेभ्यः 'नमः'।

अथ नवममारभ्य सप्तदशपर्य्यन्तानि यजूंषि स्पष्टार्थानि यजूंषि आह,*—"नमो रथेभ्यो रथपतिभ्यश्च वो नमो(९) नमः सेनाभ्यः

* अत्र यजूंषि इत्येकोऽधिक इव प्रतिभाति।

सेनानिभ्यश्च वो नमो(१०) नमः क्षत्तृभ्यः सङ्ग्रहीतृभ्यश्च वो नमो(११) नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो(१२) नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमो(१३) नमः पुञ्जिष्टेभ्यो निषादेभ्यश्च वो नमो(१४) नम इषुकृद्भ्यो धन्वकृद्भ्यश्च वो नमो(१५) नमो मृगयुभ्यः श्वनिभ्यश्च वो नमो(१६) नमः श्वभ्यः श्वपतिभ्यश्च वो नमः(१७)" इति। पक्षिपुञ्जानां घातकाः पुञ्जिष्टाः। मत्स्यघातिनो निषादाः। शुनां गलेषु बद्धानां पाशानां धारकाः श्वनयः।

अत्र द्वितीयानुवाको लीलार्थदेवतामूर्त्तिप्राधान्येन स्तोतुं प्रवृत्तः। तृतीयानुवाकश्चोरमूर्त्तिप्राधान्येन स्तोतुं प्रवृत्तः। चतुर्थोऽनुवाको नानाजातिप्राधान्येनेति विभागो द्रष्टव्यः॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये चतुर्थकाण्डे पञ्चमप्रपाठके चतुर्थोऽनुवाकः॥०॥

---

नमो भवाय च रुद्राय च नमः शर्वाय च पशुपतये च नमो नीलग्रीवाय च शितिकण्ठाय च नमः कपर्दिने च व्युप्तकेशाय च नमः सहस्राक्षाय च शतधन्वने च नमो गिरिशाय च शिपिविष्टाय च नमो मीढुष्टमाय चेषुमते च नमो ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे च नमो वृद्धाय च संवृध्वने च॥ १॥

नमो अग्रियाय च प्रथमाय च नम आशवे चाजिराय च नमः शीघ्रियाय च शीभ्याय च नम ऊर्म्याय चावस्वन्याय च नमः स्रोतस्याय च द्वीप्याय च(१-१५) ॥ २ ॥

संवृध्वने च। पञ्चविंशतिश्च ॥ ५ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके पञ्चमोऽनुवाकः ॥ ० ॥

चतुर्थेऽनुवाके उभयतोनमस्काराणि यजूंषि समापितानि; अथ पञ्चममारभ्य नवमान्तेष्वनुवाकेषु नमस्कारोपक्रमाण्येव यजूंषि आम्नायन्ते। तत्र पञ्चमानुवाके प्रथमं यजुरारभ्य पञ्चदशान्तानि यजूंषि आह,—"नमो भवाय च रुद्राय च(१) नमः शर्वाय च पशुपतये च(२) नमो नीलग्रीवाय च शितिकण्ठाय च(३) नमः कपर्दिने च व्युप्तकेशाय च(४) नमः सहस्राक्षाय च शतधन्वने च(५) नमो गिरिशाय च शिपिविष्टाय च(६) नमो मीढुष्टमाय चेषुमते च(७) नमो ह्रस्वाय च वामनाय च(८) नमो बृहते च वर्षीयसे च(९) नमो वृद्धाय च संवृध्वने च(१०) नमो अग्रियाय च प्रथमाय च(११) नम आशवे चाजिराय च(१२) नमः शीघ्रियाय च शीभ्याय च(१३) नम ऊर्म्याय चावस्वन्याय च(१४) नमः स्रोतस्याय च द्वीप्याय च(१५)" इति। भवन्ति प्राणिनोऽस्मादिति भवः। रुद्रो,—रोदनहेतुभूतं दुःखं द्रावयतीति रुद्रः। शृणोति हिनस्ति पापमिति शर्वः। पशु-

समानान् अज्ञानिनः पुरुषान् पालयतीति पशुपतिः। कालकूट-धारणेन नीलवर्णो ग्रीवैकदेशो यस्यासौ नीलग्रीवः। शितिः श्वेतवर्णाविशिष्टः कण्ठप्रदेशो यस्यासौ शितिकण्ठः। कपर्दो जटाजूटो यस्यास्तीति कपर्द्दी। मुण्डितकेशो व्युप्तकेशः। पाशुपतादिवेषेण कपर्द्दित्वं, यत्यादिवेषेण मुण्डितकेशत्वं। इन्द्रवेषेण सहस्राक्षत्वं। सहस्रभुजावतारेण शतसङ्ख्याकैर्धनुर्भिरुपेतत्वं। गिरौ कैलासे शेते तिष्ठतीति गिरिशः। विष्णुमूर्त्तिधारी शिपिविष्टः, 'विष्णुः शिपिविष्टः' इति श्रुतेः। मेघरूपेणात्यन्तं वर्षयिता मीढुष्टमः। वाणधारक इषुमान्। शरीरेऽल्पप्रमाणत्वं ह्रस्वत्वं। अङ्गुल्याद्यवयवसङ्कोचाद् वामनत्वम्। आकारेण प्रौढ़ो बृहन्। गुणैः सम्वृद्धो वर्षीयान्। वयसाऽधिको वृद्धः। सम्यक् स्तुतिभिर्वर्धितः संवृध्वा। जगदुत्पत्तेः पूर्वमवस्थितोऽग्रियः। सभायां मुख्यः प्रथमः। आशुव्यापी। अजिरो गमनकुशलः। शीघ्रियः शीघ्रगामी। शीभशब्द उदकप्रवाहवाची, तत्र अवस्थितः शीभ्यः। ऊर्मैस्तरङ्गैः स्थित ऊर्म्यः। अवस्वने (ध्वनिरहिते) स्थिरजलेऽवस्थितोऽवस्वन्यः। स्रोतसि (प्रवाहे) स्थितः स्रोतस्यः। द्वीपे वारिमध्यवर्त्तिभूमौ स्थितो द्वीप्यः। अत्रैकैकस्मिन् यजुषि चतुर्थ्यन्ताभ्यां पदाभ्यां नमःशब्दं पृथगन्वेतुं समुच्चयार्थं चकारौ पठितौ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे पञ्चमप्रपाठके पञ्चमोऽनुवाकः॥०॥

---

नमो ज्येष्ठाय च कनिष्ठाय च नमः पूर्वजाय चापरजाय च नमो मध्यमाय चापगल्भाय च नमो जघन्याय च बुध्नियाय च नमः सोभ्याय च प्रतिसर्याय च नमो याम्याय च क्षेम्याय च नम उर्वर्याय च खल्याय च नमः श्लोक्याय चावसान्याय च नमो वन्याय च कक्ष्याय च नमः श्रवाय च प्रतिश्रवाय च, नम आशुषेणाय चाशुरथाय च नमः शूराय चावभिन्दते च नमो वर्मिणे च वरूथिने च नमो बिल्मिने च कवचिने च नमः श्रुताय च श्रुतसेनाय च(१-१५) ॥ ॥ १ ॥

प्रतिश्रवाय च । पञ्चविंशतिश्च ॥ ६ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके षष्ठोऽनुवाकः ॥०॥

पञ्चमेऽनुवाके कानिचिद् अन्यतरतोनमस्काराणि यजूंषि उक्तानि। अथ षष्ठे तथाविधान्येव कानिचिद् यजूंषि उच्यन्ते। तत्र विद्यमानानि पञ्चदश यजूंषि आह,—"नमो ज्येष्ठाय च कनिष्ठाय च(१) नमः पूर्वजाय चापरजाय च(२) नमो मध्यमाय चापगल्भाय च(३) नमो जघन्याय च बुध्नियाय च(४) नमः सोभ्याय च प्रतिसर्याय च(५) नमो याम्याय च क्षेम्याय च(६) नम उर्वर्याय च खल्याय च(७) नमः श्लोक्याय

चावसान्याय च(८) नमो वन्याय च कक्ष्याय च(९) नमः श्रवाय च प्रतिश्रवाय च(१०) नम आशुषेणाय चाशुरथाय च(११) नमः शूराय चावभिन्दते च(१२) नमो वर्मिणे च वरूथिने च(१३) नमो बिल्मिने* च कवचिने च(१४) नमः श्रुताय श्रुतसेनाय च(१५)" इति। विद्यैश्वर्य्यादिभिरधिको ज्येष्ठः। तैः रहितो अल्पः कनिष्ठः। पूर्वं (जगदादौ) हिरण्यगर्भरूपेणोत्पन्नः पूर्व्वजः। अपरस्मिन् (जगदवसानकाले) संहर्त्तुं कालाग्न्यादिरूपेणोत्पन्नोऽपरजः। मध्यकाले देवतिर्यगादिरूपेणोत्पन्नो मध्यमः। अपगल्भो प्रौढ़ेन्द्रियो बालः। जघने (गवादीनां पश्चाद्भागे) वत्सादिरूपेण भवो जघन्यः। बुध्ने (वृक्षादीनां मूले) शाखादिरूपेणोत्पन्नो बुध्नियः। उभाभ्यां पुण्यपापाभ्यां सह वर्त्तत इति सोभ्यो† मनुष्यलोकः। अत एव आथर्वणिका आमनन्ति, 'पुण्येन पुण्यं लोकं नयति पापेन पापमुभाभ्यामेव मनुष्यलोकम्' इति। तत्र भवः सोभ्यः। प्रतिसरो विवाहादौ हस्ते धार्यमाणो रक्षाबन्धः, तमर्हतीति प्रतिसर्यः। यमलोके पापिशिक्षकरूपेण भवो याम्यः। क्षेमो मोक्षः, तमर्हतीति क्षेम्यः। उर्वरा सर्वसस्याढ्या भूमिः, तामर्हति धान्यविशेषरूपेणेति उर्वर्यः। खलो धान्यविवेचनदेशः, तमर्हति मेढ्यादिरूपेणेति खल्यः। श्लोका वैदिकमन्त्राः, तत्प्रतिपाद्यत्वेन तत्र भवः श्लोक्यः। अवसानं वेदान्तः‡, तत्प्रतिपाद्यत्वेन तत्र भवोऽवसान्यः। वने वृक्षादिरूपेण भवो वन्यः। कक्षे लतादिरूपेण भवः कक्ष्यः। श्रूयत इति श्रवः-

---

* संहितायां बिल्मिने इति पाठः।

† अत्र सोभ इति पाठो भवितुं युक्तः।

‡ अवसानवेदान्त इति सर्वत्र पाठो न सम्यक्।

शब्दः, प्रतिश्रवः प्रतिध्वनिः। आशुः शीघ्रगामिनी सेना यस्यासौ आशुषेणः। शीघ्रगामी रथो यस्यासावाशुरथः। शूरो युद्धे धैर्यवान्। अवभिन्दन् वैरिणां प्रहर्त्ता। वर्मी कञ्चुकोपेतः। वरूथी गृहोपेतः। बिल्मं बिलोपेतं युद्धे शिरोरक्षकं, तदस्यास्तीति बिल्मी। कवचः शरीररक्षकः, सोऽस्यास्तीति कवची। श्रुतो वेदेषु प्रसिद्धः। श्रुतौ वेदेषु प्रसिद्धा सेना यस्य सः* श्रुतसेनः॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये चतुर्थकाण्डे पञ्चमप्रपाठके षष्ठोऽनुवाकः॥६॥

---

नमो॑ दुन्दु॒भ्या॑य चाहन॒न्या॑य च॒ नमो॑ धृ॒ष्णवे॑ च प्रमृ॒शाय॑ च॒ नमो॑ दू॒ताय॑ च॒ प्रहि॑ताय च॒ नमो॑ निष॒ङ्गिणे॑ चेषुधि॒मते॑ च॒ नम॑स्ती॒क्ष्णेष॑वे चायु॒धिने॑ च॒ नमः॑ स्वायु॒धाय॑ च सु॒धन्व॑ने च॒ नमः॒ स्रुत्या॑य च॒ पथ्या॑य च॒ नमः॑ का॒ट्या॑य च॒ नीप्या॑य च॒ नमः॒ सूद्या॑य च सर॒स्या॑य च॒ नमो॑ ना॒द्याय॑ च वैश॒न्ताय॑ च॥ १॥

नमः॒ कूप्या॑य चाव॒ट्या॑य च॒ नमो॒ वर्ष्या॑य चाव॒र्ष्याय॑ च॒ नमो॑ मे॒घ्या॑य च विद्यु॒त्या॑य च॒ नम॑ ई॒ध्रिया॑य चात॒प्या॑य च॒ नमो॒ वात्या॑य च॒ रेष्मि॑याय च॒ नमो॑ वास्त॒व्या॑य च वास्तु॒पाय॑ च(१-२१)॥ २॥

---

* यस्याः स इति सर्व्वत्र पाठो न सम्यक्।

वैशन्ताय च । विःशश्च ॥ ७ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके सप्तमोऽनुवाकः ॥७॥

षष्ठेऽनुवाके यानि अन्यतरतोनमस्काराणि यजूंषि उक्तानि, तेभ्योऽन्यानि कानिचित् सप्तमेऽभिधीयन्ते । तत्र विद्यमानानि षोड़श यजूंष्याह,—"नमो दुन्दुभ्याय चाहनन्याय च(१) नमो धृष्णवे च प्रमृशाय च(२) नमो दूताय च प्रहिताय च(३) नमो निषङ्गिणे चेषुधिमते च(४) नमस्तीक्ष्णेषवे चायुधिने च(५) नमः स्वायुधाय च सुधन्वने च(६) नमः स्रुत्याय च पथ्याय च(७) नमः काट्याय च नीप्याय च(८) नमः सूद्याय च सरस्याय च(९) नमो नाद्याय च वैशन्ताय च(१०) नमः कूप्याय चावट्याय च(११) नमो वर्ष्याय चावर्ष्याय च(१२) नमो मेघ्याय च विद्युत्याय च(१३) नम ईध्रियाय चातप्याय च(१४) नमो वात्याय च रेष्मियाय च(१५) नमो वास्तव्याय च वास्तुपाय च(१६)" इति । दुन्दुभौ (भेर्यां) भवः शब्दो दुन्दुभ्यः । आहन्यते ताड्यतेऽनेनेत्याहननं दुन्दुभ्याघातार्थो दण्डः, तत्र ताड़नरूपेणोत्पन्न आहनन्यः । धृष्णुः युद्धे पलायनरहितः । प्रमृशः परसैन्यवृत्तान्तपरामर्शकः । दूतः तद्वृत्तान्तज्ञानकुशलः । प्रहितः स्वामिना प्रेषितः पुरुषः । निषङ्गी खड्गहस्तः । इषुधिमान् वाणाधारयुक्तः । तीक्ष्णा इषवो यस्यासौ तीक्ष्णेषुः । बहूनि आयुधानि अस्य सन्तीत्यायुधी । शोभनमायुधं त्रिशूलरूपं यस्यासौ स्वायुधः ।

शोभनं धन्व* पिनाकरूपं यस्यासौ सुधन्वा। स्रुतिः पादसञ्चारमात्र-योग्यः क्षुद्रमार्गः, तमर्हतीति स्रुत्यः। पन्थाः अश्वादिसञ्चारक्षमः† प्रौढ़ो मार्गः, तमर्हतीति पथ्यः। कुत्सितमटति जलमत्रेति‡ काटः, अल्प-प्रवाहयोग्यः कुल्याप्रदेशः; तत्राल्परूपेण भवः काव्यः। यस्मिन् प्रदेशे पर्वताग्राज्जलं न्यग्भावेन पतति स प्रदेशो नीपः, तत्र भवो नीप्यः। सूदः कर्दमप्रदेशः, तत्रत्य-जलरूपः सूद्यः। सरः प्रसिद्धं, तत्रत्य-जलरूपः सरस्यः। नदीगतजलरूपो नाद्यः। अल्पसरो वेशन्तः, तत्रत्य-जलरूपो वैशन्तः। कूपस्थजलरूपः कूप्यः। अवटस्थजलरूपो ऽवट्यः। वर्षजलरूपो वर्ष्यः। अवर्ष्यः,—वर्षनिरपेक्षसमुद्रादिजलरूपेण अवर्ष्यः। मेघेषु स्थितो मेघ्यः। विद्युता सह चरितो विद्युत्यः। ईध्रं निर्मलरूपत्वेन दीप्यमानं शरदभ्रं, तत्र भव ईध्रियः। आतपेन सह वृष्ट आतप्यः। वातेन सह वृष्टो वात्यः। रिष्यन्ति विनश्यन्ति भूतानि अत्रेति रेष्मः प्रलयकालः, तत्र भवः शर्करापाषाणादिसहितो वृष्टिजलविशेषो रेष्मियः। वसु धनं (गवादिपदार्थरूपं), तत्र तत्कार्य-रूपेणावस्थितो वास्तव्यः। गृहनिर्माणार्था भूमिर्वास्तुः, तत्पालको वास्तुपः॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे पञ्चमप्रपाठके सप्तमोऽनुवाकः॥७॥

---

* अत्र धनुः इति पाठो भवितुं युक्तः।

† पन्थारश्वादिक्षम इति सर्व्वत्र पाठो न सम्यक्।

‡ मन्नेति सर्व्वत्र पाठो न सम्यक्।

नमः सोमाय च रुद्राय च नमस्ताम्राय चारुणाय च नमः शङ्गाय च पशुपतये च नम उग्राय च भीमाय च नमो अग्रेवधाय च दूरेवधाय च नमो हन्त्रे च हनीयसे च नमो वृक्षेभ्यो हरिकेशेभ्यो नमस्ताराय नमः शम्भवे च मयोभवे च नमः शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च ॥ १ ॥

नमस्तीर्थ्याय च कूल्याय च नमः पार्याय चावार्याय च नमः प्रतरणाय चोत्तरणाय च नम आतार्याय चालाद्याय च नमः शष्प्याय च फेन्याय च नमः सिकत्याय च प्रवाह्याय च(१-१०) ॥ २ ॥

शिवतराय च। चिंशच्च ॥ ८ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके अष्टमोऽनुवाकः ॥ ० ॥

सप्तमेऽनुवाके यानि यजूंषि अन्यतरतोनमस्कारानि उक्तानि, तेभ्योऽन्यानि कानिचिदन्यतरतोनमस्काराणि यजूंषि अष्टमे कथ्यन्ते। तत्र विद्यमानानि सप्तदश यजूंषि आह,—"नमः सोमाय च रुद्राय च(१) नमस्ताम्राय चारुणाय च(२) नमः शङ्गाय च पशुपतये च(३) नम उग्राय च भीमाय च(४) नमो अग्रेवधाय च दूरेवधाय च(५) नमो हन्त्रे च हनीयसे च(६) नमो वृक्षेभ्यो

हरिकेशेभ्यो(७) नमः तराय(८) नमः शम्भवे च मयोभवे च(९) नमः शङ्कराय च मयस्कराय च(१०) नमः शिवाय च शिवतराय च(११) नमस्तीर्थ्याय च कूल्याय च(१२) नमः पार्याय चावार्याय च(१३) नमः प्रतरणाय चोत्तरणाय च(१४) नम आतार्याय चालाद्याय च(१५) नमः शष्प्याय च फेन्याय च(१६) नमः सिकत्याय च प्रवाह्याय च(१७)" इति। उमया सह वर्त्तत इति सोमः। रुद्रो रोदनहेतुभूतदुःखं द्रावयति विनाशयतीति रुद्रः। आदित्यरूपेण उदयकालेऽत्यन्तं रक्तः ताम्रः। उदयादूर्द्ध्वम् ईषद्रक्तोऽरुणः। शं सुखं गमयति प्रापयतीति शङ्गः। पशूनां पालयिता पशुपतिः। विरोधिनो नाशयितुं क्रोधयुक्त उग्रः। दर्शनमात्रेण विरोधिनां भयहेतुर्भीमः। अग्रे पुरतो वधोऽस्येति अग्रेवधः, एवं दूरेवधः; पुरतो दूरे वा वर्त्तमानं विरोधिनं अनायासेन हन्तीत्यर्थः। लोकेऽपि यत्र विरोधिनं हन्ति तत्र तद्रूपेणायमेव हन्ता; अत एवेश्वरेणार्जुनं प्रत्युक्तं,-"मयैवेते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन्" इति। संहारकालेऽतिशयेन सर्वेषां हन्ता हनीयान्। 'हरितवर्णानि केशसदृशानि वर्णानि येषां ते हरिकेशाः, तथाविधा ये वृक्षाः कल्पतरुप्रभृतयः, तद्रूपोऽयं रुद्र इत्यर्थः। तारः प्रणवप्रतिपाद्यः। शं (सुखं) भावयति उत्पादयतीति शम्भुः। मयः सुखं भावयतीति मयोभूः। एकं विषयसुखम्, अपरं मोक्षसुखमिति तयोर्विवेकः। पित्रादिरूपेण शं (लौकिकसुखं) करोतीति शङ्करः। आचार्यरूपेण मयो मोक्षसुखं करोतीति मयस्करः। साक्षात्सुखकारित्वमेताभ्यां पदाभ्यामुक्तं। एतन्मुखेन कारयितृत्वं पूर्वाभ्यां

पदाभ्यामिति विवेकः। शिवः कल्याणरूपः, स्वयं निष्कल्मष इत्यर्थः। अतिशयेन शिवः शिवतरः, स्वभक्तान् अपि निष्कल्मषान् करोतीत्यर्थः। तीर्थे प्रयागादौ सन्निहितस्तीर्थ्यः। कूले नदीतीरादौ प्रतिष्ठापितलिङ्गरूपेणावतिष्ठत इति कूल्यः। पारे संसारसमुद्रस्य परतीरे मुमुक्षुभिर्ध्येयत्वेनावतिष्ठत इति पार्यः। अवारे अर्वाक्तीरे संसारस्थितिहेतुकाम्यफलप्रदत्वेनावतिष्ठत इत्यवार्यः। प्रकृष्टेन मन्त्रजपादिरूपेण पापतरणहेतुः प्रतरणः। तत्त्वज्ञानरूपेण हृत्स्नसंसारोत्तारणहेतुरुत्तरणः। सम्भवत्यपि संसारोत्तरणहेतौ तत्त्वज्ञाने तदुपेक्ष्य काम्यकर्मानुष्ठानेन संसारे पुनरागमनम् आतारः, तमर्हतीत्यातार्यः, काम्यफलप्रद इत्यर्थः। अलं सम्पूर्णं कर्म यथा भवति, तथा कर्मफलमत्तीत्यलादो जीवः, 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इति श्रुतेः; तस्य प्रेरकत्वेन तत्सम्बन्धित्वादालाद्यः। शष्पं बालतृणं, गङ्गातीरादावुत्पन्नकुशाङ्कुरादि, तदर्हतीति शष्प्यः। नदीमध्यगतं फेनमर्हतीति फेन्यः। सिकतामर्हतीति सिकत्यः। प्रवाहमर्हतीति प्रवाह्यः। यः पुरुषः श्रद्धालुः सन् स्नानादितत्परो निरन्तरं गङ्गादितीरे वर्त्तते तद्रूप इति शष्प्यादिशब्दानां तात्पर्यार्थः॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये चतुर्थकाण्डे पञ्चमप्रपाठके अष्टमोऽनुवाकः॥०॥

---

3xx 2

नम इरिण्याय च प्रपथ्याय च नमः किꣳशिलाय च क्षयणाय च नमः कपर्दिने च पुलस्तये च नमो गोष्ठ्याय च गृह्याय च नमस्तल्प्याय च गेह्याय च नमः काट्याय च गह्वरेष्ठाय च नमो ह्रदय्याय च निवेष्प्याय च नमः पाꣳसव्याय च रजस्याय च नमः शुष्क्याय च हरित्याय च नमो लोप्याय चोलप्याय च ॥ १ ॥

नम ऊर्व्याय च सूर्म्याय च नमः पर्ण्याय च पर्ण-शद्याय च नमोऽपगुरमाणाय चाभिघ्नते च नम आरि-खदते च प्ररिखदते च नमो वः किरिकेभ्यो देवानाꣳ हृदयेभ्यो नमो विक्षीणकेभ्यो नमो विचिन्वत्केभ्यो नम आनिर्हतेभ्यो नम आमीवत्केभ्यः(१-१९) ॥ २ ॥

उलप्याय च । चयस्त्रिꣳशच्च ॥ ९ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके नवमोऽनुवाकः ॥०॥

अष्टमेऽनुवाके यानि अन्यतरतोनमस्काराणि यजूंषि उक्तानि, तेभ्योऽप्यन्यानि कानिचिन्नवमेऽनुवाके उच्यन्ते। तत्र विद्यमानानि एकोनविंशतिसङ्ख्याकानि यजूंषि आह,—"नम इरिण्याय च प्रपथ्याय च(१) नमः किꣳशिलाय च क्षयणाय च(२) नमः कपर्दिने च पुलस्तये

च(३) नमो गोष्ठ्याय च गृह्याय च(४) नमस्तल्प्याय च गेह्याय च(५) नमः काट्याय च गह्वरेष्ठाय च(६) नमो ह्रदय्याय च निवेष्याय च(७) नमः पाꣳसव्याय च रजस्याय च(८) नमः शुष्क्याय च हरित्याय च(९) नमो लोप्याय चोलप्याय च(१०) नम ऊर्व्याय च सूर्म्याय च(११) नमः पर्ण्याय च पर्णशद्याय च(१२) नमोऽपगुरमाणाय चाभिघ्नते च(१३) नम आखिदते च प्रखिदते च(१४) नमो वः किरिकेभ्यो देवानाꣳ हृदयेभ्यो(१५) नमो विचिन्वत्केभ्यो(१६) नमो विक्षीणकेभ्यो(१७) नम आनिर्हतेभ्यो(१८) नम आमीवत्केभ्य(१९)" इति। इरिणम् ऊषरं, तत्र भव इरिण्यः। प्रपथो बहुभिः सेवितो मार्गः, तत्र भवः प्रपथ्यः। कुत्सिताः क्षुद्राः शिला यत्र प्रदेशे, तादृशः शार्करिलः प्रदेशः किंशिलः। क्षयणो निवासयोग्यो देशः। कपर्दी जटाबन्धनवान्। भक्तानां पुरतस्तिष्ठतीति पुलस्तिः। गवां स्थानं गोष्ठं तत्र भवो गोष्ठ्यः। गृहे भवो गृह्यः। तल्पे खट्वायां शयानः तल्प्यः। गेहे प्रासादे भवो गेह्यः। कुत्सितमटति कण्टकलतादि-पूर्णतया दुष्प्रवेशत्वं प्राप्नोतीति दुर्गमारण्यविशेषः काटः, तत्र भवः काट्यः। गह्वरे विषमे गिरिगुहादौ तिष्ठतीति गह्वरेष्ठः। ह्रदेषु अगाधजलेषु भवो ह्रदय्यः। निवेष्यं नीहारजलं तत्र भवो निवेष्यः। पांसुषु परमाण्ववस्थितः पांसव्यः; रजसि विस्पष्टायां धूल्यामवस्थितो रजस्यः। शुष्केषु काष्ठेषु भवः शुष्क्यः। हरितमार्द्रं, तत्र भवो हरित्यः। लुप्यते तृणादिकमस्मिन्निति लोपः कठिनप्रदेशः, तत्र भवो लोप्यः। उलपा बल्वजतृणादयः, तत्र भव उलप्यः। उर्वी पृथिव्यां भव ऊर्व्यः। शोभना ऊर्मयो यस्या नद्या सेयं सूर्मिः,

तत्र भवः सूर्म्यः। पर्णेषु पत्रेषु भवः पर्ण्यः। शुष्काणां पर्णानां सङ्घातः पर्णशदः, तत्र भवः पर्णशद्यः। अपगुरमाण उद्यतायुधः। अभिघ्नन् प्रहरन्। आखिदन् ईषत्खेदयन्। प्रखिदन् अत्यन्तं खेदयन्। किरन्ति भक्तेभ्यो धनानीति किरिका उदाराः रुद्रावताराः। ते च देवानां हृदयभूताः, सर्वदेवप्रियत्वात्; तादृशेभ्यो 'वो' (युष्मभ्यं) नमः। क्षीणकेभ्यो विपरीता विक्षीणकाः, कदाचिदपि क्षय-रहिता इत्यर्थः। विचिन्वन्ति अपेक्षितमर्थं साधयन्तीति विचिन्वत्काः। 'आ' समन्तात् निःशेषेण हतं पापं यैस्ते आनिर्हताः। 'आ' समन्तात् मीवन्ति* प्राप्नुवन्तीति आमीवत्काः। अत्र 'देवानाꣳ हृदयेभ्यः' इति विक्षीणविचिन्वदानिर्हतामीवत्केषु[†] अप्यनुषज्यते।

पञ्चमानुवाकमारभ्य नवमान्तेष्वनुवाकेषु अन्यतरतोनमस्काराणि बहूनि यजूंषि अभिहितानि। तैः सर्वैः परमेश्वरस्य सार्वात्म्यं प्रतिपादयितुम् एकैकेन यजुषा स्थावरं जङ्गमं चैकैकं रूपमभिहितं। अनुवाकभेदस्तु क्रतोर्बहिःप्रयोगे मन्त्रभेदाभिप्रायेण द्रष्टव्यः। एकैकोऽनुवाक एकैको मन्त्रः। तस्य पुरश्चरणादिप्रकारस्तु रुद्रकल्पेऽभिधास्यते॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे पञ्चमप्रपाठके नवमोऽनुवाकः ॥९॥

---

* 'मीवन्ती' इति सर्व्वत्र पाठो न सम्यक्।

† अत्र विक्षीणक-विचिन्वत्कानिर्हतामीवत्केषु इति पाठो भवितुं युक्तः। 'विक्षीणविचिन्वदानिर्हत अमीवत्केषु' इति सर्व्वत्र पाठो न सम्यक्।

द्रापे अन्धसस्पते दरिद्रन्नीललोहित। एषां पुरुषाणामेषां पशूनां मा भेर्मारो मो एषां किञ्चनाममत्[१]। या ते रुद्र शिवा तनूः शिवा विश्वाहभेषजी। शिवा रुद्रस्य भेषजी तया नो मृड जीवसे[२]। इमाꣳ रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतिं। यथा नः शमसद् द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्॥ ॥ १ ॥

अनातुरं[३]। मृडा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते। यच्छञ्च योश्च मनुरायजे पिता तदश्याम तव रुद्र प्रणीतौ[४]। मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितं। मा नो वधीः पितरं मोत मातरं प्रिया मा नस्तनुवः॥ ॥ २ ॥

रुद्र रीरिषः[५]। मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः। वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तो नमसा विधेम ते[६]। आरात्ते गोघ्न उत पूरुषघ्ने क्षयद्वीराय सुम्नमस्मे ते अस्तु। रक्षा च नो अधि च देव ब्रूह्यधा च नः शर्म यच्छ द्विवर्हाः[७]। स्तुहि ॥ ३ ॥

श्रुतं गर्तसदं युवानं मृगं न भीममुपहत्नुमुग्रं।

मृडा जरित्रे रुद्रस्तवानो अन्यं ते अस्मन् नि वपन्तु सेनाः[८]। परि णो रुद्रस्य हेतिर्वृणक्तु परि त्वेषस्य दुर्मतिरघायोः। अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्व-स्तोकाय तनयाय मृडय[९]। मीढुष्टम शिवतम शिवो नः सुमना भव। परमे वृक्ष आयुधं निधाय कृत्तिं वसान आ चर पिनाकं ॥ ४ ॥

बिभ्रदा गहि[१०]। विकिरिद विलोहित नमस्ते अस्तु भगवः। यास्ते सहस्रꣳ हेतयोऽन्यमस्मन्नि-वपन्तु ताः[११]। सहस्राणि सहस्रधा बाहुवोस्तव हेतयः। तासामीशानो भगवः पराचीना मुखा कृधि[१२] ॥ ५ ॥

अस्मिन्। तनुवः। स्तुहि। पिनाकम्। एकान्न-चिꣳशच्च ॥ १० ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके दशमोऽनुवाकः ॥०॥

द्वितीयानुवाकमारभ्य नवमान्तेष्वनुवाकेषु विविधानि यजूंषि उभयतोनमस्काराणि अन्यतरतोनमस्काराणि चोक्तानि। अथ दशमे-ऽनुवाके ऋग्रूपा मन्त्रा उच्यन्ते। तत्र प्रथमामृचमाह,—"द्रापे अन्धसस्पते दरिद्रं नीललोहित। एषां पुरुषाणामेषां पशूनां मा भे-

मोऽरो मो एषां किञ्चनाममत्(१)" इति। द्रापयति (कुत्सितां गतिं प्रापयति) इति द्रापिः, पापिनो नरकप्रदानेन क्लेशयतीत्यर्थः। अन्धोऽन्नं तस्य पतिः (पालकः), भक्तानामन्नं पालयतीत्यर्थः। दरिद्रत् अकिञ्चनः, स्वयंविरक्त इत्यर्थः। कण्ठे नीलोऽन्यत्र लोहित इति नीललोहितः। एतैः शब्दैः सम्बोध्यमान हे रुद्र, 'एषां' अस्मदीयानां 'पुरुषाणां' (पुत्रपौत्रादीनां) अस्मदीयानां 'पशूनां' (गोमहिष्यादीनाञ्च) समूहं 'मा' 'भेः' (मा भीषय)। 'एषाम्' उक्तानां सर्वेषां मध्ये 'किञ्चन' (एकमपि वस्तु) 'मा अरः' (मा गच्छतु) मा विनश्यत्वित्यर्थः। 'मो' 'आममत्' (मैव रुग्णमभूत्)।

अथ द्वितीयामाह,—"या ते रुद्र शिवा तनूः शिवा विश्वाह-भेषजी। शिवा रुद्रस्य भेषजी तया नो मृड जीवसे(२)" इति। हे 'रुद्र', त्वदीया 'शिवा' (शान्ता) 'तनूः' 'या' विद्यते 'तया' तन्वा 'नः' (अस्मान्) 'जीवसे' (जीवयितुं) 'मृड' (सुखय)। कथं तन्वाः शिवत्वम्?—इति तदुच्यते, यस्मादेवं,—'विश्वाहभेषजी' (सर्वेष्वहःसु रोगदारिद्र्यादेरौषधवद्विनाशहेतुः) तस्मात् 'शिवा'। किञ्च यस्मात् 'रुद्रस्य' तादात्म्यप्राप्तये 'भेषजी' (औषधरूपा),—ज्ञानप्रदानेन जन्ममरणादिदुःखं निवारयति तस्मादप्येषा 'शिवा'।

अथ तृतीयामाह,—"इमाः रुद्राय तवसे कपर्दिने क्षयद्वीराय प्र भरामहे मतिं। यथा नः शमसत् द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम्(३)" इति। 'यथा' (येन प्रकारेण), 'नः' (अस्मदीयाय) 'द्विपदे' (पुत्रपौत्रादिरूपाय मनुष्याय), 'चतुष्पदे' (गोमहिष्यादिरूपाय पशवे) च, 'शम्' 'असत्' (सुखं स्यात्)। किञ्च

'अस्मिन्' 'ग्रामे' 'विश्वं' (सर्वं प्राणिजातं) 'पुष्टं' (सुखपूर्णं) 'अनातुरम्' (उपद्रवरहितं) यथा भवति, तथा वयं 'रुद्राय' (रुद्रार्थं) 'इमां' (पूजाध्यानादिविषयां बुद्धिं) 'प्र भरामहे' (प्रकर्षेण पोषयामः)। कीदृशाय रुद्राय?,—'तवसे' (बलाय), अस्मदपेक्षितं कर्त्तुं समर्थाय इत्यर्थः। 'कपर्दिने' (जटाबन्धयुक्ताय) तापसवेषाय इत्यर्थः। 'क्षयद्वीराय' (क्षीयमाणप्रतिपक्षपुरुषाय) अन्यथाभानरूपपापविनाशहेतवे इत्यर्थः* ।

अथ चतुर्थीमाह,—"मृडा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते। यत् शञ्च योश्च मनुरायजे पिता तदश्याम तव रुद्र प्रणीतौ[४]" इति। हे 'रुद्र', 'नः' (अस्मान्) मृडय इह लोके (सुखय)। 'उत' (अपि च) 'नः' (अस्माकं) परलोकेऽपि 'मयः' (सुखं) कुरु। 'क्षयद्वीराय' (क्षयितास्मदीयपापाय) 'ते' (तुभ्यं) 'नमसा' (नमस्कारेण) 'विधेम' (परिचरेम)। 'पिता' (पालकः) 'मनुः' (प्रजापतिः) 'शञ्च' (सुखञ्च) 'योश्च' (दुःखपृथग्भावञ्च) 'यत्' 'आयजे' (यत्किञ्चित् सम्पादितवान्), तत् सर्वं, वयं हे 'रुद्र',

---

* 'यथा' (येन प्रकारेण) 'नः' (अस्मदीयाय) 'द्विपदे' (पुत्रपौत्रादिरूपाय मनुष्याय), 'चतुष्पदे' (गोमहिष्यादिरूपाय), 'तवसे' (बलाय), अस्मदपेक्षितं कर्तुं समर्थाय इत्यर्थः। 'क्षयद्वीराय' (क्षीयमाणप्रतिपक्षपुरुषाय) पापविनाशहेतवे इत्यर्थः। 'शम्' 'असत्' (सुखं स्यात्)। 'यथा' (येन प्रकारेण) 'अस्मिन्' 'ग्रामे' यस्मिन् वयं वसामः, तस्मिन्, 'विश्वम्' अपि प्राणिजातं, 'पुष्टं' 'अनातुरं' च स्यात्, तेन प्रकारेण 'इमां' 'मतिं' (ईदृशीं बुद्धिं मानसजाख्यां) 'प्र' 'भरामहे', सर्व्वदा तदस्तुत्या आराधयाम इत्यर्थः। कीदृशाय रुद्राय? इति क० सं० पु० पाठः।

'तव' 'प्रणीतौ' (प्रणये, स्नेहातिशये) सति 'अश्याम' (प्राप्नुयाम)।

अथ पञ्चमीमाह,—"मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितं। मा नो वधीः पितरं मोत मातरं प्रिया मा नस्तनुवो रुद्र रीरिषः(५)" इति। हे 'रुद्र', 'नः' (अस्मदीयं) 'महान्तं' पुरुषं (स्थविरं पुरुषं*), 'मा' 'रीरिषः' (मा हिंसीः)। 'उत' (अपि च) 'नः' (अस्मदीयं) 'अर्भकं' (बालकं) 'मा' 'रीरिषः'। किञ्च 'नः' (अस्मदीयं) 'उक्षन्तं' (सेचनसमर्थं) युवानं पुरुषं 'मा' 'रीरिषः'। 'उत' (अपि च) 'नः' (अस्मदीयं) 'उक्षितं'† (गर्भस्थं) 'मा रीरिषः'। 'नः' (अस्मदीयं) 'पितरं' 'मा वधीः'। 'उत' (अपि च) 'मातरं' 'मा वधीः', 'नः' (अस्मदीयाः) 'प्रियाः' च 'तनुवः' (शरीराणि) 'मा' 'रीरिषः'।

अथ षष्ठीमाह,—"मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः। वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तो नमसा विधेम(६)" इति। हे 'रुद्र', 'नः' (अस्मदीये) 'तोके' (अपत्यमात्रे) 'तनये' (विशेषतः पुत्रे) 'मा' 'रीरिषः' (मा हिंसां कुरु)। 'नः' (अस्मदीये) 'आयुषि' 'मा' 'रीरिषः'। 'नः' (अस्मदीयासु) 'गोषु' 'मा' 'रीरिषः'। 'नः' (अस्मदीयेषु) 'अश्वेषु' 'मा' 'रीरिषः'। 'भामितः' (क्रुद्धः सन्) 'नः' (अस्मदीयान्) 'वीरान्' भृत्यान् 'मा' 'वधीः'। वयं 'हविष्मन्तः' (हविर्युक्ताः) ते (तुभ्यं) 'नमसा' (नमस्कारेण) 'विधेम' (परिचरेम)।

---

* इदं पुरुषपदं क॰ सं॰ पुस्तके नास्ति।

† उक्षन्तमिति सर्व्वत्र पाठो न सम्यक्।

अथ सप्तमीमाह,—"आरात्ते गोघ्न उत पूरुषघ्ने क्षयद्वीराय सुम्नमस्मे ते अस्तु। रक्षा च नो अधि च देव ब्रूह्यधा च नः शर्म यच्छ द्विवर्हाः(७)" इति। गोघ्ने 'गोघ्नः' तस्य, 'पुरुषघ्ने' (पुत्रपौत्रादि-पुरुषघ्नस्य), 'क्षयद्वीराय' (क्षयितभृत्यस्य), 'ते' (तव) उग्रस्वरूपम् 'आरात्' 'अस्तु' (दूरे तिष्ठतु)। यत्तु 'सुम्नं' (त्वदीयस्वरूपं सुखकरं) तत् 'अस्मे' (अस्मासु) 'अस्तु',—घोराऽन्या शिवाऽन्येति यच्छरीरद्वयम् उक्तं, तयोर्मध्ये यत् घोरं शरीरं, तत् दूरे गच्छतु। किञ्च 'नः' (अस्मान्) 'रक्ष' (सर्वतः पालय)। किञ्च हे 'देव', 'अधि'—'ब्रूहि' (अस्मान् इतरेभ्यो यजमानेभ्योऽधिकान् देवेषु ब्रूहि)। 'उत' (अपि च) 'द्विवर्हाः' (द्वयोर्लोकयोर्वर्द्धयिता) त्वं 'शर्म' 'यच्छ' (सुखं देहि)।

अथाष्टमीमाह,—"स्तुहि श्रुतं गर्त्तसदं युवानं मृगं न भीममुपहत्नुमुग्रं। मृडा जरित्रे रुद्र स्तवानो अन्यं ते अस्मन्नि वपन्तु सेनाः(८)" इति। हे* मदीयं वचः 'श्रुतं', मदीयमात्मन्, रुद्रं 'स्तुहि'। कीदृशं?,—'गर्त्तसदं' (गर्त्तसदृशे हृदयपुण्डरीके सर्वदा तिष्ठन्तं), "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति" इति श्रुतेः। 'युवानं' (नित्यतरुणं) 'उपहत्नुं' (प्रलयकाले सर्वं जगत् संहर्त्तुं) उग्ररूपिणं, तत्र दृष्टान्तः,—'भीमं' 'मृगं' 'न' (भयङ्करं सिंहमिव),—यथा गज-विदारणायोग्रः सिंहो भवति तद्वत्। हे रुद्र, 'स्तवानः' (अस्मदुपमा स्तूयमानः) 'जरित्रे' (जरणशीले देहे) दिने दिने क्षीयमाणे अस्मच्छरीरे 'मृड' (सुखं कुरु)। 'ते' (त्वदीयाः) 'सेनाः' 'अस्मत्' 'अन्यं' वैरिणं 'नि'—'वपन्तु' (विनाशयन्तु)।

---

* अत्र हे 'रुद्र' इति आदर्शपुस्तकपाठो न सम्यक्।

अथ नवमीमाह,—"परि णो रुद्रस्य हेतिर्वृणक्तु परि त्वेषस्य दुर्मतिरघायोः । अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृड़य(९)" इति। हन्यते अनयेति 'हेतिः' आयुधं। 'रुद्रस्य हेतिः' 'नः' (अस्मान्) 'परि'-'वृणक्तु' (परितो वर्जितान् करोतु), कदाचित् मा विध्यत्वित्यर्थः। 'त्वेषस्य' (क्रोधोज्ज्वलितस्य) 'अघायोः' (अघः पापं प्रहाररूपमिच्छतः) रुद्रस्य या 'दुर्मतिः' (उग्रबुद्धिः) सापि अस्मान् परिवृणक्तु। 'स्थिरा' (विरोधिनाशाय या दृढ़ा दुर्मतिः) अस्ति, तां 'मघवद्भ्यः' (हविर्लक्षणान्नयुक्तेभ्यो यजमानेभ्यः) सकाशात् 'अव'-'तनुष्व' (अवततां अपनीतां कुरु)। हे 'मीढ्वः' (कामानामभिवर्षक), 'तोकाय' (अस्मत्पुत्राय) 'तनयाय' (तदीयपुत्राय) च 'मृड़य' (सुखं देहि)।

अथ दशमीमाह,—"मीढुष्टम शिवतम शिवो नः सुमना भव। परमे वृक्ष आयुधं निधाय कृत्तिं वसान आ चर पिनाकं बिभ्रदा-गहि(१०)" इति। हे 'मीढुष्टम' (अतिशयेन सेचक, कामानामभि-वर्षक), हे 'शिवतम' (अतिशयेन शान्तस्वरूप), 'नः' (अस्मान्) प्रति 'शिवः' (शान्तः) 'सुमनाः' (सौमनस्येन स्नेहेन युक्तः) च 'भव'। 'आयुधं' (त्रिशूलादिकं) 'परमे' (अत्युन्नते) 'वृक्षे' (वटाश्वत्यादिरूपे)* 'निधाय' यथाऽस्माभिर्न दृश्यते, तथा अवस्थाप्य, 'कृत्तिं वसानः' (व्याघ्रचर्ममात्रं परिदधानः) 'आ'—'चर' (अस्मदाभिमुख्येनागच्छ)। आगच्छन्नपि 'पिनाकं' 'बिभ्रत्' (भूषणार्थं धनुर्मात्रं हस्ते धारयन्) ज्यावाणादिकं परित्यज्य 'आगहि' (आगच्छ)।

---

* 'वटाश्वत्यादेरूपे' इति सर्व्वत्र पाठो न सम्यक्।

अथैकादशीमाह,—"विकिरिद विलोहित नमस्ते अस्तु भगवः। यास्ते सहस्रꣳ हेतयोऽन्यमस्मन्नि वपन्तु ताः(११)" इति। कीर्यन्ते* भक्तानां सन्निधौ बहुधा प्रक्षिप्यन्त इति विकिरयो धनानि, तानि ददातीति 'विकिरिदः', 'विलोहितः' (लौहित्यरहितः) श्वेत इत्यर्थः। अत एव मान्त्रिकाः पश्चात्तरध्याने स्मरन्ति,—'ध्येयो मुक्तापरागामृतरसकलिताद्रिप्रभवः' इति। यद्वा विशेषेण लोहितो 'विलोहितः' इति, अत एवाघोत्तरध्याने स्मरन्ति, 'काञ्चनाभो ध्येयः पद्मासनस्थः' इति। भगवान् षड्गुणसम्पन्नः, भगशब्दस्य षड्गुणवाचित्वं स्मर्य्यते,—

"ऐश्वर्य्यस्य समग्रस्य धर्म्मस्य यशसः श्रियः।
ज्ञानवैराग्ययोश्चैव षर्णां भग इतीरणा" ॥ इति।

प्रकारान्तरेणापि स्मर्य्यते,—

"उत्पत्तिञ्च विनाशञ्च भूतानामागतिं गतिं।
वेत्ति विद्यामविद्याञ्च स वाच्यो भगवानिति" ॥

यथोक्तविशेषणत्रययुक्त हे रुद्र, 'ते' (तुभ्यं) 'नमः' 'अस्तु'। 'ते' (तव) 'सहस्रं' (सहस्रसङ्ख्याका) 'हेतयः' यानि आयुधानि सन्ति 'ताः' सर्वा 'अस्मत्' 'अन्यं' विरोधिनं 'नि'-'वपन्तु' (विनाशयन्तु)।

अथ द्वादशीमाह,—"सहस्राणि सहस्रधा बाहुवोस्तव हेतयः। तासामीशानो भगवः पराचीना मुखा कृधि(१२)" इति। हे रुद्र, 'तव' 'बाहुवोः' (हस्तयोः) 'हेतयः' 'सहस्रधा' (सहस्रप्रकाराः) 'सहस्राणि' (सहस्रसङ्ख्याकाः) विद्यन्ते; धनुः खड्गस्त्रिशूलमित्येवं

---

* विकीर्य्यन्ते इति पाठो भवितुं युक्तः।

जातिभेदेन सहस्रप्रकारं, एकैकस्यां जातौ बहवः सहस्रसङ्ख्याकाः। हे 'भगवः' (षड्गुणोपेत), त्वं 'ईशानः' समर्थः सन्, तासां हेतीनां 'मुखा' (मुखानि) शल्यानि 'पराचीना' 'कृधि' (अस्मत्तः पराङ्मुखानि कुरु) ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे पञ्चमप्रपाठके दशमोऽनुवाकः ॥०॥

स॒ह॒स्राणि॑ सहस्र॒शो ये रु॒द्रा अधि॒ भूम्या॑म्। तेषा॑ᳪं स॒ह॒स्र॒यो॒ज॒नेऽव॒ धन्वा॑नि तन्मसि[१]। अ॒स्मिन् म॑ह॒त्य॑र्ण॒वे॑ऽन्तरि॑क्षे भ॒वा अधि॑[२] नील॑ग्रीवाः शिति॒कण्ठाः॑ श॒र्वा अ॒धः क्ष॑माच॒राः[३]। नील॑ग्रीवाः शिति॒कण्ठा॒ दिव॑ᳪं रु॒द्रा उप॑श्रिताः[४] ये वृ॒क्षेषु॑ स॒स्पिञ्ज॑रा॒ नील॑ग्रीवा॒ विलो॑हिताः[५]। ये भू॒ताना॒मधि॑पतयो विशि॒खासः॑ कप॒र्दिनः॑[६]। ये अन्ने॑षु वि॒विध्य॑न्ति॒ पात्रे॑षु॒ पिब॑तो॒ जना॑न्[७]। ये प॒थां प॑थि॒रक्ष॑य ऐलबृ॒दा य॒व्युधः॑[८]। ये ती॒र्थानि॑ ॥ १ ॥

प्र॒चर॑न्ति सृ॒काव॑न्तो निष॒ङ्गिणः॑[९]। य ए॒ताव॑न्तश्च॒ भूया॑ᳪंसश्च॒ दिशो॑ रु॒द्रा वि॑ तस्थि॒रे। तेषा॑ᳪं सहस्रयोज॒नेऽव॒

धन्वानि तन्मसि[१०]। नमो रुद्रेभ्यो ये पृथिव्यां ये अन्तरिक्षे ये दिवि येषामन्नं वातो वर्षमिषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वा-स्तेभ्यो नमस्ते नो मृडयन्तु ते यं द्विष्मो यश्च, नो द्वेष्टि तं वो जम्भे दधामि[११-१२]* ॥ २ ॥

तीर्थानि । यश्च । षट् च ॥ ११ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे पञ्चमप्रपाठके एकादशोऽनुवाकः ॥०॥

नमस्ते । नमो हिरण्यबाहवे । नमः सहमानाय । नम आव्याधिनीभ्यः । नमो भवाय च । नमो ज्येष्ठाय च । नमो दुन्दुभ्याय च । नमः सोमाय च । नम इरिण्याय च । द्रापे । सहस्राणि ॥ एकादश ॥ ११ ॥

नमस्ते[१-१] । नमो भवाय च[५-१] । द्रापे[१०-१] । सप्तविंशतिः† ॥ २७ ॥

॥०॥ हरिः ओम् ॥०॥

---

* इदं यजुःत्रयं।

† प्रथमे ६, द्वितीये २, तृतीये २, चतुर्थे २, पञ्चमे २, षष्ठे २ सप्तमे २, अष्टमे २, नवमे २, दशमे ५, एकादशे च २, इति २७।

दशमेऽनुवाके रुद्ररूपाः केचिन्मन्त्रा उक्ताः, अथैकादशे शिष्टा ऋचः शिष्टानि च यजूंषि उच्यन्ते। तत्रादौ दशसङ्ख्याका ऋचः, तासु प्रथमामाह,—"सहस्राणि सहस्रशो ये रुद्रा अधि भूम्यां। तेषाᳪ सहस्रयोजनेऽव धन्वानि तन्मसि[१]" इति। 'भूम्याम्' 'अधि' (भूमेरुपरि) 'ये रुद्राः' 'सहस्रशः' (सहस्रप्रकाराः) 'सहस्राणि' (सहस्रसङ्ख्याकाः) सन्ति। सहस्रश इति जात्युक्तिः; विनायकप्रथम-शैलादयो जातिभेदाः, ते सर्वेऽपि रुद्रविशेषाः, तत्राप्येकस्यां जातौ बहुभिः सहस्रैः सङ्ख्याता मूर्त्तिविशेषाः, 'तेषां' सर्वेषां 'धन्वानि' (धनूंषि) 'सहस्रयोजने' (अस्मत्तः सहस्रयोजनव्यवहिते देशे) 'अव'-'तन्मसि' (अवततज्याकानि स्थापयामः)।

अथ द्वितीयामाह,—"अस्मिन् महत्यर्णवेऽन्तरिक्षे भवा अधि[२]" इति। 'अस्मिन्' दृश्यमाने 'महति अर्णवे' (महासमुद्रसदृशे) प्रौढे 'अन्तरिक्षे' 'अधि'-श्रित्य वर्त्तमाना 'भवाः' (रुद्रमूर्त्तिविशेषाः) ये सन्ति; 'तेषां सहस्रयोजने' इत्युत्तरार्द्धं द्वितीयादिषु नवमान्तासु ऋक्षु अनुषज्यते, तदनुषङ्गद्योतनायैव दशम्यामृचि पुनः पठितम्।

अथ तृतीयामाह,—"नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः[३]" इति। ग्रीवायामेकस्मिन् प्रदेशे नीलवर्णा 'नीलग्रीवाः'। प्रदेशान्तरे श्वेतवर्णाः 'शितिकण्ठाः'। कीदृशाः?—'शर्वाः' (रुद्र-मूर्त्तिविशेषाः)। 'अधः' 'क्षमाचराः' (भूमेरधस्तात् पातालेषु सञ्चरन्ति)। तेषामित्यादि पूर्ववत्।

अथ चतुर्थीमाह,—"नीलग्रीवाः शितिकण्ठा दिवᳪ रुद्रा उपश्रिताः[४]" इति। 'दिवम्' 'उपश्रिताः' (स्वर्गे वर्त्तमानाः)।

अथ पञ्चमीमाह,—"ये वृत्तेषु सस्पिञ्जरा नीलग्रीवा वि-लोहिताः(५)" इति। यथा लोकेष्ववस्थिता रुद्राः, तथा 'वृक्षेषु' अवस्थिताः। तेषु केचित् 'सस्पिञ्जराः' (शष्पवत् बालतृणवत् पिञ्जर-वर्णाः), 'नीलग्रीवाः' (केचित् ग्रीवादेशे नीलवर्णोपेताः), अपरे पुनः 'विलोहिताः' (विशेषेण रक्तवर्णाः), ईदृशा ये सन्ति। तेषामित्यादि।

अथ षष्ठीमाह,—"ये भूतानामधिपतयो विशिखासः कपर्द्दिनः(६)" इति। भूतशब्देन अन्तर्हितशरीराः सन्तो मनुष्योपद्रवकारिणो गण-विशेषा उच्यन्ते, तेषाम् 'अधिपतयः' 'ये' (रुद्राः), तेषु केचित् 'विशिखासः' (मुण्डितमूर्द्धानः), अपरे 'कपर्दिनः' (जटाजूटबन्धनो-पेताः)। तेषामित्यादि।

अथ सप्तमीमाह,—"ये अन्नेषु विविध्यन्ति पात्रेषु पिवतो जनान्(७)" इति। 'ये' (रुद्राः) 'अन्नेषु' भुज्यमानेषु गूढत्वेनावस्थिताः सन्तो 'जनान्' 'विविध्यन्ति' (विशेषेण धातुवैषम्यादिना वाधन्ते)। तथा 'पात्रेषु' (पातव्येषु क्षीरोदकादिषु) गूढत्वेनावस्थिताः 'पिवतः' 'जनान्' 'बिविध्यन्ति'। तेषामित्यादि।

अथाष्टमीमाह,—"ये पथां पथिरक्षय ऐलबृदा यव्युधः(८)" इति। 'ये' रुद्राः 'पथिरक्षयः' (लौकिकवैदिकमार्गाणां रक्षकाः)। नाच केषाञ्चिदेव मार्गाणां किन्तु सर्वेषां 'पथां' ते च रक्षकाः। 'ऐलबृदाः'—(इड़ं अन्नं, तस्य समूह ऐड़ं, ऐड़मेवैलं, तद्बिभ्रतीति ऐलभृतः, ऐलभृत एव 'ऐलबृदाः') अन्नप्रदानेन पोषका इत्यर्थः। ते 'यव्युधः' (यौति मिश्रीभवति विरोधं करोतीति युः शत्रुः युभिः शत्रुभिः सह युध्यन्तीति 'यव्युधः'?) अस्मदनिष्टनिवारका इत्यर्थः। तेषामित्यादि।

अथ नवमीमाह,—"ये तीर्थानि प्रचरन्ति सृकावन्तो नि-षङ्गिणः(९)" इति। 'ये' रुद्राः 'तीर्थानि' (काशीप्रयागादीनि) रक्षितुं 'प्रचरन्ति'। कीदृशा रुद्राः?—'सृकावन्तः' (सृका चुरिका* हस्ते ध्रियमाणा तीक्ष्णाग्रा, आयुधविशेषः) तद्युक्ताः केचित्। परे तु 'निषङ्गिणः' (खड्गयुक्ताः)। तेषामित्यादि।

अथ दशमीमाह,—"य एतावन्तश्च भूयाꣳसश्च दिशो रुद्रा वि तस्थिरे। तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि(१०)" इति। 'ये' रुद्राः 'एतावन्तश्च' ('सहस्राणि सहस्रशः' इत्यादृग्भिर्यावन्त उक्ता-स्तावन्तोऽपि) 'भूयांसश्च' (इतोऽप्यधिका अन्ये बहवोऽपि) 'दिशः' 'वि'-'तस्थिरे' (सर्वा दिशः प्रविश्य स्थिताः)। तेषामित्यादि पूर्ववत्।

इत्थं दशसङ्ख्याका ऋच उक्ताः। अथ त्रीणि यजूंषि उच्यन्ते,—"नमो रुद्रेभ्यो ये पृथिव्यां ये अन्तरिक्षे ये दिवि येषामन्नं वातो वर्षमिषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशो-र्द्ध्वास्तेभ्यो नमस्ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि(११-१३)" इति। तत्र पृथिव्यादिलोकभेदेनोद्दिष्टभेदाद् दिग्भेदाच्च यजुस्त्रयं द्रष्टव्यं। तदा एवं पाठः सम्पद्यते,—'नमो रुद्रेभ्यः' इत्युपक्रम्य 'ये पृथिव्यां' 'येषामन्नम्' 'इषवः' इत्याद्यो मन्त्रः। 'ये अन्तरिक्षे' 'येषां' 'वातः' 'इषवः' इति द्वितीयो मन्त्रः। 'ये दिवि' 'येषां' 'वर्षमिषवः' इति तृतीयो मन्त्रः। 'तेभ्यः' 'दश प्राचीः' इति सर्वत्र समानं। 'ये' रुद्राः 'पृथिव्यां' वर्त्तन्ते, तेष्वपि रुद्रेषु येषां रुद्रविशेषाणाम् 'अन्नम्' एव 'इषवः' (बाणाः),—

* छुरिका इति का॰ ख॰ पु॰ पाठः।

अपथ्यान्नभक्षणे प्रवर्त्य वा अन्नार्थं चौर्यं कारयित्वा वा यान् हिंसन्ति, तान् प्रति हिंसकानां रुद्राणाम् अन्नमेवेषवः, 'तेभ्यः' पृथिव्यां स्थितेभ्योऽन्नवाणेभ्यश्च रुद्रेभ्यो 'नमः'। तथा 'ये' रुद्राः 'अन्तरिक्षे' वर्त्तन्ते, तेषामपि मध्ये 'येषां' 'वातः' 'इषवः' (तीव्रेण वायुना रोगानुत्पाद्य हिंसन्ति) 'तेभ्यः' अन्तरिक्षवर्त्तिभ्यो वातेभ्यश्च रुद्रेभ्यः 'नमः' अस्तु। तथा 'ये' रुद्राः, 'दिवि' वर्त्तन्ते, तेष्वपि येषां रुद्रविशेषाणां 'वर्षम्' एव 'इषवः' (अतिवृष्ट्यनावृष्टिभ्यां प्राणिनो हिंसन्ति), 'तेभ्यः' (दिविस्थितेभ्यो वर्षर्तुभ्यश्च रुद्रेभ्यः) 'नमः' अस्तु। कीदृशो नमस्कारः? इति, स एव विशेष्यते। 'दश प्राचीः',— प्राङ्मुखेनाञ्जलिकरणे दशाङ्गुलयः प्रागग्रा भवन्ति। एवं दक्षिणादिषु ऊर्द्ध्वान्तेषु योज्यं। ईदृशैरञ्जलिविशेषैः 'तेभ्यः' (रुद्रेभ्यः) 'नमः' अस्तु। 'ते' च रुद्राः 'नः' (अस्मान्) 'मृडयन्तु' (सुखयन्तु)। रुद्राः सन्तः 'यं' (वैरिणं) तूष्णीमवस्थितमपि 'द्विष्मः', 'यश्च' वैरी 'नः' (अस्मान्) तूष्णीमवस्थितानपि 'द्वेष्टि', 'तम्' (उभयविधं वैरिणं) हे रुद्राः, 'वः' (युष्माकं) 'जम्भे' (विदारितास्ये) 'दधामि' (स्थापयामि)।

तमिममेकादशानुवाकात्मकं रुद्राध्यायं विनियुङ्क्ते,—"रुद्रो वा एष यदग्निः स एतर्हि जातो यर्हि सर्वश्चितः स यथा वत्सो जातः स्तनं प्रेप्सत्येवं वा एष एतर्हि भागधेयं प्रेप्सति तस्मै यदाहुतिं न जुहुयादध्वर्युञ्च यजमानञ्च ध्यायेच्छतरुद्रीयं जुहोति भागधेयेनैवैनꣳ शमयति नार्त्तिमार्च्छत्यध्वर्युर्न यजमानः" (५।४।३अ) इति। यस्मिन् काले चीयमानः 'अग्निः' अशेषचितिनिष्पादनेन 'सर्वश्चितः' भवति, तस्मिन् काले अयमग्निरुत्पन्नो भवति, सोऽयमुत्पन्नोऽग्निरेव

'रुद्रः' इत्युच्यते,—देवैः स्वकीयवामवस्त्रदाने सति रोदनात् प्राणिनां सुरोदनहेतुदुःखस्य द्रावणाद्वा अग्निरेव रुद्रः; 'यथा' लोके 'जातः' 'वत्सः' तदानीमेव 'स्तनं' प्राप्तुमिच्छति, एवमेव 'एष' एतस्मिंश्चिति-सम्पूर्त्तिकाले समुत्पन्नो रुद्रनामकोऽग्निः स्वकीयं भागं इच्छति; तस्मात् अग्नये कस्यास्विदाहुतेरहोमे 'यजमानम्' 'अध्वर्युञ्च' भचयितुं 'ध्यायेत्' अग्निः, अतस्तत्परिहाराय 'शतरुद्रीयं*' जुहुयात्। शत-मित्यपरिमितत्वं लक्ष्यते, अपरिमिता रुद्रा यस्मिन्नध्याये प्रति-पाद्यन्ते, सोऽध्यायः शतरुद्रीयः, तेन होमे सति स्वकीयभागेन रुद्रस्य तुष्टत्वादध्वर्युयजमानौ न म्रियेते।

अथ होमद्रव्यं विधत्ते,—"यद्ग्राम्याणां पशूनां। पयसा जुहुयाद् ग्राम्यान् पशून् शुचाऽर्पयेद्यदारण्यानामारण्यान् जर्त्तिलयवाग्वा वा जुहुयाद्गवीधुकयवाग्वा वा न ग्राम्यान् पशून् हिनस्ति नारण्यान्" (५।४।३अ०) इति। 'शुचा अर्पयेत्' (सन्तापेन रोगेण योजयेत्)। 'जर्त्तिलाः' (आरण्यतिलाः)। 'गवीधुकाः' (आरण्यगोधूमाः)।

पक्षान्तरं विधत्ते,—"अथो खल्वाहुरनाहुतिर्वै जर्त्तिलाश्च गवी-धुकाश्चेत्यजक्षीरेण जुहोत्याग्नेयी वा एषा यदजाहुत्यैव जुहोति न ग्राम्यान् पशून् हिनस्ति नारण्यान्" (५।४।३अ०) इति। अदनीयं यद्द्रव्यं तदेव आहुतियोग्यं,—'यदन्नः पुरुषो भवति तदन्नास्तस्य देवताः' इति न्यायात्। जर्त्तिला गवीधुकाश्च मनुष्यैर्नाद्यन्ते, तस्मान्नाहुतियोग्या इति 'आहुः', (पूर्वपक्षोपन्यासादूर्द्ध्वमाहुः)। तस्मादुभयं परित्यज्य

---

* रुद्रियमिति सर्व्वत्र पाठो न सम्यक्।

अजाचीरेण* जुहुयात्। अजाग्न्योरुभयोः प्रजापतिमुखजन्यत्वेन साम्यात् इयमजा आग्नेयी यजने आकृतियोग्यैव। अतस्तत्चीरद्रव्येण जुहोति, ग्राम्यारण्यपयसोः स्वीकारात् तेऽपि पशवो न हिंस्यन्ते।

होमसाधनभूतां जुह्वमपवदितुं साधनान्तरं विधत्ते,—"अङ्गिरसः सुवर्गं लोकं यन्तोऽजायां घर्मं प्रासिञ्चन् सा शोचन्ती पर्णं परा-जिहीत सोऽर्कोऽभवत् तदर्कस्यार्कत्वमर्कपर्णेन जुहोति सयोनित्वाय" (५।४।३अ०)इति। प्रवर्ग्यकाले महावीरे सन्तप्य-घृतं चीरसहितं घर्मः, तं 'घर्मं' प्रयाणव्यग्रा 'अङ्गिरसः' प्रमादात् 'अजायां' प्रकर्षेणासिञ्चन्। 'सा' 'शोचन्ती' (सापि अजा तेन उष्णघृतेन तप्यमाना) पर्णसदृशं स्वकीयं रोमसङ्घं भूमावपातयत्। स च रोमसङ्घातो 'अर्कः' प्रसिद्धार्करूपेण प्ररूढः। अर्चनीयेन पूज्येन प्रवर्ग्यघृतेन तथाविधेन अजारोमसङ्घातेन चोत्पन्नत्वादस्य स्थावरस्य अर्कनाम सम्पन्नं। तेन 'अर्कपर्णेन' होमे सति पर्णचीरयोरुभयोरप्यनन्यकार्यत्वात् समानयोनित्वं सम्पाद्यते।

होमकाले कञ्चिद्विशेषं विधत्ते,—"उदङ् तिष्ठन् जुहोत्येषा वै रुद्रस्य दिक् स्वायामेव दिशि रुद्रं निरवदयते चरमायामिष्टकायां जुहोत्यन्तत एव रुद्रं निरवदयते" (५।४।३अ०)इति। अन्त्यप्रदेश-वर्त्तिनी चरमेष्टका, सा च सूत्रकारेण दर्शिता,—'उत्तरस्य पचस्य उत्तरापरस्याꣳ स्रक्त्यां विकर्णीꣳ स्वयमातृण्णायाम्' इति। अन्त्य-देशगतेन होमेन क्रूरमिमं 'रुद्रम्' 'अन्तत एव' निःसारयति।

रुद्राध्याये होमसाधनं मन्त्रविभागं विधत्ते,—"त्रेधा विभक्तं जुहोति त्रय इमे लोका इमानेव लोकान्त्समावद्वीर्य्यान् करोति"

---

* अजक्षीरेण इति पाठो भवितुं युक्तः।

(५।४।३अ०) इति। तत्र त्रेधाविभाग एवं करणीयः,—"नमस्ते रुद्र" इत्यारभ्य "सभापतिभ्यश्च वो नमः" इत्यन्तः प्रथमो भागः। "नमो अश्वेभ्यः" इत्यारभ्य "अवार्याय च" इत्यन्तो द्वितीयो भागः। "नमः प्रतरणाय च" इत्यारभ्य "य एतावन्तश्च" इति ऋचा सहितः तृतीयो भागः।

त्रिष्वप्याहुतिषु क्रमेण जानुदघ्नादिदेशेषु स्रुग्धारणं हस्ताभिनयेन विधत्ते,—"इयति अग्रे जुहोति अथ इयति अथ इयति त्रय इमे लोका एभ्य एवैनं लोकेभ्यः शमयति" (५।४।३अ०) इति।

नमो रुद्रेभ्यो ये पृथिव्यामित्यादियजुस्त्रयसाध्यं होमं विधत्ते,—"तिस्र उत्तरा आहुतीर्जुहोति षट् सम्पद्यन्ते षड्वा ऋतव ऋतुभिरेवैनꣳ शमयति" (५।४।३अ०) इति।

पूर्वोत्तरपक्षभङ्ग्या अनुपरिक्रम्य होमं विधत्ते,—"यदनुपरिक्रामं जुहुयादन्तरवचारिणꣳ रुद्रं कुर्यादथो खल्वाहुः कस्यां वा अह दिशि रुद्रः कस्यां वेत्यनुपरिक्राममेव होतव्यमपरिवर्गमेवैनꣳ शमयति"(५।४।३अ०) इति। 'अनुपरिक्रामं' (अनुक्रमेण परितो भ्रमणं कृत्वा) यदि 'जुहुयात्', तदानीं तं 'रुद्रं' 'अन्तरवचारिणम्' (अग्निक्षेत्रस्य मध्ये प्रविश्य चरन्तं) कुर्यात्। स च प्रविष्टः क्रूरत्वात् उपद्रवं करोत्येव। तस्मात् परिभ्रमणं न कर्त्तव्यमिति पूर्वः पक्षः। अथोशब्दः सिद्धान्तोपक्रमार्थः,—अभिज्ञास्त्वेवम् 'आहुः'। खलु-अह* शब्द उपन्यस्तपक्षनिराकरणद्योतनार्थः,—यदुक्तं पूर्वपक्षिणा, तन्न

---

* अत्र अभिज्ञास्त्वेयमाहुः। खलु-अह-शब्द इति सर्व्वत्र पाठो न सम्यक्।

भवतीत्यर्थः। अयं 'रुद्रः' सर्वत्र सञ्चरन् कदा 'कस्यां' 'दिशि' वर्त्तते, कस्यां वा न वर्त्तत इति को ज्ञातुं समर्थः, अतो रुद्रमन्वेष्टुम् अनुक्रमेण परिभ्रमणं कृत्वैव होतव्यं। तथा सति परितो यत्र-क्वापि स्थितं रुद्रं अवर्जयित्वैव शान्तं करोति। शान्तत्वादेव अन्तः प्रविश्य यं,* रुद्रः सन् अन्तः सञ्चरन् न उपद्रवं करोतीत्यर्थः।

"नमो रुद्रेभ्यः" इत्यादिमन्त्राणां यजमानवाचनं विधत्ते,—"एता वै देवताः सुवर्ग्या या उत्तमास्ता यजमानं वाचयति ताभिरेवैनꣳ सुवर्गं लोकं गमयति" (५।४।३अ०) इति। एतैर्यजुर्भिः प्रतिपाद्या या देवताः सन्ति, ताः स्वर्गहेतवः। अत एवोत्तमाः (उत्कृष्टाः), चरममन्त्रप्रतिपाद्यत्वाद्वा उत्तमत्वं। ता अध्वर्युर्यजमानं वाचयेत्, तत्प्रतिपादकानि यजूंषि पाठयेदित्यर्थः। तथा सति ताभिरेव देवताभिरेनं यजमानं स्वर्गं प्रापयति।

अर्कपर्णस्य परित्यागदेशं विधत्ते,—"यं द्विष्यात् तस्य सञ्चरे पशूनां न्यस्येद् यः प्रथमः पशुरभितिष्ठति स आर्त्तिमार्च्छति" (५।४।३अ०) इति। 'यं' पुरुषं यजमानः 'द्विष्यात्', 'तस्य' 'पशूनां' 'सञ्चरे' प्रदेशे तदर्कपर्णं परित्यजेत्। तत् त्यक्तं पर्णं यः पशुः प्रथमः इतरेभ्यः पशुभ्यः पूर्वः सन् अभिक्रम्य तिष्ठति, स म्रियेत॥

अत्र विनियोगसंग्रहः,—

प्रश्ने तु पञ्चमे प्रोक्तः शतरुद्रीयहोमकः।
सभापतिभ्य इत्यन्त एको मन्त्रः प्रकीर्त्तितः॥
अवार्यायेत्यन्त एकस्तन्नमसीत्यन्त उत्तरः।

---

* अत्र अयमिति पाठो भवितुं युक्तः।

'नमो रुद्रेभ्यः' इत्येष पृथिव्यादिविभेदतः ॥
त्रेधा भिन्नस्ततो होमे षण्मन्त्रा इह कीर्त्तिताः ॥

अथ मीमांसा,—दशमाध्यायस्याष्टमपादे (४ अ०) चिन्तितम् ।

जर्त्तिलोक्तेश्चतुर्धा किं विकल्पोऽथ पयःश्रुतिः? ।
त्रिकल्पः पूर्ववत्, मैवं वाक्यैक्यात् पयसा सह ॥

अग्नौ श्रूयते,—"जर्त्तिलयवाग्वा वा जुहुयाद् गवीधुकयवाग्वा वा, न ग्राम्यान् पशून् हिनस्ति नारण्यानथो खल्वाहुरनाहुतिर्वै जर्त्तिलाश्च गवीधुकाश्चेत्यजक्षीरेण जुहोत्याग्नेयी वा एषा यदजा आहुत्यैव जुहोति" (५।४।३ अ०) इति। 'जर्त्तिलाः' आरण्यतिलाः । 'गवीधुकाः' आरण्यगोधूमाः । तयोरुभयोर्विकल्पः श्रौत एव । 'अनाहुतिः' इति पूर्वयोः पक्षयोर्दूषितत्वात् होमाभावस्तृतीयः पक्षः । न चात्र जर्त्तिलगवीधुकयोरनाहुतित्ववचनेन पर्युदासः सम्भवति, आहुतिपदान्वितस्य नञ्पदस्य जर्त्तिलगवीधुकपदान्वयायोगात्, पयोविधिश्चतुर्थः पक्षः । एतेषां परस्परविरुद्धानां चतुर्णां गत्यन्तराभावेन षोड़शीग्रहणाग्रहणवद्विकल्पः। इति प्राप्ते ब्रूमः,—पयोविधिना सह जर्त्तिलादेरेकवाक्यत्वेनार्थवादत्वं युक्तं,—ग्राम्यारण्यपशुहिंसाराहित्येन प्रशस्तयोरपि जर्त्तिलगवीधुकयोरग्निहोमं प्रति आहुतित्वं नास्ति, पयसस्तु तदस्ति; इत्थं महाभागं पय इति, तस्मादर्थवादः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं विनाशयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे पञ्चमप्रपाठके एकादशोऽनुवाकः ॥०॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्क-भूपालसाम्राज्यधुरन्धरेण सायनाचार्य्येण विरचिते माधवीये वेदार्थ-प्रकाशनामकतैत्तिरीययजुःसंहिताभाष्ये चतुर्थकाण्डे पञ्चमः प्रपाठकः सम्पूर्णः ॥०॥

॥०॥ ॐ तत्सत् ॥०॥

॥०॥ श्रीगणेशाय नमः ॥०॥

# अथ तैत्तिरीयसंहिताभाष्ये

## चतुर्थकाण्डे षष्ठप्रपाठके

### प्रथमोऽनुवाकः ।

अश्मन्नूर्ज्जं पर्वते शिश्रियाणां वाते पर्ज्जन्ये वरुणस्य शुष्मे । अद्भ्य ओषधीभ्यो वनस्पतिभ्योऽधिसम्भृतां तां न इषमूर्ज्जं धत्त मरुतः सꣳरराणाः(१) । अश्मꣳस्ते क्षुदमुं ते शुगृच्छतु यं द्विष्मः(२) । समुद्रस्य त्वाऽवाकयाग्ने परिव्ययामसि । पावको अस्मभ्यꣳ शिवो भव(३) । हिमस्य त्वा जरायुणाग्ने परिव्ययामसि । पावको अस्मभ्यꣳ शिवो भव(४) उप ॥ १ ॥

ज्मन्नुप वेतसेऽवत्तरन्नदीषु । अग्ने पित्तमपामसि(५) । मण्डूकि ताभिरागहि सेमन्नो यज्ञं । पावकवर्णꣳ शिवं कृधि(६) । पावक आ चितयन्त्या कृपा । क्षामन् रुरुच उषसो न भानुना(७) । तूर्वन्न यामन्नेतशस्य न रण आ यो घृणे । न ततृषाणो अजरः(८) ।

अग्ने पावक रोचिषा मन्द्रया देव जिह्वया । आ देवान् ॥ २ ॥

वक्षि यक्षि च(९) । स नः पावक दीदिवोऽग्ने देवाꣳ इहा वह । उप यज्ञꣳ हविश्च नः(१०) । अपामिदं न्ययनꣳ समुद्रस्य निवेशनं । अन्यं ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव(११) । नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे । अन्यं ते अस्मत्तपन्तु हेतयः । पावको अस्मभ्यꣳ शिवो भव(१२) । नृषदे वट् ॥ ॥ ३ ॥

अप्सुषदे वड् वनसदे वड् बर्हिषदे वट् सुवर्विदे वट्(१३) । ये देवा देवानां यज्ञिया यज्ञियानाꣳ संवत्सरीणमुप भागमासते । अहुतादो हविषो यज्ञे अस्मिन् स्वयं जुहुध्वं मधुनो घृतस्य(१४) । ये देवा देवेष्वधि देवत्वमायन् ये ब्रह्मणः पुर एतारो अस्य । येभ्यो नर्ते पवते धाम किञ्चन न ते दिवो न पृथिव्या अधि स्नुषु(१५) । प्राणदाः ॥ ४ ॥

अपानदा व्यानदाश्चक्षुर्दा वर्चोदा वरिवोदाः । अन्यं ते अस्मत्तपन्तु हेतयः । पावको अस्मभ्यꣳ शिवो भव(१६) । अग्निस्तिग्मेन शोचिषा यꣳसद्विश्वं न्यत्रिणं । अग्निर्नो वꣳसते रयिं(१७) । सैनानीकेन सुविदत्रो

अस्म यष्टा देवाꣳ आयजिष्ठः स्वस्ति(१८)। अदब्धो गोपा उत नः परस्पा अग्ने द्युमदुत रेवद्दिदीहि(१९) ॥

॥ ५ ॥

उप। देवान्। वट्। प्राणदाः। चतुश्चत्वारिꣳशच्च।

॥ १ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे षष्ठप्रपाठके प्रथमोऽनुवाकः ॥०॥

॥०॥ श्रीगणेशाय नमः ॥०॥

---

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
प्रपाठके पञ्चमे हि चितिसम्पूर्त्यनन्तरं।
वर्णितो रुद्रहोमोऽथ षष्ठे वाच्याऽग्निसंस्कृतिः ॥
परिषेचनमारभ्य संस्कारा ये चिकीर्षिताः।
ते पञ्चस्वनुवाकेषु प्रोक्ताः शेषोऽश्वमेधगः ॥

तत्र प्रथमानुवाके परिषेचनविकर्षणादयोऽभिधीयन्ते। कल्पः, 'उदकुम्भमादायाध्वर्युरश्मन्नूर्जमिति त्रिः प्रदक्षिणमग्निं परिषिञ्चन् पर्येति' इति। पाठस्तु,—"अश्मन्नूर्जं पर्वते शिश्रियाणां वाते पर्ज्जन्ये वरुणस्य शुष्मे। अद्भ्य ओषधीभ्यो वनस्पतिभ्योऽधिसम्भृतां तां न

इषमूर्ज्जं धत्त मरुतः सꣳरराणाः(१)" इति। हे 'मरुतः', 'संरराणाः' (सम्यग्दानशीलाः) यूयम् अग्न्यादिगताम् 'ऊर्ज्जं' (बलहेतुम्) 'इषम्' (अन्नं) 'नः' (अस्मभ्यं) 'धत्त' (सम्पादयत)। कीदृशमिषं? 'अश्मन्' (पाषाणे), 'पर्वते' (मेरुविन्ध्यहिमवदादौ),'वाते' (प्रचण्डवायौ),'पर्जन्ये' (वर्षणक्षमे प्रौढ़े मेघे), 'वरुणस्य शुष्मे' (वरुणसम्बन्धिनि बले) च 'शिश्रियाणाम्' (आश्रिताम्),'ऊर्जं' (सारभूतां), तथा 'अद्भ्यः' (जलेभ्यः), 'ओषधीभ्यः' (व्रीहियवादिभ्यः), 'वनस्पतिभ्यः' (उदुम्बरादिभ्यः), सकाशात् 'अधिसम्भृतां' (अधिकत्वेन सम्यक् सम्पादितां)। यदन्नम् अश्मादिष्वाश्रित्य सारत्वेनावतिष्ठते, यच्च जलादिभ्यः सम्पाद्यते, यदपि अस्माकं बलहेतुः, तथाविधमन्नं प्रयच्छ।

तमेतं मन्त्रं विनियुङ्क्ते,—"अश्मन्नूर्जमिति परिषिञ्चति मार्जयत्येवैनमथो तर्पयत्येव स एनं तृप्तोऽक्षुध्यन्नशोचन्नमुष्मिँल्लोक उपतिष्ठते" (५।४।४अ०) इति। 'एनं' अग्निं 'मार्जयति' (शुद्धं करोति), अपि च 'तर्पयति', 'स' 'तृप्तः' अग्निः स्वर्गलोके क्षुत्पीड़ारहितः सन् 'एनं' (यजमानं) सेवते।

एतद्वेदनं प्रशंसति,—"तृप्यति प्रजया पशुभिर्य एवं वेद" (५।४।४अ०) इति।

मन्त्रस्य चतुर्थपादे 'ऊर्जं' 'मरुतः' इति पदद्वयस्य तात्पर्यं दर्शयति,—"तां न इषमूर्जं धत्त मरुतः सꣳरराणा इत्याहान्नं वा ऊर्क् अन्नं मरुतोऽन्नमेवावरुन्धे" (५।४।४अ०) इति। 'ऊर्क्' (बलहेतुः) 'अन्नमेव'; 'मरुतः' अपि अन्नसम्पादकत्वात् 'अन्नं', अत उभयोः पठनादन्नं प्राप्नोति।

कल्पः, 'अश्मन्ँस्ते क्षुदमुं ते शुगृच्छत्विति त्रिः परिषिञ्चन् प्रतिपर्येति' इति। पाठस्तु,—"अश्मन्ँस्ते क्षुदमु ते शुगृच्छतु यं द्विष्मः(१)" इति। हे 'अश्मन्' (इष्टकाभिर्दृढं निष्पादितत्वात् पाषाणसदृश) अग्ने, यत् 'ते' 'क्षुत्' (त्वदीया क्षुत्पीड़ा) या च 'ते' 'शुक्' (त्वदीयः सन्तापः), तदुभयमपि 'यं' वैरिणं 'द्विष्मः', 'अमुं' द्वेष्यम् 'ऋच्छतु' (प्राप्नोतु)।

अस्य मन्त्रस्य तात्पर्यं दर्शयति,—"अश्मन्ँस्ते क्षुदमु ते शुगृच्छतु यं द्विष्म इत्याह यमेव द्वेष्टि तमस्य क्षुधा च शुचा चार्पयति" (५।४।४अ०) इति।

परिषेचनकाले प्रदक्षिणावृत्तिं विधत्ते,—"त्रिः परिषिञ्चन् पर्येति त्रिवृद्वा अग्निर्यावानेवाग्निस्तस्य शुचँ शमयति" (५।४।४अ०) इति। अग्नेराहवनीयादिरूपेण त्रिगुणत्वम्।

परिषेचनरहितामप्रदक्षिणावृत्तिं* विधत्ते,—"त्रिः पुनः पर्येति षट् सम्पद्यन्ते षड्वा ऋतव ऋतुभिरेवास्य शुचँ शमयति" (५।४।४अ०) इति। पूर्वेण प्रदक्षिणत्रयेण सह षट्सङ्ख्यासम्पत्तिः।

कल्पः, 'अवकां वेतसशाखां मण्डूकञ्च दीर्घवंशे प्रबध्य समुद्रस्य त्वाऽवाकयेति सप्तभिरष्टाभिर्वाग्निं विकर्षति' इति। तत्र प्रथमामाह,—"समुद्रस्य त्वा अवाकयाग्ने परिव्ययामसि। पावको अस्मभ्यँ शिवो भव(१)" इति। अवाका शैवालं। हे 'अग्ने', त्वां 'समुद्रस्य' 'अवाकया' (समुद्रसम्बन्धिना शैलेन†) 'परिव्ययामसि' (परितः संवृणोमि) उपरि-

---

* परिषेचनरहिताम् प्रदक्षिणावृत्तिमिति पाठो भवितुं युक्तः।

† शैवालेन इति पाठो भवितुं युक्तः।

भागे सर्वत्र विकर्षामीत्यर्थः। त्वञ्च 'अस्मभ्यम्' (अस्मदर्थं) 'पावकः' (शोधकः) 'शिवः' (शान्तः) च 'भव'।

अथ द्वितीयामाह,—"हिमस्य त्वा जरायुणाग्ने परिव्ययामसि। पावको अस्मभ्यꣳ शिवो भव(४)" इति। हे 'अग्ने', त्वां 'हिमस्य' (शैत्यस्य), 'जरायुणा' (जरायुवदुत्पत्तिस्थानीयेन शैवालेन)। शेषं पूर्ववत्।

अथ तृतीयामाह,—"उप ज्मन्नुप वेतसेऽवत्तरन्नदीष्वा। अग्ने पित्तमपामसि(५)" इति। हे 'अग्ने', 'ज्मा' पृथिवी, तस्याम् 'उप'-गतो वर्त्तसे। तथा 'वेतसे' (वञ्जुलके) 'उप'-गतो वर्त्तसे। तथा 'नदीष्वा' (नदीजष्वपि*) 'अवत्तरन्' (अतिशयेन रक्षकत्वं) यथा भवति, तथा उपगतो वर्त्तसे। तथा त्वम् 'अपां' 'पित्तम्' 'असि' (तेजोऽसि)।

अथ चतुर्थीमाह,—"मण्डूकि ताभिरागहि सेमं नो यज्ञं। पावकवर्णꣳ शिवं कृधि(६)" इति। हे 'मण्डूकि' (मण्डूकजातीये), 'ताभिः' (समनन्तरोक्ताभिः स्त्रीभिः) सह 'आगहि' (आगच्छ)। 'सा' त्वम् 'इमं' (अनुष्ठीयमानं) 'नः' (अस्मदीयं) 'यज्ञं' 'पावकवर्णम्' (अग्निसमानतेजस्कं) 'शिवं' (फलप्रदत्वेन शान्तं) 'कृधि' (कुरु)।

अथ पञ्चमीमाह,—"पावक आ चितयन्त्या कृपा। क्षामन् रुरुचे उषसो न भानुना(७)" इति। हे मण्डूकि, 'पावके' (अस्मिन्नग्नौ) विषयभूते सति 'चितयन्त्या' (चिन्वानया) 'कृपा' (कृपया) सामर्थ्येन युक्ता सती 'आ' (इहागच्छ)। त्वयि आगतायां सत्यां अयमग्निः 'क्षामन्'

---

* 'नदीजलेष्वपि' इति पाठो भवितुं युक्तः।

(चाग्नि पृथिव्यां) 'रुरुचे' (दीप्तिमान्)। तत्र दृष्टान्तः,—'उषसः न भानुना' (उषःकालसम्बन्धिना प्रकाशेन यथा पदार्था दीप्यन्ते तद्वत्)।

अथ षष्ठीमाह,—"तूर्वन्न यामन्नेतशस्य नू रण आ यो घृणे। न ततृषाणो अजरः(८)" इति। 'यः' अग्निः, 'एतशस्य' (गमनकुशलस्य अश्वस्य) 'यामन्' (नियामकः) 'रणे' (युद्धे) 'तूर्वन्न' (परबलानि हिंसन्निव) 'आ'-'घृणे' 'नु' (सर्वतो दीप्यते खलु), सोऽग्निः 'अजरः' (जरारहितः) 'ततृषाणः' 'न' (तृष्णायुक्तो न) भवति। यथा लोके शीघ्रगमनस्वभावम् अश्वं वामहस्तगतेन खलीनेन दृढं नियम्य रणे प्रवर्त्तमानः पुरुषः परबलानि हिंसन् न त्वरते, एवमयमग्निः प्रज्वलति, न कदाचित् जीर्यति, नाप्यसौ तृष्णायुक्तः, किन्तु तृप्त इत्यर्थः।

अथ सप्तमीमाह,—"अग्ने पावक रोचिषा मन्द्रया देव जिह्वया। आ देवान् वक्षि यक्षि च(९)" इति। हे 'पावक' (शोधक), 'देव' (द्योतनात्मक), 'अग्ने', 'रोचिषा' (दीप्तिमत्या) 'मन्द्रया' (स्तुत्यया) 'जिह्वया' (वाचा) 'देवान्' 'आ'—'वक्षि' (आवह), 'यक्षि' (यज)।

अथाष्टमीमाह,—"स नः पावक दीदिवोऽग्ने देवाꣳ इहावह। उप यज्ञꣳ हविश्च नः(१०)" इति। हे 'पावक' (शोधक), 'दीदिवः' (दीप्यमान), 'अग्ने', 'नः' (अस्मदर्थं) 'देवान्' 'इह' (कर्म्मणि) 'आवह', अस्माकम् इमं 'यज्ञं' 'हविश्च' 'उप' (देवसमीपे) प्रापय।

एतैरष्टभिर्मन्त्रैः साध्यं विकर्षणं विधत्ते,—"अपां वा एतत् पुष्पं यद्वेतसोऽपाꣳ शरोऽवका वेतसशाखया चावकाभिश्च विकर्षति आपो वै शान्ताः शान्ताभिरेवास्य शुचꣳ शमयति" (५।४।४अ०) इति।

4 B

योऽयं 'वेतसः', सोऽयम् 'अपां' पुष्पस्थानीयः, अप्सु जायमानत्वात्। याश्च 'अवकाः' (शैवालाभिधाः) ता 'अपां शरः' (सारं* दध्नो मण्डमिव)। तस्मात् एताभ्यामग्निं विकर्षेत्,—चितेरुपरि नानादिक्षु विविधमेतदुभयम् आकर्षेदित्यर्थः)। 'आपो' दाहनिवारकत्वात् 'शान्ताः', अप्सम्बन्धिना द्रव्यद्वयेन विकर्षणे सति 'शान्ताभिः' ताभिः 'एव' 'अस्य' अग्नेः 'शुचं' 'शमयति'।

पूर्व्वोक्तद्रव्यद्वयेन सह मण्डूकस्यापि कर्षणशोधकत्वं विधत्ते,—"यो वा अग्निं चितं प्रथमः पशुरधिक्रामतीश्वरो वै तꣳ शुचा प्रदहो मण्डूकेन विकर्षत्येष वै पशूनामनुपजीवनीयो न वा एष ग्राम्येषु पशुषु हितो नारण्येषु तमेव शुचाऽर्पयति"(५।४।४ अ०) इति। गोमहिषाजादीनां मध्ये 'यः' 'पशुः' इमम् इष्टकाभिः 'चितम्' 'अग्निं' प्रथमम् अधिरुह्य पादेन आक्रामति, 'तं' पशुं सन्तापेन प्रदग्धुम् अयमग्निः प्रभुर्भवति। तस्मात् पश्वन्तरेण विकर्षणं न कुर्यात्, किन्तु 'मण्डूकेन' कुर्यात्। मण्डूकस्य यागयोग्येषु 'ग्राम्येषु' 'आरण्येषु' च पशुषु अनन्तर्भावाल्लोकेऽपि गोमहिषादिवदुपयोगादर्शनाच्च केनाप्युपजीव्यो न भवति। अतस्तेन विकर्षणे तमेव मण्डूकं सन्तापेन योजयति।

तस्मिन् विकर्षणे "समुद्रस्य त्वा" इत्यादीन् मन्त्रान् विनियुङ्क्ते,—"अष्टाभिर्विकर्षत्यष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानेवाग्निस्तस्य शुचꣳ शमयति" (५।४।४ अ०) इति।

---

* सार इति भवितुं युक्तः।

सामान्यतो विहितान् मन्त्रान् विशेषतो विधत्ते,—"पावकवतीभिरन्नं वै पावकोऽन्नेनैवास्य शुचꣳ शमयति" (५।४।४ अ०) इति। 'पावकः अस्मभ्यं शिवो भव' इत्येवं पावकशब्दो यासु ऋक्षु विद्यते, ताः पावकवत्य इत्यर्थः; ताभिः 'विकर्षतीत्यनुवर्त्तते। पावकस्याग्नेरन्नवचनहेतुत्वादन्नत्वम्।

कल्पः, 'अपामिदं न्ययनं, नमस्ते हरसे शोचिषा इति द्वाभ्यामग्निमधिरोहति' इति। तत्र प्रथमामाह,—"अपामिदं न्ययनꣳ समुद्रस्य निवेशनं। अन्यं ते अस्मत् तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव(११)" इति। 'इदं' चित्याग्निस्थानं 'अपां' 'न्ययनं' (नियमेन प्राप्तिस्थानं), यागद्वारापि आपः प्राप्यन्ते। अत एव अपां बहुलत्वात् 'समुद्रस्य' 'निवेशनं' (गृहस्थानीयं)। तद्रूप हे अग्ने, त्वदीया 'हेतयः' अस्मत्तः 'अन्यं' विरोधिनं पुरुषं 'तपन्तु' (क्लेशयन्तु)। 'अस्मभ्यं' (अस्मदर्थं) 'पावकः' (शुद्धः) 'शिवः' (शान्तः) च 'भव'।

अथ द्वितीयामाह,—"नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे। अन्यं ते अस्मत् तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव(१२)" इति। हे अग्ने, 'ते' (तव) 'हरसे' (रसानां हन्त्रे) 'शोचिषे' (शोषणहेतवे) तेजसे 'नमः' 'अस्तु'। किञ्च 'ते' (तव) 'अर्चिषे' (पदार्थान् प्रकाशयित्रे तेजसे) 'नमः' 'अस्तु'। अन्यमित्यादिपूर्ब्ववत्।

एतन्मन्त्रसाध्यात् अधिरोहणात् पूर्ब्वमुपानत्प्रतिमोचनं विधत्ते,—"मृत्युर्वा एष यदग्निर्ब्रह्मण एतद्रूपं यत् कृष्णाजिनं कार्ष्णी उपानहावुपमुञ्चते ब्रह्मणैव मृत्योरन्तर्धत्ते" (५।४।४ अ०) इति। अग्नेर्दाहकत्वान्मृत्युत्वं प्रसिद्धं, 'कृष्णाजिनं' तु 'ब्रह्मणः' (वेदस्य) 'रूपं'; अत

एव दीक्षाप्रकरणे समाम्नायते, "ऋक्सामे वै देवेभ्यो यज्ञायातिष्ठमाने कृष्णो रूपं कृत्वापक्रम्यातिष्ठताम्" (६।१।३अ०) इति। कृष्णाजिनेन निर्मिते 'उपानहौ' 'कार्ष्णी', तयोः प्रतिमोके सति वेदेनैव 'मृत्युः' अन्तर्हितो भवति।

उपानद्द्वयस्य प्रतिमोकाप्रतिमोकयोर्दोषसद्भावात् एकस्या एव प्रतिमोकं विधत्ते,—"अन्तर्मृत्योर्धत्तेऽन्तरन्नाद्यादित्याहुरन्यामुपमुञ्चते ऽन्यान् न अन्तरेव मृत्योर्धत्तेऽवान्नाद्यꣳ रुन्धे" (५।४।४अ०) इति। उभयोरपि अप्रतिमोकतया मृत्युबाधः; प्रतिमोकेन मृत्योरन्तर्धानं,—मृत्युरुपशाम्यति। अस्ति त्वन्यो दोषः, यथा मृत्योरन्तर्धानं, एवमन्नाद्यादपि अन्तर्हितो भवति इत्येवमभिज्ञा आहुः; अतस्तत्परिहारार्थमेकाम् उपानहं उपमुञ्चते, इतरां नोपमुञ्चेत। तथा सति उपमोकेन मृत्योरन्तर्धानं भवति, अनुपमोकेन च अन्नाद्यं प्राप्नोति।

उपानदुपमोकादूर्द्ध्वं यत् चितेरधिरोहणं, तदङ्गभूते द्वितीयेऽस्मिन् मन्त्रे प्रथमार्द्धस्य तात्पर्य्यं दर्शयति,—"नमस्ते हरसे शोचिष इत्याह नमस्कृत्य हि वसीयाꣳसमुपचरन्ति" (५।४।४अ०) इति। लोके हि योऽतिशयेन वसुमान् भवति, तं भृत्या आदौ 'नमस्कृत्य', पश्चात् 'उपचरन्ति'; ततोऽग्नेरप्यत्र नमस्कारो युक्तः।

तृतीयपादस्य तात्पर्य्यं दर्शयति,—"अन्यं ते अस्मत् तपन्तु हेतय इत्याह यमेव द्वेष्टि तमस्य शुचार्पयति" (५।४।४अ०) इति। 'तं' (द्वेष्यम्) 'अस्य' (अग्नेः) सन्तापेन योजयति।

चतुर्थपादस्य तात्पर्य्यं दर्शयति,—"पावको अस्मभ्यꣳ शिवो भवेत्याहान्नं वै पावकोऽन्नमेवावरुन्धे" (५।४।४अ०) इति।

अपामिदं न्यमित्यादिमन्त्रसङ्घाविशिष्टम्* अधिरोहणं विधत्ते,—"द्वाभ्यामधिक्रामति प्रतिष्ठित्यै" (५।४।४अ०) इति ।

सामान्येन विनियुक्तौ मन्त्रौ पुनर्विशेषाकारेण विनियुङ्क्ते,—"अपस्वतीभ्याꣳ शान्त्यै" (५।४।४अ०) इति । "अपामिदम्" इत्येवम् अपशब्दो ययोर्ऋचोस्ते अपस्वत्यौ, ताभ्यामधिरोहणे सति अग्नि-तापस्य शान्तिर्भवति ।

कल्पः, 'नृषदे वडिति पञ्चभिरुत्तरवेदिवदग्निꣳ स्वयमातृण्णां वा व्याघार्य' इति । पाठस्तु,—"नृषदे वट् अप्सुषदे वट् वनसदे वट् बर्हिषदे वट् सुवर्विदे वट्[१२]" इति । नृषु (मनुष्येषु) जाठराग्निरूपेण सीदतीति 'नृषत्', तस्मै 'वट्' (हविर्दत्तं) । वाड़वरूपेणाप्सु सीदतीति 'अप्सुषत्' । दावाग्निरूपेण वने सीदतीति 'वनसत्' । आहवनीयादिरूपेण बर्हिषि यज्ञे सीदतीति 'बर्हिसत्' । आदित्यरूपेण सुवर्गं विन्दते, लभते, इति 'सुवर्वित्' ।

एतान् मन्त्रान् विनियुङ्क्ते,—"नृषदे वडिति व्याघारयति पंक्त्या-हुत्या यज्ञमुखमारभते" (५।४।५अ०) इति । पञ्चसङ्ख्योपेतया आहुत्या यज्ञे मुख्यमङ्गं उपक्रान्तवान् भवति ।

अथ दक्षिणमंसमुत्तरां श्रोणिमित्यादिकं (?) वक्रत्वं विधत्ते,—"अक्ष्णया व्याघारयति, तस्मादक्ष्णया पशवोऽङ्गानि प्रहरन्ति प्रति-ष्ठित्यै" (५।४।५अ०) इति ।

मन्त्रगतं वट्छब्दं प्रशंसति,—"यद्वषट्कुर्याद् यातयामास्य वषट्-कारः स्याद् यन्न वषट्कुर्याद्रक्षाꣳसि यज्ञꣳ हन्युर्वडित्याह परोक्षमेव

---

* न्यग्रनमित्यादिमन्त्रसङ्घाविशिष्टमिति पाठो भवितुं युक्तः ।

वषट्करोति नास्य यातयामा वषट्कारो भवति न यज्ञꣳ रक्षाꣳसि घ्नन्ति" (५।४।५अ०) इति। एतच्च वाक्यं,—"सन्ते वायुर्मातरिश्वा दधातु" (४।१।४अ०) इति मन्त्रे, "तस्मै च देवि वषडस्तु तुभ्यम्" इत्यस्य व्याख्यानरूपत्वं (?) ब्राह्मणेन (५।१।५अ०) उदाहृत्य सम्यग्विवृतम्।

कल्पः, 'ये देवा देवानामिति द्वाभ्यामनु परिचारं दध्ना मधुमिश्रेण दर्भगुमुष्टिनाग्निं व्यवोक्षति' इति। तत्र प्रथमामृचमाह,—"ये देवा देवानां यज्ञिया यज्ञियानाꣳ संवत्सरीणमुप भागमासते। अहुतादो हविषो यज्ञे अस्मिन् स्वयं जुहुध्वं मधुनो घृतस्य(१४)" इति। द्विविधा देवा हविर्भुजः,—इन्द्रवरुणादयः शरीरनिर्वाहकाः, प्राणात्मकाः प्राणापानादयश्च, दीव्यतीति व्युत्पत्तेरुभयत्रापि सम्भवः; उभयेऽप्येते यज्ञियाः, तत्रेन्द्रादयो 'देवाः' यज्ञेन पूज्यत्वाद् यज्ञियाः, प्राणादयस्तु यज्ञेन पूजकत्वाद् यज्ञियाः। एवं सति 'यज्ञियानाम्' इन्द्रादीनां 'देवानां' सम्बन्धिनः प्राणरूपा 'ये' यज्ञियानां* 'संवत्सरीणं' (संवत्सरेण साध्यं) चित्याग्निं 'भागं' (भजनीयम्) 'उप'-'आसते' (सेवन्ते)। प्राणाद्या 'अहुतादः',—हुतं स्वाहाकारे समर्पितम् 'अदन्तीति हुताद इन्द्रादयः, तद्विपरीतत्वात् प्राणा 'अहुतादः'। तथाविधा हे प्राणाः, 'अस्मिन्' 'यज्ञे' 'हविषः' (अस्माभिर्हूयमानस्य) मधुरस्य† भागं 'जुहुध्वं',—मदीयेन स्वाहाकारसमर्पणेन विना 'स्वयम्' एव स्वीकुरुत।

---

* अत्र 'यज्ञीयाः' ते इति किं वा 'यज्ञीयाः' इति पाठो भवितुं युक्तः।

† अत्र 'मधुनो घृतस्य' इति पाठो भवितुं युक्तः।

अथ द्वितीयामाह,—"ये देवा देवेष्वधि देवत्वमायन् ये ब्रह्मणः पुर एतारो अस्य। येभ्यो नर्त्ते पवते धाम किञ्चन न ते दिवो न पृथिव्या अधि स्नुषु(१५)" इति। 'ये' प्राणा 'देवेषु' (इन्द्रादिषु) अपि 'अधि' (अधिष्ठातृत्वेन) 'देवत्वमायन्' (प्राप्ताः) प्राणैरेवाधिष्ठिता एवेन्द्रादिविग्रहा व्यवहरन्तीत्यर्थः। किञ्च 'ये' प्राणाः 'अस्य' 'ब्रह्मणः' (चीयमानस्याग्नेः,परिवृढ़स्य) 'पुरः' 'एतारः' (पुरतो गन्तारः) निर्वाहका इत्यर्थः। न खलु प्राणैर्विना चीयमानोऽग्निर्निर्वोढुं शक्यते। किञ्च 'येभ्यः' 'ऋते' (यान् विना) 'किञ्चन' 'धाम' विशां 'न पवते' (न शुद्धं भवति, 'ते' (प्राणरूपा देवाः) 'दिवो न' (दिव्यपि न) तिष्ठन्ति। 'पृथिव्यां न' (भूमावपि न) तिष्ठन्ति, किन्तु 'स्नुषु' (पर्वतसानुसदृशेषु शरीरगतचक्षुरादिगोलकेषु) आश्रित्य वर्त्तन्ते।

एतन्मन्त्रद्वयं विनियुङ्क्ते,—"हुतादो वा अन्ये देवा. अहुतादोऽन्ये तानग्निचिदेवोभयान् प्रीणाति ये देवा देवानामिति दध्ना मधुमिश्रेणावोक्षति, हुतादश्चैव देवान् अहुतादश्च यजमानः प्रीणाति, ते यजमानं प्रीणन्ति, दध्नैव हुतादः प्रीणाति मधुनाऽहुतादो, ग्राम्यं वा एतदन्नं यद्दधि, आरण्यं मधु, यद्दध्ना मधुमिश्रेणावोक्षत्युभयस्याव-रुध्यै" (५।४।५अ०) इति। 'हुतादः' इन्द्रादयः, 'अहुतादः' प्राणाः, 'तान्' 'उभयान्' अपि 'देवान्' अयम् 'अग्निचित्' प्रीणयितुमर्हति, अतः 'मधुमिश्रेण' 'दध्ना' अवोक्षणं कुर्यात्। तेन चोभये प्रीताः सन्तो यजमानमपि 'प्रीणयन्ति'। तत्रापि इन्द्रादीनां दध्ना प्रीतिः, प्राणानां 'मधुना' प्रीतिः। किञ्च दध्नो ग्राम्यत्वात् मधुनश्चारण्यत्वाद्, उभाभ्याम् अवोक्षणे सति उभयमपि सम्पादितं भवति।

अवोक्षणसाधनं प्रौढदर्भमुष्टिं विधत्ते,—"गुल्मुष्टिनाऽवोक्षति प्राजापत्यो वै गुल्मुष्टिः सयोनित्वाय" (५।४।५अ०) इति । गुरुः स्थूलो दर्भमुष्टिः 'गुल्मुष्टिः', तस्य प्रजापतिवत् प्रौढत्वात् प्राजापत्यत्वम्, अतस्तेनावोक्षणं 'सयोनित्वाय' भवति । अग्निरपि प्रजापतिनोत्पादितत्वात् 'प्राजापत्यः' ।

तेन समानयोनित्वं मन्त्रद्वित्वं प्रशंसति,—"द्वाभ्यां प्रतिष्ठित्यै" (५।४।५अ०) इति ।

अवोक्षणकाले परितो भ्रमणं विधत्ते,—"अनुपरिचारमवोक्षति अपरिवर्गमेवैनान् प्रीणाति" (५।४।५अ०) इति । 'अनुपरिचारम्' (अनुक्रमेण परितश्चरित्वा) 'अपरिवर्गम्' 'एव' (अन्यवयवेषु कस्यापि अवर्जनमकृत्वैव) 'एनान्' (अन्यवयवान्) 'प्रीणाति ।

कल्पः, 'प्राणदा अपानदा इति प्रत्यवरोह्य' इति । पाठस्तु,—"प्राणदा अपानदा व्यानदाश्चक्षुर्दा वर्चोदा वरिवोदाः । अन्यं ते अस्मत् तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव[१६]" इति । यजमानाय प्राणं ददातीति 'प्राणदाः', प्राणं सुस्थिरं करोतीत्यर्थः । एवमुत्तरत्रापि । वर्चो बलं । वरिवः प्रजा । अन्यमित्यादि पूर्ववत् ।

प्राणादिदानप्रसक्तिपूर्व्वकं मन्त्रं व्याचष्टे,—"वि वा एष प्राणैः प्रजया पशुभिर्ऋध्यते योऽग्निं चिन्वन्नधिक्रामति प्राणदा अपानदा इत्याह प्राणानेवात्मन्धत्ते वर्चोदा वरिवोदा इत्याह प्रजा वै वर्चः पशवो वरिवः प्रजामेव पशूनात्मन्धत्ते" (५।४।५अ०) इति । यो यजमानोऽग्निचयनकालेऽग्निमधिरोहति, एष प्राणादिभिर्वियुज्यते, अतः प्राणादिदानं प्रार्थनीयमिति मन्त्रः प्रवर्त्तते । तत्र पूर्वभागेन प्राणादीन्

स्वात्मनि सुस्थितान् करोति। उत्तरभागेन बलवाचिना वर्चःशब्देन पुत्रपौत्रादिरूपा प्रजा उपलक्षिताः, तासु हि सतीषु व्यवहर्तुं प्रबलत्वात्। पूजावाचिना वरिवःशब्देन पशव उपलक्षिताः, तेषु सत्सु क्षीरादिसम्पत्त्या पूज्यो भवति।

कल्पः, 'अग्निस्तिग्मेनेति द्वाभ्यामग्नयेऽनीकवते एकामाहुतिं हुत्वा' इति। तत्र प्रथमामाह,—"अग्निस्तिग्मेन शोचिषा यꣳसद् विश्वं न्यत्रिणं। अग्निर्नो वꣳसते रयिं (१७)" इति। अयं चीयमानः 'अग्निः' 'तिग्मेन शोचिषा' (तीक्ष्णया ज्वालया), 'न्यत्रिणं*' (राक्षसादि) 'विश्वं' (सर्वं) विरोधिनं 'नि'-'यंसत्' (नियमयतु), विनाशयत्वित्यर्थः। 'अत्रम्' अदनशीलं बाधकमनिष्टं, तदस्यास्तीति 'अत्रि†', तं विनाशयतु। किञ्च अयम् 'अग्निः' 'नः' (अस्मदर्थं) 'रयिं' (धनं) 'वंसते' (वसितुं सम्भाजयितुम् इच्छतु)।

अथ द्वितीयामाह,—"सैनानीकेन सुविदत्रो अस्मे यष्टा देवाꣳ आयजिष्ठः स्वस्ति। अदब्धो गोपा उत नः परस्पा अग्ने द्युमदुत रेवद्दिदीहि(१८)" इति। हे 'अग्ने', 'स' त्वं 'द्युमत्' (दीप्यमानं) 'उत' (अपि च) 'रेवत्' (धनयुक्तं‡) गृहक्षेत्रादिकं 'दिदीहि' (प्रकाशय)। कीदृशस्त्वं?—'एनानीकेन' 'सुविदत्रः' (अनेन ज्वालासमूहेन सुष्ठु वेदिता), 'अस्मे' 'देवान्' 'यष्टा' (अस्मदर्थं देवानुद्दिश्य यागनिष्पादकः)। 'स्वस्ति' (विघ्नराहित्यं) यथा स्यात् तथा 'आयजिष्ठः'

---

* अत्र 'अत्रिणं' इति पाठो भवितुं युक्तः।

† अत्र 'अत्री' इति पाठो भवितुं युक्तः।

‡ बहुधनयुक्तम् इति का० ह० पु० पाठः।

(अतिशयेन कृत्स्नयागसमाप्तकारी), 'अदब्धः' (केनाप्यहिंसितः), 'गोपाः' (मन्त्रस्य गोप्ता), 'उत' (अपि च) 'नः' (अस्माकं) 'परस्पाः' (अतिशयेन पालयिता) ॥

अत्र विनियोगसंग्रहः,—

षष्ठे पञ्चानुवाकाः स्युरग्निशेषस्ततः परे ।
चत्वारो ह्यश्वमेधार्था अश्मेति परिषिञ्चति ॥
अश्मंस्ते प्रतिपर्येति, समुद्रेत्यग्निमष्टभिः ।
विकर्षेदित्यपां द्वाभ्यामारोहति चितिं, नृषत् ॥
व्याघारः पञ्चभिः*, 'ये दे' द्वाभ्यामग्निमवोक्षति ।
प्राणदा अवरुह्याग्निस्तिग्मेनेत्याहुतिद्वयम् ॥
प्रथमे त्वनुवाकेऽस्मिन् मन्त्रा द्वाविंशतिरीताः (?) ।

अथ मीमांसा,—नवमाध्यायस्य प्रथमपादे (८अ०) चिन्तितम्,—

"विकर्षप्रोक्षणे कार्ये प्रतीष्टकमुतैकधा ।
आद्योऽवयव्यसत्त्वेन मैवं भूदेशसत्वतः ॥

'इष्टकाभिरग्निं चिनुते' इति श्रूयते, तत्रेदमाम्नायते,—'मण्डूकेन अग्निं विकर्षति । वेतसशाखया चावकाभिश्चाग्निं विकर्षति । हिरण्यशकलसहस्रेणाग्निं प्रोक्षति' इति । शाखाग्रे मण्डूकं बद्ध्वा तेन विकर्षतीत्यर्थः । ते च विकर्षणप्रोक्षणे प्रतीष्टकं कर्त्तव्ये । कुतः ? । चिताभ्य इष्टकाभ्यः पृथग् अग्निशब्दार्थस्य कस्यचिदवयविद्रव्यस्याभावाद् इति चेत् । मैवं,—उपहिताभिरिष्टिकाभिः संयुक्तस्य प्रदेशस्यावयवि-

* 'नृषदे वट्' इत्यत्र (५७३ पृ० ८ प०) वक्ष्यन्ता पञ्च मन्त्रा बोध्याः ।

द्रव्यत्वात्, तस्य चाग्न्याधारत्वेनाग्निशब्दार्थत्वं। तस्मादग्नेरेकत्वात् सकृदेव विकर्षणप्रोक्षणे कुर्यात् ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे षष्ठप्रपाठके प्रथमोऽनुवाकः ॥ ०॥

---

य इमा विश्वा भुवनानि जुह्वदृषिर्होता निषसाद पिता नः। स आशिषा द्रविणमिच्छमानः परमच्छदो वर आविवेश[१]। विश्वकर्मा मनसा यद्विहाया धाता विधाता परमोत सन्दृक्। तेषामिष्टानि समिषा मदन्ति यत्र सप्तर्षीन् पर एकमाहुः[२]। यो नः पिता जनिता यो विधाता यो नः सतो अभ्या सज्जजान॥१॥

यो देवानां नामधा एक एव तꣳ संप्रश्नं भुवना यन्त्यन्या[३]। त आ यजन्त द्रविणꣳ समस्मा ऋषयः पूर्वे जरितारो न भूना। असूर्त्ता सूर्त्ता रजसो वि-माने ये भूतानि समकृण्वन्निमानि[४]। न तं विदाथ यं इदं जजानान्यद् युष्माकमन्तरं भवाति। नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति[५]। परो दिवा पर एना ॥ २ ॥

पृथिव्या परो देवेभिरसुरैर्गुहा यत्। कꣳस्विद्गर्भं

प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे[६]। तमिद्गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे। अजस्य नाभावध्येकमर्पितं यस्मिन्निदं विश्वं भुवनमधि श्रितं[७]। विश्वकर्मा ह्यजनिष्ट देव आदिद्गन्धर्वो अभवद्द्वितीयः। तृतीयः पिता जनितौषधीनां ॥ ३ ॥

अपां गर्भं व्यदधात् पुरुत्रा[८]। चक्षुषः पिता मनसा हि धीरो घृतमेने अजनन्नन्नमाने। यदेदन्ता अददृꣳहन्त पूर्व आदिद्द्यावापृथिवी अप्रथेतां[१]। विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोहस्त उत विश्वतस्पात्। सं बाहुभ्यां नमति संपतत्रैर्द्यावापृथिवी जनयन् देव एकः[२]। किꣳस्विदासीदधिष्ठानमारम्भणं कतमत्स्वित् किमासीत्। यदी भूमिं जनयन् ॥ ४ ॥

विश्वकर्मा वि द्यामौर्णोन्महिना विश्वचक्षाः[३]। किꣳस्विद्वनं क उ स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणो मनसा पृच्छतेदु तद् यदध्यतिष्ठद् भुवनानि धारयन्[४]। या ते धामानि परमाणि यावमा या मध्यमा विश्वकर्मन्नुतेमा। शिक्षा सखिभ्यो हविषि स्वधावः स्वयं यजस्व तनुवं जुषाणः[५]। वाचस्पतिं विश्वकर्माणमूतये ॥ ५ ॥

मनोयुजं वाजे अद्या हुवेम। स नो नेदिष्ठा हवनानि जोषते विश्वशम्भूरवसे साधुकर्मा[६]। विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व तनुवं जुषाणः। मह्यं त्वन्ये अभितः सपत्ना इहास्माकं मघवा सूरिरस्तु[७]। विश्वकर्मन् हविषा वर्द्धनेन त्रातारमिन्द्रमकृणोरवध्यं। तस्मै विशः समनमन्त पूर्वीरयमुग्रो विहव्यो यथासत्[८]। समुद्राय वयुनाय सिन्धूनां पतये नमः। नदीनाꣳ सर्वासां पित्रे जुहुता विश्वकर्मणे विश्वाहामर्त्यꣳ हविः[९] ॥ ६ ॥

जजान। एना। ओषधीनां। भूमिं जनयन्। ऊतये। नमः। नव च ॥ २ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे षष्ठप्रपाठके द्वितीयोऽनुवाकः ॥०॥

प्रथमेऽनुवाके परिषेचनादिकमुक्तं। अथ द्वितीयेऽनुवाके सूक्ताभ्यां होमौ उच्येते। कल्पः, 'षोडशगृहीतेन स्रुचं पूरयित्वा वैश्वकर्मणानि जुहोति। य इमा विश्वा भुवनानि जुह्वदिति चक्षुषः पिता मनसा हि धीर इति नानासूक्ताभ्यां द्वे आहुती। यं कामयेत चिरं पाप्मानो निर्मुच्येतेत्येकैकं तस्येत्युक्तम्' इति। तत्र प्रथमसूक्ते प्रथमामृचमाह,—"य इमा विश्वा भुवनानि जुह्वदृषिर्होता निषसाद पिता नः। स आशिषा द्रविणमिच्छमानः परमच्छदो वर आ-

विवेश[१]" इति। 'यः' विश्वकर्मा परमेश्वरः, 'इमा विश्वा भुवनानि जुह्वत्' (प्रलये पृथिव्यादीन् इमान् सर्वान् लोकान् स्वात्मन्याहुति-प्रक्षेपवत् संहरन्), 'ऋषिः' (अतीन्द्रियद्रष्टा सर्वज्ञः), 'होता' संसार-होमकर्त्ता), 'नः' (अस्माकं) 'पिता' (जनकः), 'निषसाद' (स्वयं स्थितवान्), प्रलयकाले प्राप्ते सति सर्वान् लोकान् संहृत्य अस्माकमपि संहर्त्ता, पुनः स्रष्टा च सन् सर्वज्ञो यः परमेश्वरः स्वयमेक एवासीत्। अत एव सर्वा अप्युपनिषद एवमाहुः, "आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चन मिषत्" (ऐत० १ ख०)। "सदेव सोम्येदमग्र आसीत्, एकमेवाद्वितीयम्" (छा० ६ अ० २ ख०) इत्याद्याः। 'स' (तादृक्) परमेश्वरः 'आशिषा' (बहु स्यां प्रजायेयेत्येवंरूपया पुनः-सिसृक्षया) 'द्रविणमिच्छमानः' (धनोपलक्षितं जगद्भोगमपेक्षमाणः) 'परमच्छदः' (परमं स्वकीयमेवाद्वितीयं पारमार्थरूपमावृण्वन्) 'वरे' (स्वेन सृष्टे शरीरमध्यवर्त्तिनि पुण्डरीकस्थाने) 'आविवेश' (जीवरूपे* प्रविष्टः)। एतच्च सर्वमुपनिषदि (तैत्ति० ६ अ०) आम्नातं,— "सोऽकामयत। बहु स्यां प्रजायेयेति। स तपोऽतप्यत। स तपस्तप्त्वा। इदꣳ सर्वमसृजत। यदिदं किञ्च। तत् सृष्ट्वा। तदेवानुप्राविशत्" इति। एवमन्या अप्युपनिषद उदाहार्याः।

अथ द्वितीयामाह,—"विश्वकर्मा मनसा यद्विहाया धाता विधाता परमोत संदृक्। तेषामिष्टानि समिषा मदन्ति यत्र सप्तर्षीन् पर एकमाहुः[२]" इति। विश्वविषयाणि कर्माणि सृष्टिस्थिति-संहाररूपाणि यस्यासौ 'विश्वकर्मा', तस्य च तेषु कर्मसु सत्यत्वादय

---

* जीवरूपेण इति पाठो भवितुं युक्तः।

एव साधनं, सत्यसङ्कल्पत्वात्। 'यत्' (यस्मात्) अयं 'मनसा*' (सत्यसङ्कल्पमात्रेण) 'विश्वकर्मा', तस्मात् 'धाता', 'विधाता', 'विहाया' इति चोच्यते,—'धाता' उत्पादकः; 'विधाता' पोषकः; विशेषेण च हाति परित्यजतीति 'विहायाः'. संहर्त्तेत्यर्थः। 'उत' (अपि च) अत एव 'परमा' (परमः सर्वेभ्य उत्कृष्टः)। सम्यक् पश्यतीति 'संदृक्' (सर्वज्ञ इत्यर्थः)। 'यत्र' (यस्मिन्) 'परे' (परस्मिन्) ईश्वरे 'सप्तर्षीन्' 'एकमाहुः',—य एते मरीच्यत्रिप्रमुखाः सप्तर्षयो विविधा दृश्यन्ते, ते सर्वे सृष्टेः प्राक् परस्मिन्नेकीभूता इति वेदान्तपारगा आहुः। स च परमेश्वरः, 'तेषां' (सप्तर्षिप्रभृतीनाम्) 'इष्टानि' (अपेक्षितानि) स्थानानि 'इषा' (स्वेच्छामात्रेण) सम्पादयतीति, तेन च-ते महर्षयो हृष्यन्ति।

अथ तृतीयामाह,—"यो नः पिता जनिता यो विधाता यो नः सतो अभ्या सज्जजान। यो देवानां नामधा एक एव तꣳ सम्प्रश्नं भुवना यन्त्यन्या(१)" इति। 'यः' विश्वकर्मा 'नः' (अस्माकं) 'पिता' (पालयिता) न केवलं पालकः, उत्पादकोऽपि। किमनेनास्माकम् उत्पादक इति सङ्कोचेन, 'यः' 'विधाता' (सर्वस्य जगतः उत्पादकः); 'यः' विश्वकर्मा 'नः' (अस्माकम्) उत्पन्नानां 'सत्' वर्त्तमानमिदं भोग्यजातं 'सतो' 'जजान' "सदेव सोम्य" इति श्रुत्युक्तात् स्वस्वरूपात् उत्पादयामास। 'यः' च विश्वकर्मा 'देवानां' 'नामधाः' (स्वयमेव सर्वदेवरूपेणाविर्भूय इन्द्रमित्रादिदेवतानामानि धारयति। अत एव अन्यत्राम्नातं,—"इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो

---

* मानसा इति सर्व्वत्र पाठो न सम्यक्।

गरुत्मान्। एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः” (ऋग्० १म० १६४सू०) इति। अत एव बहूनां देवानां नामानि धारयन्नपि वस्तुतः स्वयम् एक एव। ‘तं’ विश्वकर्माणं परमेश्वरं ‘अन्या’ ‘भुवना’ (तस्माद् अन्यानि सृष्टानि सर्वाणि भुवनानि) ‘सम्प्रश्नं’ यथा भवति तथा ‘यन्ति’ (प्रलयकाले एकत्वं प्राप्नुवन्ति), एकीभावयुक्ते प्रलये क ईश्वरः कानि भुवनानीति एवं प्रश्नं सम्प्रधारणं प्रवर्त्तते विभागाभावेन* श्रुत्यनभिज्ञैर्ज्ञातुमशक्यत्वात्।

अथ चतुर्थीमाह,—“त आ यजन्त द्रविणꣳ समस्मा ऋषयः पूर्वे जरितारो न भूना। असूर्त्ता सूर्त्ता रजसो विमाने ये भूतानि समकृण्वन्निमानि(४)” इति। पूर्वोदाहृतेन विश्वकर्मणा प्रथममुत्पादिता ‘ये’ स्रष्टारः, ‘इमानि’ ‘भूतानि’ (सर्वानेतान् प्राणिनः) ‘समकृण्वन्’ (सम्यगुत्पादितवन्तः)। ‘ते’ ‘पूर्वे’ स्रष्टारः ‘अस्मै’ (सृष्टाय† जगते) ‘द्रविणं’ (धनरूपं भोग्यजातं) ‘सम्’-‘आयजन्त’ (सम्यक् सम्पादितवन्तः)। कीदृशाः ते? ‘ऋषयः’ (अतीन्द्रियद्रष्टारः) सर्वज्ञा इत्यर्थः। ‘भूना’ ‘जरितारो न’ (भूम्ना‡ स्वकीयेन महत्त्वेन कदाचित् अपि जीर्णा न भवन्ति)। कीदृशानि भूतानि? ‘असूर्त्ता’ (असुभिः प्राणैरीरितानि प्राणयुक्तानीत्यर्थः)। तथा ‘रजसो’ ‘विमाने’ ‘सूर्त्ता’ (रञ्जनात्मकस्वभोगस्य विशेषेण प्रमितौ स्वस्वकर्मभिः सुष्ठु प्रेरितानि)।

अथ पञ्चमीमाह,—“न तं विदाथ य इदं जजानान्यद्युष्माकमन्तरं भवाति। नीहारेण प्रावृता जल्प्या चासुतृप उक्थशास-

---

* ‘विभागावेन’ इति पाठो न सम्यक्।

† ‘सृष्टा’ इति सर्व्वत्र पाठो न सम्यक्।

‡ ‘भूमा’ इति सर्व्वत्र पाठो न सम्यक्।

श्चरन्ति(५)" इति । 'यः' विश्वकर्मा 'इदं' 'जजान' (उत्पादितवान्)'. 'तं' विश्वकर्माणं 'न' 'विदाथ' (तेन सृष्टा हे जीवाः, यूयं न जानीथ)। देवदत्तोऽहं यज्ञदत्तोऽहमित्येवं सर्वेऽपि वयमात्मानं विश्वकर्माणं जानीम इति यद्युच्येत, तदसत्, न हि अहंप्रत्ययगम्यं जीवरूपं विश्वकर्मणः परमेश्वरस्य, किन्तु 'युष्माकं' अहंप्रत्ययगम्यादतिरिक्तं सर्ववेदान्तवेद्यम् ईश्वरतत्त्वं 'भवाति' (विद्यते)। तथापि, जीवरूपवत् कुतो न जानीमः ? इति चेत्, 'नीहारेण' 'प्रावृताः' (भवन्तो नीहारसदृशेनाज्ञानेनावृतत्वात् न जानन्ति), यथा नीहारो नात्यन्तमसद्* दृष्टेरावरकत्वात्, नाप्यत्यन्तंसन् काष्ठपाषाणादिरूपान्तरेण सम्बद्धुम् अयोग्यत्वात्; एवमज्ञानमपि नात्यन्तमसत् ईश्वरतत्त्वावरकत्वात्, नापि सत् वाधमात्रनिवर्त्यत्वात्। ईदृशेन अनिर्वचनीयेन अज्ञानेन भवन्तः सर्वेऽपि जीवाः 'प्रावृताः' न केवलं तत्त्वं†, किन्तु 'जल्प्या' 'च' (देवोऽहं मनुष्योऽहं ममेदं क्षेत्रमित्याद्यनृतजल्पनपराश्च)। किञ्च 'असुतृपः' (असुषु तृप्यन्तीति असुतृपः),—केनापि प्रकारेण प्राणान् पोषयित्वा तावतैव तृप्यन्ति भवन्तः, न तु परमेश्वरतत्त्वं विचारयितुं प्रवर्त्तन्ते, न केवलमिह लोके भोगमात्रतृप्तिः, किन्तु 'उक्थशासः' (परलोकेऽपि भोगं सम्पादयितुं नानाविधेषु यज्ञेषु उक्थानि शस्त्राणि शंसन्तीति उक्थशासः), तादृशा भूत्वा भवन्तः 'चरन्ति' (ऐहिकामुष्मिकभोगे सर्वदा प्रवर्त्तन्ते), तस्मादज्ञानमिथ्याज्ञानपराधीनानां भवतां नास्ति तत्त्वज्ञानमित्यर्थः ।

---

* नात्यन्तमसन् इति पाठो भवितं युक्तः ।

† अत्र 'न जानन्तः' इत्येवंरूपः कश्चिदंशः पतित इव प्रतिभाति ।

अथ षष्ठीमाह,—"परो दिवा पर एना पृथिव्या परो देवेभिरसुरैर्गुहा यत्। कꣳस्विद्गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे(६)" इति। 'यत्' ईश्वरतत्त्वं 'गुहा' (हृदयपुण्डरीके) गूढं 'दिवा' 'परः' (द्युलोकादपि दूरे तिष्ठति), 'एना पृथिव्या परः' (अस्याः पृथिव्या अपि दूरे तिष्ठति), 'देवेभिरसुरैः' 'परः' (देवेभ्योऽसुरेभ्यश्च दूरे तिष्ठति), सकारान्तः परःशब्दो दूरवाची। दूरत्वं नाम विलक्षणत्वं, सर्वजगद्विलक्षणत्वात् गुरुशास्त्रमुखैर्ज्ञायत इत्यर्थः। किञ्च 'यत्र' (यस्मिन्) गर्भे 'विश्वे' (सर्वे) अपि 'देवाः' 'समगच्छन्त' (सङ्गताः, सम्भूय वर्त्तन्ते), तं 'कंस्विद्गर्भं' 'आपः' 'प्रथमं' 'दध्रे', अद्भिः पूर्वं धृते गर्भे देवमनुष्यादयः सर्वे प्राणिनो वर्त्तन्ते,—इत्येवं शास्त्रप्रसिद्धिः। सोऽपि गर्भः क इति न ज्ञायते; यदा स्थूलोऽप्ययं जगदाधारो न ज्ञातः, तदा अत्यन्तसूक्ष्मत्वं* न ज्ञायते इति किमु वक्तव्यमित्यभिप्रायः।

अथ सप्तमीमाह,—"तमिद्गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे। अजस्य नाभावध्येकमर्पितं यस्मिन्निदं विश्वं भुवनमधि श्रितम्(७)" इति। इदानीं गुरुशास्त्रानुशासनोपेतेषु पुरुषेषु विद्यमानस्तुतिः अनयाऽभिधीयते। यस्मिन् ब्रह्माण्डगर्भे 'विश्वे' 'देवाः' 'समगच्छन्त', 'तमित्' (तमेव) 'गर्भं' 'आपः' 'प्रथमं' 'दध्रे' (धृतवत्यः)। तद्धारणप्रकार एव स्पष्टीक्रियते,-'अजस्य' (जन्मरहितस्य) परमेश्वरतत्त्वस्य 'नाभौ' (नाभिस्थानीये स्वरूपमध्ये), 'एकं' (किञ्चिद्) बीजम् 'अधि'-'अर्पितं' (अधिकत्वेन स्थापितं); 'यस्मिन्निदं' 'विश्वं' (सर्वम्) अपि 'भुवनम्' 'अधि-श्रितम्' (अधिकत्वेन स्थापितं), तद्बीजमर्पितम्;—

* अत्यन्तसूक्ष्मतत्त्वं इति पाठो भवितुं युक्तः।

"अप एव ससर्जादौ तासु वीजमवासृजत्॥

तदण्डमभवद्धैमं कोटिसूर्य्यसमप्रभम्"। (मनु० १।८-९)

इति।

अथाष्टमीमाह,—'विश्वकर्मा ह्यजनिष्ट देवा आदिद्गन्धर्वो अभवद् द्वितीयः। तृतीयः पिता जनितौषधीनामपां गर्भं व्यदधात् पुरुत्रा(८)" इति। ब्रह्माण्डमध्यगतानामुत्पत्तिरुच्यते। अण्डमध्ये प्रथमं 'विश्वकर्मा' (देवतिर्य्यगादिविश्वभेदकर्त्ता) सत्यलोकवासी चतुर्मुखो देवः 'अजनिष्ट' (उत्पन्नः)। 'आदित्' (अनन्तरमेव) तदपेक्षया 'द्वितीयः' 'गन्धर्वः' 'अभवत्' (उत्पन्नः)। तत ऊर्द्धम् 'ओषधीनां' (पालकः) 'पिता', 'जनिता' (य उत्पादकः) सोमः पूर्वोक्तद्वयापेक्षया 'तृतीयः' 'अभवत्'। तदेवम् 'अपां' 'गर्भं' (ब्रह्माण्डं) परमेश्वरः 'पुरुत्रा' 'व्यदधात्' (बहुधा व्यक्तं कृतवान्)। इत्थमेकं सूक्तं समाप्तम्।

अथ द्वितीयसूक्ते प्रथमामृचमाह,—"चक्षुषः पिता मनसा हि धीरो घृतमेने अजनन्नम्नमाने। यदेदन्ता अददृंहन्त पूर्व आदित् द्यावापृथिवी अप्रथेताम्(१)" इति। 'चक्षुषः' (चक्षुरादेः प्राणसमुदायस्य) 'पिता' (उत्पादकः),'धीरः' (धैर्य्यवान्),'मनसा' (स्वेच्छया). 'घृतं' (घृतवत्) प्राणिनामुपभोगसाधनभूते 'एने' (द्यावापृथिव्यौ) परस्परानुकूल्येन 'नम्नमाने' (नमनोपेते) 'अजनत्' (उत्पादितवान्)। 'यदेत्' (यदैव) 'पूर्वे' (प्रथमाः) 'अन्ता' (अननयुक्ताः, चेष्टावन्तः) चक्षुरादिप्राणा 'अददृंहन्त' (दृढ़ा अभवन्), 'आदित्' (अनन्तरमेव) 'द्यावापृथिवी अप्रथेतां' (द्यावापृथिव्यौ विस्तृते अभूताम्)।

अथ द्वितीयामाह,—"विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतो-

हस्त उत विश्वतस्पात्। सं बाहुभ्यां नमति सम्पतत्रैर्द्यावापृथिवी जनयन् देव एकः[२]" इति। चक्षुरादिप्राणानां द्यावापृथिव्यो-श्चोत्पत्तेरूर्द्ध्वं विश्वरूपधरः परमेश्वर एवं भासते (?)। किमिति?। तदुच्यते,—'विश्वतः' (सर्वतः) चक्षूंषि यस्यासौ 'विश्वतश्चक्षुः', परमेश्वरस्य सर्वप्राण्यात्मकत्वात्, यस्य प्राणिनो ये चक्षुषी, ते तदुपाधिकस्य परमेश्वरस्यैवेति सर्वत्रास्य चक्षूंषि सम्पद्यन्ते। एवं मुखहस्तपादेष्वपि योजनीयं। स तादृश 'एकः' 'देवः' 'द्यावापृथिवी' 'जनयन्' 'बाहुभ्यां' (बाहुस्थानीयाभ्यां) धर्माधर्माभ्यां निमित्तकारणाभ्यां 'सं'-'नमति' (जगत् सर्वं सम्यक् नतं स्वाधीनं करोति)। तथा 'पतत्रैः' (पतनशीलैः) अनित्यैः पञ्चभूतैः उपादानकारणैः 'सं'-'नमति' (जगत् स्वाधीनं करोति)।

अथ तृतीयामाह,—"किंस्विदासीदधिष्ठानमारम्भणं कतमत्स्वित् किमासीत्। यदी भूमिं जनयन् विश्वकर्मा वि द्यामौर्णोन्महिना विश्वचक्षाः[२]" इति। लोके हि घटं चिकीर्षुः कुलालो गृहादिकं किञ्चित् स्थानमधिष्ठाय मृद्द्रव्येण चक्रादिरूपैरुपकरणसाधनैर्घटं निष्पादयति, ईश्वरस्य निरपेक्षत्वात्, सर्वमत्र आक्षिप्यते,—द्यावापृथिव्यो-रुत्पादनवेलायामीश्वरस्य 'अधिष्ठानं' (निवासस्थानं) 'किंस्विदासीत्' (किं नामाभूत्)? न किञ्चिदित्यर्थः। तथा 'आरम्भणं' 'कतमत्स्वित्' (किमासीत्, आरभ्यते अनेनेत्यारम्भणमुपादानकारणं, तदपि कतमत् भवेत्)? न हि द्यावापृथिव्यौ जनयितुं समर्थं किञ्चिदुपादानं सम्भ-वति। तथा दण्डचक्रादिवन्निमित्तमपि 'किमासीत्'? न किञ्चित् सम्भवतीत्यर्थः। 'विश्वचक्षाः' (सर्वद्रष्टा) 'विश्वकर्मा' 'यदी' (यस्मिन्

काले) 'भूमिं' (भूलोकं) 'जनयन्' वर्त्तते, तस्मिन् काले हि 'महिना' (महिम्ना) एवं साधनान्तरं विनैव, विशेषेण 'द्यामौर्णोत्' (सृष्ट्वा द्यावापृथिव्यौ आच्छादितवान्), अचिन्त्यशक्तिरयं परमेश्वरः।

अथ चतुर्थीमाह,—"किंस्विद्वनं क उ स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणो मनसा पृच्छतेदु तद्यदध्यतिष्ठद् भुवनानि धारयन्[४]" इति। लोके हि प्रौढ़ं प्रासादं निर्मिमाणः कस्मिंश्चित् प्रौढ़े वने कञ्चिन्महान्तं वृक्षं छित्वा तक्षणादिना काष्ठैः प्रासादमुच्चैस्तरं सम्पादयति, इह तु परमेश्वरप्रेरितं जगत् सृष्टिः, 'यतः' (यस्मात्) वनात् यं वृक्षमादाय 'द्यावापृथिवी' 'निष्टतक्षुः' (तक्षणेन द्यावापृथिव्यौ निष्पादितवान्), तत् 'वनं' 'किंस्वित्' नाम स्यात्? न किञ्चित् तादृशं सम्भवति। तथा 'क उ स वृक्षः' (तादृशः स प्रौढ़वृक्षोऽपि कः) स्यात्? न किञ्चित् सम्भवतीति। हे 'मनीषिणः' (विद्वांसः) 'मनसा' स्वकीयेन विचिन्त्य 'पृच्छतेत्' (इदं सर्वं पृच्छतैव)। किञ्च ईश्वरः 'भुवनानि' 'धारयन्' 'यदध्यतिष्ठत्' (यत् स्थानमधिष्ठितवान्) 'तत्' अपि सर्वथा पृच्छत। एतस्य प्रश्नस्य सर्वस्याप्युत्तरं ब्राह्मणग्रन्थे सूक्तप्रपाठके (२।८।९।६) "ब्रह्म वनं ब्रह्म स वृक्ष आसीत्" इत्येतस्यामृचि आम्नातं; स्वरूपव्यतिरिक्तवस्त्वादिनिरपेक्षत्वमेवास्योत्तरस्याभिप्रायः। अतोऽत्रापि किंस्विद्वनमित्यादि आक्षेपपरत्वेनैव योजितं। पृच्छतेदित्यस्याप्ययमभिप्रायः,—भवद्भिः पृष्टेऽपि निरपेक्षत्वमेवाभिज्ञा वदिष्यन्तीति।

अथ पञ्चमीमाह,—"या ते धामानि परमाणि याऽवमा या मध्यमा विश्वकर्मन्नुतेमा। शिक्षा सखिभ्यो हविषि स्वधावः स्वयं

यजस्व तनुवं जुषाणः(५)" इति। हे 'विश्वकर्मन्', 'ते' (त्वदीयानि) 'परमाणि' यानि 'धामानि' उत्कृष्टानि सन्ति, यानि मध्यमानि अवमानि च 'धामानि' (स्थानानि) सन्ति, तानि इमानि सर्वाणि स्थानानि 'सखिभ्यः' (सखिवत् प्रियेभ्यः) 'हविषि' (हविःप्रदाननिमित्तं) 'शिक्ष' (उपदिश)। हे 'स्वधावः' (स्वधोपलक्षितहविर्लक्षणान्नवन्), 'विश्वकर्मन्' 'तनुवं' 'जुषाणः' (यजमानशरीरं सेवमानः) 'स्वयं' 'यजस्व',* त्वदनुग्रहमन्तरेण को वान्यो यष्टुं शक्त इत्यर्थः।

अथ षष्ठीमाह,—"वाचस्पतिं विश्वकर्माणमूतये मनोयुजं वाजे अद्या हुवेम। स नो नेदिष्ठा हवनानि जोषते विश्वशम्भूरवसे साधुकर्मा(६)" इति। 'विश्वकर्माणं' परमेश्वरं 'अद्य' (अस्मिन् दिने) 'वाजे' (अन्ने) निमित्तभूते सति 'ऊतये' (भक्षणाय) 'हुवेम' (आह्वयाम)। कीदृशं विश्वकर्माणं? 'वाचस्पतिं' (मन्त्ररूपाया वाचः पालकं), कर्मणि अस्मन्मनसो योजयितारं। 'स' विश्वकर्मा 'नः' (अस्मदीयानि) नेदिष्ठानि अत्यन्तसमीपवर्त्तीनि 'हवनानि' (हवींषि आह्वानानि वा) 'जोषते' (सेवते)। किमर्थं? 'अवसे' (अस्मान् अवितुं रक्षितुं)। कीदृशः सः? 'विश्वशम्भूः' (सर्वस्मिन् जगति सुखस्य भावयिता), 'साधुकर्मा' (अस्मदनुकूलव्यापारवान्)।

अथ सप्तमीमाह,—"विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व तनुवं जुषाणः। मुह्यन्त्वन्ये अभितः सपत्ना इहास्माकं मघवा सूरिरस्तु(७)" इति। हे 'विश्वकर्मन्', अस्मदीयेन 'हविषा' 'वावृधानः'

ऋ

---

* 'जुषस्व' इति सर्वत्र पाठो न सम्यक्।

(अत्यन्तं वर्द्धमानः) 'तनुवं जुषाणः' (शरीरं स्वीकुर्वाणः) 'स्वयं यजस्व'। अस्मत्तः 'अन्ये' 'सपत्नाः' 'इह' कर्म्मणि 'मुह्यन्तु' (भ्रान्ता भवन्तु)। 'अस्माकं' तु 'मघवा' (अन्नयुक्तः) 'सूरिः' (विद्वान्) पुत्रः 'अस्तु'।

अथाष्टमीमाह,—"विश्वकर्मन् हविषा वर्द्धनेन त्रातारमिन्द्रमकृणोरवध्यं। तस्मै विशः समनमन्त पूर्वीरयमुग्रो विहव्यो यथासत्(८)" इति। हे 'विश्वकर्मन्', अस्मदीयेन 'हविषा वर्द्धनेन' युक्तस्त्वं इमं यजमानं 'त्रातारम्' (अन्येषां रक्षकम्) 'इन्द्रं' (परमैश्वर्य्ययुक्तम्) 'अवध्यं' (केनापि हिंसितुमशक्यम्) 'अकृणोः' (कुरु)। 'तस्मै' (यजमानाय) 'पूर्वीः' 'विशः' (वृद्ध्या वितत्यमानाः प्रजाः) 'समनमन्त' (सम्यङ् नताः एतदधीना भवन्तु)। 'अयं' (यजमानः) 'उग्रः' (तीव्रशक्तिः सन्) केनाप्यपरिभूतः 'विहव्यः' (विविधयागयोग्यः) 'यथाऽसत्' (यथा भवति), तथा कुरु।

कल्पः, 'यद्येनमुदकेऽभिविन्देदुदकाञ्जलिमादाय समुद्राय वयुनायेत्यप्सु जुहुयादित्ययज्ञसंयुक्तः कल्पः' इति। पाठस्तु,—"समुद्राय वयुनाय सिन्धूनां पतये नमः। नदीनाꣳ सर्वासां पित्रे जुहुता विश्वकर्मणे विश्वाहाऽमर्त्यꣳ हविः(१)" इति। यो विश्वकर्मा समुद्ररूपेणावतीर्णः, तस्मै 'समुद्राय' 'नमः' अस्तु। कीदृशाय? 'वयुनाय' (कान्ताय), 'सिन्धूनां' 'पतये' (स्यन्दमानानां हर्त्त्रे), समुद्राकारेण हर्त्ता, विश्वकर्माकारेण 'सर्वासां' 'नदीनां' 'पिता' (उत्पादकः); तादृशाय 'विश्वकर्मणे' हे ऋत्विग्यजमानाः, 'विश्वाहा' (सर्वाणि अहानि) निरन्तरमित्यर्थः 'अमर्त्यम्' (अविनश्वरं) 'हविः' 'जुहुत'।

अग्निस्तिग्मेनेति मन्त्रद्वयेन 'य इमा विश्वा' इति सूक्तद्वयेन च

साध्यं होमं विधातुं प्रस्तौति,—"इन्द्रो वृत्रमहन् तं वृत्रो हतः षोड़शभिर्भोगैरसिनात् स एतामग्नयेऽनीकवत आहुतिमपश्यत् ताम् अजुहोत् तस्याग्निरनीकवान्त्स्वेन भागधेयेन प्रीतः षोड़शधा वृत्रस्य भोगानप्यदहद्वैश्वकर्मणेन पाप्मनो निरमुच्यत यदग्नयेऽनीकवते आहुतिं जुहोति, अग्निरेवास्यानीकवान्त्स्वेन भागधेयेन प्रीतः पाप्मानमपि दहति वैश्वकर्मणेन पाप्मनो निर्मुच्यते" (५।४।५ अ०) इति। 'इन्द्रः' यदा 'वृत्रं' वज्रेण प्रहृतवांस्तदा वज्रप्रहृतः स वृत्र आसुरमायया सहसा षोड़श सर्पाकाराणि शरीराणि स्वीचकार, स्वीकृत्य च भोग-शब्दाभिधेयैस्तैः सर्पाकारशरीरैः 'तम्' इन्द्रं हस्तपादाद्यवयवेषु बहुधा 'असिनात्' (बबन्ध)। तदानीमिन्द्रः प्रतीकारं विचार्य्य अनीकेन (सैन्येन) युक्ताय 'अग्नये' 'एताम्' 'अग्निस्तिग्मेन' इतिमन्त्रद्वयसाध्यामाहुतिं दृष्ट्वा हुतवान्। ततः सोऽग्निः 'अनीकवान्' तृप्तो वृत्रस्य षोड़श सर्पाकाराणि शरीराणि अदहत्। तत ऊर्द्धमिन्द्रो 'य इमा विश्वा' इतिसूक्तद्वयसाध्येन वैश्वकर्मणहोमेन वृत्रवधजन्यपाप्मनो निर्मुक्तः।

इदानीं तदुभयं विधत्ते,—"यदग्नयेऽनीकवत आहुतिं जुहोत्यग्निरेवास्य अनीकवान्त्स्वेन भागधेयेन प्रीतः पाप्मानमपि दहति वैश्वकर्मणेन पाप्मनो निर्मुच्यते" (५।४।५ अ०) इति। रोगादिरूप-दृष्टबधहेतोः पापस्य अनीकवत्याहुत्या* दाहः; पारलौकिकात् नरकहेतोः पापाद् वैश्वकर्मणहोमेन निर्मोकः।

तत्रेदं विचिन्त्यते,—किमयं वैश्वकर्मणहोमः प्रति—मन्त्रं पृथक्

* 'पापस्यानीयकवत्याहुत्या' इति सर्व्वत्र पाठो न सम्यक्।

कार्यः, किं वा सूक्तद्वयं सहोच्चार्य्य सकृदनुष्ठेयः, अहोस्वित् एकैकं सूक्तमुच्चार्य्य अनुष्ठेयः? इति। तत्राद्यं पक्षद्वयं शाखान्तरगतत्वेनाङ्गी-करोति,—"यं कामयेत चिरं पाप्मनो निर्मुच्येतेति एकैकं तस्य जुहुयात्, चिरमेव पाप्मनो निर्मुच्यते; यं कामयेत ताजक् पाप्मनो निर्मुच्येतेति सर्वाणि तस्यानुद्रुत्य जुहुयात्, ताजगेव पाप्मनो निर्मुच्यते; अथो खलु नानैव सूक्ताभ्यां जुहोति, नानैव सूक्तयोर्वीर्यं दधात्यथो प्रतिष्ठित्यै" (५।४।५ब्रा०) इति। 'एकैकं' मन्त्रहोमेन शनैः पापनिर्मोको भवति, सर्वसूक्तहोमेन तु तदानीमेव पापनिर्मोकः, पृथक्सूक्तद्वयेऽपि सामर्थ्यं पृथक् सम्पादितं भवति। अपि च सूक्तद्वित्वं यजमानस्य प्रतिष्ठायै सम्पद्यते, तस्मादयमेव पक्षः श्रेयानित्यर्थः।

अत्र विनियोगसंग्रहः,—

'य इमा' 'चक्षुषो' द्वाभ्यां सूक्ताभ्यामाहुतिद्वयम्।
समुद्रेति जले होमो मन्त्राः सप्तदशेरिताः॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे षष्ठप्रपाठके द्वितीयोऽनुवाकः॥०॥

---

उदे॑नमुत्त॒रां न॑याग्ने घृ॒तेना॑हुत। रा॒यस्पोषे॑ण सꣳसृ॑ज प्र॒जया॑ च॒ धने॑न च[१]। इन्द्रे॒मं प्र॑त॒रां कृ॑धि सजा॒ताना॑मसद्व॒शी। सम॑नं॒ वर्च॑सा सृज दे॒वेभ्यो॑ भाग॒धा अ॑सत्[२]। यस्य॑ कु॒र्मो ह॒विर्गृ॒हे तम॑ग्ने व॒र्द्धया॒ त्वं। तस्मै॑ दे॒वा अधि॑ब्रवन्न॒यञ्च ब्रह्म॑ण॒स्पतिः॑[३]। उदु॑ त्वा॒ विश्वे॑ दे॒वाः॥ १॥

अग्ने॒ भर॑न्तु॒ चित्ति॑भिः*। स नो॑ भव शि॒वत॑मः सु॒प्रती॑को वि॒भाव॑सुः[४]। पञ्च॒ दिशो॒ दैवी॑र्य॒ज्ञम॑वन्तु दे॒वीरपाम॑तिं दु॒र्म॒तिं बाध॑मानाः। रा॒यस्पोषे॑ य॒ज्ञप॑तिमा॒भज॑न्तीः[५]। रा॒यस्पोषे॒ अधि॑ य॒ज्ञो अ॑स्थात् समि॑द्धे अ॒ग्नावधि॑ मामहा॒नः। उ॒क्थप॑त्र॒ ईड्यो॑ गृभी॒तस्त॒प्तं घ॒र्मं प॑रि॒गृह्या॑यजन्त[६]। ऊर्ज्जा॒ यद्य॒ज्ञमश॑मन्त दे॒वा दैव्या॑य ध॒र्त्रे जोष्ट्रे॑। दे॒व॒श्रीः श्रीम॑णाः श॒तप॑याः॥ २॥

प॒रि॒गृह्य॑ दे॒वा य॒ज्ञमा॑यन्[७]। सूर्य॑रश्मि॒र्हरि॑केशः पु॒रस्ता॑त् स॒विता॒ ज्योति॒रुद॑याꣳ॒ अज॑स्रं। तस्य॑ पू॒षा प्र॑स॒वे या॑ति दे॒वः स॒म्पश्य॑न् विश्वा॒ भुव॑नानि गो॒पाः[८]। दे॒वा दे॒वेभ्यो॑ अध्व॒र्यन्तो॑ अस्थु वी॒तꣳ श॑मि॒त्रे श॑मि॒ता य॒जध्यै॑। तु॒रीयो॑ य॒ज्ञो यत्र॑ ह॒व्यमेति॒ तत॑ः पाव॒का आ॒शिषो॑ नो जुषन्तां[९]। वि॒मान॑ ए॒ष दि॒वो मध्य॑

* 'चित्तिभिः' इति B पुस्तकपाठः।

आस्ते आपप्रिवान् रोदसी अन्तरिक्षं । स विश्वाची-रभि ॥ ३ ॥

चष्टे घृताचीरन्तरा पूर्वमपरं च केतु(१०) । उक्षा समुद्रो अरुणः सुपर्णः पूर्वस्य योनिं पितुराविवेश । मध्ये दिवो निहितः पृश्निरश्मा विचक्रमे रजसः पात्यन्तौ(११) । इन्द्रं विश्वा अवीवृधन् समुद्रव्यचस गिरः । रथीतमꣳ रथीनां वाजानाꣳ सत्पतिं पतिं(१२) । सुम्नहूर्यज्ञो देवाꣳ आ च वक्षद्यक्षदग्निर्देवो देवाꣳ आ च वक्षत्(१३) । वाजस्य ॥ ४ ॥

मा प्रसवेनोद्ग्राभेणोदग्रभीत् । अथासपत्नाꣳ इन्द्रो मे निग्राभेणाधराꣳ अकः(१४) । उद्ग्राभञ्च निग्राभञ्च ब्रह्म देवा अवीवृधन् । अथासपत्ना-निन्द्राग्नी मे विषूचीनान् व्यस्यतां(१५) ॥ ५ ॥

विश्वे देवाः । शतपयाः । अभि । वाजस्य । षड्-विꣳशतिश्च ॥ ३ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे षष्ठप्रपाठके तृतीयोऽनुवाकः ॥ * ॥

द्वितीये वैश्वकर्मणहोमो विहितः; अथ तृतीयेऽग्निप्रणयनमुच्यते ।

कल्पः,—उदेनमुत्तरां नयेति तिसृभिरौदुम्बरीः समिधो घृतोषिता-

स्मिन्न आधाय पशुबन्धवदग्निं प्रणयति' इति। तत्र प्रथमामाह,—"उदेनमुत्तरां नयाग्ने घृतेनाहुत। रायस्पोषेण सꣳसृज प्रजया च धनेन च(१)" इति। 'घृतेन' द्रव्येण 'आहुत' (सर्वतो हूयमान) हे 'अग्ने', 'एनं' (यजमानम्) 'उत्तराम्' (अत्युत्कृष्टमैश्वर्य्यं) प्रति 'उत्'-'नय' (उत्कर्षेण प्रापय), शीघ्रं प्रापयेत्यर्थः। उत्कृष्टमैश्वर्यमेव प्रपञ्च्यते,—'रायस्पोषेन' (धनसमृद्ध्या) 'संसृज' (संयोजय)। तथा 'प्रजया' पुत्रपौत्रादिरूपया, 'धनेन' गवाश्वादिरूपेण संसृज।

अथ द्वितीयामाह,—"इन्द्रेमं प्रतरां कृधि सजातानामसद्वशी। समेनं वर्चसा सृज देवेभ्यो भागधा असत्(२)" इति। हे 'इन्द्र' (परमैश्वर्ययुक्त) अग्ने, 'इमं' (यजमानं) 'प्रतरां' 'कृधि' (अतिशयेन प्रकृष्टं कुरु)। तदेव प्रकृष्टत्वं विशदीक्रियते,—'सजातानां' (सहोत्पन्नानां ज्ञातीनां) 'वशी' 'असत्' (नियमनसमर्थो भवतु)। किञ्च 'एनं' 'वर्चसा' (बलेन) 'सं'-'सृज'। अयं यजमानः, 'देवेभ्यः' 'भागधा' 'असत्' (यज्ञेषु भागप्रदो भवतु)।

अथ तृतीयामाह,—"यस्य कुर्मो हविर्गृहे तमग्ने वर्द्धया त्वं। तस्मै देवा अधिब्रवन्नयञ्च ब्रह्मणस्पतिः(३)" इति। वयमृत्विजः, 'यस्य' (यजमानस्य)'गृहे' 'हविः' 'कुर्मः,' हे 'अग्ने,' 'त्वं' 'तं' (यजमानं) 'वर्द्धय'। 'देवाः' च 'तस्मै' (यजमानाय) 'अधिब्रवन्' ('अयं यजमानः सर्वेभ्योऽधिकः' इति ब्रुवन्तु)। 'अयञ्च' (यजमानः) 'ब्रह्मणस्पतिः' (वैदिकस्य कर्मणः पालको भवतु)।

तानेतान् मन्त्रान् विनियुङ्क्ते,—"उदेनमुत्तरां नयेति समिध आदधाति यथा जनं यतेऽवसं करोति तादृगेव तत्" (५।४।६ अ०)

इति । 'यथा' लोके दूरदेशे ग्रामान्तरवर्त्तिनं प्रति 'यते' (गच्छते) पुरुषाय 'अवसं' (मार्गरक्षाकरं पाथेयं सम्पादयति), तत् समिदाधानं प्रणेष्यमाणाग्नये 'तादृगेव' भवति ।

समित्सङ्ख्यां विधत्ते,—"तिस्र आदधाति त्रिवृद्वा अग्निर्यावानेव अग्निस्तस्मै भागधेयं करोति" (५।४।६ अ०) इति । आहवनीयादि-भेदेन त्रिगुणत्वम् ।

समिद्द्रव्यं विधत्ते,—"औदुम्बरीर्भवन्त्यूर्वा उदुम्बर ऊर्जमेवास्मा अपि दधाति" (५।४।६ अ०) इति ।

कल्पः, 'उदु त्वा विश्वे देवा इत्युख्यमुद्यम्य' इति । पाठस्तु,— "उदु त्वा विश्वे देवाः अग्ने भरन्तु चित्तिभिः । स नो भव शिवतमः सुप्रतीको विभावसुः(४)" इति । हे 'अग्ने', 'विश्वे' (सर्वे) अपि 'देवाः' प्राणरूपाः 'चित्तिभिः' (उद्यमनकुशलाभिरिन्द्रियवृत्तिभिः), 'उदु' (ऊर्द्ध्वमेव) 'त्वां' 'भरन्तु' (धारयन्तु)। 'स' त्वं 'नः' (अस्माकं) 'शिवतमः' (शान्ततमः), 'सुप्रतीकः' (सुमुखः), 'विभावसुः' (प्रभविता वासयिता च) 'भव' ।

अस्य मन्त्रस्य प्रथमपादे वैश्वदेवशब्दार्थं दर्शयति,—"उदु त्वा विश्वे देवा इत्याह प्राणा वै विश्वे देवाः प्राणैरेवैनमुद्यच्छते" (५।४।६ अ०) इति । दीव्यन्ति स्वस्वकार्येषु व्यवहरन्तीति 'देवाः' 'प्राणाः' ।

द्वितीयपादे अग्न्यादिशब्दान् परित्यज्य चित्तिशब्दस्य तात्पर्यं दर्शयति,—"अग्ने भरन्तु चित्तिभिरित्याह यस्मा एवैनं चिताय उद्यच्छते तेनैवैनꣳ समर्द्धयति" (५।४।६ अ०) इति । चित्तिशब्देन

चितमात्रगतेन* 'चितम्' (अभिप्रेतकार्यं) सूच्यते, तथा सति यस्मै कार्याय इदमुद्यमनं तेनैव कार्येण एनमग्निं समृद्धं करोति।

कल्पः, 'पञ्च दिशो दैवीरिति पञ्चभिर्हरत्याग्नीध्रात्' इति। तत्र प्रथमामाह,—"पञ्च दिशो दैवीर्यज्ञमवन्तु देवीरपामतिं दुर्मतिं बाधमानाः। रायस्पोषे यज्ञपतिमा भजन्ति(५)" इति। इमाः प्राच्यादयः 'पञ्च दिशः' 'दैवीः' (इन्द्रयमादीनां सम्बन्धिन्यः) 'देवीः' (स्वयमपि देवतारूपाः) 'अमतिं' (असमदीयां प्रज्ञां) 'दुर्मतिं' (दुष्टां पापविषयां बुद्धिं) च 'अप'-'बाधमानाः' (विनाशयन्त्यः) 'रायस्पोषे' (धनसमृद्धौ) 'यज्ञपतिं' (यजमानम्) 'आ' (समन्तात्) सेवमाना† इमं 'यज्ञं' 'अवन्तु' (रक्षन्तु)।

अथ द्वितीयामाह,—"रायस्पोषे अधि यज्ञो अस्थात् समिद्धे अग्नावधि मामहानः। उक्थपत्र ईड्यो गृभीतस्तप्तं घर्मं परिगृह्या यजन्त(६)" इति। अयं 'यज्ञः' 'रायस्पोषे' (धनसमृद्धौ) 'अधि' 'अस्थात्' (अधिकमवस्थितः सन् सर्वदा धनपुष्टिं ददातु इत्यर्थः)। कीदृशो यज्ञः?—'समिद्धे' (सम्यक् प्रज्वलितेऽग्नौ) 'अधि मामहानः' (अधिकं पुनः पुनः पूज्यमानः)। 'उक्थपत्रः',—'उक्थानि' (शस्त्राणि) 'पत्रं' (वाहनं) यस्य, असौ उक्थपत्रः। 'ईड्यः' स्तुत्यः, 'गृभीतः' (ऋत्विग्यजमानैः परिगृहीतः)। ते च 'तप्तं' (प्रज्वलितं) 'घर्मम्' (अग्निं) 'परिगृह्य' 'आ'-'यजन्त' (यजन्ति)।

अथ तृतीयामाह,—"ऊर्जा यद् यज्ञमशमन्त देवा दैव्याय धर्त्रे

---

* 'चितिमन्त्रगतेन' इति पाठो भवितुं युक्तः।

† अत्र 'भजन्तीः' (सेवमानाः) इति पाठो भवितुं युक्तः।

जोष्ट्रे। देवश्रीः श्रीमणाः शतपयाः परिगृह्य देवा यज्ञमायन्[७]" इति । 'देवाः' (दीव्यन्तो व्यवहरन्तः) ऋत्विग्यजमाना धात्रादिविशेषणै-र्विशेषिताय अग्नये 'यत्' (यस्मिन् काले) 'ऊर्जा' (हविःस्वरूपेणान्नेन) 'यज्ञम् अशमन्त' (शान्तं तुष्टिहेतुम् अकुर्वत), कीदृशायाग्नये?— 'दैव्याय' (देवानां हिताय), 'धर्त्रे' (यागद्वारा जगतो धारयित्रे), 'जोष्ट्रे' (अस्माभिर्दीयमानस्य हविषः सेवित्रे); तस्मिन् कालेऽयमग्नि-रीदृशो भवति, कीदृशः? तदुच्यते?—'देवश्रीः',—देवानेव श्रयति हविर्वहनेनेति देवश्रीः, 'श्रीमणाः',—श्रयते सेवते इति श्रीर्यज-मानस्तस्मिन्ननुग्रहरूपं मनो यस्यासौ श्रीमणाः, 'शतपयाः',— शतसङ्ख्याकानि पयःप्रभृतीनि हवींषि यस्यासौ शतपयाः । तादृशमग्निं 'परिगृह्य' 'देवा' ऋत्विग्-यजमानाः इमं 'यज्ञं' 'आयन्' (प्राप्नुवन्ति, अनुतिष्ठन्तीत्यर्थः) ।

अथ चतुर्थीमाह,—"सूर्यरश्मिर्हरिकेशः पुरस्तात् सविता ज्योति-रुदयाँ अजस्रं । तस्य पूषा प्रसवे याति देवः सम्पश्यन् विश्वा भुवनानि गोपाः[८]" इति। दारिद्र्यं हरतीति हरिर्हिरण्यं, हिरण्यवर्णाः केशस्थानीयाः शिखा यस्यासौ 'हरिकेशः' अग्निः, स च 'सूर्यरश्मिः' भूत्वा 'सविता' (प्राणिनां तत्तद्व्यवहारेषु प्रेरकः) 'ज्योतिः' (मण्डलरूपः) सन् पूर्वस्यां दिशि 'अजस्रं' (प्रतिदिनम्) 'उदयात्' (उदेति); यस्मिन्नुदये सति 'पूषा' (पोषकः) सः 'देवः' 'तस्य' 'प्रसवे' (जगतः प्रेरणे) 'याति' (प्राप्नोति)। कीदृशो देवः?—'गोपाः' (रक्षकः), किं कुर्वन्? 'विश्वा' 'भुवनानि' (सर्वान् लोकान्) 'पश्यन्*' (अवलोकयन्)।

---

* 'सम्पश्यन्' इति पाठो भवितुं युक्तः ।

अथ पञ्चमीमाह,—"देवा देवेभ्यो अध्वर्यन्तो अस्थु वीतꣳ शमित्रे शमिता यजध्यै। तुरीयो यज्ञो यत्र हव्यमेति ततः पावका आशिषो नो जुषन्ताम्(९)" इति। पशुबन्धरूपो यज्ञश्चतुर्भागः, तत्र उपाकरणान्तः प्रथमः, उपाकृतस्य शामित्रदेशे स्थितिर्द्वितीयः, यागार्थं यत् संस्कारं करोति स तृतीयः, हविःप्रदानान्तश्चतुर्थः। तदिदं भागचतुष्टयं क्रमेणात्राभिधीयते। 'देवाः' (ऋत्विग्यजमानाः) 'देवेभ्यः' (हविः स्वीकर्तृभ्यः), 'अध्वर्यन्तो' (यागं कर्तुमिच्छन्तो) 'अस्थु' (तिष्ठन्ति, उपाकरणान्तमनुतिष्ठन्तीत्यर्थः। तत ऊर्द्धं 'शमित्रे' 'वीतं' (शामित्रदेशे प्रापितं) पशुरूपं हविर्भवति। तत ऊर्द्धं 'शमिता' 'यजध्यै' (यागार्थं संस्करोति), स तृतीयः। उपरितनश्चतुर्थो यज्ञभागः; 'यत्र' (यस्मिन्) भागचतुष्टयोपेते यज्ञे 'हव्यमेति' (देवता हविः प्राप्नोति)। 'ततः' (तस्मात्) भागचतुष्टयोपेताद् यज्ञात् 'पावकाः' (आहवनीयादयोऽग्नयः) 'नः' (अस्मदीयाः) 'आशिषः' (अपेक्षितान् फलविशेषान्) 'जुषन्तां' (सम्पादयन्त्वित्यर्थः)।

एषु मन्त्रेषु प्रथममन्त्रे प्रथमपादस्य तात्पर्यं दर्शयति,—"पञ्च दिशो दैवीर्यज्ञमवन्तु देवीरित्याह दिशो ह्येषोऽनुप्रच्यवते" (५।४। ६ अ०) इति। 'एषः' यजमानः प्राच्याद्याः पञ्च दिशोऽनुक्रमेण यज्ञरक्षार्थं प्रेरयति।

द्वितीयपादस्य तात्पर्यं दर्शयति,—"अपामतिं दुर्मतिं बाधमाना इत्याह रक्षसामपहत्य" (५।४।६ अ०) इति। अमतेर्दुर्मतेश्च रक्षोभिः सम्पादितत्वात् तद्बाधेन रक्षांस्येव अपहतानि भवन्ति।

तृतीयपादे रायस्पोषशब्देन विवक्षितार्थं दर्शयति,—"रायस्पोषे

यज्ञपतिमाभजन्तीरित्याह पशवो वै रायस्पोषः पशूनेवावरुन्धे” (५।४।६ अ०) इति।

‘उद् त्वा विश्वे देवाः’ इत्यनेनोद्यमनमन्त्रेण सहितमुत्तरमन्त्रपञ्चकं विनियुङ्क्ते,—“षड्भिर्हरति षड्वा ऋतव ऋतुभिरेवैनꣳ हरति” (५।४।६ अ०) इति।

‘रायस्पोषे अधि यज्ञः’, ‘ऊर्जा यद्यज्ञम्’ इति मन्त्रद्वयं विशेषतः प्रशंसति,—“द्वे परिगृह्यवती भवतो रक्षसामपहत्यै” (५।४।६ अ०) इति। ‘परिगृह्यायजन्त’, ‘परिगृह्य देवा यज्ञमायन्’ इत्येवं परिगृह्यशब्दो ययोर्ऋचोस्ते परिगृह्यवत्यौ। परिग्रहः पृथक्स्वीकारः, तेन यज्ञं विनाशयितुमसमर्थानि रक्षांसि स्वयमेवापहन्यन्ते।

षट्सु मन्त्रेषु पञ्चममन्त्रस्य तात्पर्यं दर्शयति,—“सूर्यरश्मिर्हरिकेशः पुरस्तादित्याह प्रसूत्यै” (५।४।६ अ०) इति। ‘पूषा प्रसवं याति’ इति तत्राभिधानादयं मन्त्रः प्रसूत्यै सम्पद्यते।

षष्ठमन्त्रस्य चतुर्थपादे पावकशब्दतात्पर्यं दर्शयति,—“ततः पावका आशिषो नो जुषन्तामित्याहान्नं वै पावकोऽन्नमेवावरुन्धे” (५।४।६ अ०) इति। अग्निवाचकः पावकशब्दस्तेन पच्यमानमन्नम् उपलक्ष्यते।

कल्पः, ‘विमान एष दिवो मध्य आस्त इति द्वाभ्यामाग्नीध्रेऽश्मानं निधाय’ इति। तत्र प्रथमामाह,—“विमान एष दिवो मध्य आस्त आ पप्रिवान् रोदसी अन्तरिक्षं। स विश्वाचीरभि चष्टे घृताचीरन्तरा पूर्वमपरं च केतुम्(१०)” इति। ‘एषः’ अश्मा ‘विमानः’ (विविधं जगन्निर्मिमाणः) सन् ‘दिवो मध्ये आस्ते’ (आग्नीध्रस्थानीयस्याकाशस्य

मध्ये तिष्ठति)। कीदृशोऽश्मा? 'रोदसी' (द्यावापृथिव्यौ) 'अन्तरिक्षं' च 'आ'-'पप्रिवान्' (सर्वतः पूरितवान्)। यद्यप्ययमश्मा न किञ्चित् जगन्निर्मिमीते, नापि लोकत्रयमापूर्य्य तिष्ठति, तथापि परमेश्वरगुणैरस्य स्तूयमानत्वात् न कोऽपि विरोधः। 'स' (तथा स्तूयमानः) 'विश्वाचीः' (विश्वव्यापिनीः) दिशः 'अभि'-'चष्टे' (सर्वतः प्रकाशयति)। तथा 'घृताचीः' (घृतप्राप्तिहेतुभूताः) धेनूः 'अभि'-'चष्टे'। तथा 'अन्तरा' (ब्रह्माण्डस्य) 'पूर्वमपरं' 'च' 'केतुम्' (उदयास्तमयाभ्यां पूर्वापरदिशो-श्चिह्नभूतं सूर्य्यम्) 'अभि'-'चष्टे'।

अथ द्वितीयामाह,—"उक्षा समुद्रो अरुणः सुपर्णः पूर्वस्य योनिं पितुरा विवेश। मध्ये दिवो निहितः पृश्निरश्मा विचक्रमे रजसः पात्यन्तौ(११)" इति। अयम् 'अश्मा' 'उक्षा' (मेघः), यागद्वारेण फलाभिवर्षक इत्यर्थः; 'समुद्रः' (बहुफलप्रदत्वात् समुद्रसदृशः); 'अरुणः' (पूर्वमन्त्रे सर्वप्रकाशकत्वेनोपचरितत्वात् सूर्य्यसदृशः); 'सुपर्णः' (स्वर्गं प्रत्युद्गमनहेतुत्वात् पक्षिसदृशः)। तथाविधः 'अश्मा' 'पितुः' (पालकस्य) पूर्वदिग्वर्त्तिन आहवनीयस्य 'योनिं' (कारणभूतम्) आग्नीध्रम् 'आ-विवेश' (प्रविष्टवान्)। 'येषां दीक्षितानामाहवनीय उद्वायेत् (आग्नीध्रादुद्धरेत्)' इत्याहवनीययोनित्वमाग्नीध्रस्यान्यत्राम्नातम्। अयं 'पृश्निः' (श्वेतवर्णः) 'अश्मा' 'दिवः' 'मध्ये' 'निहितः' सन् 'रजसः' (रञ्जनीयस्य जगतः) 'अन्तौ' (उत्पत्तिप्रलयरूपं कोटिद्वयं) 'पाति' (परमेश्वररूपेण पालयति)।

कल्पः, 'इन्द्रं विश्वा अवीवृधन्निति चतसृभिरापुच्छद्गत्वा' इति। तत्र प्रथमामाह,—"इन्द्रं विश्वा अवीवृधन् समुद्रव्यचसं गिरः। रथीतमꣳ

रथीनां वाजानाꣳ सत्पतिं पतिम्(१२)" इति। 'विश्वा' 'गिरः' (सर्वा स्तुतयः) 'इन्द्रं' (परमैश्वर्य्योपेतम्) अग्निं 'अवीवृधन्' (वर्द्धितवत्यः)। कीदृशमिन्द्रं?—'समुद्रव्यचसं' (समुद्रवद्व्यापिनं); 'रथीतमं' रथ एषाम् अस्तीतिव्युत्पत्त्या रथिशब्देन राजामात्यादय उच्यन्ते, तेषां मध्ये अतिशयेन रथी रथीतमः, तं; 'वाजानां' 'पतिम्' (अन्नानां पालकं); तथा 'सत्पतिं' (सन्मार्गवर्त्तियजमानानां पालकम्)।

अथ द्वितीयामाह,—"सुम्नहूर्यज्ञो देवाꣳ आ च वक्षद्यक्षदग्निर्देवो देवाꣳ आ च वक्षत्(१३)" इति। 'सुम्नस्य' (प्रजापशुरूपस्य सुखस्य) आह्वाता सम्पादयिता; 'यज्ञः' 'च' 'देवान्' 'आ'-'वक्षत्' (आवहतु)। 'यक्षदग्निः' 'च' (पूर्वोक्ताग्निरपि) 'देवान्' 'आ'-'वक्षत्' (आह्वयतु)।

अथ तृतीयामाह,—"वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीत्। अथा सपत्नाꣳ इन्द्रो मे निग्राभेणाधराꣳ अकः(१४)" इति। 'इन्द्रः' (परमैश्वर्ययुक्तः) अग्निः 'वाजस्य' (अन्नस्य) प्रसूतिनिमित्तेन 'उद्ग्राभेण' (उद्ग्रहणसामर्थ्येन) मां यजमानं 'उदग्रभीत्' (उत्कर्षं प्रापितवान्)। 'अथ' (अनन्तरं) 'इन्द्रः' (परमैश्वर्ययुक्तः) अयमग्निः 'निग्राभेण' (निग्रह-सामर्थ्येन) 'मे' 'सपत्नान्' 'अधरान्' 'अकः' (निगृहीतान् करोतु)।

अथ चतुर्थीमाह,—"उद्ग्राभञ्च निग्राभञ्च ब्रह्म देवा अवीवृधन्। अथासपत्नानिन्द्राग्नी मे विषूचीनान् व्यस्यताम्(१५)" इति। 'देवाः' सर्वे 'ब्रह्म' (परिवृढाः) 'उद्ग्राभं' (अस्मदीयमुत्कर्षं) 'निग्राभं' 'च' (वैरिणो निकर्षञ्च) 'अवीवृधन्' (वर्द्धितवन्तः)। 'अथ' (अनन्तरं) 'इन्द्राग्नी' 'विषूचीनान्' (सर्वतः पलायमानान्) 'मे' 'सपत्नान्' (वैरिणः) 'व्यस्यतां' (विनाशयताम्)॥

अत्र विनियोगसङ्ग्रहः।

'उत्' त्रिभिः समिधो दध्यात् उद्दुलोद्यच्छतेऽनलम्।

पञ्चेति पञ्चभिर्हुत्वा 'वि'द्वाभ्यामश्मनः स्थितिः॥

'इन्द्रं' चतुर्भिरापुच्छाद्गच्छेत्, पञ्चदशेरिताः।

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे षष्ठप्रपाठके तृतीयोऽनुवाकः॥०॥

---

आशुः शिशानो वृषभो न युध्मो घनाघनः क्षोभण-श्चर्षणीनां। सङ्क्रन्दनोऽनिमिष एकवीरः शतꣳ सेना अजयत् साकमिन्द्रः[१]। सङ्क्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना। तदिन्द्रेण जयत तत् सहध्वं युधो नर इषुहस्तेन वृष्णा[२]। स इषुहस्तैः स निषङ्गिभिर्वशी सꣳस्रष्टा स युध इन्द्रो गणेन। सꣳसृष्टजित् सोमपा बाहुशर्ध्यूर्द्ध्वधन्वा प्रतिहिताभिर-स्ता[३]। बृहस्पते परिदीय॥१॥

रथेन रक्षोहामित्राꣳ अपबाधमानः। प्र-भञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथा-नां[४]।गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्त-मोजसा। इमꣳ सजाता अनु वीरयध्वमिन्द्रꣳ सखायो-

ऽनु सꣳरभध्वं[५]। बलविज्ञाय स्थविरः प्रवीरः सहस्वान् वाजी सहमान उग्रः। अभि वीरो अभि सत्वा सहोजा जैत्रमिन्द्र रथमा तिष्ठ गोवित्[६]। अभि गोत्राणि सहसा गाहमानोऽदायः॥ २॥

वीरः शतमन्युरिन्द्रः दुश्च्यवनः पृतनाषाडयुध्योऽस्माकꣳ सेना अवतु प्र युत्सु[७]। इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रे[८]। इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुताꣳ शर्ध उग्रं। महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात्[९]। अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु॥ ३॥

अस्माकं वीरा उत्तरे भवन्त्वस्मानु देवा अवता हवेषु[१०]। उद्धर्षय मघवन्नायुधान्युत्सत्वनां मामकानां महाꣳसि। उद्वृत्रहन् वाजिनां वाजिनान्युद्रथानां जयतामेतु घोषः[११]। उपप्रेत जयता नरः स्थिरा वः सन्तु बाहवः। इन्द्रो वः शर्म यच्छत्वनाधृष्या यथाऽसथ[१२]। अवसृष्टा परा पत शरव्ये ब्रह्म सꣳशिता गच्छामित्रान् प्र॥ ४॥

विश्वमेषां कञ्चनोच्छिषः[१३]। मर्माणि ते वर्मभि-

म्छादयामि सोमस्त्वा राजामृतेनाभिवस्तां। उरो-
र्वरीयो वरिवस्ते अस्तु जयन्तं त्वामनुमदन्तु देवाः[१४]।
यत्र बाणाः सम्पतन्ति कुमारा विशिखा इव। इन्द्रो
नस्तत्र वृत्रहा विश्वाहा शर्म यच्छतु[१५] ॥ ५ ॥

दीय। दायः। जयन्तु। अमित्रान् प्र। चत्वारिंशच्च
॥ ४ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे षष्ठप्रपाठके चतुर्थोऽनुवाकः ॥ * ॥

तृतीयेऽग्निप्रणयनमुक्तम्; अथाप्रतिरथसूक्तमुच्यते। कल्पः, 'आशुः शिशान इति दक्षिणतो ब्रह्मा दर्शेनान्वेति, मैत्रावरुणः प्रतिप्रस्थातौ' इति। तत्र प्रथमामाह,—"आशुः शिशानो वृषभो न युध्मो घनाघनः क्षोभणश्चर्षणीनां। सङ्क्रन्दनोऽनिमिष एकवीरः शतं सेना अजयत् साकमिन्द्रः[१]" इति। अयम् 'इन्द्रः' (परमैश्वर्य्योपेतः) 'शतं' 'सेनाः' (शतसङ्ख्याकाः परकीया सेनाः) 'साकम्' (एकप्रयत्नेन) 'अजयत्'। कीदृश इन्द्रः? 'आशुः' (शीघ्रकारी); 'शिशानः' (तीक्ष्णः), अत्युग्र इत्यर्थः। तत्र दृष्टान्तः, 'वृषभो न युध्मः' (यथा वृषभो वृषभान्तरेण योद्धुमुत्सहते तद्वदयमपि); 'घनाघनः' (अतिशयेन शत्रूणां हिंसकः,घातकः);'चर्षणीनां'(परसेनागतमनुष्याणां) 'क्षोभणः'*

---

* 'क्षोभकः' इति सर्व्वत्र पाठो न सम्यक्।

(क्षोभहेतुः); 'सङ्क्रन्दनः' (समीचीनं क्रन्दनं परभयहेतुर्ध्वनिर्यस्य, स सङ्क्रन्दनः);'अनिमिषः'(कदाचिदपि निमेषं न करोति),अत्यन्तसावधान इत्यर्थः। *परानपेक्षेण स्वयं एक एव जेतुं समर्थः, शूरः।

अथ द्वितीयामाह,—"सङ्क्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना। तदिन्द्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा[२]" इति। 'युधः' (युद्धार्थिनः) हे 'नरः' (मनुष्याः), 'इन्द्रेण' अनुगृहीताः सन्तः 'तत्' (परबलं) 'जयत' (वशीकुरुत); वशीकृत्य च 'तत्' 'सहध्वं' (अभिभवत) विनाशयतेत्यर्थः। कीदृशेन 'इन्द्रेण'? 'सङ्क्रन्दनेन,' अनिमिषेण' (पूर्ववद्व्याख्येयम्); 'जिष्णुना' (जयशीलेन); 'युत्कारेण' (युद्धकारिणा); 'दुश्च्यवनेन' (च्यावयितुं दुःशक्येन); 'धृष्णुना' (भीतिरहितेन); 'इषुहस्तेन' (वाणाद्यायुधोपेतेन); 'वृष्णा' (कामवर्षकेण)।

अथ तृतीयामाह,—"स इषुहस्तैः स निषङ्गिभिर्वशी संस्रष्टा स युध इन्द्रो गणेन। संसृष्टजित् सोमपा बाहुशर्द्ध्युग्रधन्वा प्रतिहिताभिरस्ता[३]" इति। इषवो येषां हस्तेषु ते इषुहस्ताः, तैः साकं 'स' (इन्द्रः) 'वशी' (परबलं स्ववशं करोति), 'निषङ्गिभिः' (खड्गहस्तैः) साकं 'सः' (इन्द्रो) 'वशी', स्वकीयैर्धानुष्कैः खड्गहस्तैश्चोपेतत्वात् परसैन्यं वशीकरोतीत्यर्थः। यद्वा परसैन्यगतैर्धानुष्कैः खड्गहस्तैश्च सहितं तद् वशीकरोति। 'स' 'इन्द्रः' 'युधः' (योद्धा) सन् 'गणेन' (परकीयभटसमूहेन) 'संस्रष्टा' (सहसा गत्वा सङ्घं मिश्रितो भवति),

---

* 'एकवीरः' इति पाठो ऽत्र उद्धर्त्तुमुचितः।

मिश्रीभूय च ये स्वेन संसृष्टास्तान् सर्व्वान् जयतीति 'संसृष्टजित्'। *यजमानानां यागेषु सोमं पिबति; अत एव 'बाहुशर्द्धी' (बाहुबलोपेतः); 'ऊर्द्धधन्वा' (निरन्तरमुद्यतधनुष्कः)। 'प्रतिहिताभिः' (तेन धनुषा प्रेरिताभिः) इषुभिः 'अस्ता' (क्षेप्ता), विनाशयतीत्यर्थः।

अथ चतुर्थीमाह,—"बृहस्पते परिदीय। रथेन रक्षोहामित्राꣳ अपबाधमानः। प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेधि अविता रथानाम्(४)" इति। 'बृहत्' वाक्, तस्याः पालको बृहस्पतिरिन्द्रः; अत एव शाखान्तरे समाम्नातम्, 'वाग्वै बृहत्तस्या एष पतिस्तस्माद् बृहस्पतिरेष' इति। व्याकरणकर्तृत्वमिन्द्रस्य वाक्पतित्वं। तच्चान्यत्र आम्नातम्, 'ते देवा इन्द्रमब्रुवन्निमां नो वाचं व्याकुर्विति' इति। तथाविध हे इन्द्र, त्वं 'रथेन' 'परिदीय' (सर्वतो गच्छ)। कीदृश इन्द्रः?-'रक्षोहा' (रक्षसां हन्ता); 'अमित्रान्' (शत्रून्) 'अपबाधमानः' (यथाऽपयन्ति तथा बाधमानः); 'सेनाः' परकीयाः 'प्रभञ्जन्' (प्रकर्षेण भग्नाः कुर्वन्); 'प्रमृणः' (प्रकर्षेण हिंसकः); 'युधा' (युद्धेन) 'जयन्' (सर्वत्र विजयमानः); 'अस्माकम्' (अस्मदीयानां) 'रथानां' 'अविता' 'एधि' (रक्षको भव)।

अथ पञ्चमीमाह,—"गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा। इमꣳ सजाता अनु वीरयध्वमिन्द्रꣳ सखायोऽनु सꣳरभध्वम्(५)" इति। हे 'सजाताः' (समानजन्मानः अस्मदीया ज्ञातयः), यूयम् 'इमं' 'इन्द्रं' 'अनु-वीरयध्वं',-अयमिन्द्रः पुरतः वीरः (शूरः) अभवत्, पश्चाद् यूयं शूरा भवत। हे 'सखायः', 'इन्द्रम्'

---

* अत्र 'सोमपा' इति पाठः पतित इव प्रतिभाति।

अनुसंरभध्वं',—इन्द्रं* पुरतो युद्धं सम्यगाभरतां, पश्चाद्यूयन्त आरभन्तां।
कीदृशमिन्द्रं?—'गोत्रभिदं' (गोत्रान् पर्वतान् भिनत्ति तदीयपक्षां-श्छिनत्तीति गोत्रभित्, तं), गां भूमिं विन्दते लभते इति गोवित्, तं 'गोविदं', वज्रो बाहौ यस्य स 'वज्रबाहुः', तं, 'अज्म' 'जयन्तं' (भूमिराहित्यं शत्रूणां यथा भवति, तथा विजयमानं), 'ओजसा' (बलेन) 'प्रमृणन्तं' (प्रकर्षेण हिंसन्तम्)।

अथ षष्ठीमाह,—"बलविज्ञायः स्थविरः प्रवीरः सहस्वान् वाजी सहमान उग्रः। अभिवीरो अभिसत्वा सहोजा जैत्रमिन्द्र रथमा तिष्ठ गोवित्(६)"। हे 'इन्द्र', त्वं 'जैत्रं' (जयनशीलं) 'रथम् आ तिष्ठ' (आरोह)। कीदृशस्त्वं? (बलं परकीयसामर्थ्यं विजानातीति) 'बल-विज्ञायः', 'स्थविरः' (पुरातनः), 'प्रवीरः' (शूरेष्वप्यतिशूरः), 'सहस्वान्' (बलवान्), 'वाजी' (अन्नवान्), 'सहमानः' (परेषाम् अभि-भविता), 'उग्रः' (युद्धेषु क्रूरः), (अभितो वीरा शूरभटा यस्यासौ) 'अभिवीरः', (अभितः सत्वानः परिचारका यस्यासौ) 'अभिसत्वा', (सहसो बलाज्जातः) 'सहोजाः', बलाधिक इत्यर्थः; (गां भूमिं विन्दते, लभते इति) 'गोवित्'।

अथ सप्तमीमाह,—"अभि गोत्राणि सहसा गाहमानोऽदायः वीरः शतमन्युरिन्द्रः। दुश्च्यवनः पृतनाषाडयुध्योऽस्माकꣳ सेना अवतु प्र युत्सु(७)" इति। अयम् 'इन्द्रः' 'प्र युत्सु' (प्रकृष्टेषु युद्धेषु) 'अस्माकं' 'सेनाः' 'अवतु'। कीदृश इन्द्रः? 'अभि' (सर्वतोऽव-स्थितानि) 'गोत्राणि' (युद्धक्षेत्राणि) 'सहसा' (शीघ्रं) 'गाहमानः'

---

* 'इन्द्रः' इति पाठो भवितुं युक्तः।

(प्रविशन्), 'अदायः' (दायारहितः*), 'वीरः' (शूरः), 'शतमन्युः' (विविधक्रोधयुक्तः), 'दुश्च्यवनः' (च्यावयितुं दुःशक्यः), 'पृतनाषाट्' (परकीयसेनानामभिभविता), 'अयुध्यः' (केनापि योद्धुमशक्यः)।

अथाष्टमीमाह,—"इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः। देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रे(८)" इति। याः सेना अस्मदनुग्रहार्थं गच्छन्ति 'आसां' 'इन्द्रः' 'नेता' भवतु। यः 'बृहस्पतिः', या च 'दक्षिणा' देवी, यश्च 'यज्ञः', यश्च 'सोमः', एतेषामेकैकः पुरतो गच्छतु। यास्त्वेतत्सम्बन्धिन्यो देवसेनाः परबलमभिभञ्जयन्त्यो जयन्ती†, तासाम् 'अग्रे' 'मरुतः' 'यन्तु'।

अथ नवमीमाह,—"इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुताꣳ शर्द्ध उग्रं। महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात्(९)" इति। 'वृष्णः' (कामाभिवर्षिणः), 'इन्द्रस्य', 'राज्ञः' (राज्यं कुर्वतः), 'वरुणस्य' 'शर्द्धः' (बलम्) 'उग्रं' (युद्धेषु अतितीव्रं), 'महामनसां' (युद्धे स्थिरचित्तानां), 'भुवनच्यवानां' (शत्रून् भुवनेभ्यश्च्यावयितुं समर्थानां), 'जयतां', 'देवानां' 'घोष'-ध्वनि‡ 'उदस्थात्' (सर्वत उत्थितोऽभूत्)।

अथ दशमीमाह,—"अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु। अस्माकं वीरा उत्तरे भवन्त्वस्मानु देवा अवता हवेषु(१०)" इति। युद्धार्थं परसैन्येषु सम्यक् प्राप्तेषु सत्सु 'अस्माकम्'

---

* एवमेव सर्व्वत्र पाठः। दायरहितः इति पाठो भवितुं युक्तः।

† 'जयन्त्यः' इति 'जयन्ति' इति वा पाठो भवितुं युक्तः।

‡ 'घोषो ध्वनिः' इति पाठो भवितुं युक्तः।

'इन्द्रः' रक्षिता भवत्विति शेषः। तदानीम् 'अस्माकं' 'या' 'इषवः' अस्मदीयैर्मुक्ताः, 'ता जयन्तु' (परसैन्यानि विध्यन्तु); 'अस्माकं' ये 'वीराः' (भटाः), ते 'उत्तरे' 'भवन्तु' (परकीयभटेभ्य अधिका भवन्तु); 'देवाः' 'हवेषु' (युद्धेषु) 'अस्मान्' एव 'अवत' (अवन्तु रक्षन्तु*)। इत्थं द्वादर्शम् अप्रतिरथसूक्तं समाप्तम्।

अथ तत्रैव विकल्पिताः पञ्च ऋचः उच्यन्ते। तत्र प्रथमामाह,—"उद्धर्षय मघवन्नायुधान्युत्सत्वनां मामकानां महांऽसि। उद्वृत्रहन् वाजिनां वाजिनान्युद्रथानां जयतामेतु घोषः[११]" इति। हे 'मघवन्' (इन्द्र), 'आयुधानि' अस्मदीयानि 'उद्धर्षय' (परकीयेभ्य उत्कृष्टानि कृत्वा अस्मान् हर्षय), 'मामकानां' (मदीयानां) 'सत्वनां' (प्राणिनां) 'महांसि' (तेजांसि) 'उत्'-कृष्टानि कृत्वा तान् हर्षय। हे 'वृत्रहन्', 'वाजिनाम्' अस्मदीयानाम् (अश्वानां) 'वाजिनानि' (शीघ्र-गमनानि) 'उत्'-कृष्टानि कृत्वा हर्षय। 'जयतां' (विजयं प्राप्नुवतां) 'रथानाम्' अस्मदीयानां 'घोषः' (महान् ध्वनिः) 'उत्'-'एतु' (उद्गच्छतु)।

अथ द्वितीयामाह,—"उप प्रेत जयता नरः स्थिरा वः सन्तु बाहवः। इन्द्रो वः शर्म यच्छत्वनाधृष्या यथाऽसथ[१२]" इति। हे 'नरः' (अस्मदीयाः पुरुषाः), 'उप प्रेत' (परसैन्यसमीपे प्रकर्षेण गच्छत)। ततः 'जयतां' (विजयं प्राप्नुवतां) 'वः' (युष्माकं) 'बाहवः' स्वकीयायुधैः प्रहरणेषु 'स्थिराः' 'सन्तु'। 'यथा' यूयम् 'अनाधृष्याः'

---

* (अवतु रक्षतु) इति पाठो न सम्यक्।

'असथ' (केनाप्यतिरस्कार्य्या भवथ), तथाऽयम् 'इन्द्रः' 'वः' (युष्माकं) 'शर्म' 'यच्छतु' (ददातु)।

अथ तृतीयामाह,—"अवसृष्टा परा पत शरव्ये ब्रह्मसꣳशिता गच्छामित्रान् प्र विश मैषां कञ्चनोच्छिषः(१३)" इति। हिंसका हेतिः शरव्या, हे 'शरव्ये', ब्रह्मणा 'संशिता' (तीक्ष्णीकृता) त्वं 'अवसृष्टा' (अस्माभिर्मुक्ता) सती 'परा'-'पत' (सहसा परसैन्ये पतिता भव), पतित्वा च 'अमित्रान्' 'गच्छ' (प्राप्नुहि), प्राप्य च 'प्र-विश' (एतेषां शरीरमध्ये प्रवेशं कुरु), प्रविश्य च 'एषां' मध्ये 'कञ्चन' पुरुषं मा 'उच्छिषः' (अवशिष्टं मा कुरु) सर्वानपि जहीत्यर्थः।

अथ चतुर्थीमाह,—"मर्माणि ते वर्मभिश्छादयामि सोमस्त्वा राजामृतेनाभि वस्तां। उरोर्वरीयो वरिवस्ते अस्तु जयन्तं त्वामनु मदन्तु देवाः(१४)" इति। हे यजमान, 'ते' (तव) 'मर्माणि' 'वर्मभिः' (कवचैः) 'छादयामि', 'सोमः' 'राजा' त्वां 'अमृतेन' (मरण-निवारकेण) केनापि कवचविशेषेण 'अभि वस्तां' (अभित आच्छादयतु), 'ते' (तव) 'वरिवः' (धनं) 'उरोर्वरीयः' 'अस्तु' (अदीयात्(?) अधिकादप्यत्यन्तमधिकमस्तु)। 'जयन्तं' (विजयं प्राप्नुवन्तं) 'त्वां' 'अनुमदन्तु' (अनुकूला भूत्वा हृष्यन्तु)।

अथ पञ्चमीमाह,—"यत्र बाणाः सम्पतन्ति कुमारा विशिखा इव। इन्द्रो नस्तत्र वृत्रहा विश्वाहा शर्म यच्छतु(१५)" इति। 'यत्र' (यस्मिन्) युद्धे 'बाणाः' परैर्मुक्ताः 'सम्पतन्ति' (इतस्ततश्च सम्भूय पतन्ति), तत्र दृष्टान्तः,—'कुमाराः विशिखा इव' (मुण्डितशिरस्का* विशीर्ण-

* अत्र 'यथा मुण्डितशिरस्काः' इति पाठो भवितुं युक्तः।

केशा वा अत्यन्तबालास्वपलाः सन्त इतस्ततश्च गच्छन्ति तद्वत्)। 'तत्र' युद्धे अयम् 'इन्द्रः' 'विश्वाहा' (परकीयसर्वप्राणिघाती), 'वृत्रहा' (विशेषतो वैरिघाती) सन् 'नः' (अस्मभ्यं) 'शर्म' 'यच्छतु'।

'आशुः शिशान' इत्येतत् सूक्तं विनियुङ्क्ते,—"देवासुराः संयत्ता आसन् ते देवा एतदप्रतिरथमपश्यन् तेन वै ते अप्रत्यसुरानजयन् तदप्रतिरथस्याप्रतिरथत्वं यदप्रतिरथं द्वितीयो होतान्वाहाप्रत्येव तेन यजमानो भ्रातृव्यान् जयत्यथो अनभिजितमेवाभिजयति" (५।४।६अ०) इति। यदा देवाश्च असुराश्च युद्धाय उद्यतास्तदानीं 'देवाः' विजयप्रदत्वेन अप्रतिरथाख्यमेतत् सूक्तम् 'अपश्यन्'; 'तेन' एव देवा निवार्य* लौकिको 'यजमानः' सर्वान् 'भ्रातृव्यान्' प्रतिकूलराहित्यं यथा भवति तथैव 'जयति'। अपि च पूर्वम् 'अनभिजितम्' अपि धनं देशविशेषं वा सर्वथा 'अभिजयति' एव।

सूक्तमन्त्रसङ्ख्यां विधत्ते,—"दशर्चं भवति दशाक्षरा विराड् विराजा इमौ लोकौ विधृतावनयोर्लोकयोर्विधृत्या अथो दशाक्षरा विराडन्नं विराड् विराज्येवान्नाद्ये प्रतितिष्ठति" (५।४।६अ०) इति। अस्मिन्ननुवाके समाम्नातानाम् 'उद्धर्षय' इत्यादिपञ्चानां विकल्पार्थत्वात् सूक्तगता ऋचो दशैव सम्पद्यन्ते। विराट्छन्दसो दशाक्षरत्वात् तस्य छन्दसः सामर्थ्येनैव लोकयोर्विधृतत्वात् तयोर्विधृत्यर्थमिदं दशर्चं सूक्तं सम्पद्यते। अपि च दशाक्षरस्य विराट्छन्दसोऽन्नहेतुत्वेन अन्नत्वाद्दशसङ्ख्याद्वारा तस्मिन् अन्नाद्ये प्रतितिष्ठति।

* 'असुरान् अजयन्'—इत्यादिरूपः कश्चित् पाठोऽत्र पतित इव प्रतिभाति।

अथ पूर्वानुवाकोक्त-'विमान'—इत्यादिमन्त्रद्वयसाध्यमश्मनिधानं विधत्ते,—"असदिव वा अन्तरिक्षं अन्तरिक्षमिवाग्नीध्रमाग्नीध्रेऽश्मानं निदधाति सत्त्वाय" (५।४।६ अ०) इति। भूमिवन्मूर्त्तस्वरूपाभावात् इदमन्तरिक्षम् अविद्यमानसदृशं भवति, अन्तरिक्षसदृशं चाग्नीध्रं, हविर्धानशकलशरग्रहसादनादीनामभावेन शून्यत्वप्रतिभानात्, अतः शून्यत्वनिवारणेन च सुसद्भावाय तत्रापि कश्चित् 'अश्मानं' निदध्यात्।

मन्त्रद्वित्वं प्रशंसति,—"द्वाभ्यां प्रतिष्ठित्यै" (५।४।६ अ०) इति।

प्रथममन्त्रे विमानशब्दतात्पर्यं दर्शयति,—"विमान एष दिवो मध्य आस्त इत्याह व्येवैतया मिमीते" (५।४।६ अ०) इति। 'एतया' ऋचा पूर्वं शून्यम् आग्नीध्रं वस्तुविशिष्टं यथा भवति तथा 'मिमीते' 'एव' (प्रमितं करोत्येव)।

द्वितीयमन्त्रे पृश्निशब्दतात्पर्यं दर्शयति,—"मध्ये दिवो निहितः पृश्निरश्मेत्याहान्नं वै पृश्नि अन्नमेवावरुन्धे" (५।४।६ अ०) इति। पक्वं शाल्यन्नं श्वेतं भवति, अतः श्वेतेनाश्मना तादृशमन्नं प्राप्नोति।

'इन्द्रं विश्वा अवीवृधन्' इत्यादिमन्त्रचतुष्टयसाध्यं गमनं विधत्ते,—"चतसृभिरापुच्छादेति चत्वारि छन्दांऽसि छन्दोभिरेव" (५।४।६ अ०) इति। आग्नीध्रान्निर्गत्य पुच्छपर्यन्तमेतैर्मन्त्रैर्गच्छेत्। गायत्र्यादीनां मुख्यच्छन्दसां चतुष्ट्वात् मन्त्रसङ्ख्यायाः, छन्दोभिरेव युक्तः सन् गतवान् भवति।

प्रथममन्त्रस्य प्रथमपादे अवीवृधन्निति पदस्य तात्पर्यं दर्शयति,—"इन्द्रं विश्वा अवीवृधन्नित्याह वृद्धिमेवोपावर्त्तते" (५।४।६ अ०) इति।

तत्रैव चतुर्थपादे वाजशब्दतात्पर्यं दर्शयति,—"वाजानाꣳ सत्पतिं पतिमित्याहान्नं वै वाजोऽन्नमेवावरुन्धे" (५।४।६ अ०) इति।

द्वितीयमन्त्रे सुम्नशब्दस्य तात्पर्यं दर्शयति,—"सुम्नहूर्यज्ञो देवाꣳ आ च वक्षदित्याह प्रजा वै पशवः सुम्नं प्रजामेव पशूनात्मन्धत्ते" (५।४।६ अ०) इति।

अस्मिन्नेव मन्त्रे उत्तरभागस्य तात्पर्यं दर्शयति,—"यक्षदग्निर्देवो देवाꣳ आ च वक्षदित्याह स्वगाकृत्यै" (५।४।६ अ०) इति। 'देवान् आ च वक्षत्' इत्युक्त्या तान् देवान् स्वगतान् स्वाधीनान् करोति ।

तृतीयमन्त्रगतयोरुद्ग्राभनिग्राभशब्दयोस्तात्पर्यं दर्शयति,—"वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीदित्याह असौ वा आदित्य उद्यन्नुद्ग्राभ एष निम्रोचन्निग्राभो ब्रह्मणैवात्मानमुद्गृह्णाति ब्रह्मणा भ्रातृव्यं निगृह्णाति" (५।४।६ अ०) इति । ऊर्द्धग्रहणवाचिना उद्ग्राभशब्देन उद्गच्छन्, निग्राभशब्देन अधो गच्छन् असावादित्यो लक्ष्यते, अतस्तदुभयप्रतिपादकेन मन्त्रेण स्वात्मानम् 'उद्गृह्णाति', (उत्कर्षं प्रापयति,) स्वभ्रातृव्यं 'निगृह्णाति' (निग्रहं प्रापयति) ॥

अथ विनियोगसङ्ग्रहः ।

आशुरित्यप्रतिरथं होतान्वाह दशर्चकं ।
उद्धर्षेति विकल्पार्था मन्त्राः पञ्चदशेरिताः ॥ इति ।

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे षष्ठप्रपाठके चतुर्थोऽनुवाकः ॥ ० ॥

---

प्राचीमनु प्रदिशं प्रेहि विद्वानग्नेरग्ने पुरो अग्नि-
र्भवेह। विश्वा आशा दीद्यानो वि भाह्यूर्जं नो धेहि
द्विपदे चतुष्पदे[१]। क्रमध्वमग्निना नाकमुख्यꣳ हस्तेषु
बिभ्रतः। दिवः पृष्ठꣳ सुवर्गत्वा मिश्रा देवेभिराध्वं[२]।
पृथिव्या अहमुदन्तरिक्षमारुहमन्तरिक्षाद्दिवमारुहं।
दिवो नाकस्य पृष्ठात्सुवर्ज्योतिरगां ॥ १ ॥

अहं[३] सुवर्यन्तो नापेक्षन्त आ द्याꣳ रोहन्ति रोदसी।
यज्ञं ये विश्वतो धारꣳ सुविद्वाꣳसो वि तेनिरे[४]।
अग्ने प्रेहि प्रथमो देवयतां चक्षुर्देवानामुत मर्त्यानां।
इयक्षमाणा भृगुभिः सजोषाः सुवर्यन्तु यजमानाः
स्वस्ति[५]। नक्तोषासा समनसा विरूपे धापयेते
शिशुमेकꣳ समीची द्यावा क्षामा रुक्मो अन्तर्वि भाति
देवा अग्निं धारयं द्रविणोदाः[६]। अग्ने सहस्राक्ष ॥२॥

शतमूर्द्धञ्छतं ते प्राणाः सहस्रमपानाः। त्वꣳ सा-
हस्रस्य राय ईशिषे तस्मै ते विधेम वाजाय स्वाहा[७]।
सुपर्णोऽसि गरुत्मान् पृथिव्याꣳ सीद पृष्ठे पृथिव्याः
सीद[८] भासान्तरिक्षमा पृण ज्योतिषा दिवमुत्तभान
तेजसा दिश उद्दृꣳह[९]। आजुह्वानः सुप्रतीकः पुर-
स्तादग्ने स्वां योनिमासीद साध्या अस्मिन्त्सधस्थे
अध्युत्तरस्मिन् विश्वे देवाः ॥ ३ ॥

यजमानश्च सीदत[१०]। प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ। त्वां शश्वन्त उप यन्ति वाजाः[११]। विधेम ते परमे जन्मन्नग्ने विधेम स्तोमैरवरे सधस्थे। यस्माद्योनेरुदारिथा यजे तं प्र त्वे हवींषि जुहुरे समिद्धे[१२]। तां सवितुर्वरेण्यस्य चित्रामाहं वृणे सुमतिं विश्वजन्याम्। यामस्य कण्वो अदुहत् प्रपीनां सहस्रधारां॥ ४॥

पयसा महीं गां[१३]। सप्त ते अग्ने समिधः सप्त जिह्वाः सप्तर्षयः सप्त धाम प्रियाणि सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरा पृणस्व घृतेन[१४]। ईदृङ् चान्यादृङ् चैतादृङ् च प्रतिदृङ् च मितश्च सम्मितश्च सभराः। शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्मांश्च सत्यश्चर्तपाश्चात्यंहाः॥ ५॥

ऋतजिच्च सत्यजिच्च सेनजिच्च सुषेणश्चान्त्यमित्रश्च दूरे अमित्रश्च गणः ऋतश्च सत्यश्च ध्रुवश्च धरुणश्च धर्ता च विधर्ता च विधारयः। ईदृक्षास एतादृक्षास ऊ षु णः सदृक्षासः प्रतिसदृक्षास एतन। मितासश्च सम्मितासश्च न ऊतये सभरसो मरुतो यज्ञे अस्मिन्निन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानः; यथेन्द्रं दैवीर्विशो

मरुतोऽनुवर्त्मान एवमिमं यजमानं दैवीश्च विशो मानुषीश्चानुवर्त्मानो भवन्तु(१५) ॥ ६ ॥

अग्नां। सहस्राक्ष। देवाः। सहस्रधाराम्। अत्यंहाः। अनुवर्त्मानः। षोडश च ॥ ५ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे षष्ठप्रपाठके पञ्चमोऽनुवाकः ॥ * ॥

चतुर्थेऽनुवाकेऽग्निप्रणयनाङ्गमप्रतिरथसूक्तमुक्तं ; अथ पञ्चमेऽग्नि-स्थापनमुच्यते । कल्पः, 'प्राचीमनु प्रदिशं प्रेहि विद्वानिति पञ्चभि-रग्निमधिरुह्य' इति । तत्र प्रथमामाह,—"प्राचीमनु प्रदिशं प्रेहि विद्वानग्नेरग्ने पुरो अग्निर्भवेह। विश्वा आशा दीद्यानो वि भाह्यूर्जं नो धेहि द्विपदे चतुष्पदे(१)" इति। 'अग्ने' (इदानीमानीत हे वह्ने), 'प्राचीं' 'दिशं'*—(प्रागाख्यां प्रकृष्टां दिशं) 'विद्वान्' त्वं 'अनु'-'प्रेहि' (अनुक्रमेण प्रकर्षो यथा भवति तथा गच्छ)। त्वम् 'अग्नेः' (इष्टकानिष्पादितस्य चितिरूपस्य वह्नेः) 'इह' (अस्मिन् कर्मणि) 'पुरो अग्निर्भव' (पूर्वभागवर्त्ती वह्निर्भव, यद्वा पुरोगन्ता मुख्योऽग्निर्भवे-त्यर्थः)। 'विश्वा' 'आशाः' (सर्वा अपि दिशः) 'दीद्यानः' (प्रकाशयन्) 'वि भाहि' त्वमपि (विशेषेण प्रकाशस्व)। ततः 'नः' (अस्मदीयाय) 'द्विपदे' 'चतुष्पदे' च 'ऊर्जम्' (अन्नं) 'धेहि' (सम्पादय)।

---

* 'प्रदिशं' इति पाठो भवितुं युक्तः।

अथ द्वितीयामाह,—"क्रमध्वमग्निना नाकमुख्यꣳ हस्तेषु बिभ्रतः। दिवः पृष्ठꣳ सुवर्गत्वा मिश्रा देवेभिराध्वम्[२]" इति। हे ऋत्विग्यजमानाः, 'नाकं' (स्वर्गसाधनम्), 'उख्यं' (उखायां पूर्वं सम्पादितम्), अग्निं 'हस्तेषु' 'बिभ्रतः' (धारयन्तः) तेन 'अग्निना' सह 'क्रमध्वं' (अग्नेरुपरि पादान् विक्षिपत)। ततो 'दिवः पृष्ठम्' (आकाशस्योपरि वर्त्तमानं) 'सुवर्गत्वा' (स्वर्गलोकं प्राप्य) 'देवेभिः' 'मिश्राः' (देवैरेकीभूताः) 'आध्वं' (उपविशत)।

अथ तृतीयामाह,—"पृथिव्या अहमुदन्तरिक्षमारुहमन्तरिक्षाद् दिवमारुहं। दिवो नाकस्य पृष्ठात् सुवर्ज्योतिरगामहम्[३]" इति। 'अहं' यजमानः 'पृथिव्या' उद्गत एतत् 'अन्तरिक्षम्' 'आरुहं' (आरूढोऽस्मि)। तस्मादेव 'अन्तरिक्षात्' उद्गतो 'दिवम्' 'आरुहं' (द्युलोकमारूढोऽस्मि)। 'दिवः' द्युलोकसम्बन्धी 'नाका' दुःखरहितो यः प्रदेशः, तस्य, 'पृष्ठात्' (उपरिष्टात्) स्वर्गलोकवासि ज्योतिर्मण्डलमादित्यरूपम् 'अगां' (प्राप्तोऽस्मि, यद्वा प्राप्स्यामि)।

अथ चतुर्थीमाह,—"सुवर्यन्तो नापेक्षन्त आ द्याꣳ रोहन्ति रोदसी। यज्ञं ये विश्वतो धारꣳ सुविद्वाꣳसो वि तेनिरे[४]"१ इति। 'ये' यजमानाः 'सुविद्वांसः' (सुष्ठु कर्मानुष्ठानप्रकारं जानन्तः) 'विश्वतो धारं' (सर्वस्य जगतो धारणहेतुं) यं अग्निं 'वि तेनिरे' (विस्तरेणानुतिष्ठन्ति), ते यजमाना 'द्यां' (अन्तरिक्षम्) 'आ'-'रोहन्ति' तथा 'रोदसी' (द्यावापृथिव्यौ) आरोहन्ति, ततः 'सुवर्यन्तः' (स्वर्गवासमादित्यमण्डलं प्राप्नुवन्तः), तदग्निस्थानान्यत् किमपि स्थानं 'नापेक्षन्ते'।

अथ पञ्चमीमाह,—"अग्ने प्रेहि प्रथमो देवयतां चक्षुर्देवानामुत मर्त्यानां। इयक्षमाणा भृगुभिः सजोषाः सुवर्यन्तु यजमानाः स्वस्ति(५)" इति। देवान् आत्मन इच्छन्तो देवयन्तो यजमानाः, तेषामुपकाराय, हे 'अग्ने' त्वं 'प्रथमः' 'प्रेहि' (पुरतो गच्छ), यतस्त्वं 'देवानां' मनुष्याणाञ्च चक्षुस्थानीयः। लोके हि गच्छतः पुरुषस्य दृष्टिः पुरतो याति। 'इयक्षमाणा' (यष्टुमिच्छन्तः) 'यजमानाः' 'भृगुभिः' 'सजोषाः' (अनुष्ठानपरैर्भृगुनामकैर्मुनिभिः समानप्रियाः) सन्तः, क्षमा यथा भवति तथा 'सुवर्यन्तु'।

तत्र प्रथममन्त्रस्य तात्पर्यं दर्शयति,—"प्राचीमनु प्रदिशं प्रेहि विद्वानित्याह देवलोकमेवैतयोपावर्त्तते" (५।४।७अ०) इति। देवलोकमेवोद्दिश्य अनया ऋचा प्रवृत्तो भवति।

द्वितीयमन्त्रस्य तात्पर्यं दर्शयति,—"क्रमध्वमग्निना नाकमित्याहेमानेवैतया लोकान् क्रमते" (५।४।७अ०) इति। 'इमानेव' 'लोकान्' उद्दिश्य अनया ऋचा पादविन्यासं करोति।

तृतीयमन्त्रस्य तात्पर्य्यं दर्शयति पृथिव्या अहमुदन्तरिक्षमारुहमित्याहेमानेवैतया लोकान्त्समारोहति" (५।४।७अ०) इति। 'इमानेव' 'लोकान्' उद्दिश्य अनया ऋचा सम्यगारोहति।

चतुर्थमन्त्रस्य तात्पर्यं दर्शयति,—"सुवर्यन्तो नापेक्षन्त इत्याह सुवर्गमेवैतया लोकमेति" (५।४।७अ०) इति। स्वर्गप्राप्तिप्रतिपादकशब्दस्याच सद्भावात्तदृचा स्वर्गप्राप्तिः।

पञ्चममन्त्रस्य तात्पर्यं दर्शयति,—"अग्ने प्रेहि प्रथमो देवयतामित्याहोभयेष्वेवैतया देवमनुष्येषु चक्षुर्दधाति" (५।४।७अ०) इति।

उभयचक्षुःप्रतिपादकस्य शब्दस्यात्र सद्भावाच्च तया ऋचा उभयत्र चक्षुर्स्थापनम् ।

मन्त्रान् विनियुङ्क्ते—पञ्चभिरधिक्रामति पाङ्क्तो यज्ञो यावानेव यज्ञस्तेन सह सुवर्गं लोकमेति" (५।४।७अ०) इति ।

कल्पः, 'नक्तोषासाऽग्ने सहस्राक्षेति द्वाभ्यां संहिताभ्यां दध्नः पूर्णामौदुम्बरीꣳ स्वयमातृण्णायां जुहोति' इति । तत्र प्रथमामाह,— "नक्तोषासा समनसा विरूपे धापयेते शिशुमेकꣳ समीची । द्यावा क्षामा रुक्मो अन्तर्वि भाति देवा अग्निं धारयं द्रविणोदाः(१)" इति । नक्तश्चोषाश्च 'नक्तोषासा' (रात्रिदिवसावित्यर्थः), 'समनसा' (परस्परमैकमत्ययुक्ते), 'विरूपे' (रात्रिः कृष्णा, दिवसश्च शुक्ल इति विलक्षणरूपे), 'समीची' (अनुकूले) सत्यौ 'एकं' 'शिशुं' अग्निरूपं 'धापयेते' (यजमानकर्तृकमग्निधारणं सम्पादयतः)। 'द्यावा' (द्युलोके), 'क्षामा' (क्षितौ), 'अन्तः' (तदुभयमध्यवर्त्तिनि अन्तरिक्षे) 'रुक्मः' (रोचमानः) अयमग्निः 'विभाति' (विशेषेण प्रकाशते)। दीव्यन्ति व्यवहरन्तीति 'देवाः' (प्राणाः); ते च 'द्रविणोदाः' (यागद्वारेण धनरूपं फलं प्रयच्छन्ति)। तादृशा यजमानस्य प्राणा अग्निमेतं 'धारयन्' (धृतवन्तः) ।

अथ द्वितीयामाह,—"अग्ने सहस्राक्ष शतमूर्द्धञ्छतं ते प्राणाः सहस्रमपानाः । त्वꣳ साहस्रस्य राय ईशिषे तस्मै ते विधेम वाजाय स्वाहा(२)" इति । शतसहस्रशब्दयोः अपरिमिताभिप्रायेण*, 'विश्वतश्चक्षुः'

---

* अपरिमितत्वाभिप्रायेण इति पाठो भवितुं युक्तः ।

—इत्यादिमन्त्रोक्तमूर्त्तिरूपत्वेनायमग्निरत्र स्तूयते। तस्मादग्निमूर्द्धप्राणापानाः हे 'अग्ने', तव बह्वः। तथा 'त्वं' 'साहस्रस्य' (बहुसहस्रसमूहपरिमितस्य) 'रायः' (धनस्य) 'ईशिषे' (प्रभुर्भवसि)। 'तस्मै' 'ते' (तादृशाय तुभ्यं) 'वाजाय' (अन्नमिच्छार्थं) 'विधेम' (परिचरेम)। 'हविषे' 'स्वाहा' (इदं हविः स्वाहुतमस्तु)।

तत्र प्रथममन्त्रं विनियुङ्क्ते,—"नक्तोषासेति पुरोऽनुवाक्यामन्वाह प्रत्यै" (५।४।७अ०) इति। पुरोभवः प्रदानमन्त्रः पूर्वमनुक्रमेणोच्यते इति पुरोऽनुवाक्या। 'प्रत्यै' उत्तरेण मन्त्रेण हविःप्रदानाय आदौ तान् ब्रूयात्, 'पुरोऽनुवाक्यामनूच्य याज्यया जुहोति' इत्यन्यत्राभिहितत्वात्।

द्वितीयमन्त्रस्य वैराजरूपप्रापकत्वं दर्शयति,—"अग्ने सहस्राक्षेत्याह साहस्रः प्रजापतिः प्रजापतेराप्त्यै" (५।४।७अ०) इति। सहस्रसङ्ख्याकचक्षुरादिसम्बन्धो विश्वरूपधरस्य विराण्मूर्त्तेः सम्भवति, नान्यस्य, अतोऽयं मन्त्रः प्रजापतिप्राप्तये भवति।

अस्य मन्त्रस्य चतुर्थपादे वाजशब्दस्य तात्पर्यं दर्शयति,—"तस्मै ते विधेम वाजाय स्वाहेत्याह अन्नं वै वाजोऽन्नमेवावरुन्धे" (५।४।७अ०) इति।

एतन्मन्त्रसाध्यं होमं विधत्ते,—"दध्नः पूर्णामौदुम्बरीꣳ स्वयमातृण्णायां जुहोत्यूर्ग्वै दधि ऊर्क् उदुम्बरोऽसौ स्वयमातृण्णाऽमुष्यामेवोर्जं दधाति तस्मादमुतोऽर्वाचीमूर्जमुप जीवामः" (५।४।७अ०) इति। जुहूसदृशी काचित् स्रुक् औदुम्बरी। दध्युदुम्बरयोरन्नरूपत्वात् स्वयमातृण्णायाश्च स्वर्गरूपत्वात्, तस्याश्च तद्धोमेन स्वर्ग एवान्नं

स्थापयति । यस्मात् स्वर्गे ऊर्क् अवस्थिता 'तस्मादमुतो' द्युलोकात् 'अर्वाचीं' (वृष्टिरूपेणाधः पतन्तीम्) 'ऊर्ज्जम्' (अन्नं) वयम् 'उप जीवामः' ।

कल्पः, 'सुपर्णो गरुत्मानिति तिसृभिः स्वयमातृण्णायामग्निं प्रतिष्ठाप्य' इति । तत्र प्रथमामाह—"सुपर्णोऽसि गरुत्मान् पृथिव्याᳯ सीद पृष्ठे पृथिव्याः सीद(८)" इति । हे अग्ने, त्वं 'सुपर्णः' (पक्ष्याकारः), 'गरुत्मान्' (गरुडसमानः) 'असि'; अतोऽस्यां चितिरूपायां 'पृथिव्यां' 'सीद' (उपविश) । तत्रापि तस्याः 'पृष्ठे' उपविश ।

अथ द्वितीयामाह,—"भासान्तरिक्षमा पृण ज्योतिषा दिवम् उत्तभान तेजसा दिश उद्दृᳯह(९)" इति । 'भासा' (स्वकीयेन प्रकाशेन) 'अन्तरिक्षम्' 'आ पृण' (सर्वतः पूरय) । 'ज्योतिषा' (स्वकीयेन सामर्थ्येन) 'दिवं' (द्युलोकं) 'उत्तभान' (ऊर्द्धस्तम्भितां) कुरु । तथा, 'तेजसा' (स्वकीयेन सामर्थ्येन) 'दिशः' (प्राच्यादिकाः) 'उद्दृंह' (उत्कर्षेण दृढ़ीकुरु) ।

अथ तृतीयामाह,—"आजुह्वानः सुप्रतीकः पुरस्तादग्ने स्वां योनिमा सीद साध्या । अस्मिन् सधस्थे अध्युत्तरस्मिन् विश्वे देवा यजमानस्य सीदत(१०)" इति । हे 'अग्ने', त्वम् 'आजुह्वानः' (आभिमुख्येन ह्वयमानः), 'सुप्रतीकः' (सुमुखः) सन् 'पुरस्तात्' (पूर्वस्यां दिशि) 'साध्या' (साध्वीं समीचीनां) 'स्वां' 'योनिं' (स्वकीयं स्थानं) 'आ सीद' (आगत्य प्राप्नुहि) । हे 'विश्वे' 'देवाः', यूयं 'यजमानस्य' 'अस्मिन्' (पुरोवर्त्तिनि) 'सधस्थे' (अग्निना सह स्थातुं योग्ये) 'अध्युत्तरस्मिन्' (अधिकमुत्कृष्टस्थाने) 'सीदत' (उपविशत) ।

एतान्मन्त्रान् विनियुङ्क्ते,—"तिसृभिः सादयति त्रिवृद्वै अग्नि-र्यावानेवाग्निस्तं प्रतिष्ठां गमयति" (५।४।७अ०) इति।

कल्पः, 'प्रेद्धो अग्ने दीदिहि पुरो नः इति औदुम्बरीꣳ समिध-मादधाति' इति। पाठस्तु,—"प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ। त्वꣳ शश्वन्त उप यन्ति वाजाः(११)" इति। हे 'अग्ने', 'प्रेद्धः' (पूर्वमपि प्रकर्षेण दीप्तः) 'त्वं' 'पुरो' 'नः' (अस्माकं पुरोदेशे) 'अजस्रया' (निरन्तरवर्त्तिन्या) 'सूर्म्या' (सूर्मिसमानया ज्वालया) 'दीदिहि' (पुनरपि दीप्यस्व)। ज्वलन्ती लोहमयी स्थूणा 'सूर्मी'। हे 'यविष्ठ' (युवतम) अग्ने, त्वां 'शश्वन्तः' निरन्तरभाविनः 'वाजाः' (अन्नानि) 'उप यन्ति' (सामीप्येन प्राप्नुवन्ति)।

तमेतं मन्त्रं विनियुङ्क्ते,—प्रेद्धो अग्ने दीदिहि पुरो न इत्यौदुम्बरी-मादधाति एषा वै सूर्मी कर्णकावती एतया ह स्म वै देवा असुराणाꣳ शततर्हाꣳस्तृꣳहन्ति यदेतया समिधमादधाति वज्रमेवैतच्छतघ्नीं यजमानो भ्रातृव्याय प्रहरति स्तृत्या अच्छम्बट्कारम्" (५।४।७अ०) इति। ज्वलन्ती लोहमयी स्थूणा 'सूर्मी', सा च 'कर्णकावती' (छिद्रवती, अन्तरपि ज्वलन्तीत्यर्थः), तत्समाना इयम् ऋक्। एकेनैव प्रहारेण शतसङ्ख्यान् मारयन्तः शूराः 'शततर्हाः', 'असुराणां' मध्ये तादृशान् एतया ऋचा 'देवाः' हिंसन्ति। अनया समिदाधाने 'शतघ्नीम्' एनाम् ऋचं 'वज्रं' कृत्वा वैरिणं 'प्रहरति'। 'अच्छम्बट्कारं' (स्वस्या विनाशः) यथा न भवति तथेत्यर्थः।

कल्पः, 'विधेम ते परमे जन्मन्नग्न इति वैकङ्कतीं समिधमा-दधाति-इत्यनुवर्त्तते' इति। पाठस्तु,—विधेम ते परमे जन्मन्नग्ने विधेम

स्तोमैरवरे सधस्थे। यस्माद्योनेरुदारिथा यजे तं प्र त्वे हवीꣳषि जुहुरे समिद्धे[११]" इति। हे 'अग्ने', 'ते' (तव) 'परमे' जन्मनि 'विधेम' (वयं ध्यानेन परिचरेम)। 'सधस्थे' (अस्माभिः सह स्थातुं योग्ये) 'अवरे' (निकृष्टे भूलोकवर्त्तिनि जन्मनि) 'स्तोमैः' (स्तोत्रैः) 'विधेम' (परिचरेम)। 'यस्माद्योनेः' (इष्टकचितिरूपात् स्थानात्) 'उदारिथ' (त्वमुद्गतः आविर्भूतोऽसि), 'तं' (योनिं) 'यजे' (पूजयामि)। 'समिद्धे' (सम्यक्प्रज्वलिते) त्वयि 'हवींषि' 'प्र'-'जुहुरे' (ऋत्विजः प्रकर्षेण जुह्वति)।

एतन्मन्त्रं विनियुङ्क्ते,—"विधेम ते परमे जन्मन्नग्न इति वैकङ्कती-मादधाति भा एवाव रुन्धे" (५।४।७अ०) इति। अग्नेर्भासो विकङ्कते प्रविष्टत्वात् तदीयसमिधा 'भाः' प्राप्यन्ते।

कल्पः, 'ताꣳ सवितुर्वरेण्यस्य चित्रामिति शमीमयीम्' इति। पाठस्तु,—"ताꣳ सवितुर्वरेण्यस्य चित्रामा अहं वृणे सुमतिं विश्वजन्याम्। यामस्य कण्वो अदुहत् प्रपीनाꣳ सहस्रधारां पयसा महीं गाम्[१२]" इति। पुरा कदाचित् कण्वाख्यो महर्षिः 'अस्य' (अग्नेः) 'यां' सुमतिम् (अनुग्रहकारिणीं बुद्धिम) 'अदुहत्' (दुग्धवान्)। तत्र दृष्टान्तः,—'प्रपीनां' (प्रभूतः पीनस्तनसङ्घो यस्याः सा प्रपीना, तां), सहस्रसङ्ख्याकाः चीरधारा यस्याः सा सहस्रधारा, तां, 'महीं' 'पयसा' (चीरेण सम्पूर्णां) 'गां' (धेनुं) यथा लौकिका दुहन्ति, तद्वदयमग्नेः सुमतेः उपदर्शितबुद्धेः स्वाभीष्टं फलं प्राप्तवान्। 'वरेण्यस्य' (सर्वैर्वरणीयस्य) 'सवितुः' (प्रेरकस्य) अग्नेः सम्बन्धिनीं 'तां' (कण्वेन दुग्धां) 'सुमतिम्' 'अहम्' 'आ'-'वृणे' (सर्वतः

प्रार्थये)। कीदृशीं सुमतिं?—'चित्रां' स्वापेक्षितबहुविधफलप्रदान-समर्थामित्यर्थः। विश्वं जन्यमुत्पाद्यं यस्याः सा विश्वजन्या तां, जगदुत्पादनसमर्थामित्यर्थः।

तमेतं मन्त्रं विनियुङ्क्ते,—"ताᳲ सवितुर्वरेण्यस्य चित्रामिति शमीमयीᳲ शान्त्यै" (५।४।७अ०) इति। शम्याः शमनहेतुत्वा-च्छान्त्यर्थत्वं युक्तम्।

मन्त्रस्य पूर्वार्द्धे 'सवितुस्त्वां सुमतिमा अहं वृणे' इत्यस्य तात्पर्य्यं दर्शयति,—"अग्निर्वा ह वै अग्निचितं दुहेऽग्निचिद्वा अग्निं दुहे ताᳲ सवितुर्वरेण्यस्य चित्रामित्याहैष वै अग्नेर्दोहः" (५।४।७अ०) इति। द्विविधो मन्त्रदोहः सम्भवति,—अग्निकर्तृको यजमानकर्म्मक एको दोहः, यथा, अग्निर्हि यजमाने सम्भावितं हविः स्तुत्यादिरूपं दोग्धि। तथा यजमानकर्तृकोऽग्निकर्म्मको द्वितीयो दोहः,—यजमानो ह्यग्नौ सम्भावितं स्वापेक्षितं फलं दोग्धि। तत्र सवितुः सुमतिमिति वचनेन अग्निकर्म्मको दोहो विवक्षितः।

द्वितीयार्द्धे काण्वोदाहरणस्य तात्पर्यं दर्शयति,—तमस्य काण्व एव आयसोऽवेत्तेन ह स्मैनᳲ स दुहे" (५।४।७अ०) इति। अग्नेः सम्बन्धिनं 'तं' फलस्वीकाररूपं दोहं कण्वाख्यः 'एव' महर्षिः पूर्वमेव ज्ञातवान्, स च 'काण्वः' अयसोऽपत्यं 'आयसः', अतोऽस्मिन्नुत्तरार्द्धे पठिते सति 'तेन' काण्वमुनिरेव* एतमग्निं स यजमानो दुग्धवान् भवति।

* अत्र काण्वमुनिनैवेति पाठो भवितुं युक्तः।

एतन्मन्त्रविशिष्टं समिदाधानं प्रशंसति,—"यदेतया समिधम् आदधात्यग्निचिदेव तदग्निं दुहे" (५।४।७अ०) इति।

कल्पः, 'द्वादशगृहीतेन स्रुचं पूरयित्वा सप्त ते अग्ने समिधः सप्त जिह्वा इति सप्तवत्या पूर्णाहुतिं जुहोति' इति। पाठस्तु,— "सप्त ते अग्ने समिधः सप्त जिह्वाः सप्तर्षयः सप्त धाम प्रियाणि। सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरा पृणस्व घृतेन(१४)" इति। हे 'अग्ने', तव 'समिधः' सप्तसङ्ख्याकाः,—अश्वत्थोदुम्बरपलाशशमी-विकङ्कताशनिहतवृक्षपुष्करपर्णरूपाः। अत एव सूत्रकार आधान-प्रकरणे सप्त समन्त्रकान् अनुक्रम्य 'इति वानस्पत्याः' इत्युपसंजहार। ज्वालारूपा जिह्वाश्च सप्त। तथा चाथर्वणिका आमनन्ति,— 'काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा। स्फुलिङ्गिनी विश्वरुची च देवी लोलायमाना इति सप्त जिह्वाः' इति।

ऋषयो मन्त्राः, ते च यथोक्तसमित्सम्पादनार्थाः सप्तसङ्ख्याकाः,— 'अश्वो रूपं कृत्वा यदश्वत्थे तिष्ठ(?)' इत्यादयः समाम्नाताः। 'प्रियाणि' 'धाम' (स्थानानि) आहवनीयगार्हपत्यदक्षिणाग्निसभ्यावसथ्य-प्राजहिताग्नीध्रीयाख्यानि सोमयागे वह्निधारकाणि सप्तसङ्ख्याकानि।. 'होत्राः' होतृप्रमुखा वषट्कर्त्तारः,—होता, प्रशास्ता, ब्राह्मणाच्छंसी, पोता, नेष्टा, अग्नीध्रः, अच्छावाकश्चेति सप्तसङ्ख्याकाः। त्वां यजमानाः 'सप्तधा' 'यजन्ति',—अग्निष्टोमः, अत्यग्निष्टोमः, उक्थ्यः, षोड़शी अतिरात्रः, अप्तोर्यामः, वाजपेयश्चेति सप्तप्रकाराः। तादृशस्त्वं 'सप्त योनीः' आहवनीयादिस्थानानि 'घृतेन' सर्वतः पूरय।

अस्य मन्त्रस्य तात्पर्यं दर्शयति,—"सप्त ते अग्ने समिधः सप्त

जिह्वा इत्याह सप्तैवास्य साप्तानि प्रीणाति" (५।४।७अ०) इति। सप्तसङ्ख्योपेतं द्रव्यस्वरूपं साप्तं। तानि च 'साप्तानि' पुनः सप्त-सङ्ख्याकानि। समित्सप्तकमेकं, जिह्वासप्तकं द्वितीयं, ऋषिसप्तकं तृतीयं, धामसप्तकं चतुर्थं, होतृसप्तकं पञ्चमं, यजमानप्रकारभेदे सप्तकं षष्ठं, पूरणीययोनिसप्तकमेकं। अग्नेः सम्बन्धीनि साप्तानि समिदादिसप्तकानि यानि सन्ति तानि साप्तानि* प्रीणयत्येव।

एतन्मन्त्रसाध्यं होमं विधत्ते,—"पूर्णया जुहोति पूर्ण इव हि प्रजापतिः प्रजापतेराप्त्यै न्यूनया जुहोति न्यूनाद्धि प्रजापतिः प्रजा असृजत प्रजानाꣳ सृष्ट्यै" (५।४।७अ०) इति। द्वादशगृहीतेनाज्येन पूर्णा या जुहूः, तया जुहुयात्। प्रजापतेः प्राप्तसर्वकामत्वात् पूर्णत्वं, अतस्तत्पूर्त्तिः 'प्रजापतेः' प्राप्त्यै भवति। मुख्यकल्पत्वेन पूर्णत्वं विधाय अनुकल्पत्वेन न्यूनत्वमप्यङ्गीक्रियते। 'न्यूनात्' 'अल्पात्' वीजात् 'प्रजापतिः' प्रौढ़ानि शरीराणि 'असृजत'। अतः 'प्रजानां' 'सृष्ट्यै' न्यूनत्वमङ्गीक्रियते, किमु वक्तव्यं पूर्णत्वमित्यभिप्रायः।

होमकाले ध्यानं विधत्ते,—"अग्निर्देवेभ्यो निलायत स दिशोऽनु प्राविशज्जुह्वन्मनसा दिशो ध्यायेद्दिग्भ्य एवैनमव रुन्धे" (५।४।७अ०) इति।

एवं दिक्षु प्रविष्टमग्निं, पूर्वमनुष्ठितां दध्याहुतिम्, इदानीमनुष्ठीय-मानामाज्याहुतिञ्च मिलित्वा प्रशंसति,—"दध्ना पुरस्ताज्जुहोत्याज्येन उपरिष्टात्तेजश्चैवास्मै इन्द्रियञ्च समीची दधाति" (५।४।७अ०)

---

* अत्र सात्यानि इति सर्व्वत्र पाठो न सम्यक्।

इति । अग्निस्थापनात् पूर्वं दधिहोमः, उपरिष्टादाज्यहोमः । तत्राज्यं तेजोरूपं, दधि च इन्द्रियरूपं,—'तेजो वा आज्यं, इन्द्रियं वै दधि' इति श्रुत्यन्तरात् । अतो यजमानार्थमुभयमपि सम्यक् सम्पादितं भवति ।

कल्पः, 'उपांशुमारुतान् सर्वहुतान् जुहोति ईदृङ् चान्यादृङ् चेति सप्तभिर्गणैरासीनो हस्तेन गणेन गणमनुद्रुत्य मारुतान् जुहोति, मध्येऽरण्येऽनुवाक्येन गणेन जुहोतीत्येके, मारुतैः सर्वतो वैश्वानरं परिचिनोतीत्येके, स्वतवांश्च, प्रघासी च, सान्तपनश्च, गृहमेधी च, क्रीडी च, साकी च, ऊर्जिषी चेत्येष षष्ठ आम्नातः, मितासश्च सम्मितासश्च न इति सर्वत्रानुषजति' इति । पाठस्तु,—"ईदृङ् च, अन्यादृङ् च, एतादृङ् च, प्रतिदृङ् च, मितश्च, सम्मितश्च, सभराः । शुक्रज्योतिश्च, चित्रज्योतिश्च, सत्यज्योतिश्च, ज्योतिष्मांश्च । सत्यश्च, ऋतपाश्च, अत्यंहाः । ऋतजिच्च, सत्यजिच्च, सेनजिच्च, सुषेणश्च, अन्त्यमित्रश्च, दूरे-अमित्रश्च, गणः । ऋतश्च, सत्यश्च, ध्रुवश्च, धरुणश्च, धर्ता च, विधर्ता च, विधारयः । ईदृक्षासः एतादृक्षासः, ऊ षु णः, सदृक्षासः, प्रतिसदृक्षासः एतन । मितासश्च सम्मितासश्च न ऊतये सभरसो मरुतो यज्ञे अस्मिन्निन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानः, यथेन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मान एवमिमं यजमानं दैवीश्च विशो मानुषीश्चानुवर्त्मानो भवन्तु(१५-२१)" इति । अत्र हि मरुतां गणाः पञ्च आम्नाताः,—'ईदृङ्' इत्यादीनि सप्त नामानि तैरभिधेयानां मरुतामेको गणः । चकाराः परस्परसमुच्चयार्थाः । तथा शुक्रज्योतिरित्यादीनि सप्त नामानि तैरभिधेयानां मरुतां गणो

द्वितीयः। ऋतजिदित्यादिगणस्तृतीयः। ऋतश्चेत्यादिश्चतुर्थः। ईदृक्षास इत्यादीनि चत्वारि नामधेयानि सोऽयं पञ्चमो गणः। हे गणपञ्चकरूपा 'मरुतः', एतेन समुच्चयेन वर्त्तन्ते*, यूयं सर्वे समुच्चित्य सुष्ठु 'नः' (अस्मान्) प्रति आगच्छत। 'मितासश्च' (गणचतुष्टयेन सप्तसङ्ख्यया प्रमिताः), 'सम्मितासश्च' (पञ्चमगणे चतुःसङ्ख्यया सङ्क्षिप्य प्रमिताः), 'ऊतये' 'नः' (अस्माकं रक्षणाय) 'सभरसः' (भरेणादरेण वर्त्तन्ते इति सभरसः), तादृशा हे 'मरुतः', 'अस्मिन्' 'यज्ञे' 'एतन' (आगच्छत)। 'दैवीर्विशः' (देवसम्बन्धिन्यः प्रजारूपाः) एते 'मरुतः' 'इन्द्रं' 'अनुवर्त्मानः'। इन्द्रस्वामिनमनुसृत्य, तदनुसारेण यथा वर्त्तन्ते 'मरुतः', 'एवं' दैव्यो मानुष्यश्च सर्वाः प्रजाः 'इमं' 'यजमानं' अनुसृत्य वर्त्तमाना 'भवन्तु'। एतैर्मन्त्रैः साध्या मारुतहोमा उपरि विधास्यन्ते।

एतेभ्यो मारुतपुरोडाशेभ्यः पुरा निर्वपणीयं वैश्वानरमादौ विधत्ते,—"द्वादशकपालो वैश्वानरो भवति द्वादश मासाः संवत्सरोऽग्निर्वैश्वानरः साक्षादेव वैश्वानरमवरुन्धे" (५।४।७अ०) इति।

उख्याग्नेः संवत्सरधारणेन अग्नेः संवत्सररूपत्वं चोदकप्राप्तान् प्रयाजानूयाजान् अपवदति,—"यत्प्रयाजानूयाजान् कुर्याद्विकस्तिः सा यज्ञस्य दर्विहोमं करोति यज्ञस्य प्रतिष्ठित्यै" (५।४।७अ०) इति। विशेषेण कस्तिर्नाशो विकस्तिः तत्परिहाराय अन्यत्र प्रयाजानूयाजान् अकृत्वा यथा दर्विहोमं कुर्वन्ति। तद्वदत्रापि दर्विहोमं

* 'ये ते' इत्येवंरूपः कश्चित् पाठ पतित इव प्रतिभाति।

प्रयाजानूयाजादिरहितं 'कुर्यात्', ततो विकल्पेरभावात् यज्ञः प्रतिष्ठितो भवति ।

वैश्वानरपुरोडाशहोमसमनन्तरमेव मारुतपुरोडाशहोमं विधत्ते,—"राष्ट्रं वैश्वानरो विण्मरुतो वैश्वानरꣳ हुत्वा मारुतान् जुहोति राष्ट्र एव विशमनु बध्नाति" (५।४।७ग्र०) इति। राष्ट्रस्थानीयस्य वैश्वानरस्य पूर्व्वभावित्वात् पश्चाद्भावीयप्रजास्थानीयमारुतहोमेन राष्ट्रे प्रजां योजितवान् भवति ।

मारुतहोमे मन्दध्वनिं विधत्ते,—"उच्चैर्वैश्वानरस्य आ श्रावयति उपाꣳशु मारुतान् जुहोति तस्माद्राष्ट्रं विशमति वदति"(५।४।७ग्र०) इति। उच्चध्वनित्वमाश्रावणे चोदकप्राप्तं। यस्माद्राष्ट्रस्थानीये वैश्वानरे उच्चैः ध्वनिः, प्रजास्थानीये मारुते उपांशुत्वं, 'तस्मात्' लोकेऽपि प्रजाम् अतिक्रम्य 'राष्ट्रं' एवाधिकं सर्वो जनो वक्ति, सति हि राष्ट्र प्रजानामन्वेषणम् ।

अथ मारुतपुरोडाशान् प्रशंसति,—"मारुता भवन्ति मरुतो वै देवानां विशः, देवविशेनैवास्मै मनुष्यविशमवरुन्धे" (५।४।७ग्र०) इति। दैव्येन प्रजासमूहेन यजमानाय मानुषं प्रजासमूहं सम्पादयति ।

पुरोडाशानां सङ्ख्यां विधत्ते,—"सप्त भवन्ति सप्त गणा वै मरुतो गणश एव विशमव रुन्धे" (५।४।७ग्र०) इति। समत्येषु मन्त्रेष्वाम्नाताः पञ्च गणाः, आरण्यकाण्डे समाम्नातो 'धुनिश्च ध्वान्तश्च' इत्यपरो गणः, सूत्रोक्तः 'स्वतवान्' इत्यादिरेकः;—अतः सप्तसङ्ख्याभिश्च बहुविधगणरूपां प्रजां प्राप्नोति ।

होमकाले मन्त्रोच्चारणे कश्चिद्विशेषं विधत्ते,—"गणेन गणमनुद्रुत्य जुहोति, विशमेवास्मै अनुवर्त्मानं करोति" (५।४।७अ०) इति। यदा प्रथमगणेन हुत्वा द्वितीयगणेन जुहोति, तदानीं प्रथमगणमुच्चार्य पश्चाद् द्वितीयगणेन जुहोति। तथा द्वितीयगणमुच्चार्य तृतीयगणेन जुहुयात्। एवं सति सर्व्वां प्रजाम् 'अस्मै' यजमानाय अनुकूलत्वेन वर्त्तमानां 'करोति'॥

अत्र विनियोगसंग्रहः,—

प्राचीति पञ्चभिः साग्निरारोहेन्निर्म्मितां चितिम्।
पूर्णामौदुम्बरीं दध्ना जुहोत्येते क्रतौ तदा॥
याज्यानुवाक्ये नक्तेति, सुपर्णोऽस्यादिभिस्त्रिभिः।
स्वयमातृण्णकायान्तु मुख्याग्निं स्थापयेत्ततः॥
प्रेद्ध, औदुम्बरीं दध्याद्विधे, वैकङ्कतीं तथा।
शमीमयीति तां सेति, सम्राज्यं हूयते स्रुचा॥
मारुतेषु तु यागेषु प्रोक्ताः पञ्च मरुद्गणाः।
ईदृङ् चेत्यादयः, शेषो मितासश्च समीरितः॥
अनुवाके पञ्चमेऽस्मिन्नुक्ता एकोनविंशतिः॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये चतुर्थकाण्डे षष्ठप्रपाठके पञ्चमोऽनुवाकः॥०॥

जीमूतस्येव भवति प्रतीकं यद्वर्मी याति समदा-मुपस्थे । अनाविद्धया तनुवा जय त्वं स त्वा वर्मणो महिमा पिपर्तु[१] । धन्वना गा धन्वनाजिं जयेम धन्वना तीव्राः समदो जयेम । धनुः शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम[२] । वक्ष्यन्तीवेदा गनीगन्ति कर्णं प्रियं सखायं परिषस्वजाना । योषेव शिङ्क्ते विततादिधन्वन् ॥ १ ॥

ज्या इयं समने पारयन्ती[३] । ते आचरन्ती समनेव योषा मातेव पुत्रं बिभृतामुपस्थे । अप शत्रून् विध्यतां संविदाने आर्त्नी इमे विस्फुरन्ती अमित्रान्[४] । बह्वीनां पिता बहुरस्य पुत्रश्चिश्चा कृणोति समनावगत्य । इषुधिः सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः[५] । रथे तिष्ठन्नयति वाजिनः पुरो यत्र यत्र कामयते सुषारथिः । अभीशूनां महिमानं ॥ २ ॥

पनायत मनः पश्चादनु यच्छन्ति रश्मयः[६] । तीव्रान् घोषान् कृण्वते वृषपाणयोऽश्वा रथेभिः सह वाजयन्तः । अवक्रामन्तः प्रपदैरमित्रान् क्षिणन्ति शत्रूंरनपव्ययन्तः[७] । रथवाहनं हविरस्य नाम यत्रायुधं निहितमस्य वर्म । तत्रा रथमुप शग्मं सदेम

विश्वाहा वयꣳ सुमनस्यमानाः[८]। स्वादुषꣳसदः पितरो वयोधाः कृच्छ्रेश्रितः शक्तीवन्तो गभीराः। चित्रसेना इषुबला अमृध्राः सतोवीरा उरवो व्रातसाहाः[९]। ब्राह्मणासः ॥ ३ ॥

पितरः सोम्यासः शिवे नो द्यावापृथिवी अनेहसा। पूषा नः पातु दुरितादृतावृधो रक्षा माकिर्नो अघशꣳस ईशत[१०]। सुपर्णं वस्ते मृगो अस्या दन्तो गोभिः सन्नद्धा पतति प्रसूता। यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यꣳसन्[११]। ऋजीते परि वृङ्धि नोऽश्मा भवतु नस्तनूः सोमो अधि ब्रवीतु नोऽदितिः॥ ॥ ४ ॥

शर्म यच्छतु[१२]। आ जङ्घन्ति सान्वेषां जघनाꣳ उप जिघ्नते। अश्वाजनि प्रचेतसोऽश्वान्त्समत्सु चोदय[१३]। अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परि बाधमानः। हस्तघ्नो विश्वा वयुनानि विद्वान् पुमान् पुमाꣳसं परि पातु विश्वतः[१४]। वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः। गोभिः सन्नद्धो असि वीडयस्वास्थाता ते जयतु जेत्वानि[१५]। दिवः पृथिव्याः परि ॥ ५ ॥

ओज उद्भृतं वनस्पतिभ्यः पर्याभृतꣳ सहः। अपा-

मोऽश्मानं परि गोभिरावृतमिन्द्रस्य वज्रः हविषा रथं यज[11]। इन्द्रस्य वज्रो मरुतामनीकं मित्रस्य गर्भो वरुणस्य नाभिः। सेमां नो हव्यदातिं जुषाणो देव रथ प्रति हव्या गृभाय[17]। उप श्वासय पृथिवीमुत द्यां पुरुत्रा ते मनुतां विष्ठितं जगत् स दुन्दुभे सजूरिन्द्रेण देवैर्दूरात्॥६॥

दवीयो अप सेध शत्रून्[18]। आ क्रन्दय बलमोजो न आ धा नि ष्टनिहि दुरिता बाधमानः। अप प्रोथ दुन्दुभे दुच्छुनाः इत इन्द्रस्य मुष्टिरसि वीडयस्व[19]। सआमूरज प्रत्यावर्त्तयेमाः केतुमद्दुन्दुभिर्वावदीति। समश्वपर्णाश्चरन्ति नो नरोऽस्माकमिन्द्र रथिनो जयन्तु[20]॥७॥

धन्वन्। महिमानं। ब्राह्मणासः। अदितिः। पृथिव्याः परि। दूरात्। एकचत्वारिंशच्च॥६॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे षष्ठप्रपाठके षष्ठोऽनुवाकः॥*॥

पञ्चमेऽनुवाके चित्यारोहणादयो मारुतहोमान्ताः अङ्गविशेषा उक्ताः। अथ षष्ठेऽश्वमेधकर्त्तुः रथसज्जीकरणभावीनि कवच-

स्वीकारादीनि अङ्गानि उच्यन्ते। तस्य चाग्निप्रकरणे* सम्बन्धाभावात् इत उत्कृष्याश्वमेधप्रकरणे सम्बन्धो द्रष्टव्यः। अध्ययनार्थमेव केवलमत्र मन्त्रपाठः। कल्पः, 'जीमूतस्येति कवचमध्यूहते' इति। पाठस्तु,—"जीमूतस्येव भवति प्रतीकं यद्वर्मी याति समदामुपस्थे। अनाविद्धया तनुवा जय त्वꣳ स त्वा वर्मणो महिमा पिपर्तु(१)" इति। 'यत्' (यदा) 'वर्मी' (कवचयुक्तो) राजा 'समदां' (शत्रूणाम्) 'उपस्थे' (समीपे) 'याति', (अनेन सह मात्सर्येण माद्यन्तीति समदः शत्रवः), तदा 'जीमूतस्य' (मेघस्य) 'प्रतीकं' (मुखम्) इव 'भवति',—सैन्यद्वयं युद्धार्थं यदा मिलति, तदानीं, वर्षितुं यतस्तत आगताः प्रौढ़ा मेघा यथा अन्तरिचं सर्वमावृण्वन्ति, एवं भूमिं सर्वां व्याप्तं भवतीत्यर्थः। तस्मिन् काले हे राजन्, 'अनाविद्धया' (परकीयप्रहाररहितया) 'तनुवा' (स्वशरीरेण) युक्तो भूत्वा विजयं प्राप्नुहि। 'वर्मणः' (कवचस्य) तादृशः 'महिमा' त्वां 'पिपर्तु' (पालयतु)।

कल्पः, 'धन्वना गा इति धनुः' इति। पाठस्तु,—"धन्वना गा धन्वना आजिं जयेम धन्वना तीव्राः समदो जयेम। धनुः शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम(२)" इति। वयं 'धन्वना' (धनुषा) 'गाः' 'जयेम' (परकीयगवादीन् आहरेम)। तथा 'धन्वना 'आजिं' (युद्धं) 'जयेम'। तथा 'धन्वना' (धनुषा) 'तीव्राः' (शूरभटोपेताः),'समदः' (मदसहिताः परसेनाः) 'जयेम'। इदं 'धनुः' 'शत्रोः' (अस्मदीयवैरिणः) 'अपकामं' कृणोतु

* 'प्रकाशे' इति सर्वत्र पाठो न सम्यक्।

(कामेभ्योऽपनयः,—अपकामः, तं करोतु) । किं बहुना 'सर्वाः' अपि 'प्रदिशः' (उत्कृष्टान् सर्वदिग्वर्त्तिशत्रून्) 'जयेम' ।

कल्पः, 'वक्ष्यन्तीवेति ज्यामभिमृशति' इति । पाठस्तु,—"वक्ष्यन्ती इवेत् आ गनीगन्ति कर्णं प्रियꣳ सखायं परिषस्वजाना । योषेव शिङ्क्ते वितताऽधिधन्वन् ज्या इयꣳ समने पारयन्ती[१]" इति । 'इयं' 'ज्या' (धनुषि आरोपिता मौर्वी) 'वक्ष्यन्ती' 'इव' (किञ्चिद्रहस्यं वाक्यं वदिष्यन्तीव*) 'कर्णं' 'गनीगन्ति†' (कर्णसमीपमागच्छति) । तत्र दृष्टान्तः,—'प्रियं सखायं' 'परिषस्वजाना' (प्रीतियुक्तं सखिसमानं विश्रम्भव्यवहारयोग्यं भर्त्तारमालिङ्गन्ती) 'योषेव' 'शिङ्क्ते' (अव्यक्तशब्दं करोति),—सा यथा स्वकीयं योगक्षेमं शनैः कथयति, तद्वदियमपि ज्या शब्दयतीत्यर्थः । कीदृशी ज्या?,—'अधिधन्वन्' (धनुष उपरि) 'वितता' (विशेषेण प्रसारिता), 'समने' (युद्धे) 'पारयन्ती' (युद्धसमाप्तिं गमयन्ती) ।

कल्पः, 'ते आचरन्तीति धनेरार्त्नी सम्मृशति' इति । पाठस्तु,—"ते आचरन्ती समना इव योषा मातेव पुत्रं बिभृतामुपस्थे । अप शत्रून् विध्यताꣳ संविदाने आर्त्नी इमे विस्फुरन्ती अमित्रान्[४]" इति । 'ते' धनुषः कोट्यौ 'विस्फुरन्ती' (विस्फुरन्त्यौ, पुनः पुनः प्रवर्त्तमाने) सत्यौ, 'संविदाने' (परस्परमैकमत्यं गते), 'अमित्रान्' (अत्यन्तविरोधिनः) 'अप'-'विध्यतां' । कीदृशे कोट्यौ?—समने (युद्धे) 'योषा' 'इव' 'आचरन्ती' तद्वन्मधुरशब्देन हितं बोधयन्त्यौ ।

---

* 'वदिष्यन्निव' इति सर्व्वत्र पाठो न सम्यक् ।

† अत्र 'आ'-'गनीगन्ति' इति पाठो भवितुं युक्तः ।

पुनः कीदृशे?—'उपस्थे' 'विभ्रती' 'माता' 'पुत्रम्' 'इव',—तद्वद्धितकारिण्यौ।

कल्पः, 'बह्वीनां पिता बहुरस्य पुत्र इति पृष्ठे इषुधिं निनह्यति'* इति। पाठस्तु,—"बह्वीनां पिता बहुरस्य पुत्रश्चिश्चा कृणोति समना अवगत्य। इषुधिः सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः(५)" इति। अयम् 'इषुधिः' (बाणाधारः) 'समना अवगत्य' (समने युद्धे प्राप्य) 'चिश्चा कृणोति' (बाणाकर्षणवेलायाम् अव्यक्तं ध्वनिं करोति, तस्यानुकरणं चिश्चेति)। कीदृशः इषुधिः?,—'बह्वीनां' इषूणां पालकः। अत एवास्य पितृस्थानीयस्य पुत्रस्थानीय इषुसङ्घो बहुविधः,·सोऽयम् 'इषुधिः' 'पृष्ठे' 'निनद्धः' (नितरां बद्धः) 'प्रसूतः' (धानुष्केण प्रेरितः) बाणाकर्षणे 'सङ्काः' (सम्यक् प्राप्ताः) 'सर्वा' अपि 'पृतनाः' 'जयति'।

कल्पः, 'रथे तिष्ठन्नयति वाजिन इति सारथिमभिमन्त्रयते' इति। पाठस्तु,—"रथे तिष्ठन्नयति वाजिनः पुरो यत्र यत्र कामयते सुषारथिः। अभीशूनां महिमानं पनायत मनः पश्चादनु यच्छन्ति रश्मयः(६)" इति। 'सुषारथिः' (सुशिक्षितोऽयं सारथिः) स्वयं 'रथे' 'तिष्ठन्' 'यत्र यत्र' 'कामयते' गन्तुं, तत्र तत्र 'पुरः' (पुरस्तात्) 'वाजिनः' 'नयति' (प्रेरयति)। हे ऋत्विग्यजमानाः, 'अभीशूनां' (अश्वधारणहेतूनां) रश्मीनां 'महिमानं' 'पनायत' (वाचा स्तुतिं कुरुत)। अत एव स्तुतिप्रकार उच्यते,—'रश्मयः' एते (प्रग्रहाः) सारथेः 'मनः' 'अनु'-सृत्य 'पश्चात्' 'यच्छन्ति' (नियता भवन्ति),—

* 'निनस्यति' इति सर्व्वत्र पाठो न सम्यक्।

सारथेर्यथा मनोवृत्तिः पुरस्तात् प्रवर्त्तते, तेनैव प्रकारेण पश्चाद् अश्वानां नियमनं कुर्वन्तीत्यर्थः ।

कल्पः, 'तीव्रान् घोषान् कृण्वते वृषपाणय इत्यश्वान्' इति । पाठस्तु,—"तीव्रान् घोषान् कृण्वते वृषपाणयोऽश्वा रथेभिः सह वाजयन्तः । अवक्रामन्तः प्रपदैरमित्रान् चिणन्ति शत्रूꣳरनपव्ययन्तः(७)" इति । एते 'अश्वाः' 'तीव्रान्' अत्युच्च-'घोषान्' 'कृण्वते' (हेषाशब्दान् कुर्वन्ति)*। कीदृशा अश्वाः ?,—'वृषपाणयः',—सेचनवाचिना वृषशब्देन शक्तिरुपलच्यते, पाणिशब्दः पादलचकः, गन्तुं शक्ताः पादा येषामश्वानां, ते 'वृषपाणयः' । 'रथेभिः' 'सह वाजयन्तः' (रथैः सह शीघ्रं गच्छन्तः), 'प्रपदैः' (पादाग्रैः, खुरैः) 'अमित्रान्' 'अवक्रामन्तः' । तादृशा अश्वाः, 'अनपव्ययन्तः' (प्रत्यामत्तिमकुर्वतः†) भीतिरहितान् इत्यर्थः 'शत्रून्' 'चिणन्ति' (हिंसन्ति) ।

कल्पः, 'रथवाहनꣳ हविरस्य नामेति रथवाहने रथमत्याधाय' इति । यद्यपीदं अत्याधानं रथस्य प्रत्याधानादूर्द्धभावी, तथापि अध्ययनसम्प्रदायादयं मन्त्रोऽत्र पठितः । पाठस्तु,—"रथवाहनꣳ हविरस्य नाम यत्रायुधं निहितमस्य वर्म । तत्रा रथमुप शग्मꣳ सदेम विश्वाहा वयꣳ सुमनस्यमानाः(८)" इति । 'यत्र' (यस्मिन्) अल्पे शकटे 'अस्य' (यजमानस्य) 'आयुधं' (धनुरादिकं) 'वर्म' (कवचं) च— इत्येवमादिकं 'निहितं', यस्य शकटस्य 'रथवाहनम्' इति नामधेयं, (प्रत्यागत्य रथोऽस्मिन् शकटे स्थाप्यते इति तच्छकटं 'रथवाहनं'),

* 'अत्युच्चघोषान् कुर्व्वते' इति का० ह० प० पाठः ।

† 'प्रत्यापत्तिमकुर्व्वतः' इति का० ह० पु० पाठः ।

तस्य हविर्वदुपकारकत्वाद्धविष्ट्वं, 'तत्र' रथवाहने शकटे 'विश्वाहा' (सर्वेष्वपि दिनेषु) 'सुमनस्यमानाः' (सौमनस्यं प्राप्ताः) 'वयं' 'शग्मं' (सुखगमनहेतुं) 'रथम्' 'उप'-'सदेम' (उपेत्य स्थापयाम)।

कल्पः, 'स्वादुषꣳसदः पितरो वयोधा इति तिसृभिः पितृ-नुपतिष्ठते' इति। तत्र प्रथमामाह,—"स्वादुषꣳसदः पितरो वयोधाः कृच्छ्रेश्रितः शक्तीवन्तो गभीराः। चित्रसेना इषुबला अमृध्राः सतो-वीरा उरवो व्रातसाहाः(९)" इति। ये 'पितरः' अस्मदीयाः सन्ति, ते एतैर्विशेषणैर्विशिष्टाः; तानि एतानि विशेषणानि उच्यन्ते। 'स्वादुषꣳसदः' (अस्मत्समर्पिते स्वादुनि अन्ने सम्यक् सीदन्ति तेन तृप्ता इत्यर्थः); 'वयोधाः' (अस्मदीयवयसः आयुषः स्थापयितारः); 'कृच्छ्रे' (व्यसने) प्राप्ते सति रक्षार्थं श्रीयन्ते, प्राणिभिः सेव्यन्त इति 'कृच्छ्रेश्रितः'; 'शक्तीवन्तः' (शक्तियुताः); 'गभीराः' (अगाधबुद्धयः); 'चित्रा' (विविधा) हस्त्यश्वादिरूपा 'सेना' येषां ते 'चित्रसेनाः'; इषुभिर्योद्धुमतिप्रबलाः 'इषुबलाः'; 'अमृध्राः' (परैर्योद्धुमशक्याः); सन् विद्यमानो लोके प्रसिद्धो यः शूरः, तस्माद्यप्यतिशूराः 'सतोवीराः'; 'उरवः' (विस्तीर्णाः धनसेनादिसमृद्धाः); 'व्रातं' (परकीयभटसङ्घं) सहन्ते अभिभवन्तीति 'व्रातसाहाः'।

अथ द्वितीयामाह,—"ब्राह्मणासः पितरः सोम्यासः शिवे नो द्यावापृथिवी अनेहसा। पूषा नः पातु दुरितादृतावृधो रक्षा माकिर्नो अघशꣳस ईशत(१०)" इति। ये अस्मदीयाः 'पितरः' ते 'ब्राह्मणासः' (ब्रह्म वेदः, तदर्थपरा ब्राह्मणाः), अत एवास्मासु 'सोम्यासः' (सोम्याः अनुग्रहतत्परा इत्यर्थः)। यथैते 'पितरः',

तथा 'द्यावापृथिवी' उभे अपि 'अनेहसा' (अनेहसि सर्वस्मिन्नपि काले) 'नः' (अस्मान्) प्रति 'शिवे' (शान्ते) अनुग्रहपरे भवतामिति शेषः। तथा 'ऋतावृधः' (यज्ञस्य वर्द्धयिता), 'पूषा' (पोषको) देवः, 'नः' (अस्मान्) 'दुरितात्' 'पातु'। हे पितृसमूह, 'रक्ष' (अस्मान् पालय); 'नः' (अस्माकं) 'अघशंसः' (पापशंसनपराः, निन्दकाः) 'माकिः' 'ईशत' (निन्दितुं समर्था मा भवत)।

अथ तृतीयामाह,—"सुपर्णं वस्ते मृगो अस्याः दन्तो गोभिः सन्नद्धा पतति प्रसूता। यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यंसन्(११)" इति। पितृसम्बन्धिनी येयमिषुः प्रशस्यते 'अस्याः' (इषोः) 'सुपर्णं' (पृष्ठेऽवस्थितं शोभनं पतन्तं भागं) 'वस्ते' (आच्छादयति)। अथ 'अस्याः' इषोः 'दन्तः' (शल्यं) मृगदन्तवत् तीक्ष्णं। सेयमिषुः 'गोभिः' (गोसम्बन्धिभिः) 'सन्नद्धा' (दृढं बद्धा), तादृशेयम् इषुः 'प्रसूता' (पितृभिः प्रेरिता सती) 'पतति' (सहसा गच्छति)। कुत्र? इति,—तदुच्यते, 'नरः' (पुरुषाः, योद्धारः) 'यत्र' (यस्मिन्) परसैन्ये 'सं च वि च द्रवन्ति',—प्रथमं उत्सुकाः सन्तः प्राप्नुवन्ति, पश्चाद्भीताः सन्तः पलायन्ते च। 'तत्र' इयमिषुः 'पतति' इति पूर्व्वत्रान्वयः। तादृश्यः पितृणां 'इषवः' 'अस्मभ्यं' 'शर्म्म' (सुखं) 'यंसन्' (यच्छन्तु)।

अथ कल्प', 'ऋजीते परि वृङ्धि न इत्यात्मानं प्रत्यभिमृशेत्' इति। पाठस्तु,—"ऋजीते परि वृङ्धि नोऽश्मा भवतु नस्तनूः। सोमो अधि ब्रवीतु नोऽदितिः शर्म यच्छतु(१२)" इति। ऋजीतीशब्द*

* अत्र ऋजीतिशब्द इति पाठो भवितुं युक्तः।

इषुवाची। हे 'ऋजीते' अस्मान् 'परि'-'वृङ्धि' (परितो वर्जितान् कुरु)। 'नः' (अस्माकं) 'तनूः' 'अश्मा भवतु' (पाषाणवत् दृढ़ीभवतु)। 'सोमो' 'नः' (अस्मान्) 'अधि-ब्रवीतु' (अधिका एते मान्या इति कथयतु)। 'अदितिः' 'शर्म्म यच्छतु' (सुखं यच्छतु)।

कल्पः, 'आ जङ्घन्तीत्यश्वाजिनीमादाय' इति। पाठस्तु,—"आ जङ्घन्ति सान्वेषां जघनाꣳ उप जिघ्नते। अश्वाजनि प्रचेतसः अश्वान्त्समत्सु चोदय(१३)" इति। कशाधारिणः सारथयः 'एषाम्' अश्वानां 'सानु' (पर्वतसानुसदृशं पार्श्वम्) 'आ जङ्घन्ति' (सर्वतस्ताड़यन्ति)। तथा पृष्ठभागान् 'उपजिघ्नते' (उपेत्य ताड़यन्ति)। तथाविधताड़न-हेतुभूते हे 'अश्वाजिनि' (अश्वप्रेरके कशे), 'प्रचेतसः' (ताड़नेन प्रकृष्टगमने चित्तयुक्तान्) 'समत्सु' (युद्धेषु) 'चोदय' (प्रेरय)।

कल्पः, 'अहिरिव भोगैरिति हस्तघ्नमभिमन्त्रयते' इति। पाठस्तु, —"अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परि बाधमानः। हस्तघ्नो विश्वा वयुनानि विद्वान् पुमान् पुमाꣳसं परि पातु विश्वतः(१४)" इति। धानुष्कैर्वामहस्तः केनचिद्रूपेण चर्मविशेषेण वेष्ट्यते। तत्रायं दृष्टान्तः,—'अहिरिव भोगैः', यथा सर्पः स्वकीयशरीरवेष्टनैः पुरुषस्य हस्तं पादं वा वेष्टयति, तथायं चर्मविशेषः पुरुषस्य 'बाहुं' 'पर्येति' (परितो व्याप्नोति)। किं कुर्व्वन्?—'ज्यायाः' आकर्णमाकृष्य सहसा मुक्ता या 'हेतिः', तां 'परि बाधमानः' (परितो निवारयन्); ज्यायाः प्रहारश्चर्मण्येव फलति न तु बाहौ, हस्ते स्थित्वा ज्याघाते हन्यमानः चर्मविशेषो 'हस्तघ्नः'; सोऽस्मान् 'विश्वतः' (सर्वस्मात्) उपद्रवात् 'पातु'। तत्र दृष्टान्तः,—'विश्वा वयुनानि' 'विद्वान्' (सर्वान् मार्गान् अभि-

जानानः) 'पुमान्' 'पुमांसम्' (अन्यं पुरुषं) यथा पालयति तद्वदिति शेषः ।

कल्पः, 'वनस्पते वीड्वङ्गो हि भूया इति पञ्चभीरथम्' इति । तत्र प्रथमामाह,—"वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः । गोभिः सन्नद्धो असि वीडयस्वास्थाता ते जयतु जेत्वानि(१५)" इति । हे 'वनस्पते' (वनस्पतिनिष्पन्नरथ), 'वीड्वङ्गः' (दृढाङ्गः) एव 'भूयाः' । कीदृशस्त्वम्?—'अस्मत्सखा' (अस्मासु सखिवत्स्निग्धः); 'प्रतरणः' (प्रकृष्टगमनसाधनभूतः); 'सुवीरः' (शोभनैर्वीरैरुपेतः); 'गोभिः सन्नद्धो असि' (गवादिचर्मरज्जुभिः सम्यग्बद्धोऽसि); 'वीडयस्व' (अत्यन्तं दृढो भव) । 'ते' (तव) 'आस्थाता' 'जेत्वानि' (जेतव्यानि) परसैन्यानि 'जयतु' ।

अथ द्वितीयामाह,—"दिवः पृथिव्याः परि ओज उद्भृतं वनस्पतिभ्यः पर्याभृतꣳ सहः । अपामोज्मानं परि गोभिरावृतमिन्द्रस्य वज्रꣳ हविषा रथं यज(१६)" इति । हे यजमान, त्वं 'रथं' इमं 'हविषा' (बलिकर्मणा) 'यज' (पूजय) । कीदृशं रथं?—'दिवः पृथिव्याः परि ओज उद्भृतं' (द्युलोकाद्भूलोकाच्च सर्वतो बलमानीय सम्पादितं); तथा 'वनस्पतिभ्यः' अपि परितः 'सहः' (बलम्) आनीय 'आभृतं' (सम्पादितं); तथा 'अपामोज्मानं' (अप्सम्बद्धम् ओज आनीय निष्पादितं); 'गोभिः' (गवादिविकारैर्नानाविधैश्चर्ममय-रज्जुभिश्च परितः 'आवृतं' 'इन्द्रस्य' 'वज्रम्' इव दृढीभूतम् ।

तृतीयामाह,—"इन्द्रस्य वज्रो मरुतामनीकं मित्रस्य गर्भो वरुणस्य नाभिः । सेमां नो हव्यदातिं जुषाणो देवरथ प्रति हव्या

गृभाय[१७]" इति। यथा 'इन्द्रस्य वज्रः' अत्यन्तदृढ़ः, यथा च 'मरुताम्' 'अनीकं' (सैन्यं) बहुभिर्भटैरुपेतं, यथा 'मित्रस्य गर्भो' अत्यन्तं सुरक्षितः, यथा 'वरुणस्य नाभिः' केनापि तिरस्कर्तुमशक्यः, तथाविधैर्गुणैरुपेत हे 'देवरथ', 'नः' (अस्मदीयाम्) 'इमां' 'हव्यदातिं' (हविर्दानं) 'जुषाणः' 'हव्या' (अस्मद्दत्तानि हव्यानि) 'प्रति' 'गृभाय' (प्रत्येकं गृहाण)।

चतुर्थीमाह,—"उप श्वासय पृथिवीमुत द्यां पुरुत्रा ते मनुतां विष्ठितं जगत्। स दुन्दुभे सजूरिन्द्रेण देवैर्दूरात् दवीयो अप सेध शत्रून्[१८]" इति। रथसमीपवर्त्ती दुन्दुभिरप्येवंमहिमा, किमुत रथ इति विवक्षया दुन्दुभिः प्रशस्यते। हे 'दुन्दुभे', 'पृथिवीम्' 'उप'—'श्वासय' (त्वदीयेन शब्देन पूरय)। 'उत' (अपि च) 'द्यां' (द्युलोकमपि) 'उप—श्वासय'। 'पुरुत्रा' (पुरुषु, द्युलोकभूलोकादिस्थानेषु) 'विष्ठितं' (विशेषेण स्थितं) सर्वं 'जगत्' 'ते' (तव) शब्दं 'मनुतां' (जानातु)। 'स' त्वं 'इन्द्रेण' अन्यैः 'देवैः' च 'सजूः' (समानप्रीतिः सन्) 'शत्रून्' अस्मदीयान्, 'दूरात् दवीयः' (दूरादपि अत्यन्तदूरदेशं प्रति) 'अप—सेध' (अपसारय)।

पञ्चमीमाह,—"आ क्रन्दय बलमोजो न आ धा नि ष्टनिहि दुरिता बाधमानः। अप प्रोथ दुन्दुभे दुच्छुनाꣳ इत इन्द्रस्य मुष्टिरसि वीड़यस्व[१९]" इति। हे 'दुन्दुभे', परबलं (परकीयसैन्यं) प्रति 'आ—क्रन्दय' (आक्रोशं कुरु),—अमुं जहि अमुं प्रहर—इति अत्यन्तभीतिहेतुं शब्दं कुरु। 'नः' (अस्माकं) 'ओजः' 'बलं' 'आ धाः' (आ धेहि, सम्यक् सम्पादय)। 'दुरिता' 'बाधमानः'

(अस्मदीयानि दुरितानि विनाशयन्) 'नि ष्टनिहि' (गर्जनसमानम् अस्मदुत्साहहेतुं शब्दं कुरु)। 'दुच्छुनां' (दुष्टचित्ताम् पुरुषान्) 'इतः' अस्मात् 'अप प्रोथ' (अपमारय)। त्वं 'इन्द्रस्य' 'मुष्टिरसि' (वज्र-धारकमुष्टिसमानोऽसि); अतः 'वीड़यस्व' (दृढ़ीभव)। ईदृशैः दुन्दुभिध्वनिभिः सहितोऽयं रथः प्रवर्त्तत इति तात्पर्यार्थः।

कल्पः, 'आ अमूरजेति दुन्दुभीꣳ सꣳह्लादयन्ति' इति। पाठस्तु,— "आमूरज प्रत्यावर्त्तयेमाः केतुमद्दुन्दुभिर्वावदीति। समश्वपर्णाश्चरन्ति नो नरोऽस्माकमिन्द्र रथिनो जयन्तु(२०)" इति। हे 'इन्द्र', 'इमाः'* परकीयाः सेनाः समन्तात् 'अज' (प्रेरय, पलायिताः कुरु)। 'इमाः' अस्मदीयाः सेनाः 'प्रत्यावर्त्तय' (अनृताः सत्यो यथा प्रत्यावृता भवन्ति तथा कुरु)। अयं 'दुन्दुभिः' 'केतुमत्' (ज्ञानवत्) अस्मदीयो जयो यथा सर्वैर्ज्ञायते, तथा 'वावदीति' (भृशं ध्वनं करोति)। 'अश्वपर्णाः' अश्वपत्राः, अश्ववाहनयुक्ता इत्यर्थः, तादृशा 'नः' 'नरः' (अस्मदीयाः पुरुषाः) 'सं'-'चरन्ति' (सम्यग्विश्रम्भेण चरन्तु)। 'अस्माकं' सम्बन्धिनो ये 'रथिनः' (मुख्यपुरुषाः) ते 'जयन्तु'।

अत्र विनियोगसंग्रहः,—

अथाश्वमेधे जीमूत, कवचं पतिमुञ्चति।
धन्वना, धनुरादत्ते वक्ष्यन्ती, ज्यामभिस्पृशेत्॥
ते, संस्पृशेद्धनुष्कोट्यौ बध्नातीषुधिबन्धनम्।
रथेति सारथिं, तीव्रानश्वानप्यभिमन्त्रयेत्॥

---

* अत्र 'अमः' इति पाठो भवितुं युक्तः।

रथ, काले रथः स्थाप्यो भजेत् स्वादुत्वयात्पितृन्।
ऋज्यात्मानमभिस्पृश्य ह्या जङ्घेत्याहरेत्कशाम्॥
हस्तं मन्त्रयते ऽह्नीति, रथन्तु 'वन'-पञ्चभिः।
दुन्दुभिं वादयेदामूरत्र मन्त्रास्तु त्रिंशतिः॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे षष्ठप्रपाठके षष्ठोऽनुवाकः ॥०॥

---

यदक्रन्दः प्रथमं जायमान उद्यन्त्समुद्रादुत वा पुरीषात्। श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यं महि जातं ते अर्वन्[१]। यमेन दत्तं त्रित एनमायुनगिन्द्र एणं प्रथमो अध्यतिष्ठत्। गन्धर्वो अस्य रशनामगृभ्णात् सूरादश्वं वसवो निरतष्ट[२]। असि यमो अस्यादित्यो अर्वन्नसि त्रितो गुह्येन व्रतेन। असि सोमेन समया विपृक्तः॥ १ ॥

आहुस्ते त्रीणि दिवि बन्धनानि[३]। त्रीणि त आहुर्दिवि बन्धनानि त्रीण्यप्सु त्रीण्यन्तः समुद्रे। उतेव मे वरुणश्छन्त्स्यर्वन् यत्रा त आहुः परमं जनित्रं[४]। इमा ते वाजिन्नवमार्जनानीमा शफानां सनितुर्निधाना। अत्रा ते भद्रा रशना अपश्यमृतस्य या

अभिरक्षन्ति गोपाः(५)। आत्मानं ते मनसाराद-
जानामवो दिवा ॥ २ ॥

पतयन्तं पतङ्गं शिरो अपश्यं पथिभिः सुगेभि-
ररेणुभिर्जेहमानं पतत्रि(६)। अत्रा ते रूपमुत्तममपश्यं
जिगीषमाणमिष आ पदेगोः। यदा ते मर्तो अनु
भोगमानडादिद्ग्रसिष्ठ ओषधीरजीगः(७)। अनु त्वा
रथो अनु मर्यो अर्वन्ननु गावोऽनु भगः कनीनां।
अनु व्रातासस्तव सख्यमीयुरनु देवा ममिरे वीर्यं ॥
॥ ३ ॥

ते(८) हिरण्यशृङ्गोऽयो अस्य पादा मनोजवा
अवर इन्द्र आसीत्। देवा इदस्य हविर[illegible]मायन् यो
अर्वन्तं प्रथमो अध्यतिष्ठत्(९)। ईर्मान्तासः सिलिक-
मध्यमासः संशूरणासो दिव्यासो अत्याः। हंसा
इव श्रेणिशो यतन्ते यदाक्षिषुर्दिव्यमज्ममश्वाः(१०)।
तव शरीरं पतयिष्ण्वर्वन्तव चित्तं वात इव ध्रजीमान्।
तव शृङ्गाणि विष्ठिता पुरुत्रारण्येषु जर्भुराणा-
चरन्ति(११)। उप ॥ ४ ॥

प्रागाच्छसनं वाज्यर्वा देवद्रीचा मनसा दीध्यानः।
अजः पुरो नीयते नाभिरस्यानु पश्चात् कवयो
यन्ति रेभाः(१२)। उप प्रागात् परमं यत् सधस्थमर्वाँ

अच्छा पितरं मातरं च। अद्या देवान् जुष्टतमो हि गम्या अथा शास्ते दाशुषे वार्याणि(११) ॥ ५ ॥

विपृक्तः। दिवा। वीर्यम्। उप। एकान्नचत्वारिंशच्च ॥ ७ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे षष्ठप्रपाठके सप्तमोऽनुवाकः ॥ * ॥

षष्ठे कवचादिमन्त्राहोऽभिहितः। अथ सप्तमाद्यनुवाकत्रये होमोऽभिधीयते। कल्पः, 'यदक्रन्दः प्रथमं जायमान इत्येतैस्त्रिभिरनुवाकैः षट्त्रिंशतमश्वस्तोमीयान् जुहोति' इति। तत्र सप्तमेऽनुवाके प्रथमामृचमाह,—"यदक्रन्दः प्रथमं जायमान उद्यन्त्समुद्रादुत वा पुरीषात्। श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यं महि जातं ते अर्वन्(१)" इति। हे 'अर्वन्', 'यत्' (यस्मात्) कारणात् 'जायमानः' (उत्पद्यमान एव) 'प्रथमं' (आदौ) 'अक्रन्दः' (क्रन्दितवानसि),—अहो अग्न्यादीनामहं साधनमिति महान्तं शब्दमकरोः, तस्मात् 'ते' (तव) 'जातं' 'महि' (महत्)। अत एव 'उपस्तुत्यं' (समीचीनमिति सर्वैरपि स्तोतव्यम्) आसीत्। जायमानमेव विशदीक्रियते,—'समुद्रात्' 'उद्यन्' (समुद्रोपलक्षितात् उदकादुत्पद्यमानः),—'अप्सु योनिर्वा अश्वः' इति श्रुतेः। 'उत वा' 'पुरीषात्' (अथ वा लौकिकदृष्ट्या पुरीषात् पुंस्त्वशक्तिसम्पन्नान्महतोऽश्वादुत्पद्यमानः)। जन्मनः उपस्तुत्यत्वेन

दृष्टान्तद्वयमुच्यते,—'श्येनस्य पक्षाः, हरिणस्य बाहू'; इवशब्दोऽत्र अध्याहर्त्तव्यः,—यथा श्येनाख्यस्य पक्षिणः पक्षौ शीघ्रोत्पतनहेतुत्वात् सर्वैरुपस्तुत्यौ; यथा वा 'हरिणस्य बाहू' (पादौ) शीघ्रगमनहेतुत्वात् उपस्तुत्यौ, तद्वदित्यर्थः।

अथ द्वितीयामाह,—"यमेन दत्तं त्रित एनमायुनगिन्द्र एणं प्रथमो अध्यतिष्ठत्। गन्धर्वो अस्य रशनामगृभ्णात् सूरादश्वं वसवो निरतष्ट(१)" इति। अत्र यमोऽग्निः, 'अग्निर्वाव यमः' इति श्रुत्यन्तरात्। त्रिषु लोकेषु त्रायते विस्तार्य्यते इति 'त्रितः' वायुः। 'यमेन' (अग्निना) 'दत्तम्' 'एनम्' 'अश्वं' 'त्रितः' (वायुः) 'आयुनक्' (रथे योजितवान्)। ततः 'इन्द्रः' 'प्रथमः' (सर्वेषु देवेषु मध्ये प्रथमं प्रवृत्तः) सन् 'एनम्' 'अश्वम्' 'अध्यतिष्ठत्' (अधिष्ठितवान्), योगक्षेमं सम्पादयितुमभिमानं कृतवानित्यर्थः। 'गन्धर्वः' कश्चित् 'अस्य' (अश्वस्य) 'रशनां' (बन्धनहेतुं रज्जुम्) 'अगृभ्णात्' (स्वीकृतवान्)। हे 'वसवः', यूयं 'सूरात्' (आदित्यात्) इमम् 'अश्वं' 'निरतष्ट' (निःशेषेण प्रकाशितवन्तः)। यस्य अश्वस्य अग्निरानेता, वायुर्योजयिता, इन्द्रोऽभिमन्ता,* गन्धर्वो रज्जुगृहीता, सूर्य्यप्रकाशेन वसवः प्रकाशयितारः; तादृशोऽयमश्व इति स्तूयते।

अथ तृतीयामाह,—"असि यमो अस्यादित्यो अर्वन्नसि त्रितो गुह्येन व्रतेन। असि सोमेन समया विपृक्त आहुस्ते त्रीणि दिवि बन्धनानि(१)" इति। हे 'अर्वन्' (अश्व), त्वं यमाभिधाग्निः 'असि'।

* 'इन्द्रो हि मन्ता' इति क्वचित् पाठः।

तथा 'आदित्यः' 'असि'। तथा 'त्रितः' (वायुः) 'असि'। पूर्वोक्तप्रकारेण वाय्वादित्ययोरनुगृहीतत्वात् तद्रूपत्वं। तथा 'गुह्येन' 'व्रतेन' (गोप्येन अश्वमेधाख्येन कर्म्मणा) तत्रत्येन 'सोमेन' च 'समया' (समये प्राप्तकाले) 'विपृक्तः' (विशेषेण युक्तः) 'असि'। ईदृशस्य 'ते' (तव) द्युलोके 'बन्धनानि' (बन्धनसाधनानि) दामानि 'त्रीणि' इत्येवमभिज्ञा 'आहुः'। वणिजो हि शक्त्याधिक्येन अत्युग्रमश्वं विक्रेतुं ग्रामान्तरे नयन्तः त्रिभिर्दामभिर्बध्नन्ति। दक्षिणवामपार्श्वयोर्दामद्वयमुभौ पुरुषौ गृह्णीतः। यदा दक्षिणभागवर्त्तिनं द्रष्टुमुद्युङ्क्ते तदा वामभागवर्त्ती तमाकर्षति; तं चेत् द्रष्टुमुद्युङ्क्ते तदानीमितर आकर्षति। यदा सहसा पुरतः पलायनं वारयितुं गले बद्धमेकं दाम गृहीत्वा पृष्ठतः कश्चिदाकर्षति, तदिदं बन्धनत्रयं। यद्वा शास्त्रसिद्धं किञ्चित् कारणत्रयं द्रष्टव्यं। तदनेन बन्धनत्रयेणाधिकशक्तिरश्व इति स्तुतो भवति।

अथ चतुर्थीमाह,—"त्रीणि त आहुर्दिवि बन्धनानि त्रीण्यप्सु त्रीण्यन्तःसमुद्रे। उतेव मे वरुणश्छन्त्स्यर्वन् यत्रा त आहुः परमं जनित्रम्[४]" इति। यथा द्युलोके तव उच्चैःश्रवोरूपस्य बन्धनत्रयमभिज्ञा 'आहुः'; तथैव 'अप्सु' 'समुद्रे' च। यथा वा, वाजपेये, 'अप्स्वन्तरमृतम्' इति मन्त्रेणाश्वान् अप्सु स्नापयन्ति, तथापि पूर्वोक्तरीत्या बन्धनत्रयमपेक्षितं। तथा समुद्रमध्ये स्थितायाः वड़वायाः बन्धनत्रयमित्येवमभिज्ञा 'आहुः'। 'उत' (अपि च), हे 'अर्वन्' (अश्व) 'ते' (तव) 'यत्र' (यस्मिन् पितृवीर्य्ये) 'परमं' 'जनित्रं' (उत्तमं जन्म)—इत्येवंलक्षणमभिज्ञा 'आहुः'। तत्पितृवीर्य्यं त्वमेव वरुणः

त्रिभिर्बन्धनैर्निवारणीयो भूत्वा 'मे' (मम) 'कन्त्सि' 'इव' (कथयसि इव)। अयमर्थः,—अश्वस्य पितृपक्षभागित्वात् मातरि स्वल्पायामपि सत्यां प्रौढ़स्त्वेदश्वो दृश्येत, तस्य पिता प्रौढ़ः पितेति उत्प्रेक्षितुं शक्य इति।

पञ्चमीमाह,—"इमा ते वाजिन्नवमार्जनानीमा शफानाꣳ सनितुर्निधाना। अत्रा ते भद्रा रशना अपश्यमृतस्य या अभि रक्षन्ति गोपाः(५)" इति। हे 'वाजिन्', 'ते' (तव) 'इमा' (एतानि दृश्यमानानि) 'अवमार्जनानि' शरीरशोधनसाधनानि, लोहमयानि; (यैर्लोहकार्य्यैः प्रातःकालादौ अश्वस्य पांश्वाद्यपनयनाय शरीरं मृज्यते, घर्षणेन शोध्यते, तानि 'अवमार्जनानि'); तथा 'शफानां' (खुराणां) 'सनितुः' (दातुः पाषाणबहुले मार्गे प्रक्षेप्यः*) तव शफभेदनपरिहारार्थम् 'इमा' 'निधाना' (एतानि लोहमयानि आवरणविशेषरूपाणि, निधीयन्ते शफेष्विति निधानानि; राजानो हि महा ,र्णां प्रौढ़ानाम् अश्वानां लोहमयैः साधनैः प्रतिदिनं कण्डूरपनयन्ति, शफेषु च लोहपत्राणि कीलयन्ति। किञ्च 'ते' (तव) 'भद्राः' (सुवर्णादिखचितत्वेन, कल्याणरूपाः) 'रशनाः' खलीनलोहकक्ष्याः पुच्छपत्रा 'अत्र' (अस्मिन्नेव देशे स्थापिताः), अहमपि 'अपश्यं'। कीदृशस्य तव?— 'ऋतस्य' (सत्यस्य) बहुमूल्यार्हस्येत्यर्थः। कीदृशो रशनाः?—इति ता विशेष्यन्ते, 'याः' 'रशनाः' 'गोपाः' (पृष्ठदेशव्यथादिपरिहारेणाश्वं गोपायन्त्यः) 'अभि रक्षन्ति' (उपरि आरूढं पुरुषमभितः पतनादिभ्यः पालयन्ति)।

अथ षष्ठीमाह,—"आत्मानं ते मनसा आरादजानाम् अवो दिवा

---

* 'प्रेक्षेप्यः' इति सर्व्वत्र पाठः। प्रक्षेप्तः इति तु भवितुं युक्तः।

पतयन्तं पतङ्गं। शिरो अपश्यं पथिभिः सुगेभिररेणुभिर्जेहमानं पतत्रि(६)" इति। हे अश्व, तव 'आत्मानं' (स्वरूपम्) 'आरात्' (समीप एव) 'मनसा' 'अजानां' (अभिज्ञानवान् अस्मि)। कीदृशम् आत्मानं? 'अवः' (रक्षकं), शीघ्रगामी हि अश्वः परसैन्यभञ्जनेन स्वामिनं रक्षति। तथा 'दिवा पतयन्तं' (आकाशेन धावन्तं), त्वदीय-धावनवेलायां वेगातिशयेन भूमेराक्रमणं केनापि द्रष्टुं न शक्यते इत्यर्थः। यस्मादाकाशगामी, तस्मादेव च 'पतङ्गं' (पक्षिसदृशं)। तथा त्वदीयं 'शिरः' अपि अहम् 'अपश्यं'। कीदृशं शिरः?—'सुगेभिः' (गन्तुं शक्यैः) 'अरेणुभिः' (धूलिरहितैः), 'पथिभिः' (आकाशमार्गैः) 'जेहमानं' (शीघ्रगतियुक्तं); अत एव 'पतत्रि' (पक्षिसदृशं);—यदा हि अयमश्वः प्रायेण भूमिस्पर्शनं विना आकाशमार्गेण धावति तदानीं पाषाणरहितत्वादयं मार्गः सुगमः। भूमिस्पर्शबाहुल्याभावात् धूलिरहितश्च। तथाविधमार्गेण धावतोऽश्वस्य उपरिवर्त्ति 'शिरः' सुखेन द्रष्टुं शक्यते, उन्नतदेशवर्त्तित्वात् धूल्यावरणाभावाच्चेति। ईदृशवेगवानश्व इति स्तुतिः।

अथ सप्तमीमाह,—"अत्रा ते रूपमुत्तममपश्यं जिगीषमाणमिष आ पदे गोः। यदा ते मर्तो अनु भोगमानडादिद्ग्रसिष्ठ ओषधीरजीगः(७)" इति। हे अश्व, 'यदा' (यस्मिन् काले) 'ते' 'भोगं' (घृतमुद्गादिभक्षणरूपम्) 'अनु' 'मर्तः' (मनुष्यः) परिचारकः 'आनट्' (भोगं प्राप्तवान्), प्रौढ़ेषु राजगृहादिषु अश्वघासार्थं दत्तैर्मुद्गघृतादिभिः परिचारका अपि जीवन्तीति प्रसिद्धम्। 'आदित्' (ईदृश-वृत्तान्तादनन्तरमेव), 'ग्रसिष्ठः' (अतिशयेन ग्रसितुकामः) त्वम्

'ओषधीः' (चणकाद्याः) 'अजीगः' (प्रापितोऽस्मि)। 'अत्र' (अस्मिन्नवसरे) 'ते' 'रूपम्' 'उत्तमं' (सर्वोत्कृष्टमिति) 'अपश्यम्' (अहं निश्चितवानस्मि)। कीदृशस्य तव ? 'इषः' (अन्नानि) 'आ' (समन्तात्) 'पदे' (प्राप्तुं) 'गोः' (गच्छतः)। कीदृशं रूपं ?—'जिगीषमाणं' (जेतुमिच्छायुक्तम्)। अयमर्थः, प्रौढ़राजगृहे त्वदीय-'भोगम्' अनु अश्ववारा नीचाः सर्वेऽपि सम्यग् भुञ्जते, त्वञ्च राजाज्ञया केनाप्यनिवारितः* सन् चणकादिक्षेत्रेषु स्वेच्छया गच्छसि। अस्मिन्नवसरे त्वन्मुखेन सर्वाणि अन्नानि प्राप्तुं शक्यन्ते, विजयश्च भविष्यतीत्येवं त्वदीयमहिमानं निश्चितवानस्मीति।

अथाष्टमीमाह,—"अनु त्वा रथो अनु मर्यो अर्वन्ननु गावोऽनु भगः कनीनां। अनु व्रातासस्तव सख्यमीयुरनु देवा ममिरे वीर्यं ते(८)" इति। हे 'अर्वन्', त्वाम् 'अनु' 'रथः' प्रवर्तते न हि त्वया विना रथो गन्तुं शक्तः। 'मर्यः' (मर्त्यः) अश्ववारस्त्वाम् 'अनु'-जीवति। तच्च पूर्वमेवोक्तं। 'गावः' अपि त्वाम् 'अनु'-जीवन्ति, बालस्य तव क्षीरनवनीताद्यर्थं, प्रवृद्धस्य तव घृतार्थञ्च गाः पोषयन्ति। 'कनीनां' (कन्यानां बालानां दासीनां) 'भगः' (सौभाग्यं) त्वाम् 'अनु'-सम्पद्यते।• अश्वशालापरिचारार्थं हि ता अन्नवस्त्रदानेन तत्स्वामिनः पोषयन्ति। 'व्रातासः' (व्राताः सेनारूपाः मनुष्यसङ्घाः) 'तव' 'सख्यम्' 'अनु' त्वदीयं साहाय्यम् 'अनु' (पश्चात्) 'ईयुः' (जयं प्राप्नुवन्ति)। 'देवाः' (प्राजापत्यादयः) 'ते' 'वीर्यं' (त्वदीयं सामर्थ्यं) 'अनु'

---

* 'अभिवारितः' इति आदर्शपुस्तकपाठः।

उपलक्ष्य 'ममिरे' (स्वकीयहविष्ट्वेन प्रमितवन्तः)। ईदृशोऽयं अश्व इति स्तुतिः।

अथ नवमीमाह,—"हिरण्यशृङ्गोऽयो अस्य पादा मनोजवा अवर इन्द्र आसीत्। देवा इदस्य हविरद्यमायन् यो अर्वन्तं प्रथमो अध्यतिष्ठत्(९)" इति। अयमश्वः 'हिरण्यशृङ्गः' (हिरण्यसमानवर्णः, शृङ्गस्थानीयो मूर्द्धप्रदेशो यस्यासौ हिरण्यशृङ्गः) हिरण्याङ्कित इत्यर्थः। 'अयो' (लोहवदत्यन्तदृढ़ः)। 'अस्य' (अश्वस्य) 'पादाः' 'मनोजवाः' (मनोवृत्तिसदृशेन वेगातिशयेन युक्ताः)। एतेन अश्वेन, उच्चैःश्रवसा 'इन्द्रः' अपि 'अवरः' (निकृष्ट एव) 'आसीत्'; 'देवाः' 'इत्' (सर्वे हि देवाः) स्वयम् 'अस्य' (अश्वस्य) सम्बन्धि 'हविरद्यं' (हविर्भक्षणम्) 'आयन्' (प्राप्नुवन्तः)। एतदीयमेव हविस्तु योग्यमिति निश्चितवन्तः। 'प्रथमः' (आद्यः) 'यः' (प्रजापतिः) 'अर्वन्तं' (एनम् अश्वम्) 'अध्यतिष्ठत्' (अधिष्ठितवान्) स्वकीयत्वेन स्वीकृतवान्, सोऽपि एतदीयमेव हविरद्यमिति निश्चितवान्।

अथ दशमीमाह,—"ईर्मान्तासः सिलिकमध्यमासः सꣳशूरणासो दिव्यासो अत्याः। हꣳसा इव श्रेणिशो यतन्ते यदाक्षिषुर्दिव्यमज्ममश्वाः(१०)" इति। सर्वेऽप्यश्वा एवंविधाः। कीदृशाः?—इति तदुच्यते,—गलभागो जघनभागश्च अश्वस्यान्तौ, तौ 'ईर्मौ' प्रसृतौ उन्नतौ येषां ते 'ईर्मान्तासः'। 'सिलिकं' (सङ्कुचितं), निम्नं मध्ये पृष्ठभागे येषां ते 'सिलिकमध्यमासः', यत्र मनुष्या आरोहन्ति स देशो निम्नः, न तु गजस्येव पृष्ठभाग उन्नतः। 'संशूरणासः' (युद्धे जयहेतुत्वेन सम्यक् शूराः)। 'दिव्यासः' (ग्रामगमनादिव्यवहारनिष्पादकाः)। 'अत्याः'

(सततगमनशीलाः)। ते च 'हंसा' 'इव' 'श्रेणिशः' (सङ्घशः) 'यतन्ते',— यथा हंसाः पङ्क्तिबद्धाः सङ्घीभूय आकाशे यतन्ते गच्छन्ति, एवमश्वा अपि बहवः संहता युद्धाय प्रयतन्ते। 'यत्' (यस्मात् कारणात्) 'अश्वाः' दिव्यं (क्रीड़ाविजिगीषाद्यर्थं) 'अज्मं' (गमनं) 'आक्षिषुः' (व्याप्तवन्तः), तस्मादश्वजातिमात्रस्यैवं प्रशस्तत्वात् सः क्रतुनिष्पादकः प्रकृतोऽश्वः प्रशस्त इति किमु वक्तव्यः।

अथैकादशीमाह,—"तव शरीरं पतयिष्णु अर्वन्तव चित्तं वात इव ध्रजीमान्। तव शृङ्गाणि विष्ठिता पुरुत्रारण्येषु जर्भुराणा चरन्ति(११)" इति। हे 'अर्वन्', 'तव' 'शरीरं' 'पतयिष्णु' (पतनशीलं) शीघ्र-गमनशीलमित्यर्थः। 'तव' 'चित्तं' 'वात इव' (वातसदृशम्)। वायुः कीदृशः?—'ध्रजीमान्' (अत्यन्तगतिमान्)। 'तव' 'शृङ्गाणि' (शृङ्ग-स्थानीयानि) उपरि प्रक्षिप्तानि आयुधानि 'विष्ठिता' (विशेषेण तत्र स्थितानि सादितानि। अश्वस्योपरि क्वचिदिषुधिः क्वचित् खड्ग इत्येवं बहूनि आयुधानि प्राप्यन्ते, तानि च पुरुषु (बहुषु) 'अरण्येषु' ग्रामेभ्यो बहिर्भूतेषु युद्धप्रदेशेषु परसैन्यानि अतिशयेन भरमाणानि 'चरन्ति' (प्रवर्त्तन्ते)।

द्वादशीमाह,—"उप प्रागाच्छसनं वाज्यर्वा देवद्रीचा मनसा दीध्यानः। अजः पुरो नीयते नाभिरस्यानु पश्चात् कवयो यन्ति रेभाः(१२)" इति। 'वाजी' (क्रतुद्वारा अन्नहेतुः) 'अर्वा' (अयमश्वः) 'शसनं' (अस्मिन् क्रतौ विशसनस्थानं) प्रति 'उप' 'प्रागात्' (समीपं प्राप्तवान्)। किं कुर्व्वन्?—'देवद्रीचा' 'मनसा' 'दीध्यानः' देवान् अञ्चति प्राप्नोतीति देवद्रङ्, तादृशेन निरन्तरं देवविषयेण मनसा

ध्यानं कुर्व्वन्, 'अजः' (प्रजापतिः), 'पुरः' 'नीयते' (अस्मादश्वात् पूर्व्वम् ऋत्विग्भिर्नीयते), प्रजापतिः पुरतो गच्छत ऋत्विजो ध्यायन्तीत्यर्थः। यद्वा छाग एव 'अजः', स हि अश्वस्य पुरो नीयते। 'अस्य' (अश्वस्य) 'नाभिः' (नाभ्युपलक्षितं शरीरं) प्रजापतिम् 'अनु' 'नीयते'। अस्य अश्वस्य 'पश्चात्' (पृष्ठभागे) 'कवयः' (विद्वांस ऋत्विजः) 'रेभाः' 'यन्ति' (स्तुतिं कुर्वाणा गच्छन्ति)।

त्रयोदशीमाह,—"उप प्रागात् परमं यत् सधस्थमर्वाँ२ अच्छा पितरं मातरञ्च। अद्या देवान् जुष्टतमो हि गम्या अथा शास्ते दाशुषे वार्याणि(१३)" इति। 'अर्वान्' (शीघ्रगमनवान्, अयमश्वः), 'परमम्' (उत्कृष्टं) 'यत्' 'सधस्थं' (शमितृभिः सह स्थातुं योग्यं, यत् स्थानमस्ति तत् 'उप' 'प्रागात्' (तत्समीपं प्राप्तवान्)। किमर्थं?— 'पितरं' 'मातरञ्च' अपि प्राप्तुं,—स्वर्गे दिव्यो यः पिता या च माता दिव्या, तावुभौ प्राप्तुं, देवताजन्मनो स्वस्य स्वर्ग इत्यर्थः। हे अश्व 'अद्य' (अस्मिन्दिने) 'जुष्टतमः' (अतिशयेन अतिप्रीतः सन्) 'देवान्' 'गम्याः' (प्राप्नुहि)। 'अथ' (अनन्तरं) 'दाशुषे' (हविर्दत्तवते) यजमानाय 'वार्याणि' (वरणीयानि फलानि) अयम् ऋत्विक्सङ्घ 'आशास्ते' (प्रार्थयति)॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये चतुर्थकाण्डे षष्ठप्रपाठके सप्तमोऽनुवाकः॥७॥

मा नो॑ मि॒त्रो वरु॑णो अ॒र्य॒मा॒युरिन्द्र॑ ऋभु॒क्षा म॒रुतः॑ परि॑ख्यन्। यद्वा॒जिनो॑ दे॒वजा॑तस्य॒ सप्तेः॑ प्रव॒क्ष्यामो॑ वि॒दथे॑ वी॒र्या॑णि(१)। यन्नि॒र्णिजा॒ रेक्ण॑सा॒ प्रावृ॑तस्य रा॒तिं गृ॑भी॒तां मु॑ख॒तो नय॑न्ति। सुप्रा॑ङ् अ॒जो मेम्य॑द् वि॒श्वरू॑प इन्द्रापू॒ष्णोः प्रि॒यमप्ये॑ति॒ पाथः॑(२)। ए॒ष छागः॑ पु॒रो अश्वे॑न वा॒जिना॑ पू॒ष्णो भा॒गो नी॑यते वि॒श्वदे॑व्यः। अ॒भि॒प्रियं॒ यत् पु॑रो॒डाश॒मर्व॑ता॒ त्वष्टे॑त्॥ ॥ १ ॥

ए॒नꣳ सौ॑श्रव॒साय॑ जिन्वति(३)। यद्ध॑वि॒ष्य॑मृतु॒शो दे॑व॒यानं॒ त्रिर्मा॑नु॒षाः पर्यश्वं॒ नय॑न्ति। अत्रा॑ पू॒ष्णः प्र॑थ॒मो भा॒ग ए॑ति य॒ज्ञं दे॒वेभ्यः॑ प्रतिवे॒दय॑न्न॒जः(४)। होता॑ध्व॒र्युरा॒वया॑ अग्निमि॒न्धो ग्रा॑वग्रा॒भ उ॒त शꣳस्ता॒ सुवि॑प्रः। तेन॑ य॒ज्ञेन॒ स्व॑रंकृतेन॒ स्वि॑ष्टेन व॒क्षणा॒ आ पृ॑णध्वं(५)। यू॒प॒व्र॒स्का उ॒त ये यू॑पवा॒हाश्च॒षालं॒ ये अ॑श्व-यू॒पाय॒ तक्ष॑ति। ये चार्व॑ते॒ पच॑नꣳ स॒म्भर॑न्त्यु॒तो॥ ॥ २ ॥

तेषा॑म॒भिगू॑र्त्तिर्न इन्वतु(६)। उप॒ प्रागा॑त् सु॒मन्मे॑ऽधायि॒ मन्म॑ दे॒वाना॒माशा॒ उप॑वी॒तपृ॑ष्ठः। अन्वे॑नं॒ विप्रा॒ ऋष॑यो मदन्ति दे॒वानां॑ पु॒ष्टे च॑कृमा सु॒बन्धुं॑(७)। यद्वा॒जिनो॒ दाम॑ सं॒दान॒मर्व॑तो॒ या शी॑र्ष॒ण्या॑ रश॒ना

रज्जुरस्य। यद्वा घास्य प्रभृतमास्ये तृणꣳ सर्वा ता ते अपि देवेष्वस्तु(८)। यदश्वस्य क्रविषः॥ ३॥

मक्षिकाश यद्वा स्वरौ स्वधितौ रिप्तमस्ति। यद्धस्तयोः शमितुर्यन्नखेषु सर्वा ता ते अपि देवेष्वस्तु(९)। यदूवध्यमुदरस्यापवाति य आमस्य क्रविषो गन्धो अस्ति। सुकृता तच्छमितारः कृण्वन्तूत मेधꣳ शृतपाकं पचन्तु(१०)। यत्ते गात्रादग्निना पच्यमानादभि शूलं निहतस्यावधावति। मा तद्भूम्यामा श्रिषन्; मा तृणेषु देवेभ्यस्तदुशद्भ्यो रातमस्तु(११)॥ ४॥

इत्। उतो। क्रविषः। श्रिषन् सप्त च॥ ८॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे षष्ठप्रपाठके अष्टमोऽनुवाकः॥ * ॥

सप्तमेऽनुवाकेऽश्वस्तोमीयमन्त्राः केचिदुक्ताः। अश्वस्य स्तोत्रमश्वस्तोमः, तत्प्रतिपादका अश्वस्तोमीयाः। अथाष्टमे त एवान्ये केचिद् उच्यन्ते। अनुवाकभेदस्तु साम्प्रदायिकः, अयज्ञसंयुक्तेषु प्रयोगेषु मन्त्रभेदार्थो वा। तत्राष्टमे प्रथमामृचमाह,—"मा नो मित्रो वरुणो अर्यमायुरिन्द्र ऋभुक्षा मरुतः परिख्यन्। यद्वाजिनो देवजातस्य सप्तेः प्रवक्ष्यामो विदथे वीर्याणि(१)" इति। मित्रादयः

प्रसिद्धाः। एति सर्वदा गच्छतीति 'आयुः'* । ऋभवो देवाः चीयन्ति निवसन्ति अस्मिन्निति 'ऋभुवाः' (प्रजापतिः)। 'मरुतः' देवान्तराणि, ते सर्वेऽपि 'नः' (अस्मान्) 'मा' 'परिख्यन्' (मा निन्दयन्तु)। 'यत्' (यस्मात्) 'वाजिनः' (यागद्वारा अन्नसाधनस्य) 'देवजातस्य' (देवार्थमुत्पन्नस्य) 'सप्तेः' (अश्वस्य) 'वीर्याणि' (सामर्थ्यानि) 'विदथे' (अस्मिन् यज्ञे) 'प्रवक्ष्यामः' वयं (प्रकर्षेण कथयिष्यामः)। तस्मादस्मन्निन्दा न युक्तेत्यर्थः।

अथ द्वितीयामाह,—"यन्निर्णिजा रेक्णसा प्रावृतस्य रातिं गृभीतां मुखतो नयन्ति। सुप्राङ् अजो मेम्यद्विश्वरूप इन्द्रापूष्णोः प्रियमप्येति पाथः(२)" इति। 'निर्णिजा' (प्रोक्षणादिकृतया शुद्ध्या), 'रेक्णसा' (सुवर्णरजतादिमणिरूपेण धनेन) 'प्रावृतस्य' (प्रकर्षेण सर्वतो वेष्टितस्य); अश्वमेधे हि 'चत्वार ऋत्विजः समुक्षन्ति' इति (प्रोक्षन्तीति) प्रोक्षणं, 'हिरण्मया वाचा' इत्यादिना सुवर्णादिमणिभिरलङ्कारश्चाभिधीयते। अतस्तथाविधस्य सम्बन्धिनीं 'गृभीतां' (हस्ते स्वीकृतां) 'रातिं' (हविषो दानं) 'मुखतः' (अग्रे) 'यत्' (यदा) 'नयन्ति' (ऋत्विजः सम्पादयन्ति), तदानीम् 'अजः' (गतिमान् अश्वः)· 'सुप्राङ्' (सुष्ठु प्रकृष्टान् देवान् प्राप्नुवन्) 'मेम्यत्' (मेम्यदिति हेषाशब्दानुकरणं)। 'विश्वरूपः' (नानारूपः) सन् 'इन्द्रापूष्णोः' (इन्द्रपूषप्रभृतीनां देवानां) 'प्रियं' 'पाथः' 'अप्येति' (प्रीतिकरमन्नभागं प्राप्नोति)।

---

* आयुर्वायुः इत्येवंरूपः कश्चित् पाठो भवितुं युक्तः।

अथ तृतीयामाह,—"एष छागः पुरो अश्वेन वाजिना पूष्णो भागो नीयते विश्वदेव्यः। अभिप्रियं यत् पुरोडाशमर्वता त्वष्टेदेनꣳ सौश्रवसाय जिन्वति(३)" इति। 'वाजिना' (अन्नसाधनेन) 'अश्वेन' सह यः कश्चित् अजः 'पुरो' 'नीयते' (तस्मादश्वात् पूर्वभागे)। कीदृशोऽजः?—'पूष्णो भागः' (पूषदेवताया भागस्वरूपः); 'विश्वदेव्यः' (विश्वेभ्यो देवेभ्यो हितः); 'अभिप्रियं' (सर्वतः प्रीतिकरं, पुरोडाशवत् स्वादुभूतम्) 'एनम्' (अजं) 'अर्वता' (अश्वेन सह) 'त्वष्टेत्' (त्वष्टैव) 'सौश्रवसाय' (श्रूयते सर्वैरपि जनैः प्रीतिपूर्वकमिति श्रवोऽन्नं, सुष्ठु श्रवः सुश्रवस्तस्य भावः सौश्रवसः तस्मै, सम्यक्शोभनभावाय) 'यत्' (यस्मात् कारणात्) 'जिन्वति' (प्रीणयति), तस्मादयमजः 'पुरो' 'नीयते'। अश्वमेधप्रकरणे 'पौष्णमन्वञ्चम्' इत्येवं पूषदेवताकमजं विधास्यति, स पूर्वो नेतव्यः; तद्विषयोऽयं मन्त्रः। अनेन न्यायेन पूर्वमन्त्रोऽप्यजविषयो योजयितव्यः, अश्वमेधप्रकरणे, 'ऐन्द्रापौष्णमुपरिष्टात्' इति व्यासक्तदेवताकस्य अजस्य विहितत्वान्मन्त्रे च तस्मिन्नजशब्दस्य, 'मेम्यत्'इतियोग्यशब्दानुकरणस्य च श्रूयमाणत्वात्।

अथ चतुर्थीमाह,—"यद्धविष्यमृतुशो देवयानं त्रिर्मानुषाः पर्यश्वं नयन्ति। अत्रा पूष्णः प्रथमो भाग एति यज्ञं देवेभ्यः प्रतिवेदयन्नजः(४)" इति। 'यत्' (यत्र) 'मानुषाः' (ऋत्विजः) 'अश्वं' 'त्रिः' 'परि'-'नयन्ति' (त्रिवारं प्रदक्षिणं कुर्वन्ति)। कीदृशमश्वं?—'हविष्यं' (हविषो योग्यं), 'ऋतुशो' 'देवयानं' (ऋतावृतौ देवान् गच्छन्तं); 'अत्र' (अस्मिन् देशे) 'अजः' 'प्रथमः' 'एति'। कीदृशो-

ऽजः ?—'पूष्णः' 'भागः'। किं कुर्वन्?—'देवेभ्यः' 'यज्ञं' 'प्रति-वेदयन्' (हे देवाः, यज्ञः प्रवर्त्तते इत्येवं देवेभ्यो ज्ञापयन्)।

पञ्चमीमाह,—"होताध्वर्युरावया अग्निमिन्धो ग्रावग्राभ उत शꣳस्ता सुविप्रः। तेन यज्ञेन स्वरङ्कृतेन स्विष्टेन वक्षणा आपृणध्वम्(५)" इति। यो यस्मिन् यज्ञे 'होता' विद्यते, यश्च 'अध्वर्युः', 'आवयाः' ('आ' समन्ताद् वेति गच्छति तत्रतत्रानुष्ठानाय शीघ्रं प्रवर्त्तते इति 'आवयाः'), योऽपि 'अग्निमिन्धः' (अग्नेर्दीपकः अग्नीध्रः), यस्तु 'ग्रावग्राभः' (ग्रावस्तुत्), 'उत' (अपि च) 'शंस्ता' (यः प्रशस्ता), यश्च 'सुविप्रः' (प्रस्तोता), एते सर्वेऽपि 'स्वरंकृतेन' (सुष्ठु अलङ्कृतेन, अपेक्षितद्रव्यैः सम्पूर्णेनेत्यर्थः) 'स्विष्टेन' (सुष्ठु अनुष्ठितेन) 'यज्ञेन' (अश्वमेधेन) 'वक्षणाः' (फलवाहिनीर्घृतकुल्याः) 'आपृणध्वं',—हे होत्रादयः यूयं सर्वेऽपि आपूरयध्वं।

अथ षष्ठीमाह,—"यूपव्रस्का उत ये यूपवाहाश्चषालं ये अश्व-यूपाय तक्षति। ये चार्वते पचनꣳ सम्भरन्त्युतो तेषामभिगूर्त्तिर्न इन्वतु(६)" इति। 'ये' 'यूपव्रस्का' (यज्ञार्थं यूपं व्रश्चन्ति), 'उत' (अपि च) 'ये यूपवाहाः' (छिन्नं यूपं यज्ञभूमौ वहन्ति), 'ये'ऽप्यन्ये अश्व-यूपार्थं 'चषालं' (यूपकटकं) 'तक्षति' (तक्षणेन संस्कुर्वन्ति); 'उतो' (अपि च) 'ये'ऽप्यन्ये पुरुषाः 'अर्वते' (अर्वार्थं) 'पचनं' (पाकसाधन-काष्ठं) 'सम्भरन्ति' (सम्पादयन्ति), 'तेषां' सर्वेषां 'अभिगूर्त्तिः' (सङ्कल्पः) 'नः' (अस्मान्) 'इन्वतु' (प्रीणयतु)।

अथ सप्तमीमाह,—"उप प्रागात् सुमन्मेऽधायि मन्म देवानामाशा उपवीतपृष्ठः। अन्वेनं विप्रा ऋषयो मदन्ति देवानां पुष्टे चकृमा

सुबन्धुम्(७)" इति। सुष्ठु मदहेतुरतिहर्षकारणं फलं 'सुमत्', तदस्मान् 'उप प्रागात्' (समीपे प्राप्नोति) 'मन्म' (मननीयं फलं) 'मे' (मदर्थम्) 'अधायि' (देवैः सम्पादितं)। 'उपवीतपृष्ठः' (कमनीयपृष्ठो-ऽयमश्वः) 'देवानामाशाः' (देवैराशासनीयानि) हवींषि उप प्रागाः देवहविष्ट्वं प्राप्नोतीत्यर्थः। 'ऋषयः' 'विप्राः' (अभिज्ञातार ऋत्विजः) 'एनम्' (अश्वम्) 'अनु' 'मदन्ति' (अनुकूलैः स्तोत्रैर्हर्षयन्तु); 'देवानां' 'पुष्टे' (पुष्ट्यर्थं) 'सुबन्धु' 'चकृम' (एनमश्वं बन्धुवदत्यन्तप्रियं चकृम)।

अथाष्टमीमाह,—"यद्वाजिनो दाम सन्दानमर्वतो या शीर्षण्या रशना रज्जुरस्य। यद्वा घास्य प्रभृतमास्ये तृणꣳ सर्वा ता ते अपि देवेष्वस्तु(८)" इति। 'वाजिनः' (अश्वस्य) 'यत्' 'दाम' (गलबन्धनं), यच्च 'सन्दानं' (पृष्ठपादे बन्धनसाधनं दाम, पादसन्दानादि), अश्वा गले बद्धा अपि पुनः पृष्ठपादे रज्ज्वन्तरेण वध्यन्ते। 'या' च 'अर्वतः' (अश्वस्य) 'शीर्षण्या' 'रशना' (शिरसि सम्बद्धा रज्जुः), याऽप्यन्या पुच्छलग्ना 'अस्य' (अश्वस्य) 'रज्जुः'; 'यद्वा' (यदपि) 'आस्ये' (मुखे) 'प्रभृतं' (क्षिप्तं) 'तृणं' 'सर्वा ता' (तत्सर्वमपि) 'देवेषु' 'अपि' प्राप्तं 'अस्तु' 'ते' (तव) यजमानस्य 'अस्तु' (विद्यतां), यथेह लोके सर्वसाधनसम्पूर्णोऽश्वस्तवास्ति, तद्वत् परलोकेऽप्यस्त्वित्यर्थः।

अथ नवमीमाह,—"यदश्वस्य क्रविषो मक्षिकाश यद्वा स्वरौ स्वधितौ रिप्तमस्ति। यद्धस्तयोः शमितुर्यन्नखेषु सर्वा ता ते अपि देवेष्वस्तु(९)" इति। 'अस्य' (अश्वस्य) 'क्रविषः' (क्रव्यं) 'यत्' (मांसं), 'मक्षिका' 'आश' (भक्षितवती), 'यद्वा' (यच्च) रक्तं 'स्वरौ' (अञ्जनार्थे शकले) 'स्वधितौ' (छेदनहेतौ) शस्त्रे च 'रिप्तं' (ईषल्लिप्तं) अस्ति,

'यत्' अपि 'शमितुः' 'हस्तयोः' लिप्तं, यच्च तदीयेषु 'नखेषु' लिप्तं, हे अश्व 'ते' (त्वदीयं) 'सर्वा ता' (तत्सर्वं) 'देवेषु' अपि 'अस्तु' (देवेष्वेव कृतं भवतु)। यथा पूर्वमन्त्रे नियोजनकालीना गलशिरःपादादिबन्ध-नरज्जवो देवेषु समर्पिताः, एवमत्र मांसलेशोऽपि देवेषु समर्प्यते ।

अथ दशमीमाह,—"यदूवध्यमुदरस्यापवाति य आमस्य क्रविषो गन्धो अस्ति । सुकृता तच्छमितारः कृण्वन्तूत मेधꣳ शृतपाकं पचन्तु(१०)" इति। 'उदरस्य' मध्ये 'यत्' 'ऊवध्यं' (अर्द्धं जीर्णं पक्कं शकृदादि) गन्धरूपेण वायुना सह आगच्छति, 'यः' 'आमस्य' (अपक्कस्य) 'क्रविषः' (मांसस्य) 'गन्धः' दुःसहः 'अस्ति', तत्सर्वं 'सुकृता' (सुकृतं) यथा भवति तथा 'शमितारः' 'कृण्वन्तु'। 'उत' (अपि च) 'मेधं' (यज्ञयोग्यं) 'शृतपाकं' (अपाकविपाकौ परित्यज्य सम्यक् पक्कं यथा भवति तथा 'पचन्तु'।

अथैकादशीमाह,—"यत्ते गात्रादग्निना पच्यमानादभि शूलं निहतस्यावधावति। मा तद्भूम्यामा श्रिषन्मा तृणेषु देवेभ्यस्तदुशद्भ्यो रातमस्तु(११)" इति। हे अश्व, 'अग्निना' 'पच्यमानात्' 'ते' (तव) 'गात्रात्' (शरीरावयवसकाशात्) 'यत्' अल्पम् 'अवधावति' (अशृतं सद्भूमौ पतति), 'निहतस्य' (नितरां हन्यमानस्य) तव 'अभि शूलं' (शूले सक्तं) यद्यदङ्गम् 'अवधावति' 'तत्' (अङ्गं) भूम्यामपि 'मा श्रिषत्' (श्लिष्टं लग्नं मा भूत्) किन्तु 'उशद्भ्यः' (कामयमानेभ्यः) 'देवेभ्यः' 'रातं' (दत्तम्) 'अस्तु'।

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे षष्ठप्रपाठके अष्टमोऽनुवाकः ॥०॥

———

ये वाजिनं परिपश्यन्ति पक्वं य ईमाहुः सुरभि-
र्निर्हरेति ये चार्वतो माꣳसभिक्षामुपासत उतो तेषां
अभिगूर्त्तिर्न इन्वतु(१)। यन्नीक्षणं माꣳस्यचन्या उखाया
या पात्राणि यूष्ण आसेचनानि। ऊष्मण्यापिधाना
चरूणामङ्काः सूनाः परि भूषन्त्यश्वं(२)। निक्रमणं नि-
षदनं विवर्त्तनं यच्च पड्वीशमर्वतः। यच्च पपौ यच्च
घासिं॥ १॥
जघास सर्वा ता ते अपि देवेष्वस्तु(३)। मा त्वाग्नि-
र्ध्वनयिद्धूमगन्धिर्मोखा भ्राजन्त्यभि विक्त जघ्रिः। इष्टं
वीतमभिगूर्त्तं वषट्कृतं तं देवासः प्रति गृभ्णन्त्य-
श्वं(४)। यदश्वाय वास उपस्तृणन्त्यधीवासं या हिर-
ण्यान्यस्मै। सन्दानमर्वन्तं पड्वीशं प्रिया देवेष्वा
यामयन्ति(५)। यत्ते सादे महसा शूकृतस्य पार्ष्णिया
वा कशया॥ २॥
वा तुतोद स्रुचेव ता हविषो अध्वरेषु सर्वा ता ते
ब्रह्मणा सूदयामि(६)। चतुस्त्रिꣳशद्वाजिनो देवबन्धो-
र्वङ्क्रीरश्वस्य स्वधितिः समेति। अच्छिद्रा गात्रा वयुना
कृणोत परुष्परुरनुघुष्या वि शस्त(७)। एकस्त्वष्टुरश्वस्या
विशस्ता द्वा यन्तारा भवतस्तथर्तुः। या ते
गात्राणामृतुथा कृणोमि ता ता पिण्डानां प्रजुहो-
म्यग्नौ(८)। मा त्वा तपत्॥ ३॥

प्रिय आत्माऽपियन्तं मा स्वधितिस्तनुव आ तिष्ठिपत्ते। मा ते गृध्नुरविशस्तातिहाय छिद्रा गात्राण्यसिना मिथु कः(९)। न वा उवेतन् म्रियसे न रिष्यसि देवाꣳ इदेषि पथिभिः सुगेभिः हरी ते युञ्जा पृषती अभूतामुपास्थाद्वाजी धुरि रासभस्य(१०)। सुगव्यं नो वाजी स्वश्व्यं पुꣳसः पुत्राꣳ उत विश्वापुषꣳ रयिं। अनागास्त्वन्नो अदितिः कृणोतु क्षत्रं नो अश्वो वनताꣳ हविष्मान्(११) ॥ ४ ॥

घासिं। कशया। तपत्। रयिं। नव च ॥ ६ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे षष्ठप्रपाठके नवमोऽनुवाकः ॥०॥

अश्मन्। य इमा। उदेनं। आशुः शिशानः। प्राची। जीमूतस्य। यदक्रन्दः। मा नो मित्रः। ये वाजिनं। नव ॥ ६ ॥

अश्मन्(१-१)। मनोयुजं(२-१)। प्राचीमनु(४-१)। शर्म यच्छतु(६-५)। तेषामभिगूर्त्तिः(८-१)। षट्चत्वारिꣳशत्* ॥ ॥ ४६ ॥

समाप्तः षष्ठः प्रपाठकः ॥०॥

॥०॥ हरिः ओम् ॥०॥

* प्रथमे ५। द्वितीये ६। तृतीये ४। चतुर्थे ५। पञ्चमे ६। षष्ठे ७। सप्तमे ५। अष्टमे ४। नवमे ४। समष्टिः ४६ ॥

अष्टमेऽनुवाके पूर्वानुवाकवदश्वस्तोमीयाः केचिन्मन्त्रा उक्ताः। अथ नवमेऽवशिष्टा अश्वस्तोत्रमन्त्रा उच्यन्ते। तत्र प्रथमामृचमाह,—"ये वाजिनं परिपश्यन्ति पक्वं य ईमाहुः सुरभिर्निर्हरेति। ये चार्वतो मा᳘ंसभिक्षामुपासत उतो तेषामभिगूर्त्तिर्न इन्वतु[१]" इति। 'ये' (पुरुषाः) 'वाजिनम्' (एतमश्वं) 'पक्वं' (पाकं प्राप्तं) 'परिपश्यन्ति' (परित आगत्य आदरेण पश्यन्ति); 'ये' 'ईं' (येऽप्यन्ये) 'सुरभिः' (सुगन्धोऽयमश्वः) अस्मान्निष्कृष्याल्पमाहरेति 'आहुः'; 'उतो' (अपि च) 'ये च' अन्ये 'अर्वतः' (अश्वस्य सम्बन्धिनीं) 'मांसभिक्षाम्' 'उपासते' (प्रार्थयन्ते); 'तेषां' सर्व्वेषाम् 'अभिगूर्त्तिः' (सङ्कल्पः) 'इन्वतु' (प्राप्नोतु), अस्माकं श्रेयसे भवत्वित्यर्थः।

अथ द्वितीयामाह,—"यन्नीक्षणं मा᳘ंस्पचन्या उखाया या पात्राणि यूष्ण आसेचनानि। ऊष्मण्यापि धाना चरूणामङ्काः सूनाः परि भूषन्त्यश्वम्[२]" इति। मांसं पच्यते यस्यामुखायां सा 'मांस्पचनी' तस्या 'उखाया' 'नीक्षणं' (नितरामीक्षणम्, आदरेण दर्शनं) 'यत्' अस्ति, यानि च 'पात्राणि' 'यूष्णो' (रसस्य) 'आसेचनानि' (सर्व्वतः सेचकाधारभूतानि), 'चरूणां' (मांसादीनां*) 'अपि' 'धाना' (आच्छादनपात्राणि), 'ऊष्मण्या' (ऊष्मरक्षणार्थानि) यानि सन्ति, 'अङ्काः' (मांसलेनाङ्केनाङ्किताः), 'सूनाः' (स्वधितिवेतसशाखाद्याः) याः सन्ति, तानि सर्व्वाणि 'अश्वं' 'परि'—भूषयन्ति,—अश्वस्य यत् कार्य्यं तदेव कुर्व्वन्तीत्यर्थः।

---

* (मांसस्थलीनां) इति का० स० पु० पाठः।

अथ तृतीयामाह,—"निक्रमणं निषदनं विवर्त्तनं यच्च पड्वीश-मर्वतः। यच्च पपौ यच्च घासिं जघास सर्वा ता ते अपि देवेष्वस्तु(१)" इति। 'निक्रमणम्' (अश्वस्य पादप्रक्षेपस्थानं), 'निषदनं' (निवास-स्थानं) च 'यत्' अस्ति; 'यत्' अपि 'अर्वतः' (अश्वस्य) 'पड्वीशं' (पादबन्धनस्थानं, पादचुलरजो वा) अस्ति, 'यत्' अपि उदकं 'पपौ', 'यच्च' 'घासिं' (तृणादिकं) 'जघास' (भक्षितवान्), 'ते' (त्वदीयां) 'सर्वा ता' (तत्सर्वं) 'देवेषु' 'अपि' 'अस्तु' (देवेष्वेव समर्पितं भवतु)।

चतुर्थीमाह,—"मा त्वाग्निर्ध्वनयिद्धूमगन्धिर्मोखा भ्राजन्त्यभि विक्त जघ्रिः। इष्टं वीतमभिगूर्त्तं वषट्कृतं तं देवासः प्रति गृभ्ण-न्त्यश्वम्(४)" इति। हे अश्व, त्वां 'धूमगन्धिः' (धूमगन्धापादकः) 'अग्निः' 'मा' 'ध्वनयित्' (पाकशब्दोपेतं* मा करोतु);—काष्ठविशेष-युक्तेन केनचिदग्निना पक्वम् ओदनादिकं धूमगन्धोपेतं भवति, तथा दुष्पाकेन कुशब्दं यथा भवति तथा पच्यते, तदुभयमत्र मा भूदि-त्यर्थः। किञ्च, 'भ्राजन्ती' 'उखा' (सम्यक् तप्ता स्थाली) 'मा' 'अभि' 'विक्त' (अतिपाकेनाभितो विक्तं विदग्धं मा करोतु)। त्वं तु 'जघ्रिः' (आघ्राणयोग्यः, सुगन्धः) भवेति शेषः। 'इष्टं' (अत्यन्तेच्छाविषयं), 'वीतं' (कान्तं रमणीयपाकं) 'अभिगूर्त्तं' (देवयोग्यमस्त्विति यजमानैः सङ्कल्पितं), 'वषट्कृतं' (वषट्कारेण प्रदत्तम्), 'अश्वं' देवाः 'प्रति-गृभ्णन्ति' (स्वीकुर्वन्तु)।

---

* "पाकं शब्दोपेतं" इति सर्व्वत्र पाठो न सम्यक्।

अथ पञ्चमीमाह,—"यदश्वाय वास उपस्तृणन्त्यधीवासं या हिरण्यान्यस्मै। सन्दानमर्वन्तं पड्वीशं प्रिया देवेष्वा यामयन्ति(५)" इति। हन्यमानस्य अश्वस्य अधस्तादस्त्रमुपरिष्टाच्च किञ्चिदस्त्रं प्रसारयन्ति, तदत्र वासःशब्देनाधीवासशब्देनोच्यते* 'यत्' 'वासः' अश्वाय 'उपस्तृणन्ति' (अधः सम्प्रसारयन्ति), यच्च 'अधिवासम्' उपरि आच्छादयन्ति, यानि चान्यानि हिरण्मयादीनि 'अस्मै' (अश्वार्थं) सम्पादितानि, 'अर्वन्तं' (अर्वतोऽश्वस्य) यत् 'सन्दानं' (बन्धनसाधनं दाम), यच्च 'पड्वीशं' (पादबन्धनस्थानगता रज्जुः) तानि सर्वाणि 'देवेषु' प्रियाणि भूत्वा 'आ'—'यामयन्ति' (सर्वतः प्रसारयन्तु)।

अथ षष्ठीमाह,—यत्ते सादे महसा शूकृतस्य पार्ष्ण्या वा कशया वा तुतोद। स्रुचेव ता हविषो अध्वरेषु सर्वा ता ते ब्रह्मणा सूदयामि(६)" इति। हे अश्व, तव 'सादे' (गमने) 'शूकृतस्य' (शूकारो ध्वन्यनुकरणं, प्रौढस्याश्वस्य शीघ्रगमने शूकारो जायते, तद्युक्तस्य†) शीघ्रगमनाय उपर्यारूढः 'पार्ष्ण्या' (स्वकीयया पादपृष्ठभागेन) हस्तधृतया 'कशया' 'वा' 'तुतोद' (व्यथां चकार)। 'ते' (त्वदीयं) 'सर्वा' 'ता' (तत्सर्वं) 'ब्रह्मणा' (मन्त्रेण) 'सूदयामि' (जुहोमि)। तत्र दृष्टान्तः,—'अध्वरेषु' हविःसम्बन्धीनि तानि सर्वाणि आज्यादिविशेषरूपाणि 'स्रुचेव' (यथा स्रुचा आज्यं जुहोति तद्वत्)।

सप्तमीमाह,—"चतुस्त्रिꣳशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य स्वधितिः

---

* "वासःशब्देन अधीवासः। शब्देनोच्यते" इत्येवं सर्व्वत्र पाठः। अतोऽनुमिनोमि सर्व्वाण्येवास्मदधिगतानि पुस्तकानि एकादर्शमूलकानीति।

† अत्र 'महसा' इत्यस्य व्याख्या पतितेव लक्ष्यते।

समेति। अच्छिद्रा गात्रा वयुना कृणोत परुष्परुरनुघुष्या विशस्त(७)" इति। 'वाजिनः' (अन्नसाधनस्य) 'देवबन्धोः' (देवप्रियस्य), देवार्थं वध्यमानस्य) 'अश्वस्य' सम्बन्धिनीः 'वंक्रीः' (वक्राणि, पार्श्वद्वयगतानि अस्थीनि) एकैकस्मिन् पार्श्वे सप्तदशेत्येवं—चतुस्त्रिंशत्'सङ्ख्याकाः; अन्यस्य तु पशोः षड्विंशतिरेव। अतः सावधाना 'स्वधितिः' अस्य 'समेति' (सङ्गच्छताम्); यथा अस्थिलेशोऽपि हविषि न मिलति, तथा वियुनक्तीत्यर्थः। हे शमितारः, 'गात्रा' (हृदयाद्यङ्गानि) 'अच्छिद्रा' 'वयुना' (छिद्ररहितानि प्रज्ञातानि) यथा भवन्ति, तथा 'कृणोत' (कुरुत)। तत्र चायमुपायः,—'परुष्परुरनुघुष्य' (तत्पर्वानुक्रमेण तत् ईदृशमिति कथमपि ज्ञात्वा) 'विशस्त' (विशसनं कुरुत)।

अष्टमीमाह,—"एकस्त्वष्टुरश्वस्या विशस्ता द्वा यन्तारा भवतस्तथा ऋतुः। या ते गात्राणामृतुथा कृणोमि ता ता पिण्डानां प्रजुहोम्यग्नौ(८)" इति। 'त्वष्टुः' (दीप्तिमतः) 'अश्वस्य' ऋतूपलक्षितकालीन 'एकः' 'विशस्ता' (हिंसिता)। तथा 'द्वा' 'यन्तारा' (विशसनकाले यथा इतस्ततो न चलति, तथा नियामकौ द्वौ)। अत एवान्यत्र आम्नातं,—'अध्रिगुश्चापापश्च उभौ देवानाᳬ शमितारौ' इति। हे अश्व, 'ते' (तव) 'गात्राणां' (यान्यङ्गानि) 'ऋतुथा' (ऋतूपलक्षिते तत्तत्काले) 'कृणोमि' (उच्छिनद्मि), 'पिण्डानां' (मांसपिण्डानां मध्ये) 'ता' 'ता' (तानि तानि अङ्गानि) 'प्रजुहोमि' 'अग्नौ' (प्रकर्षेण जुहोमि)।

नवमीमाह,—"मा त्वा तपत् प्रिय आत्माऽपियन्तं मा स्वधितिस्तनुव आ तिष्ठिपत्ते। मा ते गृध्नुरविशस्तातिहाय छिद्रा

गात्राण्यसिना मिथु कः(९)" इति। हे अश्व, 'अपियन्तं' (शरीरं विसृज्य देवान् गच्छन्तं) त्वां 'प्रिय' 'आत्मा' (प्रीतिहेतुर्विग्रहः) 'मा' 'तपत्' (सन्तापं मा कार्षीत्)। तथा 'स्वधितिः' 'ते' 'तनुवः' (गात्राणि) 'मा' 'तिष्ठिपत्' (मा स्थापयतु),—किमप्यङ्गमनवशेष्य सर्वं छिनत्त्वित्यर्थः। 'अविशस्ता' (विशसनकौशलरहितः, केवलं मांसतृष्णा-युक्तः) 'अतिहाय' (विशसनकौशलरहितप्रकारमतिलङ्घ्य) 'ते' 'गात्राणि' (तवाङ्गानि) 'असिना' (शस्त्रेण) 'मिथु' छिद्राणि 'मा' 'कः' (मा करोतु)।

दशमीमाह,—"न वा उवेतन् म्रियसे न रिष्यसि देवाꣳ इदेषि पथिभिः सुगेभिः। हरी ते युञ्जा पृषती अभूतामुपास्थाद्वाजी धुरि रासभस्य(१०)" इति। शास्त्रानभिज्ञानां लौकिकानां दृष्ट्या त्वमेतत् प्रत्यक्षमेव म्रियसे शमितृभिर्हिंस्यसे च; शास्त्रदृष्ट्या तु 'न वा उवेतन् म्रियसे' (एतन्मरणमेव न भवति), 'न' 'रिष्यसि' (नापि शमितृभिर्हिंस्यसे), किन्तु 'सुगेभिः' 'पथिभिः' (सुगममार्गैः) 'देवान्' 'इदेषि' (देवानेव प्राप्नोषि)। तत्र देवेषु मध्ये इन्द्रत्वं प्राप्तस्य 'ते' 'हरी' (हरिनामकावश्वौ) रथे युक्तौ 'अभूतां' (सर्वथा भविष्यतः)। एवं तथा मरुद्रूपं प्राप्तस्य 'ते' 'पृषती' चित्रवर्णे अश्वस्त्रियौ 'युञ्जा' 'अभूतां' (रथे युक्तौ भविष्यतः)। इदानीं 'रासभस्य' 'धुरि' वर्त्तमानस्य (गर्दभवद्भारवाहिनः) तव 'वाजी' 'उपास्थात्' (त्वां वोढुं कश्चित् प्रौढाश्वः प्राप्तो भविष्यति)।

अथैकादशीमाह,—"सुगव्यं नो वाजी स्वश्वियं पुꣳसः पुत्राꣳ उत विश्वापुषꣳ रयिं। अनागास्त्वन्नो अदितिः कृणोतु क्षत्रं नो

अश्वो वनतां हविष्मान्(११)" इति । अयं 'वाजी' 'नः' (अस्माकं) 'सुगव्यं' (कल्याणगोसमूहं), 'स्वश्व्यं' (कल्याणाश्वसमूहं), 'पुंसः' 'पुत्रान्' (पुंस्त्वलक्षणसम्पन्नपुत्रान्), 'उत' (अपि च) 'विश्वापुषं' (विश्वं पोषयितुं) 'रयिं' (धनं) 'कृणोतु' (करोतु) । 'अदितिः' इयं भूमिः 'नः' (अस्माकं) 'अनागास्त्वं' (अपराधराहित्यं) करोतु । 'हविष्मान्' (हविःस्वरूपेण निष्पन्नः) अयम् 'अश्वः' 'नः' (अस्माकं) 'क्षत्रं' (बलं) 'वनतां' (सम्पादयतु) । तदेवमेतेषु त्रिषु अनुवाकेषु अश्वस्तोत्रप्रतिपादकत्वेन अश्वस्तोमीया मन्त्राः पञ्चत्रिंशत् आम्नाताः, अवशिष्टास्तु पञ्चमकाण्डे समाम्नास्यन्ते । तथा च सूत्रकार आह,— 'क्रमैरत्यक्रमीदित्येताꣳ षट्त्रिंशोम्' इति ॥

अत्र विनियोगसंग्रहः,—

पञ्चत्रिंशद्यदक्रन्दानुवाकेषु त्रिषु श्रुताः ।
अश्वस्तोमीयमन्त्रास्तैरिति षष्ठः समीरितः ॥

अथ मीमांसा,—नवमाध्यायस्य चतुर्थपादे (२अधि०) चिन्तितम् ।

न चतुस्त्रिंशदित्येष निषेधो नियतो न वा ।
गिरा पदवदाद्यः स्यात् नैवकारश्रुतत्वतः ॥
निषेधः प्राप्तिपूर्वोऽतः प्रापकोऽत्रानुमीयते ।
निषेधप्रापकाभ्याञ्च चतुस्त्रिंशद्विकल्प्यते ॥

अश्वमेधे त्रयः सवनीयाः पशवः श्रुताः,—'अश्वस्तूपरो गोमृगस्ते प्राजापत्ये' इति । तेष्वश्वस्य चतुस्त्रिंशद्वंक्रयः, तथा च मन्त्रः

पठ्यते,—'चतुस्त्रिंशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य स्वधितिः समेति' इति। वाजी गन्धर्ववाहको जातिविशेषः। अत एवान्यत्राम्नायते,—'हयो देवानवहदर्वाऽसुरान् वाजी गन्धर्वानश्वो मनुष्यान्' इति। देवबन्धुः देवानां प्रियः। स्वधितिश्छेदनहेतुः शस्त्रमित्यर्थः। एवं सति अध्रिगुप्रैषे विशेषोऽयमाम्नायते,—'न चतुस्त्रिंशदिति ब्रूयात् षड्विंशतिरित्येव ब्रूयात्' इति। सोऽयं 'चतुस्त्रिंशद्वाजिनः' इत्यादिकाया ऋचः प्रतिषेधो गिरापदनिषेधवन्नित्यो न तु विकल्पितः, यथा 'न गिरा गिरेति ब्रूयादैरं कृत्वोद्गेयम्' इत्यत्र गिरापदनिषेधपुरःसरं इरापदे विहिते सति निषिद्धस्य नित्यं निवृत्तिः, तथा चतुस्त्रिंशन्मन्त्रनिषेधपुरःसरं षड्विंशन्मन्त्रे विहिते सति नित्यं निवृत्तिर्निषेधस्येति चेत्। मैवं। 'षड्विंशतिरित्येव ब्रूयात्' इत्येवकारेण विधित्वप्रत्ययबाधात्, षड्विंशतिमन्त्रस्तावच्चोदकप्राप्तत्वान्न विधेयः, तस्य चतुस्त्रिंशन्मन्त्रेण अपवादप्रसक्तौ* 'न चतुस्त्रिंशत्' इत्यनेन अपवादकं मन्त्रं प्रतिषिध्य चोदकप्राप्तस्यानपोदितत्वेन† यथापूर्वमवस्थानमनूद्यत इत्येवमर्थं सूचयितुमेवकारः प्रयुक्तः। गिरापददृष्टान्तस्तु विषमः,—अप्राप्तत्वात् इरापदं तत्र विधीयते, तेन च विहितेन पाठप्राप्ते गिरापदे बाधिते स बाधो 'न गिरा गिरा' इति निषेधेनानूद्यते। अतो दृष्टान्ते निषेधानुवादः, दार्ष्टान्तिके विध्यनुवाद इति महद्वैषम्यं। ननु 'विधिवाक्यस्थस्य एवकारस्यानुवादत्वे सति 'न चतुस्त्रिंशत्' इत्येतस्मिन्निषेधे कृत्स्नवाक्यतात्पर्य्यात् निषिद्धस्य नित्यनिवृत्तिस्तदव-

* "चतुर्स्त्रिंशन्मन्त्रेण" इति सर्व्वत्र पाठो न सम्यक्।

† "चोदकप्राप्तत्वेन" इति का० ह० पु० पाठः।

स्य स्यात् । मैवं । प्रापकस्यापि सद्भावेन निषेधप्राप्तिभ्यां चतुस्त्रिंशन्मन्त्रस्य विकल्पितत्वात् ।

अथोच्यते—'चतुस्त्रिंꣳशद्वाजिन इत्ययं मन्त्रः केवलं स्वरूपेण पठितः, न त्वस्याध्रिगुप्रैषवत् प्रापकं किञ्चिदस्ति' इति, तत्र प्रापकवचनस्य कल्पनीयत्वात्, अन्यथा प्रसक्त्यभावेन प्रतिषेधानुपपत्तेः । तस्मात् प्रसञ्जकेनोपजीव्येनानुमितविधिना प्रत्यक्षनिषेधेन च समानबलतया 'चतुस्त्रिंꣳशत्' इत्ययं मन्त्रोऽश्वस्याध्रिगुप्रैषे विकल्प्यते ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे षष्ठप्रपाठके नवमोऽनुवाकः ॥ ० ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्क-भूपालसाम्राज्यधुरन्धरेण सायनाचार्य्येण विरचिते माधवीये वेदार्थ-प्रकाशनामकतैत्तिरीययजुःसंहिताभाष्ये चतुर्थकाण्डे षष्ठः प्रपाठकः सम्पूर्णः ॥ ० ॥

---

॥०॥ श्रीगणेशाय नमः ॥०॥

# अथ तैत्तिरीयसंहिताभाष्ये

## चतुर्थकाण्डे सप्तमप्रपाठके

### प्रथमोऽनुवाकः ।

अग्नाविष्णू सजोषसेमा वर्द्धन्तु वां गिरः द्युम्नैर्वाजेभिरागतं[१] । वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्च मे धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे श्रावश्च मे श्रुतिश्च मे ज्योतिश्च मे सुवश्च मे प्राणश्च मेऽपानः ॥ १ ॥

च मे व्यानश्च मेऽसुश्च मे चित्तञ्च म आधीतञ्च मे वाक् च मे मनश्च मे चक्षुश्च मे श्रोत्रञ्च मे दक्षश्च मे बलञ्च म ओजश्च मे सहश्च म आयुश्च मे जरा च म आत्मा च मे तनूश्च मे, शर्म च मे वर्म च मेऽङ्गानि च मेऽस्थानि च मे परूꣳषि च मे शरीराणि च मे[२] ॥ ॥ २ ॥

अपानः । तनूश्च मे । अष्टादश च ॥ १ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे सप्तमप्रपाठके प्रथमोऽनुवाकः ॥ ० ॥

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥
परिषेचनमुख्यास्तु संस्काराः षष्ठ ईरिताः।
वसोर्धारादयः शिष्टाः प्रोच्यन्तेऽस्मिंस्तु सप्तमे॥

कल्पः, 'अग्नाविष्णू सजोषसेति चतुर्गृहीतं हुत्वा औदुम्बरीं स्रुचं व्यायाममात्रीं* मृदाप्रदिग्धां पश्चादासेचनवतीं घृतस्य पूरयित्वा वाजश्च मे प्रसवश्च मे इति सन्ततां वसोर्धारां जुहोत्यामन्त्रसमापनात्' इति। अत्र हि एकादशभिरनुवाकैर्मन्त्रः† समाप्यते। चतुर्गृहीतहोममन्त्रपाठस्तु,—"अग्नाविष्णू सजोषसेमा वर्द्धन्तु वां गिरः। द्युम्नैर्वाजेभिरागतम्(१)" इति। हे 'अग्नाविष्णू', युवां 'सजोषसा' (समानप्रीती भवतं)। 'वां' (युवयोः) 'इमा' 'गिरः' (स्तुतिरूपा वाचः) 'वर्द्धन्तु' (वृद्धिं प्राप्नुवन्तु)। युवामपि 'द्युम्नैः' (धनैः) 'वाजेभिः' (अन्नैश्च युक्तौ) 'आगतं' (इहागच्छतम्)।

अथैकादशानुवाकात्मको मन्त्र उच्यते। अनुवाकभेदस्तत्र तत्र संयुक्ते कर्म्मणि पृथङ्मन्त्रत्वेनानुष्ठेयत्वादुपपद्यते। तत्र प्रथमानुवाकपाठस्तु,— "वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्च मे धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे श्रावश्च मे श्रुतिश्च मे ज्योतिश्च मे सुवश्च मे प्राणश्च मेऽपानश्च मे व्यानश्च मेऽसुश्च मे चित्तञ्च म आधीतञ्च मे वाक् च मे मनश्च मे चक्षुश्च मे श्रोत्रञ्च मे दक्षश्च मे बलञ्च म

* 'मात्री' इति सर्व्वत्र पाठो न सम्यक्।

† 'मन्त्रसमाप्यते' इति सर्व्वत्र पाठो न समीचीनः।

ओजश्च मे सहश्च म आयुश्च मे जरा च म आत्मा च मे तनूश्च मे शर्म च मे वर्म च मेऽङ्गानि च मेऽस्थानि च मे परूꣳषि च मे शरीराणि च मे(२)" इति। 'वाजः' अन्नं। 'च'-शब्दो वक्ष्यमाण-द्रव्यापेक्षया समुच्चयार्थः। 'मे' (मम) कल्पतामितिपदं दशमानुवाके वक्ष्यमाणं सर्वत्रानुषज्यते, सम्पद्यतामित्यर्थः। 'प्रसवः' अन्नस्याभ्यनु-ज्ञानं। 'प्रयतिः' शुद्धिः। 'प्रसितिः' बन्धनम् (अन्नविषयौत्सुक्यं)। 'धीतिः' अन्नधारणं। 'क्रतुः' अन्नहेतुर्यज्ञः। 'स्वरः' मन्त्रगत उदात्तादिः। 'श्लोकः' स्तुतिः। 'श्रावः' श्रावयितृत्वसामर्थ्यं। 'श्रुतिः' श्रवणसामर्थ्यं। 'ज्योतिः' प्रकाशः। 'सुवः' स्वर्गः। 'प्राणापानव्यानाः' वायुवृत्तिविशेषाः। 'असुः' तद्वृत्तिमान् वायुः। 'चित्तं' मनोजन्यं ज्ञानं। 'आधीतं' तेन ज्ञानेन सर्वदा विषयीकृतं द्रव्यं। वागादय-श्चत्वारः प्रसिद्धाः। 'दक्षः' ज्ञानेन्द्रियगतं कौशलं। 'बलं' कर्मेन्द्रिय-गतं सामर्थ्यं। 'ओजः' बलहेतुरष्टमधातुः। 'सहः' वैरिविषयमभि-भवितृत्वं। 'आयुः' प्रसिद्धं। 'जरा' आयुषो वलीपलितादिपर्यन्तत्वं। 'आत्मा' शास्त्रप्रसिद्धः परमात्मा। 'तनूः' शोभनसन्निवेशं वपुः। 'शर्म' सुखं। 'वर्म' शरीररक्षकं कवचादि। 'अङ्गानि' सम्पूर्णा अवयवाः। 'अस्थानि' यथास्थानं स्थितान्यस्थीनि। 'परूꣳषि' अङ्गुल्यादिपर्वाणि। 'शरीराणि' पूर्वमनुक्ताः शरीरावयवाः॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे सप्तमप्रपाठके प्रथमोऽनुवाकः ॥१॥

---

ज्यैष्ठ्यञ्च म आधिपत्यञ्च मे मन्युश्च मे भामश्च मेऽमश्च मेऽम्भश्च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे वर्ष्मा च मे द्राघुया च मे वृद्धञ्च मे वृद्धिश्च मे सत्यञ्च मे श्रद्धा च मे जगच्च ॥ १ ॥

मे धनञ्च मे वशश्च मे त्विषिश्च मे क्रीडा च मे मोदश्च मे जातञ्च मे जनिष्यमाणञ्च मे सूक्तञ्च मे सुकृतञ्च मे वित्तञ्च मे वेद्यञ्च मे भूतञ्च मे भविष्यच्च मे सुगञ्च मे सुपथञ्च म ऋद्धञ्च म ऋद्धिः, च मे क्लृप्तञ्च मे क्लृप्तिश्च मे मतिश्च मे सुमतिश्च मे.॥ २ ॥

जगच्च। ऋद्धिः। चतुर्दश च ॥ २ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे सप्तमप्रपाठके द्वितीयोऽनुवाकः ॥ ० ॥

अथ द्वितीयमाह,—"ज्यैष्ठ्यञ्च म आधिपत्यञ्च मे मन्युश्च मे भामश्च मेऽमश्च मेऽम्भश्च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे वर्ष्मा च मे द्राघुया च मे वृद्धञ्च मे वृद्धिश्च मे सत्यञ्च मे श्रद्धा च मे जगच्च मे धनञ्च मे वशश्च मे त्विषिश्च मे क्रीड़ा च मे मोदश्च मे जातञ्च मे जनिष्यमाणञ्च मे सूक्तञ्च मे सुकृतञ्च मे वित्तञ्च मे वेद्यञ्च मे भूतञ्च मे भविष्यच्च मे सुगञ्च मे

सुपथश्च म ऋद्धञ्च म ऋद्धिश्च मे क्लृप्तञ्च मे क्लृप्तिश्च मे मतिश्च मे सुमतिश्च मे" इति। 'ज्यैष्ठ्यं' प्रशस्ततमत्वं। 'आधिपत्यं' स्वामित्वं। 'मन्यु-भाम'-शब्दौ क्रोधावान्तरविशेषवाचिनौ,—एको मानसः, अपरो भ्रमादिलिङ्गजन्यो बाह्यः। 'अमः' अप्रमेयत्वं, विरोधिभिरियत्तया परिच्छेत्तुमशक्यत्वं। 'अम्भः' शैत्यमाधुर्योपेतमुदकं। 'जेमा' जय-सामर्थ्यं। 'महिमा' महत्त्वं, जयसम्पादितधनादिसम्पत्तिः। 'वरिमा' वरणीयत्वं, पूज्यत्वं। 'प्रथिमा' गृहक्षेत्रादिविस्तारः। 'वर्ष्मा' पुत्र-पौत्रादिशरीराणि। 'द्राघुया' पुत्रपौत्रादिविषयं। दीर्घत्वं, अविच्छिन्ना सन्ततिरित्यर्थः। 'वृद्धं' प्रभूतमन्नं धनञ्च। 'वृद्धिः' विद्यादिगुणै-रुत्कर्षः। 'सत्यं' यथार्थभाषणं। 'श्रद्धा' परलोकोऽस्तीति बुद्धिः। 'जगत्' जङ्गमाजङ्गमात्मकं। 'धनं' स्वर्णादि। 'वशः' सर्वस्वाधीनत्वं। 'त्विषिः' शरीरकान्तिः। 'क्रीड़ा' अक्षद्यूतादिः। 'मोदः' तज्जन्मा हर्षः। 'जातं' पूर्वसिद्धमपत्यं। 'जनिष्यमाणं' भविष्यदपत्यं। 'सूक्तम्' सूक्तसमूहः। 'सुकृतं' तज्जन्यमपूर्वं। 'वित्तं' पूर्वलब्धं। 'वेद्यं' इतः परं लब्धव्यं द्रव्यजातं। 'भूतं' पूर्वसिद्धं क्षेत्रादि। 'भविष्यत्' सम्पत्स्यमानं। 'सुगं' सुष्ठु गन्तव्यं, बन्धुजनयुक्तग्रामान्तरादि। 'सुपथं' चोरादिरहितो मार्गः। 'ऋद्धं' वर्द्धितं धनादिकं। 'ऋद्धिः' अनुष्ठितकर्मफलं। 'क्लृप्तं' समर्थं, स्वकार्यक्षमं द्रव्यं। 'क्लृप्तिः' स्वकीयसामर्थ्यं। 'मतिः' पदार्थमात्रनिश्चयः। 'सुमतिः' दुर्घटराजकार्यनिश्चयः॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे सप्तमप्रपाठके द्वितीयोऽनुवाकः॥०॥

---

शञ्च॑ मे॒ मय॑श्च मे प्रि॒यञ्च॑ मेऽनुका॒मश्च॑ मे॒ काम॑श्च मे सौमन॒सश्च॑ मे भ॒द्रञ्च॑ मे॒ श्रेय॑श्च मे॒ वस्य॑श्च मे॒ यश॑श्च मे॒ भग॑श्च मे॒ द्रवि॑णञ्च मे य॒न्ता च॑ मे ध॒र्त्ता च॑ मे॒ क्षेम॑श्च मे॒ धृति॑श्च मे॒ विश्व॑ञ्च ॥ १ ॥

मे॒ मह॑श्च मे सं॒विच्च॑ मे॒ ज्ञात्र॑ञ्च मे॒ सूश्च॑ मे प्र॒सूश्च॑ मे सीर॑ञ्च मे ल॒यश्च॑ म ऋ॒तञ्च॑ मे॒ऽमृत॑ञ्च मेऽय॒क्ष्मञ्च॑ मेऽना॑मयच्च मे जी॒वातु॑श्च मे दीर्घायु॒त्वञ्च॑ मेऽनमि॒त्रञ्च॑ मेऽभ॑यञ्च मे सु॒गञ्च॑ मे॒ शय॑नं, च मे सू॒षा च॑ मे सु॒दिन॑ञ्च मे ॥ २ ॥

विश्व॑ञ्च। शय॑नम्। अ॒ष्टौ च॑ ॥ ३ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे सप्तमप्रपाठके तृतीयोऽनुवाकः ॥०॥

तृतीयमाह,—"शञ्च मे मयश्च मे प्रियञ्च मेऽनुकामश्च मे कामश्च मे सौमनसश्च मे भद्रञ्च मे श्रेयश्च मे वस्यश्च मे यशश्च मे भगश्च मे द्रविणञ्च मे यन्ता च मे धर्त्ता च मे क्षेमश्च मे धृतिश्च मे विश्वञ्च मे महश्च मे संविच्च मे ज्ञात्रञ्च मे सूश्च मे प्रसूश्च मे सीरञ्च मे लयश्च म ऋतञ्च मेऽमृतञ्च मेऽयक्ष्मञ्च मेऽनामयच्च मे जीवातुश्च मे दीर्घायुत्वञ्च मेऽनमित्रञ्च मेऽभयञ्च मे सुगञ्च मे शयनञ्च

मे स्रुषा च मे सुदिनञ्च मे" इति। 'शं'-शब्द ऐहिकसुखवाची। 'मयः'-शब्द आमुष्मिकसुखवाची। 'प्रियं' प्रीतिकारणं वस्तु। 'अनुकामः' अनुकूलत्वनिमित्तेन काम्यमानः पदार्थः। एतदुभयम् ऐहिकमेव तारतम्येोपेतं। 'कामः' आमुष्मिकः स्वर्गादिः। 'सौमनसः' मनःस्वास्थ्यकरो बन्धुवर्गः। 'भद्रं' कल्याणं, इह लोके रमणीयं। 'श्रेयः' परलोकहितं। 'वस्यः' निवासहेतुर्गवादिः। 'यशः' कीर्त्तिः। 'भगः' सौभाग्यं। 'द्रविणं' धनं। 'यन्ता' नियामक आचार्यादिः। 'धर्त्ता' पोषकः पित्रादिः! 'क्षेमः' विद्यमानधनस्य रक्षणशक्तिः। 'धृतिः' धैर्यम्, आपद्यपि निश्चलत्वं। 'विश्वं' सर्वजनानुकूल्यं। 'महः' पूजा। 'सम्वित्' वेदशास्त्रादिविज्ञानं। 'ज्ञात्रं' ज्ञापयितृत्वसामर्थ्यं। 'सूः' पुत्रादिप्रेरणसामर्थ्यं। 'प्रसूः' भृत्यादिप्रेरणसामर्थ्यं। 'सीरं' लाङ्गलादिकृषिसाधनसम्पत्तिः। 'लयः' तत्प्रतिबन्धनिवृत्तिः। 'ऋतं' यज्ञादिकर्म। 'अमृतं' तत्फलं। 'अयक्ष्मं' राजयक्ष्मादिप्रबलव्याधिराहित्यं। 'अनामयत्' ज्वरादिशिरोव्याध्याद्यल्पव्याधिराहित्यं। 'जीवातुः' जीवनकारणं व्याधिपरिहारार्थमौषधं। 'दीर्घायुत्वं' अपमृत्युराहित्यं। 'अनमित्रं' वैरिराहित्यं। 'अभयं' भयराहित्यं। 'सुगं' शोभनगमनं, सर्वैरङ्गीकृताचरणमित्यर्थः। 'शयनं' शय्योपधानादिसम्पत्तिः। 'स्रुषा' स्नानसन्ध्यावन्दनादियुक्तः शोभनः प्रातःकालः। 'सुदिनं' यज्ञदानाध्ययनादियुक्तं कृत्स्नञ्च दिनम्॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये चतुर्थकाण्डे सप्तमप्रपाठके तृतीयोऽनुवाकः ॥०॥

---

ऊर्क् च मे सूनृता च मे पयश्च मे रसश्च मे घृतञ्च मे मधु च मे सग्धिश्च मे सपीतिश्च मे कृषिश्च मे वृष्टिश्च मे जैत्रञ्च म औद्भिद्यञ्च मे रयिश्च मे रायश्च मे पुष्टञ्च मे पुष्टिश्च मे विभु च ॥ १ ॥

मे प्रभु च मे बहु च मे भूयश्च मे पूर्णञ्च मे पूर्णतरञ्च मे क्षितिश्च मे कूयवाश्च मेऽन्नञ्च मेऽक्षुच्च मे व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे मुद्गाश्च मे खल्वाश्च मे गोधूमाश्च मे मसुराः, च मे प्रियङ्गवश्च मेऽणवश्च मे श्यामाकाश्च मे नीवाराश्च मे ॥ ॥ २ ॥

विभु च । मसुराः । चतुर्दश च ॥ ४ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे सप्तमप्रपाठके चतुर्थोऽनुवाकः ॥ ० ॥

चतुर्थमाह,—"ऊर्क् च मे सूनृता च मे पयश्च मे रसश्च मे घृतञ्च मे मधु च मे सग्धिश्च मे सपीतिश्च मे कृषिश्च मे वृष्टिश्च मे जैत्रञ्च म औद्भिद्यञ्च मे रयिश्च मे रायश्च मे पुष्टञ्च मे पुष्टिश्च मे विभु च मे प्रभु च मे बहु च मे भूयश्च मे पूर्णञ्च मे पूर्णतरञ्च मे क्षितिश्च मे कूयवाश्च मेऽन्नञ्च मेऽक्षुच्च मे व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे मुद्गाश्च मे खल्वाश्च मे गोधूमाश्च मे

मसुराश्च मे प्रियङ्गवश्च मेऽणवश्च मे श्यामाकाश्च मे नीवाराश्च मे" इति। 'ऊर्क्' अन्नसामान्यं। 'सूनृता' प्रियोक्तिः। पयःप्रभृतयः अन्नविशेषाः। 'पयः' क्षीरं। 'रसः' तत्तत्यं सारं। घृतमधुनी प्रसिद्धे। 'सग्धिः' बन्धुभिः सह भोजनमित्यर्थः। तथा 'सपीतिः' सहपानं। कृषिवृष्टी अन्नहेतुत्वेन प्रसिद्धे। 'जैत्रं' जयशीलं सुक्षेत्रमित्यर्थः। 'औद्भिद्यं' उद्भिदां तरुगुल्मादीनामुत्पत्तिः। 'रयिः' सुवर्णं। 'रायः' मणिमुक्तादिः। 'पुष्टं' पूर्वोक्तमेव सुवर्णमतिसमृद्धं। 'पुष्टिः' शरीरपोषः। विभ्वादयोः चित्यन्ता धान्यविषया उत्तरोत्तराभिवृद्धयः सप्तापि तारतम्येन द्रष्टव्याः; न केवलं प्रवृद्धान्येव धान्यानि किन्तु अल्पान्यपीत्युच्यते*। 'कूयवाः' कुत्सितयवाः। 'अन्नं' प्रसिद्धं। 'अक्षुत्' अन्नसाध्यः क्षुत्परिहारः। व्रीहियवमाषतिलमुद्गाः प्रसिद्धाः। 'खल्वाः' मुद्गेभ्योऽपि स्थूलवीजाः। 'गोधूमाः' प्रसिद्धाः। 'मसुराः' मुद्गवत्सूपहेतवः। 'प्रियङ्गवः' प्रसिद्धाः†। 'अणवः' सूक्ष्मशालयः। 'श्यामाकाः' ग्राम्यधान्यविशेषाः। 'नीवाराः' आरण्याः।

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये चतुर्थकाण्डे सप्तमप्रपाठके चतुर्थोऽनुवाकः ॥४॥

---

* 'इत्युच्यन्ते' इति आदर्शपुस्तकपाठः।

† 'प्रसिद्धः' इति सर्व्वत्र पाठो न सम्यक्।

अश्मा च मे॒ मृत्ति॑का च मे गि॒रय॑श्च मे॒ पर्व॑ताश्च मे॒ सिक॑ताश्च मे॒ वन॒स्पत॑यश्च मे॒ हिर॑ण्यञ्च मे॒ऽय॑श्च मे॒ सीस॑ञ्च मे॒ त्रपु॑श्च मे श्या॒मञ्च॑ मे लो॒हञ्च॑ मे॒ऽग्निश्च॑ म॒ आप॑श्च मे वी॒रुध॑श्च म॒ ओष॑धयश्च मे कृष्टप॒च्यञ्च॑ ॥१॥ मे॒ऽकृष्टप॒च्यञ्च॑ मे ग्रा॒म्याश्च॑ मे प॒शव॑ आर॒ण्याश्च॑ य॒ज्ञेन॑ कल्पन्तां वि॒त्तञ्च॑ मे॒ वित्ति॑श्च मे भू॒तञ्च॑ मे॒ भूति॑श्च मे॒ वसु॑ च मे वस॒तिश्च॑ मे॒ कर्म॑ च मे॒ शक्ति॑श्च मे॒ऽर्थ॑श्च म॒ एम॑श्च म॒ इति॑श्च मे॒ गति॑श्च मे ॥ २ ॥

कृष्टप॒च्यञ्च। अ॒ष्टाच॑त्वारिꣳशच्च ॥ ५ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे सप्तमप्रपाठके पञ्चमोऽनुवाकः ॥०॥

अथ पञ्चममाह,—"अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे हिरण्यञ्च मेऽयश्च मे सीसञ्च मे त्रपुश्च मे श्यामञ्च मे लोहञ्च मेऽग्निश्च म आपश्च मे वीरुधश्च म ओषधयश्च मे कृष्टपच्यञ्च मे अकृष्टपच्यञ्च मे ग्राम्याश्च मे पशव आरण्याश्च यज्ञेन कल्पन्तां वित्तञ्च मे वित्तिश्च मे भूतञ्च मे भूतिश्च मे वसु च मे वसतिश्च मे कर्म च मे शक्तिश्च मेऽर्थश्च म एमश्च म इतिश्च मे गतिश्च मे" इति। 'अश्मादयः' प्रसिद्धाः। 'श्यामं' कृष्णायसं। 'लोहं' कांस्यताम्रादि। 'अग्न्यादयः' प्रसिद्धाः। ग्राम्यारण्यपशवो

'यज्ञेन' निमित्तभूतेन 'कल्पन्तां' (समर्था भवन्तु)। पूर्वं लब्धं 'वित्तं'। 'वित्तिः' भाविलाभः। 'भूतम्' ऐश्वर्य्योपेतं पुत्रादिकं। 'भूतिः' स्वकीयम् ऐश्वर्यादिकं। 'वसु' निवाससाधनं गवादिकं। 'वसतिः' निवासाधारो गृहादिः। 'कर्म' अग्निहोत्रादि*। 'शक्तिः' तदनुष्ठानसामर्थ्यं। 'अर्थः' प्रयोजनविशेषः। 'एमः' एतव्यं प्राप्तव्यं सुखं†। 'इतिः' अयनं इष्टप्राप्त्युपायः। 'गतिः' इष्टप्राप्तिः॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे सप्तमप्रपाठके पञ्चमोऽनुवाकः ॥०॥

---

अ॒ग्निश्च॑ म॒ इन्द्र॑श्च मे॒ सोम॑श्च म॒ इन्द्र॑श्च मे सवि॒ता च॑ म॒ इन्द्र॑श्च मे॒ सर॑स्वती च म॒ इन्द्र॑श्च मे पू॒षा च॑ म॒ इन्द्र॑श्च मे॒ बृह॒स्पति॑श्च म॒ इन्द्र॑श्च मे मि॒त्रश्च॑ म॒ इन्द्र॑श्च मे॒ वरु॑णश्च म॒ इन्द्र॑श्च मे॒ त्वष्टा॑ च॥ १ ॥

म॒ इन्द्र॑श्च मे धा॒ता च॑ म॒ इन्द्र॑श्च मे॒ विष्णु॑श्च म॒ इन्द्र॑श्च मे॒ऽश्विनौ॑ च म॒ इन्द्र॑श्च मे म॒रुत॑श्च म॒ इन्द्र॑श्च मे॒ विश्वे॑ च मे दे॒वा इन्द्र॑श्च मे पृ॒थि॒वी च॑ म॒ इन्द्र॑श्च मे॒ऽन्तरि॑क्षञ्च म॒ इन्द्र॑श्च मे॒ द्यौश्च॑ मे॒, इन्द्र॑श्च मे॒ दिश॑श्च

---

* 'अग्निहोत्रादिः' इत्यादर्शपुस्तकपाठः।

† सुखमिति ह० पू० पाठः। मुख्यमिति आदर्शपुस्तकपाठः।

म इन्द्रश्च मे मूर्द्धा च म इन्द्रश्च मे प्रजापतिश्च म इन्द्रश्च मे ॥ २ ॥

त्वष्टा च । द्यौश्च मे । एकविंशतिश्च ॥ ६ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे सप्तमप्रपाठके षष्ठोऽनुवाकः ॥ ० ॥

अथ षष्ठानुवाकमाह,—"अग्निश्च म इन्द्रश्च मे सोमश्च म इन्द्रश्च मे सविता च म इन्द्रश्च मे सरस्वती च म इन्द्रश्च मे पूषा च म इन्द्रश्च मे बृहस्पतिश्च म इन्द्रश्च मे मित्रश्च म इन्द्रश्च मे वरुणश्च म इन्द्रश्च मे त्वष्टा च म इन्द्रश्च मे धाता च म इन्द्रश्च मे विष्णुश्च म इन्द्रश्च मेऽश्विनौ च म इन्द्रश्च मे मरुतश्च म इन्द्रश्च मे विश्वे च मे देवा इन्द्रश्च मे पृथिवी च म इन्द्रश्च मेऽन्तरिक्षञ्च म इन्द्रश्च मे द्यौश्च म इन्द्रश्च मे दिशश्च म इन्द्रश्च मे मूर्द्धा च म इन्द्रश्च मे प्रजापतिश्च म इन्द्रश्च मे" इति । अग्न्यादयः प्रसिद्धा देवताः । तैः सर्व्वैः सह समभागोपेतत्वादिन्द्र एकैकया सह पठ्यते । दिक्शब्देन प्राच्याद्यास्तस्र उच्यन्ते । मूर्द्धशब्देन चोर्द्धा दिक् । सा च मुख्यत्वाभिप्रायेण पृथङ्निर्दिष्टा ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये चतुर्थकाण्डे सप्तमप्रपाठके षष्ठोऽनुवाकः ॥ ० ॥

---

अ॒ꣳशुश्च॑ मे र॒श्मिश्च॒ मेऽदा॑भ्यश्च॒ मेऽधि॑पतिश्च म उपा॒ꣳशुश्च॑ मेऽन्तर्या॒मश्च॑ म ऐन्द्रवाय॒वश्च॑ मे मैत्रावरु॒णश्च॑ म आश्वि॒नश्च॑ मे प्रतिप्र॒स्थान॑श्च मे शु॒क्रश्च॑ मे म॒न्थी च॑ म आग्रय॒णश्च॑ मे वैश्वदे॒वश्च॑ मे ध्रु॒वश्च॑ मे वैश्वान॒रश्च॑ म ऋतुग्र॒हाश्च॑ ॥ १ ॥

मे॒ऽतिग्रा॒ह्या॑श्च म ऐन्द्रा॒ग्नश्च॑ मे वैश्वदे॒वश्च॑ मे मरु॒त्वतीया॑श्च मे माहे॒न्द्रश्च॑ म आदि॒त्यश्च॑ मे सावि॒त्रश्च॑ मे सारस्व॒तश्च॑ मे पौ॒ष्णश्च॑ मे पात्नीव॒तश्च॑ मे हारि-योज॒नश्च॑ मे ॥ २ ॥

ऋ॒तुग्र॒हाश्च॑। चतु॑स्त्रिꣳशच्च॑ ॥ ७ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे सप्तमप्रपाठके सप्तमोऽनुवाकः ॥ ० ॥

अथ सप्तमीमाह,—"अꣳशुश्च मे रश्मिश्च मेऽदाभ्यश्च मेऽधि-पतिश्च म उपाꣳशुश्च मेऽन्तर्यामश्च म ऐन्द्रवायवश्च मे मैत्रावरुणश्च म आश्विनश्च मे प्रतिप्रस्थानश्च मे शुक्रश्च मे मन्थी च म आग्रयणश्च मे वैश्वदेवश्च मे ध्रुवश्च मे वैश्वानरश्च म ऋतुग्रहाश्च मेऽतिग्राह्याश्च म ऐन्द्राग्नश्च मे वैश्वदेवश्च मे मरुत्वतीयाश्च मे माहेन्द्रश्च मे आदित्यश्च मे सावित्रश्च मे सारस्वतश्च मे पौष्णश्च मे पात्नीवतश्च मे हारियोजनश्च मे" इति। अंश्वादयः सोमग्रहविशेषाः सोमग्रहणे

प्रसिद्धाः। अदाभ्याख्यस्यैव ग्रहस्य ग्रहादर्शनात् गृह्यमाणत्वदशां पृथक्कृत्य रश्मिशब्देन निर्दिश्यते, रश्मीनान्तु तद्ग्रहणसाधनत्वात्। तथा च तद्ग्रहणमन्त्रः पठ्यते*,—'शुक्रं ते शुक्रेण गृह्णाम्यह्नो रूपेण सूर्यस्य रश्मिभिः' इति। अधिपतिशब्देन दधिग्रहो विवक्षितः, तस्य च ज्येष्ठत्वादाधिपत्यं। अत एव श्रूयते,-'ज्येष्ठो वा एष ग्रहाणाम्' इति। प्रतिप्रस्थानशब्देन द्विदेवत्यग्रहसहभावी सम्बन्धी प्रतिनिधिभावी ग्राह्यो विवक्षितः। ध्रुवाख्यस्यैव ग्रहस्यावनयनदशायां वैश्वानरसूक्तपाठात् तदवसन्नो वैश्वानरशब्देनोच्यते। आद्यो वैश्वदेवः प्रातःसवनगतः, उत्तरस्तृतीयसवनगतः सारस्वतग्रहोऽभिषेचनीयाख्यविकृतौ द्रष्टव्यः,—'सारस्वतं ग्रहं गृह्णाति' इति तत्राम्नानात्। एवं पूष्णोऽपि विकृतिगामी द्रष्टव्यः॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये चतुर्थकाण्डे सप्तमप्रपाठके सप्तमोऽनुवाकः॥०॥

---

इ॒ध्मश्च॑ मे ब॒र्हिश्च॑ मे॒ वेदि॑श्च मे॒ धिष्णि॑याश्च मे॒ स्रुच॑श्च मे चम॒साश्च॑ मे॒ ग्रावा॑णश्च मे॒ स्वर॑वश्च म उपर॒वाश्च॑ मेऽधि॒षव॑णे च मे द्रोणकल॒शश्च॑ मे वाय॒व्या॑नि

---

* 'पठ्यन्ते' इति सर्व्वत्र पाठो न सम्यक्।

च मे पूतभृच्च म आधवनीयश्च म आग्नीध्रश्च मे हविर्धानञ्च मे गृहाश्च मे सदश्च मे पुरोडाशाश्च मे पचताश्च मेऽवभृथश्च मे स्वगाकारश्च मे ॥ १ ॥

गृहाश्च। षोडश च ॥ ८ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे सप्तमप्रपाठके अष्टमोऽनुवाकः ॥ * ॥

अथाष्टममाह,—"इध्मश्च मे बर्हिश्च मे वेदिश्च मे धिष्णियाश्च मे स्रुचश्च मे चमसाश्च मे ग्रावाणश्च मे स्वरवश्च म उपरवाश्च मे अधिषवणे च मे द्रोणकलशश्च मे वायव्यानि च मे पूतभृच्च म आधवनीयश्च म आग्नीध्रश्च मे हविर्धानश्च मे गृहाश्च मे सदश्च मे पुरोडाशाश्च मे पचताश्च मेऽवभृथश्च मे स्वगाकारश्च मे" इति। इध्मादीनि यज्ञाङ्गानि द्रव्याणि यज्ञप्रकरणे प्रसिद्धानि। 'गृहाः' पत्नीशालादयः। 'पचताः' शामित्रादयः। 'स्वगाकारः' शंयुवाकः, तेन हि यथास्वं देवतानां हविर्गमनं क्रियते ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे सप्तमप्रपाठके अष्टमोऽनुवाकः ॥०॥

———

अ॒ग्निश्च॑ मे घ॒र्मश्च॑ मे॒ऽर्कश्च॑ मे॒ सूर्य॑श्च मे प्रा॒णश्च॑ मे॒ऽश्वमे॒धश्च॑ मे पृथि॒वी च॑ मे॒ दि॑तिश्च मे॒ऽदि॑तिश्च मे॒ द्यौश्च॑ मे॒ शक्व॑रीर॒ङ्गुल॑यो॒ दिश॑श्च मे य॒ज्ञेन॑ कल्पन्ता॒मृक्च॑ मे॒ साम॑ च मे॒ स्तोम॑श्च मे॒ यजु॑श्च मे दी॒क्षा, च॑ मे॒ तप॑श्च म ऋ॒तुश्च॑ मे व्र॒तञ्च॑ मेऽहोरा॒त्रयो॑र्वृ॒ष्ट्या बृ॑हद्रथन्त॒रे च॑ मे य॒ज्ञेन॑ कल्पेताम् ॥ १ ॥

दी॒क्षा । अ॒ष्टाद॑श च ॥ ९ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे सप्तमप्रपाठके नवमोऽनुवाकः ॥ * ॥

नवममाह,—“अग्निश्च मे घर्मश्च मेऽर्कश्च मे सूर्य्यश्च मे प्राणश्च मेऽश्वमेधश्च मे पृथिवी च मे दितिश्च मेऽदितिश्च मे द्यौश्च मे शक्करीरङ्गुलयो दिशश्च मे यज्ञेन कल्पन्तामृक् च मे साम च मे स्तोमश्च मे यजुश्च मे दीक्षा च मे तपश्च मे ऋतुश्च मे व्रतञ्च मे अहोरात्रयोर्वृष्ट्या बृहद्रथन्तरे च मे यज्ञेन कल्पेताम्” इति । अग्निश्चीयमानः । घर्मः प्रवर्ग्यः । ‘इन्द्रायार्कवते पुरोडाशम्’ इति विहितो यागोऽर्कः । ‘सौर्य्यं चरुम्’ इति विहितो यागः सौर्य्यः । ‘प्राणाय स्वाहा’ इति विहितो होमः प्राणः । अश्वमेधः प्रसिद्धः । पृथिव्यादयो देवताविशेषाः । शक्करीः शक्कर्य्यः । अङ्गुलयः अङ्गुलीवत् विराट्पुरुषस्य अवयवस्य विशेषाः । दिशः प्राच्याद्याः । चशब्दात् विदिशोऽपि । ताः सर्वाः ‘मे’ (मदीयेन) ‘यज्ञेन’ ‘कल्पन्तां’ (स्वस्वव्यापारसमर्थाः भवन्तु) । ऋगादयो मन्त्रविशेषाः । स्तोमः

सामावृत्तिरूपं स्तोत्रं। दीक्षा यजमानसंस्कारः। तपः पापक्षयार्थम् अनशनादि। ऋतुर्यज्ञाङ्गभूतः कालः। व्रतम् एकस्तनादि। अहोरात्रयोः सम्बन्धिनी या वृष्टिः, तया मदीयं सस्यं कल्पतामितिशेषः। बृहद्रथन्तरे सामनी, ते च मदीयेन 'यज्ञेन' 'कल्पेतां' (स्वस्य व्यवहारसमर्थे भवेताम्)॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे सप्तमप्रपाठके नवमोऽनुवाकः॥०॥

---

गर्भा॑श्च मे व॒त्सास्च॑ मे॒ त्र्यवि॑श्च मे त्र्य॒वी च॑ मे दित्य॒वाट् च॑ मे दित्यौ॒ही च॑ मे॒ पञ्चा॑विश्च मे पञ्चा॒वी च॑ मे त्रिव॒त्सश्च॑ मे त्रिव॒त्सा च॑ मे तुर्य॒वाट् च॑ मे तुर्यौ॒ही च॑ मे पष्ठ॒वाच्च॑ मे पष्ठौ॒ही च॑ म उ॒क्षा च॑ मे व॒शा च॑ म ऋष॒भश्च॑॥ १ ॥

मे॒ वेहच्च॑ मेऽन॒ड्वांच॑ मे धे॒नुश्च॑ म॒ आयु॑र्य॒ज्ञेन॑ कल्पतां प्रा॒णो य॒ज्ञेन॑ कल्पतामपा॒नो य॒ज्ञेन॑ कल्पतां व्या॒नो य॒ज्ञेन॑ कल्पतां॒ चक्षु॑र्य॒ज्ञेन॑ कल्पता॒ꣳ श्रोत्रं॑ य॒ज्ञेन॑ कल्पतां॒ मनो॑ य॒ज्ञेन॑ कल्पतां॒ वाग्य॒ज्ञेन॑ कल्पतामा॒त्मा य॒ज्ञेन॑ कल्पतां य॒ज्ञो य॒ज्ञेन॑ कल्पतां॥ २ ॥

ऋष॒भश्च॑। चत्वारि॒ꣳशच्च॑॥ १० ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे सप्तमप्रपाठके दशमोऽनुवाकः॥ * ॥

अथ दशमानुवाकमाह,—"गर्भाश्च मे वत्साश्च मे त्र्यविश्च मे त्र्यवी च मे दित्यवाट् च मे दित्यौही च मे पञ्चाविश्च मे पञ्चावी च मे त्रिवत्सश्च मे त्रिवत्सा च मे तुर्यवाट् च मे तुर्यौही च मे पष्ठवाच्च मे पष्ठौही च मे उक्षा च मे वशा च मे ऋषभश्च मे वेहच्च मेऽनड्वान् च मे धेनुश्च मे आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतां अपानो यज्ञेन कल्पतां व्यानो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पतां श्रोत्रं यज्ञेन कल्पतां मनो यज्ञेन कल्पतां वाग्यज्ञेन कल्पतां आत्मा यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पताम्" इति। गर्भा वत्साश्च प्रसिद्धाः। सार्द्धवत्सरो* वत्सरूपः पुङ्गवस्त्रियविः। तथाविधा गौः त्रियवी। द्विसंवत्सर ऋषभो दित्यवाट्। तथाविधा गौर्दित्यौही। सार्द्धद्विसंवत्सर ऋषभः पञ्चाभिः†। तथाविधा गौः पञ्चावी। संवत्सरत्रयोपेत ऋषभस्त्रिवत्सः। तथाविधा गौस्त्रिवत्सा। सार्द्ध-त्रिवत्सर ऋषभस्तुर्यवाट्। तथाविधा गौस्तुर्यौही। चतुःसंवत्सर ऋषभः पष्ठवाट्‡। तथाविधा गौः पष्ठौही। सेचनसमर्थ ऋषभ उक्षा। वन्ध्या गौर्वशा। उक्ष्णोऽप्यधिकवयस्क ऋषभः। गर्भघातिनी गौर्वेहत्। शकटवाही गौरनड्वान्। नवप्रसूतिका गौर्धेनुः। आयुरादयः प्रसिद्धाः। आत्मा शरीरं। उक्ता आयुरादयो मदीयेन यज्ञेन कार्यक्षमा भवन्तु। यज्ञः क्रियमाणोऽश्वमेधादिः, सोऽप्यनेन यज्ञेन स्वकार्यक्षमो भवतु॥

* सार्द्धवत्सर इति पाठो भवितुं युक्तः। एवं "त्रियविः" इत्यत्र 'त्र्यविः' इति, "त्रियवी" इत्यत्र च 'त्र्यवी' इति पाठो संहितानुसारेण भवितुं युक्तः।

† एवमेव सर्व्वत्र पाठः। 'पञ्चाविः' इति तु भवितुं युक्तः।

‡ 'पष्ठवट्' इति सर्व्वत्र पाठो न सम्यक्।

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये चतुर्थकाण्डे सप्तमप्रपाठके दशमोऽनुवाकः ॥०॥

---

एका च मे तिस्रश्च मे पञ्च च मे सप्त च मे नव च म एकादश च मे त्रयोदश च मे पञ्चदश च मे सप्तदश च मे नवदश च म एकविंशतिश्च मे त्रयोविंशतिश्च मे पञ्चविंशतिश्च मे सप्तविंशतिश्च मे नवविंशतिश्च म एकत्रिंशच्च मे त्रयस्त्रिंशच्च ॥ १ ॥ मे चतस्रश्च मेऽष्टौ च मे द्वादश च मे षोडश च मे विंशतिश्च मे चतुर्विंशतिश्च मेऽष्टाविंशतिश्च मे द्वात्रिंशच्च मे षट्त्रिंशच्च मे चत्वारिंशच्च मे चतुश्चत्वारिंशच्च मेऽष्टाचत्वारिंशच्च मे वाजश्च प्रसवश्चापिजश्च क्रतुश्च सुवश्च मूर्धा च व्यश्नियश्चान्त्यायनश्चान्त्यश्च भौवनश्च भुवनश्चाधिपतिश्च ॥ १ ॥

त्रयस्त्रिंशच्च। व्यश्नियश्च। एकादश च ॥ ११ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे सप्तमप्रपाठके एकादशोऽनुवाकः ॥ * ॥

एकादशमाह,—"एका च मे तिस्रश्च मे पञ्च च मे सप्त च मे नव च मे एकादश च मे त्रयोदश च मे पञ्चदश च मे सप्तदश च मे नवदश च मे एकविंशतिश्च मे त्रयोविंशतिश्च मे पञ्च-

विꣳशतिश्च मे सप्तविꣳशतिश्च मे नवविꣳशतिश्च मे एकत्रिꣳशच्च मे त्रयस्त्रिꣳशच्च मे चतस्रश्च मेऽष्टौ च मे द्वादश च मे षोडश च मे विꣳशतिश्च मे चतुर्विꣳशतिश्च मेऽष्टाविꣳशतिश्च मे द्वात्रिꣳशच्च मे षट्त्रिꣳशच्च मे चत्वारिꣳशच्च मे चतुश्चत्वारिꣳशच्च मेऽष्टाचत्वारिꣳशच्च मे वाजश्च प्रसवश्च अपिजश्च क्रतुश्च सुवश्च मूर्धा च व्यश्नियश्च आन्त्यायनश्चान्त्यश्च भौवनश्च भुवनश्चाधिपतिश्च" इति। एकादिशब्दाः संख्यापराः। वाजादयः सर्वे मम सन्त्विति शेषः। वाजोऽन्नं। प्रसवः तस्योत्पत्तिः। अपिजस्तस्यैव पुनःपुनरुत्पत्तिः। क्रतुः सङ्कल्पो भोगादिविषयः, यागो वा। सुवस्तस्योत्पत्तौ हेतुरादित्यः। अथ वा वाजादयः चैत्रादिमासानां नामविशेषाः, तदानीं ते सर्वे प्रीणन्त्विति वाक्यशेषः। चकाराः परस्परसमुच्चयार्थाः, अनुक्तकालादिदेवता-समुच्चयार्था वा।

यथोक्तैकादशानुवाकरूपमन्त्रसाध्यं होमविशेषं विधत्ते,—"वसो-र्धारां जुहोति वसोर्मे धाराऽसदिति वै एषा ह्रूयते घृतस्य वै एनमेषा धाराऽमुष्मिन् लोके पिन्वमाना उपतिष्ठते" (५।४।८अ०। इति। वसोः (धनस्य) धारा (सान्तत्यं) यया आहुत्या लभ्यते सेयमा-हुतिर्वसोर्धारा, तां जुहुयात्। तदेतदुक्तनिर्वचनं सूच्यते,—'वसोर्मे धाराऽसत्' इत्यादिना। यजमानो वसोर्धारां* जुहोति स प्रथमं मम धनस्य नैरन्तर्यं भूयादित्येवं कामयते, ततस्तेन इदमाहुतिर्हूयते, तेन होमेन एनं यजमानं स्वर्गलोके घृतस्य धारा प्रीणयति,—सेवते।

तत्र द्रव्यं विधत्ते,—"आज्येन जुहोति तेजो वै आज्यं तेजो

* वराभिति आदर्शादिपुस्तकस्थः पाठो न सम्यक्।

वसोर्धारा तेजसा एवास्मै तेजोऽवरुन्धे" (५।४।८अ०) इति। सुवर्णादिधनसमृद्धैरपि घृतवत् तेजोरूपत्वं प्रसिद्धम्।

कामप्राप्तिहेतुत्वेनापि तामाहुतिं प्रशंसति,—"अथो कामा वै वसोर्धारा कामानेवावरुन्धे" (५।४।८अ०) इति।

अन्वयव्यतिरेकाभ्यां सान्तत्यं विधत्ते,—"यं कामयेत प्राणान् अस्य अन्नाद्यं विच्छिन्द्यामिति विग्राहं तस्य जुहुयात्, प्राणानेव अस्य अन्नाद्यं विच्छिनत्ति; यं कामयेत प्राणान् अस्य अन्नाद्यꣳ सन्तनुयामिति सन्ततां तस्य जुहुयात्, प्राणानेव अस्य अन्नाद्यꣳ सन्तनोति" (५।४।८अ०) इति। 'अस्य' यजमानस्य 'प्राणान्' अन्नं च विच्छिन्द्याम्' इत्येव द्विषन् अध्वर्युरेतं मन्त्रं मध्ये विगृह्य 'जुहुयात्'। यस्तु प्राणानामन्नस्य च सान्तत्यं कामयते, सोऽयं सन्ततामाहुतिं जुहुयात्।

अथ "वाजश्च मे" इत्यादीनि "अन्नञ्च मेऽक्षुच्च मे" (४अ०) इत्यादिप्राक्तनानि* चतुश्चत्वारिंशदधिकशतसंख्याकानि वाक्यानि। तानि द्वादशसङ्घरूपेण विभज्य प्रशंसति,—"द्वादश† द्वादशानि जुहोति द्वादश मासाः संवत्सरः संवत्सरेणैवास्मै अन्नमवरुन्धे" (५।४।८अ०) इति। द्वादशानां वाक्यानां समूहो द्वादशं। तानि च

---

* एवमेव सर्व्वत्र पाठः। अत्र 'इत्यादीनि प्राक्तनानि च' इति पाठो भवितुं युक्तः। "वाजश्च मे" इति वाक्यं प्रथमेऽनुवाकेऽस्ति। अत्रेदं सम्भाव्यते—'मे' इति पदं प्रमादपतितं, 'वाजश्च इत्यादीनि' इत्येवात्र पाठः, "वाजश्च" इत्यादीनि च द्वादश वाक्यानि अस्यैवानुवाकस्य शेषांशे सन्ति, तान्येवात्र अभिप्रेतानि।

† सर्व्वत्रैव भाष्ये द्वादश द्वादश इति द्विरुक्तिरस्ति, परन्तु मूलसंहितायां तथाऽदर्शनात् भाष्ये एकस्यैव द्वादशशब्दस्य व्याख्यानाच्च द्विरुक्तिरुपेक्षिता।

द्वादशानि पुनर्द्वादशसंख्याकानि*; तथा सति चतुश्चत्वारिंशदधिकशत-संख्यायाः संवत्सररूपत्वात् संवत्सरसाध्यमन्नं प्राप्नोति।

अथ चतुर्थानुवाकगतानि वाक्यानि प्रशंसति,—"अन्नञ्च मेऽक्षुच्च म इत्याह एतद्वै अन्नस्य रूपꣳ रूपेणैवान्नमवरुन्धे" (५।४।८अ०) इति। "अन्नम्" इत्यादिभिर्वाक्यैर्यत् प्रतिपाद्यं तत्सर्वमन्नस्य रूपं, क्षुदभावस्यान्नसाध्यत्वात्, उपरितनानाञ्च व्रीह्यादीनामन्नसाधनत्वात्।

अथ पञ्चमानुवाकगतानि वाक्यानि प्रशंसति,—"अग्निश्च म आपश्च म इत्याह एषा वै अन्नस्य योनिः सयोनि एवान्नमवरुन्धे" (५।४।८अ०) इति। अग्नेः पाकहेतुत्वादन्नयोनित्वम्; अपाञ्चौषधिजनकत्वादन्नयोनित्वं। एतन्मन्त्रपाठेन कारणसहितमन्नं प्राप्नोति।

अथ षष्ठानुवाकगतानि वाक्यानि प्रशंसति,—"अर्धेन्द्राणि जुहोति देवता एवावरुन्धे यत् सर्वेषामर्धमिन्द्रः प्रति तस्मादिन्द्रो देवतानां भूयिष्ठभाक्तम इन्द्रमुत्तरमाहेन्द्रियमेवास्मिन्नुपरिष्टाद्दधाति" (५।४।८अ०) इति। येषां वाक्यानामन्तेषु इन्द्रः पठ्यते, तानि 'अर्धेन्द्राणि', तेषु वाक्येषु अग्निसोमादीनां देवतानां पूर्वार्धेषु आम्नातत्वात् देवताः प्राप्नोति। 'यत्' (यस्मात्) कारणात् 'सर्वेषां' वाक्यानां 'प्रति' 'अर्धम्' 'इन्द्रः' (प्रत्येकमुत्तरार्धे इन्द्रः) पठ्यते, 'तस्मात्' कारणात् अयम् 'इन्द्रः' 'भूयिष्ठभाक्तमः',—भूयिष्ठं प्रभूतं हविर्भजतीति भूयिष्ठभाक्, अतिशयेन तादृशः। यस्मादेद 'इन्द्रम्' अत्र उत्तरार्धे गतं प्राह, तस्मात् 'अस्मिन्' यजमानेऽपि 'उपरिष्टात्' (पुरोभागे) चक्षुरादि इन्द्रियं स्थापयति।

---

*"सं पुनर्द्वादशसङ्ख्याकानि" इति सर्व्वत्र पाठो न सम्यगिव प्रतिभाति।

सप्तमाष्टमयोरनुवाकयोरवस्थितानि वाक्यानि प्रशंसति,—"यज्ञायुधानि जुहोति यज्ञो वै यज्ञायुधानि यज्ञमेवावरुन्धे। अथो एतद्वै यज्ञस्य रूपꣳ रूपेणैव यज्ञमवरुन्धे" (५।४।८अ०) इति। अंश्वदाभ्यादिग्रहरूपाणि यज्ञसाधनानि साक्षाद्यज्ञनिष्पादकत्वाद्यज्ञस्वरूपाणि। इध्माबर्हिरादिभिर्यज्ञः परम्परया निरूप्यते, न तु ग्रहैरिव साक्षात् निष्पद्यते, तस्मात् तानि यज्ञस्य रूपं। एतैरन्तरङ्गैर्बहिरङ्गैश्च यज्ञायुधैर्यज्ञं प्राप्नोति।

अन्तिमस्य स्वगाकारस्य तात्पर्यं दर्शयति,—"अवभृथश्च मे स्वगाकारश्च म इत्याह स्वगाकृत्यै" (५।४।८अ०) इति। स्वाधीनत्वकरणायेत्यर्थः।

नवमेऽनुवाके पूर्वार्धगतानि वाक्यानि प्रशंसति,—"अग्निश्च मे धर्मश्च मे इत्याह एतद्वै ब्रह्मवर्चसस्य रूपꣳ रूपेणैव ब्रह्मवर्चसमवरुन्धे"(५।४।८अ०) इति। अग्न्यादिभिर्ब्राह्मणकर्मनिर्वृत्तैरेतेषां ब्रह्मवर्चसरूपत्वम्।

तस्मिन्नेव अनुवाके उत्तरार्धगतानि वाक्यानि प्रशंसति,—"ऋक् च मे साम च म इत्याह एतद्वै छन्दसाꣳ रूपꣳ रूपेणैव छन्दाꣳसि अवरुन्धे" (५।४।८अ०) इति। ऋगादि 'छन्दसां' (वेदानां) स्वरूपमित्येतत् प्रसिद्धम्।

दशमेऽनुवाके पूर्वार्धगतानि प्रशंसति,—"गर्भाश्च मे वत्साश्च म इत्याह एतद्वै पशूनाꣳ रूपꣳ रूपेणैव पशूनवरुन्धे"(५।४।८अ०) इति। गर्भवत्सादीनां पशुरूपत्वं प्रसिद्धम्।

तस्मिन्नेवानुवाके उत्तरार्धगतानि वाक्यानि प्रशंसति,—"कल्पान् जुहोत्यक्लृप्तस्य क्लृप्त्यै" (५।४।८अ०) इति। 'आयुर्यज्ञेन कल्पताम्'

इत्यादयो मन्त्राः कल्पाः, पूर्वं यत् यत् वस्तु अक्लृप्तं (स्वस्वकार्य्यक्षमं न भवति), तस्य तस्य सामर्थ्याय अयं होमः।

एकादशानुवाके पूर्व्वभागगतानि वाक्यानि प्रशंसति,—"युग्मत् अयुजे जुहोति मिथुनत्वाय" (५।४।८अ०) इति। 'चतस्रश्च मे' 'अष्टौ च मे' इत्यादिकं समसंख्यारूपं युग्मं; 'एका च मे' 'तिस्रश्च मे' इत्यादिकं विषमसंख्यारूपमयुजं; राशिद्वयं स्त्रीपुरुषवत् परस्पर-विलक्षणत्वात् मिथुनत्वाय सम्पद्यते।

राशिद्वयेऽप्युत्तरोत्तराधिक्यं प्रशंसति,—"उत्तरावती भवतोऽभि-क्रान्त्यै"(५।४।८अ०)इति। एकस्मादुत्तरं त्रित्वं, तस्मादुत्तरं पञ्चत्वं; तथा चतुष्ट्वादुत्तरम् अष्टत्वं, तस्माच्चोत्तरं द्वादशत्वं। एवमुभयोः उत्तरोत्तरावत्त्वेन अभितो व्याप्तिर्भवति।

युग्मायुग्मसंख्यावाचिनां शब्दानां तात्पर्य्यं दर्शयति,—"एका च मे तिस्रश्च म इत्याह देवच्छन्दसं वा एका च तिस्रश्च, मनुष्य-च्छन्दसं चतस्रश्च अष्टौ च देवच्छन्दसं चैव मनुष्यच्छन्दसञ्च अव रुन्धे" (५।४।८अ०) इति। विषमसंख्यया देवानां प्रियाणि च्छन्दांसि निष्पाद्यन्ते, समसंख्यया तु मनुष्यप्रियाणि; अतस्तदुभयं प्राप्नोति।

राजिद्वयेऽप्युत्तरोत्तरसंख्यावृद्धेरवधिं प्रशंसति,—"आ त्रयस्त्रिꣳशतो जुहोति त्रयस्त्रिꣳशद्वै देवता देवता एव अव रुन्धे आ अष्टाचत्वारिꣳशतो जुहोति अष्टाचत्वारिꣳशदक्षरा जगती जागताः पशवो जगत्या एव अस्मै पशूनव रुन्धे" (५।४।८अ०) इति।

अस्मिन् अनुवाके उत्तरभागगतानि वाक्यानि प्रशंसति,—

"वाजश्च* प्रसवश्चेति द्वादशं जुहोति द्वादश मासाः संवत्सरः संवत्सरे एव प्रतितिष्ठति" (५।४।८अ०) इति॥

अत्र विनियोगसंग्रहः,—

अग्नाविष्णू वसोर्धारामेकादशभिरादितः ।

अनुवाकैर्जुहोत्येतामाहुतिं सन्ततां घृतादिति ॥

अथ मीमांसा,—द्वादशाध्यायस्य तृतीयपादे(१०अ०)चिन्तितम्,—

"मन्त्रादौ किं वसोर्धारा मन्त्रान्ते वात्र सन्ततेः ।

आद्यो होमेषु सन्तत्या द्वादशान्तेषु तद्धुतिः ॥

अग्नौ किञ्चित् कर्म्म विहितं,—'सन्ततां वसोर्धारां जुहोति' इति। तत्र सान्तत्यं निश्छिद्रत्वं, तच्च मन्त्रकर्म्मणोः सहोपक्रमे सति उपपद्यते; तस्मान्मन्त्रादौ कर्म्मसन्निपातः। इति प्राप्ते ब्रूमः,—तस्मिन् वसोर्धाराख्ये कर्म्मणि 'द्वादश द्वादशानि जुहोति' इति श्रुतं, द्वादशभिर्मन्त्रवाक्यैः सम्पाद्यम् एकमाहुतिस्वरूपं। तद्यथा,—"वाजश्च मे प्रसवश्च मे प्रयतिश्च मे[†] प्रसितिश्च मे धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे श्रावश्च मे श्रुतिश्च मे ज्योतिश्च मे सुवश्च मे" इत्येतैर्द्वादशभिर्मन्त्रवाक्यैरेका आहुतिर्होतव्या। एकादश उत्तराहुतयः 'प्राणश्च मेऽपानश्च मे' इत्यादिभिर्निष्पाद्यन्ते। एतेषु च होमद्वादशकेषु[‡]

---

* सर्व्वेष्वेव संहितापुस्तकेषु "वाजश्च प्रसवश्च" इत्येव पाठोऽस्ति, ततश्च "वाजश्च मे प्रसवश्च" इति भाष्यपुस्तकस्थः पाठः समीचीन इव न प्रतिभातीति परित्यक्तः।

† अत्र "प्रयतिश्च मे प्रयतिश्च मे" इति द्विः पाठः सर्व्वस्मिन्नेव भाष्यपुस्तके स्थितोऽपि संहितायामदर्शनात् उपेक्षितः।

‡ 'ईदृशा उत्तराहुतयः "प्राणश्च मेऽपानश्च मे" इत्यादिभिर्निष्पाद्याः। ते च होमा द्वादश, तेषु' इति आदर्शपुस्तकपाठः।

मध्ये विलम्बाभावः सान्तत्यं, न तु मन्त्रकर्म्मणोः सहोपक्रमः। तस्मात् पूर्व्वन्यायेन मन्त्रान्ते कर्म्मसन्निपातस्य नास्ति विघ्नः ॥"

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे सप्तमप्रपाठके एकादशोऽनुवाकः ॥०॥

---

वाजो नः सप्त प्रदिशश्चतस्रो वा परावतः। वाजो नो विश्वैर्देवैर्धनसाताविहावतु[१]। विश्वे अद्य मरुतो विश्व ऊती विश्वे भवन्त्वग्नयः समिद्धाः। विश्वे नो देवा अवसा गमन्तु विश्वमस्तु द्रविणं वाजो अस्मे[२]। वाजस्य प्रसवं देवा रथैर्याता हिरण्ययैः। अग्निरिन्द्रो बृहस्पतिर्मरुतः सोमपीतये[३]। वाजे-वाजेऽवत वाजिनो नो धनेषु ॥ १ ॥

विप्रा अमृता ऋतज्ञाः। अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः[४]। वाजः पुरस्तादुत मध्यतो नो वाजो देवाꣳ ऋतुभिः कल्पयाति वाजस्य हि प्रसवोऽनन्नमीति विश्वा आशा वाजपतिर्भवेयम्[५]। पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयो धाः। पयस्वतीः प्रदिशः सन्तु मह्यम्[६]। सम्मा सृजामि पयसा घृतेन सम्मा सृजाम्यपः ॥ २ ॥

ओषधीभिः सोऽहं वाजꣳ सनेयमग्ने(७)। नक्तोषासा समनसा विरूपे धापयेते शिशुमेकꣳ समीची द्यावा क्षामा रुक्मो अन्तर्विभाति देवा अग्निं धारयन् द्रविणोदाः(८)। समुद्रोऽसि नभस्वानार्द्रदानुः शंभूर्मयोभूरभि मा वाहि स्वाहा(९) मारुतोऽसि मरुतां गणः शंभूर्मयोभूरभि मा वाहि स्वाहा(१०) अवस्युरसि दुवस्वाञ्छंभूर्मयोभूरभि मा, वाहि स्वाहा(११) ॥ ३ ॥

धनेषु। अपः। दुवस्वाञ्छंभूर्मयोभूरभि मा। द्वे च॥ १२ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे सप्तमप्रपाठके द्वादशोऽनुवाकः ॥ * ॥

एतैरेकादशभिरनुवाकैर्वसोर्धाराहोम उक्तः। अथ द्वादशे वाजप्रसवीयहोम उच्यते। कल्पः, 'वाजप्रसवीयं जुहोति सप्त ग्राम्या ओषधयः सप्त आरण्याः पृथगन्नानि द्रवीकृत्यौदुम्बरेण स्रुवेण, वाजस्येमं प्रसवः सुषुव इति ग्राम्या हुत्वा आरण्यां* जुहोति' इति। तत्र ग्राम्याणां मन्त्राः प्रथमकाण्डे(७प्र०।१०अ०)समाम्नाताः। आरण्यानां मन्त्रा अत्राम्नायन्ते। तत्रारण्यस्य वेणुधान्यस्य होमाय प्रथमामृचमाह,—"वाजो नः सप्त प्रदिशः, चतस्रो वा परावतः। वाजो नो विश्वैर्देवैर्धनसाताविहावतु(१)"

* अत्र आरण्या इति पाठो भवितुं युक्तः।

इति। प्राच्याद्याश्चतस्रो दिशः, ऊर्द्धाधोमध्यमास्तिस्रः,—एताः 'सप्त' 'प्रदिशः' (प्रकृष्टा दिशः) 'वाजः' (अन्नस्वरूपाः, अन्नप्रदाः) भवन्त्वित्यर्थः। तथा 'परावतः' (अत्यन्तदूरवर्त्तिन्यः) 'चतस्रो वा',—आग्नेय्याद्याश्चतुः-सङ्ख्याका विदिशो विदूरस्था इव अवभासन्ते ; ताश्च अस्माकमन्नप्रदा भवन्तु। स 'वाजः' (अन्नम्) 'इह' (अस्मिन् देशे) 'धनसातौ' (धनप्रदेशे) यज्ञे 'विश्वैर्देवैः' प्रेरितः सन् 'नः' (अस्मान्) 'अवतु' (रक्षतु)।

अथ श्यामाकधान्यस्य होमाय द्वितीयामृचमाह,—"विश्वे अद्य मरुतो विश्व ऊती विश्वे भवन्त्वग्नयः समिद्धाः। विश्वे नो देवा अवसा आ गमन्तु विश्वमस्तु द्रविणं वाजो अस्मे[२]" इति। 'अद्य' (अस्मिन् दिने) 'विश्वे' (सर्वे) अपि 'मरुतः', तथा अन्ये 'विश्वे' (सर्वे) अपि देवाः 'ऊती' (रक्षणाय) 'भवन्तु' (प्रवर्त्तन्तां)। तथा 'विश्वे' (सर्वे) अपि 'अग्नयः' 'समिद्धाः' (सम्यक् प्रज्वालिताः) भवन्तु। तथा 'विश्वे' (सर्वे) अपि 'देवाः' 'नः' (अस्माकम्) 'अवसा' (रक्षणेन) निमित्तभूतेन 'आ-गमन्तु' (आगच्छन्तु)। तथा 'विश्वं' 'द्रविणं' (सर्वमपि धनं) 'अस्मे' 'भवन्तु'* (अस्मासु विद्यताम्)।

अथ नीवारहोमाय तृतीयामृचमाह,—"वाजस्य प्रसवं देवा रथैर्याता हिरण्ययैः। अग्निरिन्द्रो बृहस्पतिर्मरुतः सोमपीतये[२]" इति। 'वाजस्य' 'प्रसवम्' (अस्मदीयस्य अन्नस्य प्रेरणसम्पादनम्) उद्दिश्य अग्न्यादयस्तयो 'देवाः' 'सोमपीतये' (सोमपानार्थं) 'हिरण्ययैः' हिरण्मयैः 'रथैः' (सुवर्णनिर्म्मितैः रथैः) सह 'यात' (अस्मद्यागभूमिं प्राप्नुवन्तः)।

---

* अत्र 'अस्तु' इत्येव पाठो भवितुं युक्तः।

अथ जर्त्तिलहोमाय चतुर्थीमृचमाह,—"वाजे-वाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः। अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः[४]" इति। हे 'वाजिनः' (अन्नसम्पादकाः) देवाः, 'वाजे-वाजे' (तत्तदन्ननिमित्तं) 'धनेषु' (धननिमित्तञ्च) 'नः' (अस्मान्) 'अवत'। 'विप्राः' (ब्राह्मणवच्छुद्धाः); 'अमृताः' (मरणरहिताः); ऋतं सत्यं यज्ञं वा जानन्तीति 'ऋतज्ञाः'; तादृशा हे देवाः, 'अस्य' 'मध्वः' (इदं मधुरमन्नं) 'पिबत' (पानोपलक्षितं भोजनं कुरुत)। ततः 'मादयध्वं' (हृष्टा भवत)। ततः 'तृप्ताः' सन्तः 'देवयानैः' 'पथिभिः'* (स्वं स्वं स्थानं प्राप्नुवत)।

अथ गवीधुकहोमाय पञ्चमीमृचमाह,—"वाजः पुरस्तात् उत मध्यतो नो वाजो देवाꣳ ऋतुभिः कल्पयाति। वाजस्य हि प्रसवोऽनन्नमीति विश्वा आशा वाजपतिर्भवेयम्[५]" इति। 'नः' (अस्माकं) 'पुरस्तात्' (पूर्ववयसि), 'उत' 'मध्यतो' (मध्यमे वयसि), 'वाजः' (अन्नं) भवत्विति शेषः। किञ्चायं 'वाजः' 'ऋतुभिः' (काल-विशेषैः) 'देवान्' 'कल्पयाति' (तत्तत्काले यष्टव्यान् देवान् सम्पादयति)। सति हि अन्ने यष्टुं शक्यते। 'हि' (यस्मात्) 'वाजस्य' (अन्नस्य) 'प्रसवः' (प्रेरणं समृद्धिः) 'विश्वा' 'आशाः' (सर्वा अपि दिशः) 'अनन्नमीति' (अतिशयेन अवनताः करोति), अन्नसमृद्धौ सत्यां सर्वदिग्वर्त्तिनः प्राणिनः स्वाधीना भवन्ति, तस्मादहं 'वाजपतिर्भवेयम्'।

अथ मर्कटकाख्यहोमाय षष्ठीमृचमाह,—"पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयो धाम्। पयस्वतीः प्रदिशः सन्तु

* अत्र 'यात' इति पदं पतितमिव प्रतिभाति।

मह्यम्[१]" इति। वाजसम्पत्त्यर्थं 'पृथिव्यां' 'पयः' (जलं) 'धां' (अहं स्थापयामि)। तथा 'ओषधीषु' अपि 'पयो' 'धां'। तथा 'दिवि' (द्युलोके) अपि 'पयो' 'धां'। 'अन्तरिक्षे' अपि 'पयो धां'। 'प्रदिशः' (प्रकृष्टाः सर्वा दिशः) 'पयस्वतीः' 'सन्तु' 'मह्यं' (मदर्थं जलवत्यो भवन्तु)।

अथ गार्मुतहोमाय, कुलत्थहोमाय वा सप्तमीमृचमाह,—"सं मा सृजामि पयसा घृतेन सम्मा सृजाम्यप ओषधीभिः। सोऽहं वाजꣳ सनेयमग्ने[७]" इति। हे 'अग्ने', त्वत्प्रसादात् मां अहं 'पयसा' (क्षीरेण) च 'सं'-'सृजामि'; तथा मां 'घृतेन' 'सं'-'सृजामि'। 'अपः' 'ओषधीभिः' 'सं'-'सृजामि'। क्षीरादिभिः संसृष्टः 'सोऽहं' 'वाजम्' (अन्नं) त्वद्दत्तं 'सनेयं' (लभेयं, अन्येभ्योऽहमद्याम्)।

एतैर्मन्त्रैः साध्यं होमं विधत्ते,—"अग्निर्देवेभ्योऽपाक्रामद्भागधेयमिच्छमानस्तं देवा अब्रुवन्नुप न आवर्त्तस्व हव्यं नो वहेति सोऽब्रवीद्वरं वृणै मह्यमेव वाजप्रसवीयं जुहवन्निति तस्मादग्नये वाजप्रसवीयं जुह्वति यद्वाजप्रसवीयं जुहोति अग्निमेव तद्भागधेयेन समर्द्धयत्यथो अभिषेक एवास्य सः" (५।४।८अ०) इति। पूर्वं भागरहितोऽग्निः भागमपेक्षमाणो देवेभ्योऽपक्रम्य क्वाप्यगमत्। स पुनर्देवैर्हविर्वहनाय आहूत स्वभागत्वेन 'वाजप्रसवीयं' होमं वव्रे। तस्मात् सर्वे यजमाना 'अग्नये' 'वाजप्रसवीयं' 'जुह्वति'। अतोऽत्रापि तद्धोमेन 'अग्निमेव' स्वभागेन 'समर्द्धयति'। अपि च स होमः 'अस्य' (अग्नेः) अभिषेकस्थानीयः, तस्मात् कर्त्तव्यः।

अथ प्रथमकाण्डाम्नातैः (७प्र०।१०अ०) "वाजस्येमं प्रसव."

इत्यादिभिः सह अन्नत्यानां होममन्त्राणां सङ्ख्यां विधत्ते,—"चतुर्दशभिर्जुहोति सप्त ग्राम्या ओषधयः सप्त आरण्या उभयीषामवरुद्ध्यै" (५।४।८ अ०) इति। तिल-माष-व्रीहि-यव-प्रियंगवणवो गोधूमा इति सप्त ग्राम्याः। वेणुश्यामाकादय उदाहृता आरण्याः। उभयविधधान्यसमृद्धये चतुर्दशभिर्होमः।

एकैकेन मन्त्रेणैकैकस्य होमं विधत्ते,—"अन्नस्यान्नस्य जुहोत्यन्नस्यान्नस्यावरुद्ध्यै" (५।४।८ अ०) इति। असाङ्कर्येण तत्तदन्नप्राप्त्यर्थम् ईदृशो होमः।

चोदकप्राप्तां जुहूं बाधितुं साधनान्तरं विधत्ते,—"औदुम्बरेण स्रुवेण जुहोत्यूर्ग्वा उदुम्बर ऊर्गन्नमूर्जैवास्मा ऊर्जमन्नमवरुन्धे" (५। ४।८ अ०) इति। ऊर्क्शब्दः स्वादुरसवाची। उदुम्बरान्नयोस्तथाविधरसोपेतत्वादूर्ग्रूपत्वम्।

अथ कृत्स्नतया धावनं निषेधति,—"अग्निर्वै देवानामभिषिक्तोऽग्निचिन्मनुष्याणां तस्मादग्निचिद्वर्षति न धावेत्" (५।४।८ अ०)इति। 'देवानां' मध्ये यथा चीयमानोऽग्निरभिषिक्तस्तथा यजमानानां मध्ये अग्निचिदभिषिक्तः। वृष्टिस्त्वभिषेकस्वरूपात्,* तस्माद्वर्षसमये धावनं न कुर्यात्।

प्रमादाद्धावने पुनरावृत्तिं विधत्ते,—"अवरुद्धᳲ ह्यस्यान्नम् अन्नमिव खलु वै वर्षं यद्धावेदन्नाद्याद्धावेदुपावर्त्ततान्नाद्यमेवाभ्युपावर्त्तते" (५। ४।८ अ०) इति। 'हि' (यस्मात्) 'अस्य' (अग्निचितः) 'अन्नं'

---

* 'स्वरूपा' इति पाठो भवितुं युक्तः।

सर्वम् 'अवरुद्धं' (सम्पादितं), वृष्टिस्थानहेतुत्वात् 'अन्नम्' एव, अतो वृष्टिमोचनपरिहाराय धावने सत्यं मान्याय* गच्छति। अतो-ऽन्नप्राप्तये पुनरपि आवर्त्तते† ।

कल्पः, 'नक्तोषासेति कृष्णायै श्वेतवत्सायै पयसा हुत्वा' इति । पाठस्तु,—"नक्तोषासा समनसा विरूपे धापयेते शिशुमेकꣳ समीची । द्यावा क्षामा रुक्मो अन्तर्वि भाति देवा अग्निं धारयन् द्रविणोदाः(८)" इति । नक्तं च उषाश्च 'नक्तोषासा' (रात्रिदिवसावित्यर्थः); 'समनसा' (परस्परमैकमत्ययुक्ते); 'विरूपे'(रात्रिः कृष्णा दिवसः शुक्ल इत्येवंविलक्षण-रूपे); 'समीची' (समीच्यौ, अनुकूले) सत्यौ 'एकं' 'शिशुम्' अग्निरूपं 'धापयेते',—यजमानकर्तृकं कर्मानुष्ठानं सम्पादयतः। 'द्यावा'(द्युलोके), 'क्षाम' (क्षितौ), 'अन्तः' (तदुभयमध्यवर्त्तिनि अन्तरिक्षे) 'वि-भाति' 'रुक्मः' (रोचमानोऽयमग्निर्विशेषेण प्रकाशते)। दीव्यन्ति-व्यवहरन्ति इति 'देवाः' प्राणाः, ते च 'द्रविणोदाः' (यागद्वारेणानुकूलं फलं प्रयच्छन्ति), तादृशा यजमानस्य प्राणा 'अग्निम्' एतं 'धारयन्' (धृतवन्तः) ।

एतन्मन्त्रसाध्यं होमं विधत्ते,—"नक्तोषासेति कृष्णायै श्वेतवत्सायै पयसा जुहोत्यह्नैवास्मै रात्रिं प्र दापयति रात्रिया अहः अहोरात्रे एवास्मै प्रत्ते काममन्नाद्यं दुहाते" (५।४।८अ०) इति। अयमध्वर्युः, 'अस्मै' (यजमानाय) 'अह्ना' वत्सरूपेण 'रात्रिं' धेनुसमां 'प्र दापयति';—पयःसमं फलं रात्र्या प्रत्तं करोति । तथैव रात्र्या वत्सरूपया धेनुसममहः 'प्र दापयति'। अन्योन्यदानायैव मन्त्रेऽस्मिन्

* 'सति अन्नाद्याय' इत्येवात्र पाठ इति सम्भावयामि ।

† 'आवर्त्तेत' इति पाठो भवितुं युक्तः ।

रात्र्यहनी सह निर्दिश्येते। ते चान्योन्यं दत्ते 'अस्मै'* यजमानाय अन्नाद्यरूपं कामं सम्पादयतः। यदुक्तं सूत्रकारेण,—'षड्भिः पर्यायैर्द्वादश राष्ट्रभृतो जुहोति, ऋताषाडृतधामाग्निरिति पर्याय-मनुद्रुत्य तस्मै स्वाहेति प्रथमामाहुतिं जुहोति, ताभ्यः स्वाहेत्युत्तराम्, एवमितरान् पर्यायान् विभजति, भुवनस्य पत इति पर्यायाणाꣳ सप्तमी आहुतीनां त्रयोदशी एतेन व्याख्याता, भुवनस्य पत इति रथमुखे पञ्चाहुतीर्जुहोति दश वा' इति।

तत्र ऋताषाडित्यादिमन्त्रसाध्यं होमं विधत्ते,—"राष्ट्रभृतो जुहोति राष्ट्रमेवावरुन्धे" (५।४।९अ०) इति। राष्ट्रभृत्संज्ञका "ऋताषाड्" इत्यादिमन्त्रास्तृतीयकाण्डे (४प्र०७अ०) समाम्नाताः।

अथ पर्यायसङ्ख्यां विधत्ते,—"षड्भिर्जुहोति षड्वै ऋतव ऋतुःष्वेव प्रति तिष्ठति" (५।४।९अ०) इति।

राष्ट्रभृत्स्वेवोपरितनाहुतिषु पञ्चसङ्ख्यापक्षं विधत्ते,—"भुवनस्य पत इति रथमुखे पञ्चाहुतीर्जुहोति वज्रो वै रथो वज्रेणैव दिशोऽभि-जयति" (५।४।९अ०) इति। ईषाग्रं रथमुखं। 'स्फयस्तृतीयꣳ रथ-स्तृतीयम्' इत्यत्र रथस्य वज्रत्वं स्पष्टमाम्नातम्।

कल्पः, 'समुद्रोऽसि नभस्वानित्यञ्जलिना त्रीणि वातनामानि जुहोति' इति। तेषु प्रथमामाह,—"समुद्रोऽसि नभस्वानार्द्रदानुः शंभूर्मयोभूरभि मा वाहि स्वाहा(९)" इति। हे वायो, देवानां त्वं 'समुद्रोऽसि' (समुद्रवद् बहुलोऽसि†); 'नभस्वान्' (स्वप्रचाराय

* "दत्तेऽस्मै" इति ससन्धिपाठः सर्व्वेषु पुस्तकेषु स्थितोऽपि असाधुरिव प्रतिभाति।

† 'समुद्रवद् धनदोऽसि' इति आदर्शपुस्तकपाठः उत्तरभाष्यविरोधात (७०७ पृ० १९ प०) न सम्यगिव प्रतिभाति।

विस्तीर्णाकाशवान्); आर्द्रं (वृष्टिजलं) ददातीति 'आर्द्रदानुः'; शं (ऐहिकं सुखं) भावयतीति 'शंभूः'; मयः (आमुष्मिकं सुखं) भावयतीति 'मयोभूः'। तादृशस्त्वं माम् 'अभि' (मां प्रति) 'वाहि' (गच्छ), एवं मन्त्रारेण शैत्यमापादयेत्यर्थः ।

अथ द्वितीयामाह,—"मारुतोऽसि मरुतां गणः शंभूर्मयोभूरभि मा वाहि स्वाहा(१०)" इति । योऽयं बहूनां 'मरुतां' (वायुविशेषाणां) 'गणः' मारुतशब्दवाच्यः, तद्रूपस्त्वम् 'असि'। शेषं पूर्ववत् ।

अथ तृतीयामाह,—"अवस्युरसि दुवस्वाञ्छंभूर्मयोभूरभि मा वाहि स्वाहा(११)" इति। अवसं रक्षणं इच्छतीति 'अवस्युः'; 'दुवस्वान्' (परिचर्योपेतः); तादृशस्त्वम् 'असि'। शेषं पूर्ववत् ।

एतैर्मन्त्रैः साध्यं होमं विधत्ते,—"अग्निचितꣳ ह वा अमुष्मिन् लोके वातोऽभि पवते वातनामानि जुहोति अभि एवैनममुष्मिन् लोके वातः पवते" (५।४।८ अ०) इति । स्वर्गलोके एतम् 'अग्निचितम्' अभिलक्ष्य शैत्य-मान्द्य-सौरभ्यगन्धयुक्तो वायुर्वाति । अतस्तत्सिद्ध्ये 'समुद्रोऽसि' इत्यादि—'वातनामानि' जुहुयात् । तेन होमेन वायुस्तथा 'पवते' एव ।

पाठप्राप्तं त्रित्वं प्रशंसति,—"त्रीणि जुहोति त्रय इमे लोका एभ्य एव लोकेभ्यो वातमवरुन्धे" (५।४।८ अ०) इति ।

मन्त्रगतेन समुद्रशब्देन बाहुल्यसाम्यमुपजीव्य वातो लक्ष्यत इत्येतत्सर्वं दर्शयति,—"समुद्रोऽसि नभस्वानित्याहैतद्वै वातस्य रूपꣳ रूपेणैव वातमव रुन्धे" (५।४।८ अ०) इति ।

अत्र वातस्यैव होतव्यद्रव्यत्वात्तद्योग्यं साधनं विधत्ते,—"अञ्जलिना

जुहोति न ह्येतेषामन्यथाहुतिरवकल्पते" (५।४।८अ०) इति। अस्य हस्तद्वयमेलनरूपेणाञ्जलिना वह्नौ वायोरुत्पादनमेवात्र होमः। यस्मादेषां वातरूपाणां होमद्रव्याणामञ्जलिव्यतिरेकेणाहुतिर्न सम्भवति। न खलु वातो जुह्वामवदातुं शक्यते। अत एव सूत्रकारो ब्राह्मणान्तरमुदाजहार,–'न ह्येतस्यावदानमस्तीति विज्ञायते' इति। तस्माद् व्यजनेनैवाञ्जलिना वह्नौ वायुं सञ्चारयेत्।

अत्र विनियोगसंग्रहः,—

'वाजो नः'—सप्तभिर्वाजप्रसवीयं जुहोति हि।
नक्तेति पयसा होमः, 'समुद्रो'—वातनामभिः॥
त्रिभिर्जुहोत्यत्र मन्त्रा एकादश समीरिताः इति।

अथ मीमांसा,—पञ्चमाध्यायस्य तृतीयपादे(११अ०)चिन्तितम्,—

"न धावेद्वर्षतीत्यादि चितौ सत्यां क्रतावुत।
आद्यश्चितेर्निमित्तत्वान्न क्रतावग्निचित्त्वतः॥

इदमाम्नायते, 'अग्निचिद्वर्षति न धावेत्', 'स्त्रियमुपेयात्' इति। तान्येतानि अग्निचिद्व्रतानि चितौ निष्पन्नायां सत्यां ततः प्रभृति प्रवर्त्तन्ते, न तु चितेऽग्नौ क्रत्वनुष्ठानं प्रतीक्षन्ते। कुतः?। अग्निचित्पदेन चयनस्य निमित्तत्वेनोपन्यासात्, न हि सति निमित्ते नैमित्तिकस्य विलम्बो युक्तः। इति प्राप्ते ब्रूमः,—क्रतावुपयोक्तुमग्निश्चयनेन* संस्क्रियते; न च अनिष्पन्ने क्रतौ चयनसंस्कारः सफलो भवति। तस्मात् क्रतौ निष्पन्ने सति पश्चात् चयनसाफल्यादयं पुरुषोऽग्निं चितवानित्युमुमर्थमर्हतीति क्रत्वन्ते तानि व्रतानीति"॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये चतुर्थकाण्डे सप्तमप्रपाठके द्वादशोऽनुवाकः॥०॥

* -श्चीयते न' इति आदर्शपुस्तकपाठः।

अग्निं युनज्मि शवसा घृतेन दिव्यꣳ सुपर्णं वयसा बृहन्तं। तेन वयं पतेम ब्रध्नस्य विष्टपꣳ सुवो रुहाणा अधि नाक उत्तमे[१]। इमौ ते पक्षावजरौ पतत्रिणो याभ्याꣳ रक्षाꣳस्यपहꣳस्यग्ने। ताभ्यां पतेम सुकृतामु लोकं यत्रर्षयः प्रथमजा ये पुराणाः[२]। चिदसि समुद्रयोनिरिन्दुर्दक्षः श्येन ऋतावा। हिरण्यपक्षः शकुनो भुरण्युर्महान्त्सधस्थे ध्रुवः॥ १॥

आ निषत्तः[३]। नमस्ते अस्तु मा मा हिꣳसीर्विश्वस्य मूर्द्धन्नधि तिष्ठसि श्रितः। समुद्रे ते हृदयमन्तरायुर्द्यावापृथिवी भुवनेष्वर्पिते[४]। उद्नो दत्तोदधिं भिन्त दिवः पर्जन्यादन्तरिक्षात् पृथिव्यास्ततो नो वृष्ट्यावत। दिवो मूर्द्धासि पृथिव्या नाभिरूर्गपामोषधीनां। विश्वायुः शर्म सप्रथा नमस्पथे[५]। येनर्षयस्तपसा सत्त्रं॥ २॥

आसतेन्धाना अग्निꣳ सुवराभरन्तः। तस्मिन्नहं नि दधे नाके अग्निमेतं यमाहुर्मनवस्तीर्णबर्हिषं[६]। तं पत्नीभिरनु गच्छेम देवाः पुत्त्रैर्भ्रातृभिरुत वा हिरण्यैः। नाकं गृह्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधि रोचने दिवः[७]। आ वाचो मध्यमरुहद्भुरण्युर-

यमग्निः सत्पतिश्चेकितानः। पृष्ठे पृथिव्या निहितो दविद्युतदधस्पदं कृणुते ॥ ३ ॥

ये पृतन्यवः(८)। अयमग्निर्वीरतमो वयोधाः सहस्रियो दीप्यतामप्रयुच्छन्। विभ्राजमानः सरिरस्य मध्य उप प्र यात दिव्यानि धाम(९)। सम्प्र च्यवध्वमनु सम्प्र याताग्ने पथो देवयानान् कृणुध्वं। अस्मिन्त्सधस्थे अध्युत्तरस्मिन् विश्वे देवा यजमानश्च सीदत(१०)। येना सहस्रं वहसि येनाग्ने सर्ववेदसं। तेनेमं यज्ञं नो वह देवयानो यः ॥ ४ ॥

उत्तमः(११)। उद्बुध्यस्वाग्ने प्रति जागृहि एनमिष्टापूर्ते सꣳसृजेथामयञ्च पुनः कृण्वꣳस्त्वा पितरं युवानमन्वाताꣳसीत्त्वयि तन्तुमेतं(१२)। अयं ते योनिरृत्वियो यतो जातो अरोचथाः। तं जानन्नग्न आ रोहाथा नो वर्धया रयिं(१३) ॥ ५ ॥

भुवः। सुवं। कृणुते। यः। सप्तचिꣳशञ्च ॥ १३ ॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे सप्तमप्रपाठके त्रयोदशोऽनुवाकः ॥ * ॥

---

द्वादशे वाजप्रसवीयहोमोऽभिहितः। अथ त्रयोदशेऽग्नियोगोऽभिधीयते। कल्पः, 'पुरस्तात् प्रातरनुवाकादग्निं युनज्मीति तिसृभिरभिमृशन्नग्निं युनक्ति' इति। तत्र प्रथमामाह,—"अग्निं युनज्मि शवसा घृतेन दिव्यꣳ सुपर्णं वयसा बृहन्तं। तेन वयं पतेम ब्रध्नस्य विष्टपꣳ सुवो रुहाणा अधि नाक उत्तमे[१]" इति। 'अग्निं' (चितमेतं वह्निं) 'शवसा' (बलेन) 'घृतेन' (घृतादिद्रव्ययुक्तेन कर्मणा) 'युनज्मि' (रथेन अश्वमिवाहं योजयामि)। कीदृशम् अग्निं?। 'दिव्यं' (द्योतनात्मकं); 'सुपर्णं' (पक्ष्याकारं); 'वयसा' 'बृहन्तं' (वयसा चिरकालभाविनं); 'तेन' (अग्निना) 'वयं' (यजमानाः) 'ब्रध्नस्य' (आदित्यस्य) 'विष्टपं' (तापरहितं स्थानं) 'पतेम' (प्राप्नुयाम)। कीदृशा वयं?। 'उत्तमे' 'नाके' (अत्युत्कृष्टे स्वर्गलोके) 'सुवः' 'अधि'-'रुहाणाः' (सुखप्रापकं प्रदेशम् अधिरोढुकामाः)।

अथ द्वितीयामाह,—"इमौ ते पक्षावजरौ पतत्रिणो याभ्याꣳ रक्षाꣳस्यप हꣳस्यग्ने ताभ्यां पतेम सुकृतामु लोकं यत्रर्षयः प्रथमजा ये पुराणाः[२]" इति। 'पतत्रिणः' (पक्ष्याकारस्य) 'ते' (तव) अग्नेः 'इमौ' 'पक्षौ अजरौ' (कदाचिदपि जीर्णौ न भवतः)। हे 'अग्ने', 'याभ्यां' (पक्षाभ्यां) त्वं 'रक्षांसि' 'अप-हंसि' (मारयसि), 'ताभ्यां' वयं 'सुकृतामु' (पुण्यकृतामेव) पुरुषाणां योग्यं 'लोकं' 'पतेम' (प्राप्नुयाम)। 'ये' 'पुराणाः' (अनादिसिद्धाः) 'ऋषयः' (महर्षयः) सन्ति, ते च 'प्रथमजाः' (सृष्ट्यादावेवोत्पन्नाः); तादृशा 'यत्र' लोके निवसन्ति, तं 'लोकं' 'पतेम'।

अथ तृतीयामाह,—"चिदसि समुद्रयोनिरिन्दुर्दक्षः श्येन ऋतावा।

हिरण्यपक्षः शकुनो भुरण्युर्महान्त्सधस्थे ध्रुवः आ निषत्तः[१]" इति ।
हे अग्ने, त्वं चिदादिविशेषणैर्विशेषितः 'असि'। 'चित्' (जगतश्चेतयिता, यजमानैश्चितो वा); 'समुद्रयोनिः' (यथा समुद्रः सर्वेषां जलप्रवाहाणां स्थानं तथा त्वं सर्वेषां क्रतूनां स्थानं); 'इन्दुः' (परमैश्वर्ययुक्तः); 'दक्षः' (कर्मनिष्पादनकुशलः); 'श्येनः' (पक्षिविशेषाकारः); 'ऋतावा' (सत्यवान्); 'हिरण्यपक्षः' (सुवर्णमयाभ्यां पक्षाभ्यामुपेतः);'शकुनः' (कामनादिभेदेन कङ्कादिपक्ष्याकारस्य); 'भुरण्युः' (सर्वं भरितुं क्षमः); 'महान्' (बह्वीभिरिष्टकाभिश्चितत्वात् प्रौढः); 'सधस्थे' (आदित्येन सह एकत्र स्थितियोग्ये मण्डले) 'आ निषत्तः' (समन्तत उपविष्टः)* ।

कल्पः; 'यज्ञायज्ञियस्य स्तोत्रे एकया अप्रस्तुतं भवत्यथ नमस्ते अस्तु मा मा हिꣳसीरिति द्वाभ्यामग्निमभिमन्त्रयति' इति। तत्र प्रथमामाह,—
"नमस्ते अस्तु मा मा हिꣳसीर्विश्वस्य मूर्धन्नधि तिष्ठसि श्रितः । समुद्रे ते हृदयमन्तरायुर्द्यावापृथिवी भुवनेष्वर्पिते[४]" इति । हे अग्ने, 'ते' 'नमः' 'अस्तु', त्वं कर्मणि त्वद्यागकारिणं† 'मा हिंसीः' (मा विनाशय)। त्वं 'विश्वस्य' (सर्वस्य) जगतः 'मूर्धन्' (शिरोवदुत्तमे चितिप्रदेशे) 'श्रितः' (आश्रितः सन्) 'अधि-तिष्ठसि' (अधिको भूत्वा वर्तसे)। 'ते' 'हृदयं' (त्वदीयं चित्तं) 'समुद्रे' वर्त्तते,-यावद्वृष्टिद्वारेण समुद्रसमानं जलं सम्पादयिष्यामीत्येवं सर्वदा तवानुसन्धानम् । तथा 'अन्तरायुः' (त्वदीयचित्तस्य मध्ये सर्वेषां

---

* अत्र 'ध्रुवः' इति पदस्य व्याख्यानं पतितमिव प्रतिभाति ।

† अत्र 'मा' (मां) इति पाठः पतित इव प्रतिभाति ।

प्राणिनामायुस्तिष्ठति),—चिरं जीवन्तु एते प्राणिन इति यदा स्मरसि तदानीं तेषामायुर्भवत्येव। किञ्च 'भुवनेषु' (सर्वेषु लोकेषु) निमित्त-भूतेषु 'द्यावापृथिवी' 'अर्पिते',—उपरि द्यौः अधो भूमिश्च त्वया स्थापिते,—एतयोर्मध्ये सर्वे लोकास्तिष्ठन्त्वित्येवं तवानुग्रहः।

अथ द्वितीयामाह,—"उद्नो दत्तोदधिं भिन्त दिवः पर्जन्यादन्त-रिक्षात् पृथिव्यास्ततो नो वृष्ट्याऽवत। दिवो मूर्धासि पृथिव्या नाभि-रूर्गपामोषधीनां। विश्वायुः शर्म सप्रथा नमस्पथे[५]" इति। अत्र पूजार्थम् एकस्मिन्नेवाग्नौ बहुत्वमारोप्य निर्दिश्यते। हे अग्नयः, यूयं 'उद्नो' 'दत्त' (उदकानि प्रयच्छत)। उदकदाने क उपाय इति उच्यते। 'उदधिं' 'भिन्त',—उदकं धीयतेऽस्मिन्नित्युदधिर्मेघः, तं विदारयत। केभ्यो निमित्तेभ्यः। 'दिवो' 'अन्तरिक्षात' 'पृथिव्याः' (लोकत्रयं निमित्तीकृत्येत्यर्थः)। 'ततः' (मेघविदारणादूर्द्ध्वं) 'पर्जन्यात्' आगतया 'वृष्ट्या' 'नः' (अस्मान्) 'अवत' (रक्षत)। पुनरप्येकत्वेन सम्बोध्योच्यते,—हे अग्ने, त्वं 'दिवो' 'मूर्धासि' (द्युलोकस्य मूर्ध-स्थानीय आदित्यरूपोऽसि); 'पृथिव्याः' 'नाभिः' असि (नाभि-वन्मध्यदेशे वर्तसे); 'अपाम्' 'ओषधीनां' च 'ऊर्क्' (रसः) असि, त्वया हि पाके क्रियमाणे सति तत्र रसो जायते; तथा 'विश्वायुः' असि (सर्वस्य जगत आयुःप्रदोऽसि); 'शर्म' (शरणभूतः) असि। 'सप्रथाः' (सविस्तारः) असि। 'पथे' (पुण्यलोकमार्गरूपाय) तुभ्यं 'नमः' अस्तु।

अग्नियोगमन्त्रं व्याख्यातुं प्रस्तौति,—"सुवर्गाय वै लोकाय देव-रथो युज्यते यत्राकूताय मनुष्यरथ एष खलु वै देवरथो यदग्निः"

(५।४।१०अ०) इति। द्विविधो रथः,—देवरथो मनुष्यरथश्चेति; तत्र स्वर्गप्राप्तये 'देवरथः' सज्जीक्रियते; 'यत्र' क्वापि ग्रामविशेषे गन्तुम् आकूतमभिप्रायो भवति, तदर्थं 'मनुष्यरथः' सज्जीक्रियते। योऽयम् अत्र चीयमानोऽग्निः, स एष देवरथः न तु मनुष्यरथः।

इत्थं प्रस्तुत्य मन्त्रस्य तात्पर्यं दर्शयति,—"अग्निं युनज्मि शवसा घृतेनेत्याह युनक्त्येवैनꣳ स एनं युक्तः सुवर्गं लोकमभि वहति" (५।४।१०अ०) इति। 'एनं' (देवरथरूपम्) 'अग्निम्' अनेन मन्त्रेण 'युनक्त्येव'; स च 'युक्तः' अग्निः 'एनं' (यजमानं) स्वर्गं प्रापयति।

उक्तमन्त्रपञ्चके मन्त्रत्रयं विभज्य विनियुङ्क्ते,—"यत् सर्वाभिः पञ्चभिर्युञ्ज्याद्युक्तोऽस्याग्निः प्रच्युतः स्यात्, अप्रतिष्ठिता आहुतयः स्युः, अप्रतिष्ठिताः स्तोमाः, अप्रतिष्ठितानि उक्थानि, तिसृभिः प्रातःसवनेऽभि मृशति त्रिवृद्वै अग्निर्यावानेवाग्निस्तं युनक्ति, यथाऽनसि युक्ते आधीयते एवमेव तत् प्रति आहुतयस्तिष्ठन्ति, प्रति स्तोमाः, प्रति उक्थानि" (५।४।१०अ०) इति। आदावेव मन्त्रपञ्चकेन योजने सति कालान्तरे योजयितुं मन्त्राभावादयं 'युक्तः' 'अग्निः' 'प्रच्युतः' भवेत्, प्रच्युते अग्नौ आहुतीनां स्तोत्रशस्त्रयोश्च प्रतिष्ठा न भवेत्। अतः पश्चाद्योक्तुं मन्त्रद्वयमवशेष्य 'प्रातःसवने' 'तिसृभिः' 'अभि'-मृशेत्। तथा सति त्रिगुणमग्निं सर्वमपि अभिमृशति। ततो यथा लोके बलीवर्दैर्युक्ते शकटे सर्वं प्रति ग्रामान्तरे नेतव्यं वस्तुजातमभिनिधीयते, एवमेतस्मिन् अग्नौ 'आहुतयः' स्तोत्राणि च 'प्रति'-'तिष्ठन्ति'।

अथावशिष्टं मन्त्रद्वयं विनियुङ्क्ते,—"यज्ञायज्ञियस्य स्तोत्रे द्वाभ्यामभि मृशत्येतावान् वै यज्ञो यावानग्निष्टोमो भूमा तु वै अस्य

अत ऊर्द्धः क्रियते यावानेव यज्ञस्तम् अन्ततोऽन्वारोहति" (५।४।१० अ०) इति । 'यज्ञायज्ञा वो अग्नयः' इत्यस्यामृचि उत्पन्नं साम यज्ञायज्ञीयं, तस्य साम्नः सम्बन्धि स्तोत्रं तृतीयसवने प्रवर्तते। तस्मिन् प्रवर्त्तमाने सति श्लिष्टाभ्यां द्वाभ्यां मन्त्राभ्यामग्निमभिमृशेत् । यज्ञायज्ञियस्तोत्रान्तो हि प्रकृतिभूतोऽग्निष्टोमः, स च यावान्, तावानेव उक्थ्यातिरात्रादिः सर्वोऽपि यज्ञः । एतावदेव हि सर्वस्यापि यज्ञस्य मुखं शरीरं । 'अस्य' (उक्थ्यादिक्रतोः) यज्ञायज्ञियस्तोत्रात् 'ऊर्द्धः' तु स्तोत्रसमूहो यः क्रियते, स तु स्वैव क्रियते, तेन अतिरिक्तेन पूर्वं विद्यमानस्य यज्ञशरीरस्य बाहुल्यमेव भवति, न तु किञ्चिन्नूतनं शरीरं। एवं सति यज्ञायज्ञियस्य स्तोत्रकालेन अभिमर्शनेन अतिरिक्तेन अग्निष्टोमो उक्थ्यातिरात्रादिरूपो 'यज्ञो' 'यावान्' अस्ति 'तं' सर्वमपि अन्तराले 'अन्वारोहति', कृत्स्नमपि यज्ञजातं प्राप्नोतीत्यर्थः ।

मन्त्रद्वित्वं प्रशंसति,—"द्वाभ्यां प्रतिष्ठित्यै"(५।४।१०अ०) इति ।

स्तोत्रमध्य एव अवान्तरकालं विधत्ते,—"एकया अप्रस्तुतं भवति, अथ अभि मृशति, उपैनमुत्तरो यज्ञो नमति, अथो सन्तत्यै" (५।४।१०अ०) इति । यज्ञायज्ञियस्तोत्रे हि एकविंशस्तोमो विहितः । तिस्रो ऋचः एकविंशतिसङ्ख्यापूरणाय आवर्त्तनीयाः* । तत्र हि विंशतिस्तोत्रियासु उक्तासु या अन्त्या स्तोत्रीया,† तया स्तोत्रम् 'अप्रस्तुतं' (अनुपक्रान्तं) यदा भवति, तदानीं मन्त्राभ्यामभि-

* 'पूरणीयावर्त्तनीया' इति सर्वत्र पाठो न सम्यगिव प्रतिभाति ।

† पूर्व्वापरपाठयोरैकरूप्याय अत्र 'स्तोत्रियाः' इति पाठः, पूर्व्वत्र वा 'स्तोत्रीयासु' इति पाठो भवितुं युक्तः ।

मृशेत्। एवं सत्युत्तरकालभावी 'यज्ञः' सर्वोऽपि 'एनं' (यजमानम्) 'उप'-'नमति'। अपि च तदभिमर्शनं यज्ञनैरन्तर्याय सम्पद्यते।

कल्पः, 'पुनश्चितिस्त्रिष्वर्थेषु श्रूयते,—अवणार्थे समृद्ध्यर्थे सन्तानार्थे च। अवणार्थां व्याख्यास्यामः,—यदि इष्ट्या यदि पशुना यदि सोमेन यजेत योऽप्यस्य पुरोऽग्निस्तमन्ववसाय यजेत, अपि वा येन स्वषय इत्यष्टौ नानामन्त्र उत्तरवेद्यामुपदध्यात्' इति। तत्र प्रथमामाह,—"येनर्षयस्तपसा सत्रमासतेन्धाना अग्निꣳ सुवः आ भरन्तः। तस्मिन्नहं नि दधे नाके अग्निमेतं यमाहुर्मनवस्तीर्णबर्हिषम्(६)" इति। 'येन' (स्वर्गेण) निमित्तभूतेन पूर्वं महर्षयः 'तपसा' (सन्तापयुक्तेन) अग्निना 'सत्रम्' 'आसत' (अनुष्ठितवन्तः); कीदृशा महर्षयः?—'अग्निं' 'इन्धानाः' (प्रज्वलयन्तः); 'सुवः आ भरन्तः' (स्वर्गमाहर्तुं समुद्यताः); 'अहम्' अपि 'तस्मिन्' 'नाके' निमित्तभूते सति 'एतम्' 'अग्निं' 'नि'-'दधे' (स्थापयामि)। 'यम्' 'अग्निं' 'मनवः' (पूर्वे मनुष्याः) 'स्तीर्णबर्हिषं' (प्रसारितयज्ञम्) 'आहुः', तम् 'अग्निं' 'नि'-'दधे' इत्यन्वयः।

अथ द्वितीयामाह,—"तं पत्नीभिरनु गच्छेम देवाः पुत्रैर्भ्रातृभिरुत वा हिरण्यैः। नाकं गृह्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधि रोचने दिवः(७)" इति। हे 'देवाः', ऋत्विजः सर्वे वयं पत्न्यादिभिः सर्वैर्मनुष्यैः 'उत' 'वा' 'हिरण्यैः' (हिरण्यादिभिः) सर्वैः साधनद्रव्यैश्च सहिताः 'तं' (अग्निम्) 'अनु'-'गच्छेम'; अनुगताः सन्तः फलं प्राप्स्यामः इत्याशयः। स एव स्पष्टीक्रियते,—'दिवः' 'पृष्ठे' (स्वर्गस्योपरि) 'नाकं' (दुःखरहितं स्थानं) 'गृह्णानाः', गृहीतुकामा इत्यर्थः। कीदृशे

दिवः पृष्ठे ?—'सुकृतस्य' 'लोके' (सम्यगनुष्ठितस्य कर्मणः फलभूते); 'तृतीये' (पृथिवीमारभ्य गणनायां त्रिसङ्ख्यापूरके), 'अधि रोचने' (अधिकत्वेन दीप्यमाने)।

अथ तृतीयामाह,—"आ वाचो मध्यमरुहद्भुरण्युरयमग्निः सत्पतिश्चेकितानः। पृष्ठे पृथिव्या निहितो दविद्युतदधस्पदं कृणुते ये पृतन्यवः(८)" इति। 'अयम्' 'अग्निः' 'वाचः' 'मध्यम्' 'आ'-'अरुहत्' (स्तोत्ररूपाया वाचः प्रतिपाद्यमर्थमारूढः), स्तोत्रगतसर्वगुणयुक्त इत्यर्थः। कीदृशः अग्निः ?—'भुरण्युः' (जगद्भरणशीलः); 'सत्पतिः' (सतां पालकः); 'चेकितानः' (अभिज्ञानवान्); स च 'पृथिव्याः' 'पृष्ठे' (भूमेरुपरि) 'निहितः' (स्थापितः) 'दविद्युतत्' (अतिशयेन द्योतते)। 'ये' तु 'पृतन्यवः' (विरोधिनः, अस्माभिः सह कलहं कर्तुमिच्छन्ति), तान् 'अधस्पदं' 'कृणुते' (अस्माकं पादस्य अधस्तादवस्थितान् करोति)।

अथ चतुर्थीमाह,—"अयमग्निर्वीरतमो वयोधाः सहस्रियो दीप्यतामप्रयुच्छन्। विभ्राजमानः सरिरस्य मध्य उप प्र यात दिव्यानि धाम(९)"इति। 'अयम्' 'अग्निः' 'दीप्यतां' (अस्मिन् कर्मणि प्रकाशतां)। कीदृशः ?—'वीरतमः' (अतिशयेन शूरः); 'वयोधाः' (वयस आयुषः स्थापयिता); 'सहस्रियः' (इष्टकासहस्रसम्पादितः*); 'अप्रयुच्छन्' (अस्मिन् कर्मणि प्रमादरहितः); 'सरिरस्य' (जलस्य) 'मध्ये' 'विभ्राजमानः' (और्वविद्युदादिरूपेण विशेषतः प्रकाशमानः)। हे ऋत्विग्-यजमानाः, तस्य प्रसादात् 'दिव्यानि' 'धाम' (स्थानानि) 'उप'-'प्र'-'यात' (प्राप्नुत)।

---

* 'इष्टकासहस्रं सम्पादितः' इति आदर्श-पुस्तकपाठः।

अथ पञ्चमीमाह,—"सम्प्र च्यवध्वमनु सम्प्र यातामे पथो देवयानान् कृणुध्वं। अस्मिन् सधस्थे अध्युत्तरस्मिन् विश्वे देवा यजमानश्च सीदत[१०]" इति। हे 'अग्ने', त्वं 'विश्वे देवाः' 'यजमानश्च' सर्वे यूयं, 'सम्प्र'-'च्यवध्वं' (सम्यक् प्रच्यावयत), अस्य कर्मणो विघ्नं विनाशयतेत्यर्थः। 'अनु'-'सम्प्र'-'यात' (अनुक्रमेण कर्मसिद्धिं प्राप्नुत)। ततः 'देवयानान्' (देवलोकप्राप्तिहेतून्) 'पथः' (मार्गान्) 'कृणुध्वं' (कुरुत)। 'सधस्थे' (सहस्थितियोग्ये) 'अस्मिन्' 'सीदत', 'उत्तरस्मिन्' लोके अधिकत्वेन सीदत*।

अथ षष्ठीमाह,—"येना सहस्रं वहसि येनाग्ने सर्ववेदसं। तेनेमं यज्ञं नो वह देवयानो य उत्तमः[११]" इति। हे 'अग्ने', 'देवयानः' (देवप्रापकः) 'यः' त्वं 'उत्तमः', स त्वं 'येन' व्यापारेण 'सहस्रं' 'वहसि' (सहस्रदक्षिणाकं यज्ञं निर्वहसि), तथा 'येन' व्यापारेण 'सर्ववेदसं' (सर्वस्वदक्षिणाकं यज्ञं वहसि), 'तेन' व्यापारेण 'नः' (अस्मदीयम्) 'इमम्' 'यज्ञं' 'वह' (देवान् प्रापय)। 'देवयानः' इत्यादिकं यज्ञविशेषणं वास्तु,—यो यज्ञो देवान् प्राप्नः 'उत्तमः' भवति, तम् 'इमं' 'यज्ञं' 'वह' इत्यर्थः।

अथ सप्तमीमाह,—"उद्बुध्यस्वाग्ने प्रति जागृहि एनमिष्टापूर्त्ते सꣳसृजेथामयञ्च। पुनः कृण्वꣳस्त्वा पितरं युवानमन्वाताꣳसीत् त्वयि तन्तुमेतम्[१२]" इति। हे 'अग्ने', त्वम् 'उद्बुध्यस्व' (अस्मद्विषये सावधानो भव); 'एनं' (यजमानं) 'प्रति'-'जागृहि' (प्रतिदिनं जागरूकं सावधानं कुरु); 'अयं' 'च' त्वं च मिलित्वा 'इष्टापूर्त्ते' (श्रौत

---

* 'सीदतु' इति सर्व्वत्र पाठो न सम्यक्।

स्मार्त्तकर्मणी) 'सं-सृजेथां' (सम्पादयतं) । हे यजमान, त्वां 'पितरं' (पालकं), 'युवानं' (यौवनोपेतं) 'पुनः' 'कृण्वन्' (भूयो भूयः कुर्वन्) अयमग्निः त्वयि निमित्तभूते सति 'एतं' 'तन्तुं' (यज्ञप्रवाहं) 'अन्वाताꣳसीत्' (अनुक्रमेण तनोतु, सम्पादयतु) ।

अथाष्टमीमाह,—"अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः । तं जानन्नग्न आरोहाथा नो वर्द्धया रयिम्(१९)" इति । हे 'अग्ने', 'यः' 'अयम्' इष्टकाचितिरूपप्रदेशः 'ते' (तव) 'योनिः' (स्थानं); 'यतः' (यस्या इष्टकाचितेः) 'जातः' (उत्पन्नः) त्वं 'अरोचथाः' (दीप्तो भवसि), 'तं' (योनिं*) 'जानन्' (स्वकीयत्वेन अवगच्छन्) 'आ'-'रोह' । 'अथ' (अनन्तरं) 'नः' (अस्माकं) 'रयिं' (धनं) 'वर्द्धय' ।

एतैर्मन्त्रैः साध्यां पुनश्चितिं विधत्ते,—"प्र वै एषोऽस्माल्लोकाच्च्यवते, योऽग्निं चिनुते, न वै एतस्यानिष्टके आहुतिरव कल्पते, यां वै एषोऽनिष्टके आहुतिं जुहोति स्रवति वै सा, ताꣳ स्रवन्तीं यज्ञोऽनु परा भवति, यज्ञं यजमानो यत् पुनश्चितिं चिनुते आहुतीनां प्रतिष्ठित्यै, प्रति आहुतयस्तिष्ठन्ति, न यज्ञः परा भवति, न यजमानः" (५।४।१०अ०) इति । 'अग्निं' चिन्वानः पुरुषः स्वर्गाभिमुखत्वात् 'अस्मात् लोकात्' प्रच्युतो भवति। 'एतस्य' पुरुषस्य इष्टकारहिते देशे आहुतिर्न सम्भवति । भूप्रदेशस्य स्वकीयत्वाभावात्। एवं सति इष्टकारहिते भूदेशे 'याम्' 'आहुतिं' 'जुहोति' 'सा' 'स्रवति', यथा भिन्नभाण्डे जलं गलति तद्वत् । 'स्रवन्तीं' 'ताम्' आहुतिम् 'अनु' 'यज्ञः'

* 'योमिं' इति सर्व्वत्र पाठो न सम्यक् ।

नश्यति, 'यज्ञम्' 'अनु' 'यजमानः' अपि नश्यति। अत आहुति-प्रतिष्ठार्थं 'पुनश्चितिं' कुर्य्यात्; तत आहुतियज्ञयजमानाः प्रतितिष्ठन्ति।

अस्यां चिताविष्टकासङ्ख्यां विधत्ते,—"अष्टावुपदधात्यष्टाक्षरा गायत्री गायत्रेणैवैनं छन्दसा चिनुते" (५।४।१०अ०) इति।

एतच्छाखाम्नातमन्त्रानुसारेण सङ्ख्यां विधाय शाखान्तरानुसारेण अन्यौ द्वौ पक्षौ विधत्ते,—"यदेकादश त्रैष्टुभेन, यद्द्वादश जागतेन, छन्दोभिरेवैनं चिनुते" (५।४।१०अ०) इति।

प्रकारान्तरेण पुनश्चितिं प्रशंसति,—"नपात्को वै नामैषोऽग्निर्यत् पुनश्चितिर्य एवंविद्वान् पुनश्चितिं चिनुत आ तृतीयात् पुरुषादन्नम् अत्ति" (५।४।१०अ०) इति। न पातयति न विनाशयति आहुतिं न स्रावयतीति पुनश्चितिरूपस्य अग्नेः 'नपात्कः' इति नामधेयं। एवं ज्ञात्वा चितवान् पुरुषः पुत्रपौत्रपर्यन्तम् अन्नसम्बद्धो भवति।

पुनःशब्दस्य तात्पर्यं दर्शयति,—"यथा वै पुनराधेय एवं पुनश्चितिर्योऽग्न्याधेयेन न र्ध्नोति स पुनराधेयमा धत्ते योऽग्निं चित्वा न र्ध्नोति स पुनश्चितिं चिनुते यत् पुनश्चितिं चिनुते र्द्ध्यै" (५।४।१०अ०) इति। पुनराधेयपुनश्चित्योः पूर्वसमृद्ध्यभावेन पश्चादृद्धिसद्भावेन च सादृश्यम्।

अत्र पूर्वपक्षत्वेन शाखान्तरमतमुपन्यस्यति,—"अथो खल्वाहुर्न चेतव्येति रुद्रो वै एष यदग्निर्यथा व्याघ्रꣳ सुप्तं बोधयति तादृगेव तत्" (५।४।१०अ०) इति। यथा लोके सुप्तो व्याघ्रः केनचित् मार्गे गच्छता पुरुषेण बोधितः तमेव बोधयितारं मारयति, एवमयं

क्रूरोऽग्निः पूर्वं चितः कथञ्चित् पुण्यवशात् सुप्तवच्छान्तो वर्त्तते, स चेत् पुनश्चीयेत प्रबोधितव्याघ्रवन्मारयेत्; तस्मान्न चेतव्या इयं पुनश्चितिरिति पूर्वः पक्षः।

तमेतं पक्षमनादृत्य स्वपक्षमेव स्थापयति,—"अथो खल्वाहुश्चेतव्येति यथा वसीयाꣳसं भागधेयेन बोधयति तादृगेव तत्"(५।४।१०अ०) इति। लोके धनाढ्यं प्रभुं चिरकालव्यवधानेन विस्मृतवन्तं भृत्यः पुनरप्युपायनमानीय यथा बोधयति, स च बोधित एव अभीष्टसिद्धिं करोति, एवमयं प्रभुरग्निः पुनश्चितः सन् अभीष्टं साधयतीति चेतव्या इयं पुनश्चितिः।

तस्याः पुनश्चितेः समृद्धिहेतुत्वमुदाहरणमुखेन स्पष्टीक्रियते,— "मनुरग्निमचिनुत तेन न आर्ध्नोत् सः, एतां पुनश्चितिमपश्यत् तामचिनुत, तया वै स आर्ध्नोत्, यत् पुनश्चितिं चिनुते ऋद्ध्यै"(५।४।१०अ०) इति।

अत्र विनियोगसंग्रहः,—

'अग्निं'—त्रयं पुरा प्रातरनुवाकात् स्पृशेदिदम्।
'नमो'—द्वाभ्यां वह्निमर्शो, येनाष्टाविंशकाष्टकम्॥
पुनश्चितिरिति प्रोक्ता मन्त्रास्तेऽत्र त्रयोदश।

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः- संहिताभाष्ये चतुर्थकाण्डे सप्तमप्रपाठके त्रयोदशोऽनुवाकः॥०॥

---

ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तनुवं पुषेम। मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाध्यक्षेण पृतना जयेम[१]। मम देवा विहवे सन्तु सर्व इन्द्रावन्तो मरुतो विष्णु-रग्निः। ममान्तरिक्षमुरु गोपमस्तु मह्यं वातः पवतां कामे अस्मिन्[२]। मयि देवा द्रविणमा यजन्तां मय्या-शीरस्तु मयि देवहूतिः। दैव्या होतारा वनिषन्त॥ १ ॥

पूर्वेऽरिष्टाः स्याम तनुवा सुवीराः[३]। मह्यं यजन्तु मम यानि हव्याकूतिः सत्या मनसो मे अस्तु। एनो मा नि गां कतमच्चनाहं विश्वे देवासो अधि वोचता मे[४]। देवीः षडुर्वीरुरु णः कृणोत विश्वे देवास इह वीरयध्वं। मा हास्महि प्रजया मा तनूभिर्मा रधाम द्विषते सोम-राजन्[५]। अग्निर्मन्युं प्रतिनुदन् पुरस्तात्॥ २ ॥

अदब्धो गोपाः परि पाहि नस्त्वं। प्रत्यञ्चो यन्तु निगुतः पुनस्तेऽमैषां चित्तं प्रबुधा वि नेशत्[६]। धाता धातॄणां भुवनस्य यस्पतिर्देवꣳ सवितारमभिमातिषाहं। इमं यज्ञमश्विनोभा बृहस्पतिर्देवाः पान्तु यजमानं न्यर्थात्[७]। उरुव्यचा नो महिषः शर्म यꣳसदस्मिन् हवे पुरुहूतः पुरुक्षु। स नः प्रजायै हर्यश्वः मृडयेन्द्र मा॥ ३ ॥

नो रीरिषो मा परा दाः[८]। ये नः सपत्ना अप ते

भवन्त्विन्द्राग्निभ्यामव बाधामहे तान्। वसवो रुद्रा आदित्या उपरिस्पृशं मोग्रं चेत्तारमधिराजमक्रन्[९]। अर्वाचमिन्द्रममुतो हवामहे यो गोजिद्धनजिदश्वजिद्यः। इमन्नो यज्ञं विहवे जुषस्वास्य कुर्मो हरिवो मेदिनं त्वा[१०] ॥ ४ ॥

वनिपन्त । पुरस्तात् । मा । त्रिचत्वारिंशच्च ॥१४॥

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे सप्तमप्रपाठके चतुर्दशोऽनुवाकः ॥ * ॥

त्रयोदशे पुनश्चितिरुक्ता। अथ चतुर्दशे विहव्याख्या इष्टका उच्यन्ते। कल्पः, 'ममाग्ने वर्चो विहवेष्वस्त्वित्यनुवाकेन प्रतिमन्त्रमिष्टकाभिर्धिष्णियांश्चिनोत्यश्मनवमा आग्नीध्रीय उपदधाति, द्वादश षोडशैकविंशतिश्चतुर्विंशतिर्वा होत्रीये, एकादश ब्राह्मणाच्छंसीये, षट् मार्जालीयेऽष्टावष्टावन्येषु धिष्णियेषूपदधातीति विज्ञायते' इति। तत्राद्यामाह,—"ममाग्ने वर्चो विहवेष्वस्तु वयं त्वा इन्धानास्तनुवं पुषेम। मह्यं नमन्तां प्रदिशश्चतस्रस्त्वया अध्यक्षेण पृतना जयेम[१]" इति। हे 'अग्ने', 'विहवेषु' (यज्ञेषु) यत् 'वर्चः' (फलं) तत् 'मम' 'अस्तु'। 'वयं' (ऋत्विग्यजमानाः) त्वाम् अग्निम् 'इन्धानाः' (प्रज्वलयन्तः) 'तनुवं' (त्वदीयं शरीरं) 'पुषेम' (पुष्टं कुर्मः)। 'मह्यं' यजमानाय प्राच्याद्याः 'चतस्रः' 'प्रदिशः' 'नमन्तां' (वश्या भवन्तु),—तत्रत्या जना मदधीना

भवन्तु। 'अध्यक्षेण' (स्वामिना) 'त्वया' सहिता 'वयं' 'पृतनाः' (विरोधिन्यः सेनाः) 'जयेम'।

अथ द्वितीयामाह,—"मम देवा विहवे सन्तु सर्व्वे इन्द्रावन्तो मरुतो विष्णुरग्निः। ममान्तरिक्षमुरु गोपमस्तु मह्यं वातः पवतां कामे अस्मिन्[१]" इति। 'सर्वे' 'देवाः' 'मम' 'विहवे' (मदीययज्ञे) 'सन्तु' (तिष्ठन्तु)। देवा एव विशेष्यन्ते,—'इन्द्रावन्तः' (इन्द्रयुक्ताः), 'मरुतः' (मरुद्गणाः), 'विष्णुः' 'अग्निः' च—इत्येवमाद्याः। इदम् 'उरु' विस्तीर्णम् 'अन्तरिक्षं' 'गोपं' (रक्षकम्) 'अस्तु' त्वं*। अयं 'वातः' (वायुः) 'मह्यं' (मदर्थम्) 'अस्मिन्' 'कामे' (यज्ञफले निमित्तभूते) सति 'पवतां' (सञ्चरतु), मदीयं कामं साधयत्वित्यर्थः।

अथ तृतीयामाह,—"मयि देवा द्रविणम् आ यजन्तां मय्याशीरस्तु मयि देवहूतिः। दैव्या होतारा वनिषन्त पूर्वेऽरिष्टाः स्याम तनुवा सुवीराः[२]" इति। एते 'देवाः' 'मयि' यजमाने 'द्रविणं' (धनम्) 'आ-यजन्तां' (सर्वतः सम्पादयन्तु)। 'आशीः' (आशास्यमानं फलं) 'मयि' 'अस्तु' (यजमाने सिद्धं भवतु)। तथा 'देवहूतिः' (देवानाम् आह्वानञ्च) 'मयि' भवतु। 'दैव्या' 'होतारा' (देवसम्बन्धिन ऋत्विजः) 'पूर्वे' (अनादिसिद्धाः) 'वनिषन्त' (अस्मद्यज्ञं सम्भजन्तु)। वयं च 'तनुवा' (शरीरेण) 'अरिष्टाः' (हिंसारहिताः) 'सुवीराः' (शोभनपुत्रयुक्ताः) 'स्याम' (भवाम)।

अथ चतुर्थीमाह,—"मह्यं यजन्तु मम यानि हव्या आकूतिः सत्या मनसो मे अस्तु। एनो मा नि गां कतमत् चन अहं विश्वे देवासो अधि

* एवमेव सर्व्वत्र पाठः। भवतु इति पाठो भवितुं युक्तः।

वोचता मे(४)" इति। 'मम' 'यानि' 'हव्या' (मदीयानि हवींषि) सन्ति, तानि सर्वाणि 'मह्यं' (मदर्थं) दैव्या ऋत्विजः 'यजन्तु'। 'मे' 'मम' 'मनसः' 'आकूतिः' (मदीयस्य मनसः सम्बन्धी योऽयं सङ्कल्पः, स आकूतिः) 'सत्या' 'अस्तु',—सङ्कल्पितार्थः सिध्यत्वित्यर्थः। 'अहं' 'कतमत् 'चन' 'एनः' (किमपि पापं) 'मा' 'नि-गां' (नितरां मा प्राप्नवानि)। 'विश्वे देवासः' (हे विश्वे देवाः), 'मे' (मदर्थम्) 'अधि'—'वोचत' (आधिक्यं ब्रूत,—यजमानानां मध्ये अयं अधिक इति देवानामग्रे कथयत)।

अथ पञ्चमीमाह,—"देवीः षडुर्वीरुरु णः कृणोत विश्वे देवास इह वीरयध्वं। मा हास्महि प्रजया मा तनूभिर्मा रधाम द्विषते सोमराजन्(५)" इति। 'देवीः' 'षडुर्वीः' (उर्वीनामकाः षट्सङ्ख्याका हे देव्यः); अत एव शाखान्तराण्युपस्थाने समाम्नातम्,—'षण्मोर्वी-रंहसस्पान्तु* द्यौश्च पृथिवी च आपश्च ओषधयश्च ऊर्क् च सूनृता च' इति। तादृश्यो हे देव्यः, नः (अस्मदीयम्) इदं कर्म्म 'उरु' 'कृणोत'† 'विश्वे देवाः' 'इह' कर्मणि 'वीरयध्वं' (वीरा विस्तीर्णं कुरुत)। 'विश्वे देवाः' 'इह' कर्मणि 'वीरयध्वं' (वीरा भवत),—विघ्नं परिहरतेत्यर्थः। वयं 'प्रजया' (पुत्रादिरूपया) 'मा हास्महि' (विपरित्यक्ता मा भूम)। तथा 'तनूभिः' (पुष्टशरीरैः) 'मा हास्महि'। हे 'सोमराजन्', 'द्विषते' (वैरिणे‡) 'मा रधामः' (कार्यसिद्धिं मा करवाम)।

* एवमेव सर्व्वत्र पाठः। 'रंहस्या सन्तु' इत्येवंविधः कश्चिदन्यः पाठोऽत्र सम्भाव्यते।

† 'कृणोतु' इति सर्व्वत्र पाठो न सम्यक्।

‡ 'वैरिमांसे' इति सर्व्वत्र पाठो न समीचीन इव प्रतिभाति।

अथ षष्ठीमाह,—"अग्निर्मन्युं प्रतिनुदन् पुरस्ताददब्धो गोपाः परि पाहि नस्त्वं। प्रत्यञ्चो यन्तु निगुतः पुनस्ते अमा एषां चित्तं प्रबुधा वि नेशत्[६]" इति। अयम् 'अग्निः' 'मन्युं' (वैरिणां कोपं) 'प्रतिनुदन्' (निराकुर्वन्) 'पुरस्तात्' (अस्माकं पुरतः) गच्छत्विति शेषः। हे अग्ने, 'त्वम्' 'अदब्धः' (केनाप्यहिंसितः) 'गोपाः' (रक्षणसमर्थः) सन् 'नः' (अस्मान्) 'परि'—'पाहि' (सर्वतः पालय)। तत्र पालने सति 'ते' (वैरिणः) 'प्रत्यञ्चः' (प्रतिमुखाः) सन्तः 'निगुतः' (नितरां गमनशीलाः, पलायनपराः) 'पुनः' 'यन्तु' (भूयो भूयो यत्र-क्वापि गच्छन्तु)। 'एषां' (वैरिणां) 'चित्तम्' (अन्तःकरणं) 'प्रबुधा' 'अमा' 'वि-नेशत्' (प्रबोधेन सह विनश्यतु)।

अथ सप्तमीमाह,—"धाता धातॄणां भुवनस्य यस्पतिर्देवꣳ सवितारमभिमातिषाहं। इमं यज्ञमश्विनोभा बृहस्पतिर्देवाः पान्तु यजमानं न्यर्थात्[७]" इति। 'धातॄणाम्' (जगत्कर्तॄणां दक्षप्रजापत्यादीनां) अपि 'धाता' 'यः' (स्रष्टा), 'भुवनस्य' (लोकस्य) 'पतिः' (पालकः) च। तथा 'अश्विना' 'उभा' (यौ उभौ अश्विनौ), 'बृहस्पतिः' च इत्येते 'देवाः' 'नः' (अस्मदीयम्) 'इमं' 'यज्ञं' 'यजमानं' च 'न्यर्थात्' (फलवैगुण्यलक्षणात् वैयर्थ्यात्) 'पान्तु' (रक्षन्तु)। कीदृशं यज्ञं?—'देवं' (तत्तन्मन्त्रव्यवहारयुक्तं), 'सवितारं' (फलस्य जनकं), 'अभिमातिषाहं' (पापलक्षणस्य अभिमातेः अरेः अभिभवितारम्)।

अथाष्टमीमाह,—"उरुव्यचा नो महिषः शर्म यꣳसदस्मिन् हवे पुरुहूतः पुरुक्षु। स नः प्रजायै हर्यश्वः मृडयेन्द्र मा नो रीरिषो मा परा दाः[८]" इति। पुरुभिः (बहुभिर्यजमानैः) हूतः 'पुरुहूतः'।

आहूत इन्द्रः हूयते अस्मिन्निति हवो यज्ञः, तस्मिन् यज्ञे 'स' इन्द्रः 'नः' (अस्माकं) 'शर्म' (सुखं) 'यंसत्' (यच्छतु) । कीदृश इन्द्रः ?— 'उरुव्यचाः' (अत्यन्तं व्याप्तः), बहुदेशाधिपतिरित्यर्थः, 'महिषः' (महान् शौर्यादिगुणसम्पन्नः), 'पुरुष्टुत' (पुरुषु बहुषु मन्त्रेषु श्रूयते* शब्द्यते प्रतिपाद्यत इति पुरुष्टुरेव पुरुष्टुत), हरिनामानौ अश्वौ यस्य असौ 'हर्यश्वः' । ईदृश हे 'इन्द्र', 'प्रजायै' (पुत्रादिप्रजासिद्ध्यर्थं) 'स' (त्वं) 'नः' (अस्मान्) 'मृडय' (सुखय), 'नः' (अस्मान्) 'मा' 'रीरिषः' (मा हिंसीः), 'मा' 'परा-दाः' (मा च तिरस्कुरु) ।

अथ नवमीमाह,—"ये नः सपत्ना अप ते भवन्त्विन्द्राग्निभ्यामव बाधामहे तान् । वसवो रुद्रा आदित्या उपरिस्पृशं मा उग्रं चेत्तारमधिराजमक्रन्(९)" इति । 'ये'-केचित् 'नः' (अस्माकं) 'सपत्नाः' (शत्रवः) सन्ति, 'ते' 'अप'—'भवन्तु' (अपनययुक्ताः भवन्तु) । वयं 'तान्'(सपत्नान्)'इन्द्राग्निभ्यां' अनुग्रहयुक्ताभ्यां सहिताः 'अव-बाधामहे' (सर्वथा बाधितान् कुर्मः)। वसुरुद्रादित्या देवता 'मा' (मां) एतादृशम्† 'अक्रन्' (कुर्वन्तु) । कीदृशम् ?—इति, तदुच्यते,‡—उपरितनं स्वर्गं स्पृशतीत्युपरिस्पृक् तं, 'उग्रं' (शत्रुतिरस्कारक्षमं), 'चेत्तारं' (अभिज्ञातारं) 'अधिराजं' (अन्येषां सर्वेषामधिपतिम्) ।

अथ दशमीमाह,—"अर्वाचमिन्द्रममुतो हवामहे यो गोजित् धनजिदश्वजिद्यः । इमं नो यज्ञं विहवे जुषस्वास्य कुर्मो हरिवो

---

* अत्र स्तुयते इति पाठः, किं वा परत्र 'पुरुष्टुरेव पुरुष्टुत' इत्यत्र पुरुश्रुरेवं पुरुष्टुत इत्येव पाठः सम्भाव्यते ।

† 'वसुरुद्रादित्यादेवतानामेतादृशम्' इति सर्वत्र पाठो न सम्यक् ।

‡ अत्र 'उपरिस्पृशम्' इति पदं पतितमिव प्रतिभाति ।

मेदिनं त्वा(१०)” इति। ‘यः’ इन्द्रः, ‘गोजित्’ (परकीयगवां* जेता), तथा ‘यः’ ‘धनजित्’ (परकीयधनस्य जेता), ‘यः’ ‘अश्वजित्’ परकीयाश्वानां जेता) अस्ति। ‘अर्वाचम्’ (अस्मदभिमुखं) तं ‘इन्द्रं’ ‘हवामहे’ अमुं यज्ञं निमित्तीकृत्य ‘अमुतः’ (आह्वयामः)†। हे ‘इन्द्र’ ‘विहवे’ (विविधाह्वाने) सति ‘नः’ (अस्मदीयम्) ‘इमं’ ‘यज्ञं’ ‘जुषस्व’ (सेवस्व)। हरिनामकावश्वौ यस्य सन्ति‡, स हरिवान्, हे ‘हरिवः’ (इन्द्र), त्वाम् ‘अस्य’ (यजमानस्य) ‘मेदिनं’ (स्नेहवन्तं ‘कुर्मः’।

एतैर्मन्त्रैः साध्यमुपधानं विधित्सुरादौ कानिचित् काम्यचयनानि दर्शयति, यदुक्तं सूत्रकारेण,—‘छन्दश्चितं चिन्वीत पशुकामः’ इति विज्ञायते, सर्वैश्छन्दोभिश्चिनुयादित्येकं, प्राकृतैरित्यपरम्—इति।

तदिदं विधत्ते,—“छन्दश्चितं चिन्वीत पशुकामः पशवो वै छन्दांसि पशुमानेव भवति” (५।४।११अ०) इति। “अग्निर्मूर्धा दिवः ककुत्” इत्यनुवाकोक्तानि नानाछन्दोयुक्तमन्त्राणि, तैरेव चितो न तु यजुर्भिरिति छन्दश्चितः, तादृशमग्निं ‘पशुकामः’ चिनुयात्।

यच्च सूत्रकारेणोक्तं,—‘श्येनचितं चिन्वीत सुवर्गकामः’ इति विज्ञायते, वक्रपक्षो व्यस्तपुच्छो भवति, पश्चात् प्राक् उदूहति

* ‘परकीयगवानाम्’ इत्येव पाठो भवितुं युक्तः।

† अत्र पाठस्य वैपरीत्यमिव प्रतिभाति। ‘अमुतो हवामहे’ (अमुं यज्ञं निमित्तीकृत्य आह्वयामः) इत्येवंक्रम एवात्र पाठो भवितुं युक्तः।

‡ ‘सन्ति’ इति सर्व्वत्र पाठो भ्रान्तिकृतः; ‘स्तः’ इत्येव भवितुं युक्तः।

पुरस्तात् प्रत्यङ् उदूहति एवमिव हि वयसां मध्ये पक्षनिर्णामो भवति इति विज्ञायते'—इति। तदिदं विधत्ते,—"श्येनचितं चिन्वीत सुवर्गकामः श्येनो वै वयसां पतिष्ठः श्येन एव भूत्वा सुवर्गं लोकं पतति" (५।४।११अ०) इति। 'वयसां' मध्ये 'श्येनः' अतिशीघ्रं पतितुं समर्थः। 'श्येन एव' श्येनवच्छीघ्रगाम्येव।

यदप्युक्तं सूत्रकारेण,—'कङ्कचिदलजचित् इति श्येनचिता व्याख्यातौ' इति। तदिदमुभयं क्रमेण विधत्ते,—"कङ्कचितं चिन्वीत यः कामयेत शीर्षण्वान् अमुष्मिँल्लोके स्यामिति शीर्षण्वानेवामुष्मिँल्लोके भवति। अलजचितं चिन्वीत चतुःसीतं प्रतिष्ठाकामश्चतस्रो दिशो दिक्ष्वेव प्रति तिष्ठति" (५।४।११अ०) इति। 'कङ्कालजौ श्येनस्यैव अवान्तरजातिभेदौ, तत्र कङ्कस्य शिरो मण्डलाकारम्, अलजस्य तु पादयोर्विशेषः। अत एव पादस्थानीयास्, सीतासु द्वादशसङ्ख्यामपोह्य चतुःसङ्ख्यां ब्रूते। तत्र कङ्कचिता स्वर्गलोके 'शीर्षण्वान्' (सर्वेषां मध्ये उन्नतशिरस्कः) प्रभुर्भवतीत्यर्थः। अथ अलजचिता सीताचतुष्टयदिग्द्वारा प्रतिष्ठां प्राप्नोति।

यदप्युक्तं सूत्रकारेण,—'प्रउगचितं चिन्वीत भ्रातृव्यवानिति विज्ञायते यावानग्निः सारत्निप्रादेशो द्विस्तावतीं भूमिं चतुरश्रां कृत्वा पूर्वस्याः करण्या अर्धात्श्रोणीं प्रत्यालिखेत्'—इति। तदिदं विधत्ते,—"प्रउगचितं चिन्वीत भ्रातृव्यवान् प्रैव भ्रातृव्यान्नुदते" (५।४।११अ०) इति। 'प्रउगं' अनोमुखं, यथा शकटस्य पश्चाद्भागो विस्तृतः, पूर्वभागः सङ्कुचितः, तद्वत्। एतेन भ्रातृव्यान् प्रणुदते।

यदुक्तं सूत्रकारेण,—'उभयतःप्रउगं चिन्वीत यः कामयेत प्र

जातान् भ्रातृव्यान्नुदेय प्रति जनिष्यमाणान् इति विज्ञायते यस्याविमुखे शकटे' इति। तदिदं विधत्ते,—"उभयतःप्रउगं चिन्वीत यः कामयेत प्र जातान् भ्रातृव्यान्नुदेय प्रति जनिष्यमाणानिति प्रैव जातान् भ्रातृव्यान्नुदते प्रति जनिष्यमाणान्" (५।४।११अ०। इति। प्राक् पश्चाच्च प्रउगाख्यशकटमुखसदृशम् 'उभयतःप्रउगं'। तेन उत्पन्नान् भ्रातृव्यान् विनाशयति, उत्पत्स्यमानानामुत्पत्तिं प्रतिबध्नाति।

यदुक्तं सूत्रकारेण,—'रथचक्रचितं चिन्वीत भ्रातृव्यवान् इति विज्ञायते यावानग्निः सारत्निप्रादेशस्तावतीं भूमिं परिमण्डलां कृत्वा' इति। तदिदं विधत्ते,—"रथचक्रचितं चिन्वीत भ्रातृव्यवान् वज्रो वै रथो वज्रमेव भ्रातृव्येभ्यः प्र हरति" (५।४।११अ०) इति। रथचक्रवत् वर्तुलत्वेन चीयत इति रथचक्रचित्।

यदप्युक्तं सूत्रकारेण,—'द्रोणचितं चिन्वीत अन्नकाम इति विज्ञायते द्वयानि तु खलु द्रोणानि चतुरस्राणि परिमण्डलानि च तत्र यथाकामी' इति। तदेतद्विधत्ते,—"द्रोणचितं चिन्वीत अन्नकामो द्रोणे वै अन्नं भ्रियते सयोन्येवान्नमवरुन्धे"(५।४।११अ०) इति। द्रोणो हि धान्यं भरन्ति, अतो धान्यस्थानसहितमन्नं प्राप्नोति।

यदप्युक्तं सूत्रकारेण,—'समूह्यं चिन्वीत पशुकाम इति विज्ञायते समूहन्निवेष्टका उपदधाति' इति। तदिदं विधत्ते,—"समूह्यं चिन्वीत पशुकामः पशुमानेव भवति" (५।४।११अ०) इति। समूहम् अर्हतीति समूह्यः।

यदप्युक्तं सूत्रकारेण,—'परिचाय्यं चिन्वीत ग्रामकाम इति विज्ञायते मध्यमाꣳ स्वयमातृण्णां प्रदक्षिणमिष्टकागणैः परिचिनोति स परिचाय्यः' इति। तदेतद्विधत्ते,—"परिचाय्यं चिन्वीत ग्रामकामो ग्राम्येव भवति" (५।४।११अ०) इति ।

यदप्युक्तं सूत्रकारेण,—'श्मशानचितं चिन्वीत यः कामयेत पितृलोक ऋध्नुयामिति विज्ञायते द्वयानि तु खलु श्मशानानि चतुरस्राणि परिमण्डलानि च तत्र याथाकामम्' इति। तदेतद्विधत्ते, —'श्मशानचितं चिन्वीत यः कामयेत पितृलोके ऋध्नुयामिति पितृलोक एवर्ध्नोति" (५।४।११अ०) इति । तदेवं काम्यचयनानि समापितानि ।

अथ प्रकृतैः 'ममाग्ने वर्चः' इत्यादिभिर्मन्त्रैः साध्यमुपधानं विधत्ते,— "विश्वामित्र-जमदग्नी वसिष्ठेन अस्पर्धेताꣳ स एता . जमदग्निर्विहव्या अपश्यत् ता उपाधत्त ताभिर्वै स वसिष्ठस्येन्द्रियं वीर्य्यमवृङ्क्त यद्विहव्या उपदधातीन्द्रियमेव ताभिर्वीर्य्यं यजमानो भ्रातृव्यस्य वृङ्क्ते" (५।४। ११अ०) इति। विहवशब्दोपेतैर्मन्त्रैरुपधेया इष्टका विहव्याः।

उपधानदेशं विधत्ते,—"होतुर्धिष्णिये उपदधाति यजमानायतनं वै होता स्व एवास्मा आयतने इन्द्रियं वीर्य्यमवरुन्धे" (५।४।११अ०) इति। देवाह्वानादिकस्य यजमानकार्य्यस्य होत्रा निष्पाद्यत्वाद्धोता यजमानस्यायतनम् ।

तत्र सङ्ख्यां विधत्ते,—"द्वादशोपदधाति द्वादशाक्षरा जगती जागताः पशवो जगत्यैवास्मै पशूनवरुन्धे" (५।४।११अ०) इति। यद्यप्यत्र मन्त्राणां दशत्वान्मन्त्रकर्मसङ्ख्या पूरणीया । तत्प्रकारस्य

सूत्रकारेण दर्शितः,—'अल्पीयाꣳसो मन्त्राः, भूयाꣳसि कर्माणि तत्र समशः प्रतिविभज्य पूर्वैः पूर्वाणि कारयेदुत्तरैरुत्तराणि; अल्पीयाꣳसि कर्माणि, भूयाꣳसो मन्त्राः; तत्र प्रतिमन्त्रं कुर्य्यात्, अवशिष्टा विकल्पार्थाः, यथायूपद्रव्याणीत्यन्तात्लोपो विवृद्धिर्वा' इति। अतोऽत्र पूर्वभागस्य अन्तिमं पञ्चमं, उत्तरभागस्यान्तिमं दशमञ्च आवृत्त्या वर्धयित्वा सङ्ख्या पूरणीया।

स्थानान्तरेषु सङ्ख्यां विधत्ते,—"अष्टावष्टावन्येषु धिष्णियेषूपदधाति अष्टाशफाः पशवः पशूनेवावरुन्धे" (५।४।११अ०) इति। प्रशास्त्रीय-पोत्रीय-नेष्ट्रीयाच्छावाकीयादीनि अन्यानि धिष्णियानि, तत्र नवम-दशममन्त्रयोर्लोपेनाष्टसङ्ख्या अवगन्तव्या।

क्वचित् सङ्ख्यान्तरं विधत्ते,—"षण्मार्जालीये, षड्वा ऋतव, ऋतवः खलु वै देवाः पितरः, ऋतूनेव देवान् पितॄन् प्रीणाति" (५।४।११अ०) इति। दैविकस्य पैतृकस्य च कस्मिंश्चित् ऋतौ कर्तव्यत्वादृतूनां देवत्वं पितृत्वञ्च। अत्र सप्तमादीनां चतुर्णां मन्त्राणां लोपः।

अत्र विनियोगसंग्रहः,—

ममाग्ने दशभिर्मन्त्रैर्धिष्णियेषु यथायथम्।
इष्टका उपधत्तेऽत्र वह्निकाण्डः समापितः॥

अथ मीमांसा, तृतीयाध्यायस्याष्टमपादे(१४अ०) चिन्तितम्,—

ममाग्न इति कस्यात्र फलं? लिङ्गेन वक्तृगं।
श्रुत्या स्वामिनि, न क्रीते, लिङ्गं तत्रोपचर्य्यताम्॥

'ममाग्ने वर्चो विहवेष्वस्तु' इत्ययं मन्त्र इष्टकाचयनाङ्गभूतो*ऽध्वर्युणा

* इत्ययम् आहवनीयस्याधाने करणभूतो मन्त्रः इति न्यायमालापाठः।

पद्यते। विशिष्टं हवनं येषां यज्ञानां ते विहवाः। तेषु वर्चः तेजसा उपलक्षितं यत् फलं तन्ममास्त्वित्यनेन लिङ्गेन मन्त्रमुच्चारयितुरध्वर्यो-स्तत्फलमिति चेत्। मैवं। अग्निं चिनुते* इत्यात्मनेपदश्रुत्या साङ्ग-प्रधानफलस्य यजमानगामित्वं प्रतीयते, न च परिक्रीतस्याध्वर्योर्दक्षि-णातिरिक्तः फलसम्बन्धो न्याय्यः। तस्माच्छ्रुतिन्यायाभ्यां विरुद्धं तल्लिङ्गं यजमानपरत्वेनोपचरणीयं,—मदीययजमानस्यैव तद्वर्चोऽस्त्विति हि उपचारः। 'तस्माद्यजमानेन पाठ्येषु 'आयुर्दा अग्नेऽस्यायुर्मे देहि' इत्यादिषु क्रियमाणानुवादिषु प्रत्यगाशीर्मन्त्रेषु श्रुतं फलं यथा याजमानं, तथैवाध्वर्युणा पाठ्येषु करणमन्त्रेषु श्रुतमपि फलं याजमानमेव" ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे सप्तमप्रपाठके चतुर्दशोऽनुवाकः ॥ ० ॥

---

अग्नेर्मन्वे प्रथमस्य प्रचेतसो यं पाञ्चजन्यं बहवः समिन्धते। विश्वस्यां विशि प्र वि विशिवाꣳसमीमहे स नो मुञ्चत्वꣳहसः(१)। यस्येदं प्राणन्निमिषद्यदे-जति यस्य जातं जनमानञ्च केवलं। स्तौम्यग्निं नाथितो जोहवीमि स नो मुञ्चत्वꣳहसः(२)। इन्द्रस्य मन्वे† प्रथमस्य प्रचेतसो वृत्रघ्नस्तोमा उप मामुपागुः। यो दाशुषः सुकृतो हवमुप गन्ता ॥ १ ॥

* 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति न्यायमालापाठः।
† आदर्शपुस्तकादौ मन्ये इति अत्र पाठः।

स नो मुञ्चत्वꣳहसः⁽³⁾। यः संग्रामं नयति सं वशी युधे यः पुष्टानि सꣳसृजति त्रयाणि। स्तौमीन्द्रं नाथितो जोहवीमि स नो मुञ्चत्वꣳहसः⁽⁴⁾। मन्वे वां मित्रावरुणा तस्य चित्तꣳ सत्यौजसा दृꣳहणा यन्नुदेथे। या राजानꣳ सरथं याथ उग्रा ता नो मुञ्चतमागसः⁽⁵⁾। यो वाꣳ रथ ऋजुरश्मिः सत्यधर्मा मिथुश्चरन्तमुपयाति दूषयन्। स्तौमि ॥ २ ॥

मित्रावरुणा नाथितो जोहवीमि तौ नो मुञ्चतमागसः⁽⁶⁾। वायोः सवितुर्विदथानि मन्महे यावात्मन्वद्बिभृतो यौ च रक्षतः। यौ विश्वस्य परिभू बभूवतुस्तौ नो मुञ्चतमागसः⁽⁷⁾। उप श्रेष्ठा न आशिषो देवयोर्धर्मे अस्थिरन्। स्तौमि वायुꣳ सवितारं नाथितो जोहवीमि तौ नो मुञ्चतमागसः⁽⁸⁾। रथीतमौ रथीनामह्व ऊतये शुभं गमिष्ठौ सुयमेभिरश्वैः याः ॥ ३ ॥

ययोर्वां देवौ देवेष्वनिशितमोजस्तौ नो मुञ्चतमागसः⁽⁹⁾। यदयातं वहतुꣳ सूर्यायास्त्रिचक्रेण सꣳसदमिच्छमानौ। स्तौमि देवावश्विनौ नाथितो जोहवीमि तौ नो मुञ्चतमागसः⁽¹⁰⁾। मरुतां मन्वे अधि नो ब्रुवन्तु प्रेमां वाचं विश्वामवन्तु विश्वे। आशून् हुवे सुयमानूतये ते नो मुञ्चन्त्वेनसः⁽¹¹⁾। तिग्ममायुधं वीडितꣳ सहस्वद्दिव्यꣳ शर्धः ॥ ४ ॥

पृतनासु जिष्णु स्तौमि देवान्मरुतो नाथितो जोहवीमि ते नो मुञ्चन्त्वेनसः(१२)। देवानां मन्वे अधि नो ब्रुवन्तु प्रेमां वाचं विश्वामवन्तु विश्वे। आशून् हुवे सुयमानूतये ते नो मुञ्चन्त्वेनसः(१३)। यदिदं माऽभिशोचति पौरुषेयेण दैव्येन। स्तौमि विश्वान्देवान्नाथितो जोहवीमि ते नो मुञ्चन्त्वेनसः(१४)। अनु नोऽद्यानुमतिः(१५) अनु ॥ ५ ॥

इदंनुमते त्वं(१६) वैश्वानरो नं ऊत्या(१७) पृष्टो दिवि(१८)। ये अप्रथेताममितेभिरोजोभिर्ये प्रतिष्ठे अभवतां वसूनां। स्तौमि द्यावापृथिवी नाथितो जोहवीमि ते नो मुञ्चतमंहसः(१९)। उर्वी रोदसी वरिवः कृणोतं क्षेत्रस्य पत्नी अधि नो ब्रूयातं। स्तौमि द्यावापृथिवी नाथितो जोहवीमि ते नो मुञ्चतमंहसः(२०)। यत्ते वयं पुरुषत्रा यविष्ठाविद्वांसश्चकृमा कच्चन ॥ ६ ॥

आगः कृधी स्वस्मां अदितेरनागा व्येनांसि शिश्रथो विष्वगग्ने(२१)। यथा ह तद्वसवो गौर्यं चित् पदि सिता*ममुञ्चता यजत्राः। एवा त्वमस्मत् प्र मुञ्च व्यंहः प्रातार्यग्ने प्रतरान्न आयुः(२२) ॥ ७ ॥

गन्ता। दूषयन्स्तौमि। ययोः। शर्द्धः। अनुमतिः अनु। चन। चतुस्त्रिंशश्च ॥ १५ ॥

---

* षितामिति भाष्यादर्शपुस्तकपाठः ।

इति तैत्तिरीयसंहितायां चतुर्थकाण्डे सप्तमप्रपाठके पञ्चदशोऽनुवाकः ॥ * ॥

अग्नेर्मन्वे। यस्येदम्। इन्द्रस्य। यः संग्रामꣳ। स नो मुञ्चत्वꣳहसः। मन्वे वाम्। ता नो मुञ्चतमागसः। यो वां। वायोः। उप। रथीतमौ। यदयातं। तौ नो मुञ्चतमꣳहसः। मरुतां। तीग्मं। देवानां। यदिदं। अनु नः। ऊर्वी। यत्ते। नो मुञ्चतमꣳहसः। यत्ते॥

चतुरꣳहसः। षड़ागसः। चतुरेनसः। द्विरꣳहसः*॥

अग्नाविष्णू। ज्यैष्ठ्यꣳ। शुञ्च। ऊर्क् च। अश्मा च। अग्निश्च। अꣳशुश्च। इध्मश्च। अग्निश्च मे घर्मश्च। गर्भाश्च। एका च। वाजो नः। अग्निं युनज्मि। ममाग्ने। अग्नेर्मन्वे। पञ्चदश ॥ १५ ॥

अग्नाविष्णू(१।१)। अग्निश्च(६।१)। वाजो नो(१२।१)। अदब्धो गोपाः(१४।३)। एकान्नचत्वारिꣳशत्† ॥ ३९ ॥

॥ * ॥ समाप्तः सप्तमः प्रपाठकः ॥ * ॥

समाप्तश्च चतुर्थः काण्डः ॥

हरिः ॥ ॐ ॥

---

* अयमंशः A प्रभृतिपुस्तके नास्ति।

† 'नवत्रिंशत्' इति A पु० पाठः। प्राथमिकेषु सप्तसु अनुवाकेषु प्रत्येकं द्विरिति १४, अष्टमे १, नवमे १, दशमे २, एकादशे ३, द्वादशे ५, त्रयोदशे ४, चतुर्दशे २ एवं पञ्चदशेऽनुवाके ७ इति मिलित्वा एकोनचत्वारिंशत्। ३९।

चतुर्दशेऽनुवाके विहव्याख्या इष्टका उक्ताः। अथ पञ्चदशेऽश्वमेध-सम्बन्धिन्यो याज्यानुवाक्या उच्यन्ते । अयञ्चानुवाकोऽस्मात् काण्डात् उत्कृष्टव्यः । कल्पः, 'अग्नये अꣳहोमुचेऽष्टाकपालः इति दशहविर्षं* मृगारेष्टिमनुनिर्वपति समानन्तु स्विष्टकृदिडमग्नेर्मन्वे प्रथमस्य प्रचेतस इति यथालिङ्गं याज्यानुवाक्या' इति। तत्रोदाहृतस्य प्रथमहविषः पुरो-ऽनुवाक्यामाह,—"अग्नेर्मन्वे प्रथमस्य प्रचेतसो यं पाञ्चजन्यं बहवः समिन्धते । विश्वस्यां विशि प्र वि विशिवाꣳसमीमहे स नो मुञ्चतु अꣳहसः(१)" इति । पञ्चजना निषादपञ्चमा वर्णाः, तेभ्यो हितः 'पाञ्चजन्यः', तादृशं 'यम्' अग्निं 'बहवः' यजमानाः, 'समिन्धते' (प्रदीपयन्ति), 'प्रथमस्य' (सृष्ट्यादावुत्पन्नस्य), 'प्रचेतसः' (प्रकृष्ट-ज्ञानवतः), तस्य 'अग्नेः' मूर्त्तिं 'मन्वे' (मनसा चिन्तयामि) । 'विश्वस्यां' 'विशि' (सर्वस्यां प्रजायां) 'प्र वि विशिवाꣳसं' (जाठराग्नि-रूपेण प्रविष्टवन्तं) तमग्निम् 'ईमहे' (वयं प्राप्नुमः)। 'सः' (अग्निः) 'नः' (अस्मान्) 'अंहसः' (पापात्) 'मुञ्चतु' (मुक्तान् करोतु)।

तत्रैव याज्यामाह,—"यस्येदं प्राणत् निमिषद्यदेजति यस्य जातं जनमानञ्च केवलं। स्तौम्यग्निं नाथितो जोहवीमि स नो मुञ्च-त्वꣳहसः(२)" इति । 'प्राणत्' (श्वासोपेतं) 'निमिषत्' (निमेषोपेतं) 'यत्' 'इदं' जगत् 'एजति' (कम्पते) चेष्टत इत्यर्थः, तत्सर्वं 'यस्य' अग्नेरधीनं 'जातं' (पूर्वमुत्पन्नं), 'जनमानम्' (इतः परं जनिष्यमाणं) 'च' जगत्सर्वं 'केवलं' परनिरपेक्षं सत् यस्याधीनं, तम् 'अग्निं' 'स्तौमि', 'नाथितः' फलयाच्ञायुक्तोऽहं 'जोहवीमि' (पुनःपुनर्जुहोमि) । शेषं पूर्ववत्।

---

* हविषमिति आदर्शपुस्तकपाठः।

अथ 'इन्द्रायाꣳहोमुचे एकादशकपालः'इत्यस्य पुरोऽनुवाक्यामाह,—"इन्द्रस्य मन्वे प्रथमस्य प्रचेतसो वृत्रघ्नः स्तोमा उप मामुपागुः। यो दाशुषः सुकृतो हवमुपगन्ता स नो मुञ्चत्वꣳहसः(२)" इति। 'प्रथमस्य' (सृष्ट्यादावुत्पन्नस्य), 'प्रचेतसः' (प्रकृष्टज्ञानवतः), 'इन्द्रस्य' मूर्त्तिं 'मन्वे' (अहं मनसा चिन्तयामि)। 'वृत्रघ्नः' (शत्रुघातिनः) 'इन्द्रस्य' 'उप' (समीपं) प्राप्ताः 'स्तोमाः' (स्तोत्राणि) 'मां' (यजमानम्) 'उपागुः' (प्राप्ताः),—इन्द्रगुणकथनपराणि स्तोत्राणि मज्जिह्वायाम् अवस्थितानीत्यर्थः। 'यः' इन्द्रः, 'दाशुषः' (हविर्द्दत्तवतः),* सुष्ठु कर्म अनुतिष्ठतो यजमानस्य 'हवम्' (आह्वानं यज्ञं वा) 'उपगन्ता' (प्राप्स्यति)।

तत्रैव याज्यामाह,—"यः संग्रामं नयति सं वशी युधे यः पुष्टानि सꣳसृजति त्रयाणि। स्तौमीन्द्रं नाथितो जोहवीमि स नो मुञ्चतु अꣳहसः(४)"इति। 'यः'इन्द्रः 'युधे'(योद्धुं) 'वशी'(स्वाधीनपरिवारोपेतः) 'संग्रामं' (युद्धदेशं) प्रति 'सं'-'नयति' (स्वकीयां सेनां सम्यक् प्रापयति)। 'यः' च इन्द्रः, 'सं'†—'पुष्टानि' (सम्पूर्णानि) 'त्रयाणि' (गवाश्वपुरुषरूपाणि) 'संसृजति' (यजमानेन योजयति)। शेषं पूर्ववत्।

अथ 'मित्रावरुणाभ्यामागोमुग्भ्यां पयस्यः'-इत्यस्य पुरोऽनुवाक्यामाह,—"मन्वे वां मित्रावरुणा तस्य चित्तꣳ सत्यौजसा दृꣳहणा यं नुदेथे। या राजानꣳ सरथं याथ उग्रा ता नो मुञ्चतमागसः(५)" इति। 'मित्रावरुणा' हे मित्रावरुणौ, 'वां' (युवयोः) मूर्त्तिं 'मन्वे'

---

* अत्र 'सुकृतः' इत्ययं शब्दः पतित इव प्रतिभाति।

† 'स पुष्टानि' इति सर्व्वत्र पाठो न सम्यक्।

(मनसा ध्यायामि)। 'सत्यौजसा' (अकृत्रिमबलौ), 'दृंहणा' (स्तम्भयन्तौ) युवां 'यं' अस्मद्वैरिणं 'नुदेथे' (निराकुरुतः), तस्य वैरिणः 'चित्तं' (दुष्टबुद्धिं) जानीतं, युवामुभौ 'राजानं' (दीप्तिमन्तं) 'सरथं' (रथसहितम्) आदित्यं 'याथ' (लोकोपकाराय वृष्टिमुत्पादयितुं वृष्टिं प्राप्नुयाथः)। 'उग्रा' (अनिष्टनिवारणेऽत्यन्तं तीक्ष्णौ), 'ता' (तौ) युवां 'नः' (अस्मान्) 'आगसः' (पापात्) 'मुञ्चतं' (मुक्तं कुरुतं)।

तत्रैव याज्यामाह,—"यो वाᳲं रथ ऋजुरश्मिः सत्यधर्मा मिथुश्चरन्तमुपयाति दूषयन्। स्तौमि मित्रावरुणा नाथितो जोहवीमि तौ नो मुञ्चतमागसः(१)" इति। हे मित्रावरुणौ 'वां' (युवयोः) 'यः' 'रथः' 'ऋजुरश्मिः' (अकुटिलप्रग्रहः) 'सत्यधर्मा' (अवितथाधारणश्च) भवति, स रथः* 'मिथुश्चरन्तं' (मिथ्याचारिणं अन्यायकारिणं शत्रुं) 'दूषयन्' 'उपयाति' (बाधमानः प्राप्नोति)। स्तौमीत्यादि पूर्ववत्।

अथ 'वायो-सवितृ आगोमुग्भ्यां चरुः' इत्यस्य पुरोऽनुवाक्यामाह,—"वायोः सवितुर्विदथानि मन्महे यावात्मन्वद् बिभृतो यौ च रक्षतः। यौ विश्वस्य परिभू बभूवतुस्तौ नो मुञ्चतमागसः(७)" इति। यो वायुर्यश्च सविता तयोरुभयोः 'विदथानि' (वेदनानि) अभिप्रायविशेषान् 'मन्महे' (जानीमः)। 'यौ' (वायुसवितारौ) 'आत्मन्वत्' (स्वशरीरमिव) 'बिभृतः' (सर्वं जगद्धारयतः)। किञ्च 'यौ' (वायुसवितारौ) 'रक्षतः' (जगत् पालयतः)। किञ्च 'यौ' (वायुसवितारौ) 'विश्वस्य' (कृत्स्नस्य) जगतः 'परिभू' (परितो व्यापकौ बभूवतुः)। तावित्यादि पूर्ववत्।

तत्रैव याज्यामाह,—"उप श्रेष्ठा न आशिषो देवयोर्धर्मे अस्थिरन्। स्तौमि वायुꣳ सवितारं नाथितो जोहवीमि तौ नो मुञ्चतमागसः(८)" इति। 'श्रेष्ठाः' (प्रशस्ताः) 'नः' (अस्मदीयाः) 'आशिषः' (फलविशेषाः) 'देवयोः' (वायुसवित्रोः) सम्बन्धिनि 'धर्मे' 'उप' कर्मणि 'स्थिरन्'* (उपास्थीयत) तदधीना इत्यर्थः। स्तौमीत्यादि पूर्ववत्।

अथ 'अश्विभ्यामागोमुग्भ्यां धाना' इत्यस्य पुरोऽनुवाक्यामाह,—"रथीतमौ रथीनामह्व ऊतये शुभं गमिष्ठौ सुयमेभिरश्वैः। ययोर्वां देवौ देवेष्वनिशितमोजस्तौ नो मुञ्चतमागसः(९)" इति। 'रथीनां' 'रथीतमौ' (ये रथिनो देवाः सन्ति, तेषां मध्ये अतिशयेन रथिनौ), 'सुयमेभिः' (सुष्ठु नियन्तुं शक्यैः) 'अश्वैः' 'शुभं' (समीचीनं देशं) 'गमिष्ठौ' (अतिशयेन गच्छन्तौ) अश्विनौ 'अह्वे' (अहं आह्वयामि)। 'देवौ' अश्विनौ 'देवेषु' सर्वेषु मध्ये 'ययोः' 'वां' (युवयोः) 'ओजः' (बलं) 'अनिशितं' (अन्येन केनापि न तीक्ष्णीकृतं), किन्तु स्वभावत एव तीक्ष्णमित्यर्थः। तावित्यादि पूर्ववत्†।

तत्रैव याज्यामाह,—"यदयातं वहतुꣳ सूर्यायास्त्रिचक्रेण सꣳसदमिच्छमानौ। स्तौमि देवावश्विनौ नाथितो जोहवीमि तौ नो मुञ्चतमागसः(१०)" इति। यस्मात् कारणात् 'सूर्यायाः' (सूर्यपत्न्याः) स्वमातुः 'संसदमिच्छमानौ' (सहावस्थानं इच्छन्तौ) 'देवौ'‡ अश्विनौ' युवां 'त्रिचक्रेण' (चक्रत्रययुक्तेन) रथेन 'वहतुं' (वाहयितुं) 'अयातं' (रथस्योपरि गतवन्तौ), तस्मात् कारणात् तथाविधौ देवौ। स्तौमीत्यादि पूर्ववत्।

---

* अत्र 'धर्म्मे' (कर्म्मणि) 'उप' 'अस्थिरन्' इत्येवंरूपः पाठो भवितुं युक्तः।
† अत्र 'ऊतये' इति पदस्य व्याख्या पतितेव प्रतिभाति।
‡ प्रामादिकः।

अथ 'मरुद्भ्य एनोमुग्भ्यः सप्तकपालः' इत्यस्य पुरोऽनुवाक्यामाह,—"मरुतां मन्वे अधि नो ब्रुवन्तु प्रेमां वाचं विश्वामवन्तु विश्वे। आशून् हुवे सुयमानूतये ते नो मुञ्चन्त्वेनसः(११)" इति। 'मरुतां' (मरुत्सञ्ज्ञकानां) देवानां मूर्त्तिं 'मन्वे' (अहं मनसा ध्यायामि)। तेन च मरुतः 'नः' (अस्मान्) 'अधि' 'ब्रुवन्तु' (अधिकान् ब्रुवन्तु)। ते च 'विश्वे' (सर्वे) अपि 'इमां' 'वाचं' (मदीयां प्रार्थनां) 'विश्वां' (सर्वाम्) अपि 'प्र' 'अवन्तु' (प्रकर्षेण रक्षन्तु)। 'आशून्' (शीघ्रगामिनः) 'सुयमान्' (सुष्ठु नियामकान् मरुदाख्यान् देवान्) 'ऊतये' (रक्षणाय) 'हुवे' (आह्वयामि)। 'ते नः' इत्यादि पूर्ववत्।

तत्रैव याज्यामाह,—"तिग्ममायुधं वीडितꣳ सहस्वद्दिव्यꣳ शर्द्धः पृतनासु जिष्णु। स्तौमि देवान् मरुतो नाथितो जोहवीमि ते नो मुञ्चन्त्वेनसः(१२)" इति। मरुदाख्यानां देवानाम् 'आयुधं' तिग्मादि-विशेषणविशिष्टं 'तिग्मं' (तीक्ष्णं), 'वीडितं' (दृढं)। किञ्च मरुतां 'शर्द्धः' (बलं) 'सहस्वत्' (परेषामभिभवितृ), 'दिव्यं' (यथोचितव्यवहारयोग्यं), अत एव 'पृतनासु' (परकीयसेनासु) 'जिष्णु' (जयशीलं)। स्तौमीत्यादि पूर्ववत्।

अथ 'विश्वेभ्यो देवेभ्य एनोमुग्भ्यो द्वादशकपालः' इत्यस्य पुरोऽनुवाक्यामाह,—"देवानां मन्वे अधि नो ब्रुवन्तु प्रेमां वाचं विश्वामवन्तु विश्वे। आशून् हुवे सुयमानूतये ते नो मुञ्चन्त्वेनसः(१३)" इति। पूर्वोक्ता मरुतां पुरोऽनुवाक्या,* तथेयं विश्वेषां देवानां पुरोऽनुवाक्या योजनीया।

---

* अत्र यथा इति पदं भवितुं युज्यते।

तत्रैव याज्यामाह,—"यदिदं माभिशोचन्ति पौरुषेयेण दैव्येन। स्तौमि विश्वान् देवान् नाथितो जोहवीमि ते नो मुञ्चन्त्वेनसः[१४]" इति। 'पौरुषेयेण' (मनुष्यव्यापारेण), 'दैव्येन' (देवव्यापारेण) च सम्पादितं 'यत्' 'इदं' (दुःखं) 'मा' 'अभिशोचति' (अभितो मां क्लेशयति), तस्य दुःखस्य अपनोदनार्थं। स्तौमीत्यादि शेषं पूर्ववत्।

अथ 'अनुमत्यै चरुः' इत्यस्य याज्यानुवाक्ययोः प्रतीके दर्शयति,—"अनु नोऽद्यानुमतिः"[१५] "अन्विदनुमते त्वम्"[१६] इति। "अनु नोऽद्यानुमतिर्यज्ञम्" इति पुरोऽनुवाक्या। "अन्विदनुमते त्वं मन्यासै" इति याज्या। एतच्चोभयम् "इदं वामास्ये" (३का० ३प्र० ११अ०) इत्यनुवाके व्याख्यातम्।

अथ 'अग्नये वैश्वानराय द्वादशकपालः'—इत्यस्य याज्यापुरोऽनुवाक्ययोः प्रतीके दर्शयति,—"वैश्वानरो न ऊत्या"[१७] "पृष्टो दिवि"[१८] इति। "वैश्वानरो न ऊत्या प्रयातु" इति पुरोऽनुवाक्या। "पृष्टो दिवि पृष्टो अग्निः" इति याज्या। एतच्चोभयं "वैश्वानरो न ऊत्या" (१का० ५प्र० ११अ०) इत्यस्मिन्ननुवाके व्याख्यातम्।

अथ 'द्यावापृथिवीभ्यामꣳहोमुग्भ्यां द्विकपालः' इत्यस्य पुरोऽनुवाक्यामाह,—"ये अप्रथेताममितेभिरोजोभिर्ये प्रतिष्ठे अभवतां वसूनां। स्तौमि द्यावापृथिवी नाथितो जोहवीमि ते नो मुञ्चतमꣳहसः[१९]" इति। 'ये' द्यावापृथिव्यौ 'अमितेभिरोजोभिः' (परिच्छेत्तुमशक्यैर्बलैः) 'अप्रथेतां' (प्रख्याते अभूतां)। किञ्च 'ये' द्यावापृथिव्यौ 'वसूनां' (धनानां) 'प्रतिष्ठे' (आश्रयभूते) 'अभवतां', ते द्यावापृथिव्यौ। स्तौमीत्यादि पूर्ववत्।

तत्रैव याज्यामाह,—"उर्वी रोदसी वरिवः कृणोतं क्षेत्रस्य पत्नी अधि नो ब्रूयातं। स्तौमि द्यावापृथिवी नाथितो जोहवीमि ते नो मुञ्चतमꣳहसः[२०]" इति। 'उर्वी' (उर्व्यौ, अत्यन्तं विस्तृते), 'रोदसी' (रोदस्यौ) हे द्यावापृथिव्यौ, 'वरिवः' (धनं पूजां वा) 'कृणोतं' (कुरुतं)। 'क्षेत्रस्य' 'पत्नी' (पत्न्यौ) हे द्यावापृथिव्यौ, 'नः' 'अस्मान्' 'अधि' 'ब्रूयातं' (अधिकान् कथयतं)। स्तौमीत्यादि पूर्व्ववत्।

अथ स्विष्टकृतः पुरोऽनुवाक्यामाह,—"यत्ते वयं पुरुषत्रा यविष्ठ अविद्वाꣳसश्चकृमा कच्चनागः। कृधी स्वस्माꣳ अदितेरनागा व्येनाꣳसि शिश्रथो विष्वगग्ने[२१]" इति। हे 'यविष्ठ' (युवतम) 'अग्ने', 'वयम्' 'अविद्वांसः' (ज्ञानरहिताः) सन्तः 'ते' (त्वदीयेषु) 'पुरुषत्रा' (पुरुषेषु) 'यत्'-'कच्चन आगः' (इं-कमप्यपराधं) 'चकृम' (कृतवन्तः)। 'अदितेः' (अखण्डनीयस्य) तव अस्मान् 'अनागाः' (अपराधरहितान्) 'सु'-* 'कृधि' (सुष्ठु कुरु)। हे 'अग्ने', 'एनांसि' (अस्मदीयानि पापानि) 'विष्वक्' (सर्वथा) 'वि'-'शिश्रथः' (विशेषेण श्रथितानि कुरु)।

तत्रैव याज्यामाह,—"यथा ह तद्वसवो गौर्यं चित् पदि सिताममुञ्चता यजत्राः। एवा त्वमस्मत् प्र मुञ्च व्यꣳहः प्रातार्यग्ने प्रतरान्न आयुः[२२]" इति। 'यजत्राः' (यष्टव्याः), 'वसवः' (जगन्निवासहेतवः) अग्निना सहिताः हे देवाः, 'पदि सितां' (बन्धनस्थाने स्वकीयस्य पाशस्य आक्रमणेन पादे बद्धां) 'गौर्यं'-'चित्' (गौरीमपि) यांकाञ्चित् गौरवर्णाङ्गाम् 'अमुञ्चत' (बन्धान्मुक्तीकृतवन्तः)। हे 'अग्ने, 'तत्' 'यथा ह' (येनैव प्रकारेण तद्बन्धमोचनं कृतं),

---

* 'सु' इति पाठो सर्व्वत्र पतित इव प्रतिभाति।

'एवा त्वम्' (एवमेव त्वमपि) 'अस्मत्' (अस्मत्सकाशात्) 'व्यंहः' (विविधं पापं) 'प्र'-'मुञ्च' (प्रकर्षेण मुक्तं कुरु)। 'नः' (अस्मदीयम्) 'आयुः' 'प्रतरां' (अत्यधिकं) यथा* 'प्रातारि' (प्रतर सम्पादय)॥

अत्र विनियोगसंग्रहः,—

अग्नयेऽꣳहोमुचेऽष्टाक-पाल† इत्यादिनेरिताः।
इष्टयोऽग्नेर्मन्वयुक्ता याज्यास्तासु क्रमादिमाः॥
अग्नेराग्नेयके, द्वीन्द्रस्यैन्द्रे, मन्त्रे ह्यनन्तरे।
मैत्रावरुणके, वायोर्वायो-सावित्रके, रथी॥
आश्विने, मरुतां मारु-ते, देवा वैश्वदेविके।
अनुद्वयोश्चानुमते, वैश्वा वैश्वानरे तथा॥
द्यावापृथिव्यके ये तु, यत्ते स्विष्टकृतीर्यते।
अनुवाके पञ्चदशे मन्त्रा द्वाविंशतिर्मताः॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये चतुर्थकाण्डे सप्तमप्रपाठके पञ्चदशोऽनुवाकः॥०॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्क-भूपालसाम्राज्यधुरन्धरेण सायनाचार्य्येण विरचिते माधवीये वेदार्थ-प्रकाशनामकतैत्तिरीययजुःसंहिताभाष्ये चतुर्थकाण्डे सप्तमः प्रपाठकः सम्पूर्णः॥०॥

---

* अत्र 'तथा' इति पदं पतितमिव प्रतिभाति।

† अग्नयेऽंहोमुचेऽष्टाकपाल इति सर्व्वत्र पाठो न सम्यक्।